# लिङ्गपुराणम् ।



कृष्णद्वैपायन-महर्षि-श्रीवेदव्यास-

प्रणीतम् ।

पण्डितवरश्रीयुक्तपञ्चाननतर्करत्नेन

सम्पादितम् ।

श्रीयुक्तवीरसिंहशास्त्रिणा श्रीयुक्तधीरानन्दकाव्यनिधिना च

परिशोधितम् ।

कलिकाताराजधान्याम्

कलुटोलाष्ट्रीटस्थित ३४।१ नं वङ्गवासी-ष्टीम-मेसिन-यन्त्रे

श्रीअरुणोदयरायेण

मुद्रितं प्रकाशितञ्च ।

शकाब्दाः १८१२ ।

मूल्यं ३) मुद्रात्रयम् ।

# लिङ्गपुराणम् ।



कृष्णद्वैपायन-महर्षि-श्रीवेदव्यास-

प्रणीतम् ।

पण्डितवरश्रीयुक्तपञ्चाननतर्करत्नेन

सम्पादितम् ।

श्रीयुक्तवीरसिंहशास्त्रिणा श्रीयुक्तधीरानन्दकाव्यनिधिना च

परिशोधितम् ।

कलिकाताराजधान्याम्

कलुटोलाष्ट्रीटस्थित ३४।१ नं वङ्गवासी-ष्टीम-मेसिन-यन्त्रे

श्रीअरुणोदयरायेण

मुद्रितं प्रकाशितञ्च ।

शकाब्दाः १८१२ ।

# भूमिका।



किं तावदस्य ललितस्य पुराणमुख्य-
लैङ्गस्य संस्तवमयीं रचयामि भाषाम्।
आपूरयन् दशदिशतांशुभिरंशुमाली
विश्वं न येन विदितः स हि मोघजन्मा ॥ १

तथापि किञ्चिदुच्यते—

ऐशतत्त्वमवगन्तुमिच्छतां
योगमार्गविविधव्रतानि च।
तृप्तिभूमजनकं मुमुक्षतां
लैङ्गमेतदपवर्गसाधनम् ॥ २

दक्षाध्वरान्धक-जलन्धर-नारसिंह-
तेजोविनिग्रहमुखैः शुभशैववृत्तैः।
उद्भासितं मणिवरैरिव हारसारं
कण्ठं नयन्तु सुधियो बत लैङ्गमेतत् ॥ ३

नानादेशसमाहृत-बहुतरपुस्तैरवेक्ष्य यत्नेन।
विरचितपाठविवेकं लैङ्गं सत्सङ्गमाप्नोतु ॥ ४

श्रीवीरसिंहविदुषा विदुषा च धीरा-
नन्देन शोधितमिदं बहुयत्नपूर्व्वम्।
प्रीतिं परां यदि विधातुमलं बुधानां
तद्भाविनी सफलतास्मदतिश्रमस्य ॥ ५

सम्पादकः
श्रीपञ्चाननतर्करत्नः।
भट्टपल्लीनिवासी।

# लिङ्गपुराण-सूचीपत्रम् ।




## पूर्व्वभागे ।

---

उपरिभागे।

लिङ्गपुराणसूचीपत्रं समाप्तम।

# लिङ्गपुराणम् ।

## प्रथमोऽध्यायः ।

ओं नमो भगवते वासुदेवाय ।

नमो रुद्राय हरये ब्रह्मणे परमात्मने ।
प्रधानपुरुषेशाय सर्गस्थित्यन्तकारिणे ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
नारदोऽभ्यर्च्य शैलेशे शङ्करं सङ्गमेश्वरे ।
हिरण्यगर्भे स्वर्लीने ह्यविमुक्ते महालये ॥ १
रौद्रे गोप्रेक्षके चैव श्रेष्ठे पाशुपते तथा ।
विघ्नेश्वरे च केदारे तथा गोमायुकेश्वरे ॥ २
हिरण्यगर्भे चन्द्रेशे ईशान्ये च त्रिविष्टपे ।
शुक्रेश्वरे यथान्यायं नैमिषं प्रययौ मुनिः ॥ ३
नैमिषेयास्तदा दृष्ट्वा नारदं हृष्टमानसाः ।
समभ्यर्च्यासनं तस्मै तद्योग्यं समकल्पयन् ॥ ४
सोऽपि हृष्टो मुनिवरैर्दत्तं भेजे तदासनम् ।
सम्पूज्यमानो मुनिभिः सुखासीनो वरासने ।
चक्रे कथां विचित्रार्थां लिङ्गमाहात्म्यमाश्रिताम् ॥ ५
एतस्मिन्नेव काले तु सूतः पौराणिकः स्वयम् ।
जगाम नैमिषं धीमान् प्रणामार्थं तपस्विनाम् ॥ ६
तस्मै साम च पूजाञ्च यथावच्चक्रिरे तदा ।
नैमिषेयास्तु शिष्याय कृष्णद्वैपायनस्य तु ॥ ७
अथ तेषां पुराणस्य शुश्रूषा समपद्यत ।
दृष्ट्वा तमतिविश्वस्तं विद्वांसं रोमहर्षणम् ॥ ८
अपृच्छंश्च ततः सूतमृषिं सर्व्वे तपोधनाः ।
पुराणसंहितां पुण्यां लिङ्गमाहात्म्यसंयुताम् ॥ ९

नैमिषेया ऊचुः ।

त्वया सूत महाबुद्धे कृष्णद्वैपायनो मुनिः ।
उपासितः पुराणार्थं लब्धा तस्माच्च संहिता ॥ १०
तस्माद्भवन्तं पृच्छामः सूत पौराणिकोत्तम ।
पुराणसंहितां दिव्यां लिङ्गमाहात्म्यसंयुताम् ॥ ११
नारदोऽप्यस्य देवस्य रुद्रस्य परमात्मनः ।
क्षेत्राण्यासाद्य चाभ्यर्च्य लिङ्गानि मुनिपुङ्गवः ॥ १२
इह सन्निहितः श्रीमान् नारदो ब्रह्मणः सुतः ॥ १३
भवभक्तो भवांश्चैव वयं वै नारदस्तथा ।
अस्याग्रतो मुने पुण्यं पुराणं वक्तुमर्हसि ॥ १४
सफलं साधितं सर्व्वं भवता विदितं भवेत् ।
एवमुक्तः स हृष्टात्मा सूतः पौराणिकोत्तमः ॥ १५
अभिवाद्याग्रतो धीमान् नारदं ब्रह्मणः सुतम् ।
नैमिषेयांश्च पुण्यात्मा पुराणं व्याजहार सः ॥ १६

सूत उवाच ।

नमस्कृत्य महादेवं ब्रह्माणञ्च जनार्द्दनम् ।
मुनीश्वरं तथा व्यासं वक्तुं लिङ्गं स्मराम्यहम् ॥ १७
शब्दब्रह्मतनुं साक्षाच्छब्दब्रह्मप्रकाशकम् ।
वर्णावयवमव्यक्तलक्षणं बहुधा स्थितम् ॥ १८
अकारोकारमकारं स्थूलं सूक्ष्मं परात्परम् ।
ओङ्काररूपमृग्वक्त्रं सामजिह्वासमन्वितम् ॥ १९

यजुर्व्वेदमहाग्रीवमथर्व्वहृदयं विभुम् ।
प्रधानपुरुषातीतं प्रलयोत्पत्तिवर्ज्जितम् ॥ २०
तमसा कालरुद्राख्यं रजसा कनकाण्डजम् ।
सत्त्वेन सर्व्वगं विष्णुं निर्गुणत्वे महेश्वरम् ॥ २१
प्रधानावयवं व्याप्य सप्तधाधिष्ठितं क्रमात् ।
पुनः षोड़शधा चैव षड्विंशकमजोद्भवम् ॥ २२
सर्ग-प्रतिष्ठा-संहार-लीलार्थं लिङ्गरूपिणम् ।
प्रणम्य च यथान्यायं वक्ष्ये लिङ्गोद्भवं शुभम् ॥ २३

इति श्रीलैङ्गे महापुराणे सूतनैमिषियर्षि-
संवादे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

सूत उवाच ।

ईशानकल्पवृत्तान्तमधिकृत्य महात्मना ।
ब्रह्मणा कल्पितं पूर्व्वं पुराणं लैङ्गमुत्तमम् ॥ १
ग्रन्थकोटिप्रमाणन्तु शतकोटिप्रविस्तरे ।
चतुर्लक्षेण संक्षिप्ते व्यासैः सर्व्वान्तरेषु वै ॥ २
व्यस्तोऽष्टादशधा चैव ब्रह्माद्यै द्वापरादिषु ।
लिङ्गमेकादशं प्रोक्तं मया व्यासाच्छ्रुतञ्च तत् ॥ ३
अस्यैकादशसाहस्रं ग्रन्थमानमिह द्विजाः ।
तस्मात् संक्षेपतो वक्ष्ये न श्रुतं विस्तरेण यत् ॥ ४
चतुर्लक्षेण संक्षिप्ते कृष्णद्वैपायनेन तु ।
अत्रैकादशसाहस्रैः कथितो लिङ्गसम्भवः ॥ ५
सर्गः प्राधानिकः पश्चात् प्राकृतो वैकृतानि च ।
अण्डस्यास्य च सम्भूतिरण्डस्यावरणाष्टकम् ॥ ६
अण्डोद्भवत्वं शर्व्वस्य रजोगुणसमाश्रयात् ।
विष्णुत्वं कालरुद्रत्वं शयनञ्चाप्सु तस्य च ॥ ७
प्रजापतीनां सर्गश्च पृथिव्युद्धरणं तथा ।
ब्रह्मणश्च दिवारात्रमायुषो गणनं पुनः ॥ ८
सवनं ब्रह्मणश्चैव युगकल्पश्च तस्य तु ।
दिव्यञ्च मानुषं वर्षमार्षं वै ध्रौव्यमेव च ॥ ९
पित्र्यं पितॄणां सम्भूतिर्धर्म्मश्चाश्रमिणां तथा ।
अवृद्धिर्जगतो भूयो देव्याः शत्युद्भवस्तथा ॥ १०
स्त्रीपुंभावो विरिञ्चस्य सर्गो मिथुनसम्भवः ।
आख्याष्टकं हि रुद्रस्य कथितं रोदनान्तरे ॥ ११
ब्रह्म-विष्णुविवादश्च पुनर्लिङ्गस्य सम्भवः ।
शिलादस्य तपश्चैव वृत्रारेर्दर्शनं तथा ॥ १२
प्रार्थना योनिजस्याथ दुर्लभत्वं सुतस्य तु ।
शिलाद-शक्रसंवादः पद्मयोनित्वमेव च ॥ १३
भवस्य दर्शनञ्चैव तिष्येष्वाचार्य्यशिष्ययोः ।
व्यासावताराश्च तथा कल्पमन्वन्तराणि च ॥ १४
कल्पत्वञ्चैव कल्पानामाख्याभेदैस्त्वनुक्रमात् ।
कल्पेषु कल्पे वाराहे वाराहत्वं हरेस्तथा ॥ १५
मेघवाहनकल्पस्य वृत्तान्तं रुद्रगौरवम् ।
पुनर्लिङ्गोद्भवश्चैव ऋषिमध्ये पिनाकिनः ॥ १६
लिङ्गस्याराधनं स्नान-विधानं शौचलक्षणम् ।
वाराणस्याश्च माहात्म्यं क्षेत्रमाहात्म्यवर्णनम् ॥ १७
भुवि रुद्रालयानान्तु संख्या विष्णोर्गृहस्य च ।
अन्तरीक्षे तथाण्डेऽस्मिन् देवायतनवर्णनम् ॥ १८
दक्षस्य पतनं भूमौ पुनः स्वारोचिषेऽन्तरे ।
दक्षशापश्च दक्षस्य शापमोक्षस्तथैव च ॥ १९
कैलासवर्णनञ्चैव योगः पाशुपतस्तथा ।
चतुर्युगप्रमाणञ्च युगधर्म्मः सुविस्तरः ॥ २०
सन्ध्यांशकप्रमाणञ्च सन्ध्यावृत्तं भवस्य च ।
श्मशाननिलयश्चैव चन्द्ररेखासमुद्भवः ॥ २१
उद्वाहः शङ्करस्याथ पुत्त्रोत्पादनमेव च ।
मैथुनातिप्रसङ्गेन विनाशो जगतां भयम् ॥ २२
शापः सत्याकृतो देवान् पुरा विष्णुश्च पालितम् ।
शुक्रोत्सर्गस्तु रुद्रस्य गाङ्गेयोद्भव एव च ॥ २३
ग्रहणादिषु कालेषु स्नाप्य लिङ्गं फलं तथा ।
क्षुवदधीचविवादश्च दधीचोपेन्द्रयोस्तथा ॥ २४
उत्पत्तिर्नन्दिनाम्ना तु देवदेवस्य शूलिनः ।
पतिव्रतायाश्चाख्यानं पशुपाशविचारणा ॥ २५
प्रवृत्तिलक्षणं ज्ञानं निवृत्त्यधिकृता तथा ।
वशिष्ठतनयोत्पत्तिर्वाशिष्ठानां महात्मनाम् ॥ २६
मुनीनां वंशविस्तारो राज्ञा शक्तेर्विनाशनम् ।
दौरात्म्यं कौशिकस्याथ सुरभेर्बन्धनं तथा ॥ २७
सुतशोको वशिष्ठस्य अरुन्धत्याः प्रलापनम् ।
स्नुषायाः प्रेक्षणञ्चैव गर्भस्थस्य वचस्तथा ॥ २८
पराशरस्यावतारो व्यासस्य च शुकस्य च ।
विनाशो राक्षसानाञ्च कृतो वै शक्तिसूनुना ॥ २९
देवतापरमार्थन्तु विज्ञानञ्च प्रसादतः ।
पुराणकरणञ्चैव पुलस्त्यस्याज्ञया गुरोः ॥ ३०

भुवनानां प्रमाणञ्च ग्रहाणां ज्योतिषां गतिः ।
जीवच्छ्राद्धविधानञ्च श्राद्धार्हाः श्राद्धमेव च ॥ ३१
नान्दीश्राद्धविधानञ्च तथाध्ययनलक्षणम् ।
पञ्चयज्ञप्रभावश्च पञ्चयज्ञविधिस्तथा ॥ ३२
रजस्वलानां वृत्तिश्च वृत्त्या पुत्रविशिष्टता ।
मैथुनस्य विधिश्चैव प्रतिवर्णमनुक्रमात् ॥ ३३
भोज्याभोज्यविधानञ्च सर्व्वेषामेव वर्णिनाम् ।
प्रायश्चित्तमशेषस्य प्रत्येकञ्चैव विस्तरात् ॥ ३४
नरकाणां स्वरूपञ्च दण्डः कर्म्मानुरूपतः ।
स्वर्गि-नारकिणां पुंसां चिह्नं जन्मान्तरेषु च ॥ ३५
नानाविधानि दानानि प्रेतराजपुरं तथा ।
कल्पं पञ्चाक्षरस्याथ रुद्रमाहात्म्यमेव च ॥ ३६
वृत्रेन्द्रयोर्महायुद्धं विश्वरूपविमर्द्दनम् ।
श्वेतस्य मृत्योः संवादः श्वेतार्थे कालनाशनम् ॥३७
देवदारुवने शम्भोः प्रवेशः शङ्करस्य तु ।
सुदर्शनस्य चाख्यानं क्रमसन्न्यासलक्षणम् ॥ ३८
अवाशाध्योऽथ रुद्रस्तु कथितं ब्रह्मणा तदा ।
मधुना कैटभेनैव पुराहृतगतेर्विभोः ॥ ३९
ब्रह्मणः परमं ज्ञानमादातुं मीनता हरेः ।
सर्व्वावस्थासु विष्णोश्च जननं लीलयैव तु ॥ ४०
रुद्रप्रसादाद्विष्णोश्च जिष्णोश्चैव तु सम्भवः ।
मन्थानधारणार्थाय हरेः कूर्म्मत्वमेव च ॥ ४१
सङ्कर्षणस्य चोत्पत्तिः कौशिक्याश्च पुनर्भवः ।
यदूनाञ्चैव सम्भूतिर्यादवत्वं हरेः स्वयम् ॥ ४२
भोजराजस्य दौरात्म्यं मातुलस्य हरेर्विभोः ।
बालभावे हरेः क्रीड़ा पुत्रार्थं शङ्करार्चनम् ॥ ४३
नारस्य च तथोत्पत्तिः कपाले वैष्णवाज्वरात् ।
भूभारनिग्रहार्थं तु रुद्रस्याराधनं हरेः ॥ ४४
वधेन पृथुना भूमेः पुरा दोहप्रवर्त्तनम् ।
देवासुरे पुरा लब्धो भृगुशापश्च विष्णुना ॥ ४५
कृष्णाले द्वारकायान्तु निलयो माधवस्य तु ।
लब्धो हिताय शापस्तु दुर्व्वासस्याननाद्धरेः ॥ ४६
वृष्ण्यन्धकविनाशाय शापः पिण्डारवासिनाम् ।
एरकस्य तथोत्पत्तिस्तोमरस्योद्भवस्तथा ॥ ४७
एरकालाभतोऽन्योन्यं विवादे वृष्णिविग्रहः ।
लीलया चैव कृष्णेन स्वकुलस्य च संहृतिः ॥ ४८
एराकाख्यबलेनैव गमनं स्वेच्छयैव तु ।
ब्रह्मणश्चैव मोक्षस्य विज्ञानन्तु सुविस्तरम् ॥ ४९
पुरान्धकाग्निदक्षाणां शक्रेभमृगरूपिणाम् ।
मदनस्यादिदेवस्य ब्रह्मणश्चामरारिणाम् ॥ ५०
हलाहलस्य दैत्यस्य कृतावज्ञा पिनाकिना ।
जालन्धरवधश्चैव सुदर्शनसमुद्भवः ॥ ५१
विष्णोर्वैरायुधावाप्तिस्तथा रुद्रस्य चेष्टितम् ।
तथान्यानि च रुद्रस्य चरितानि सहस्रशः ॥ ५२
हरेः पितामहस्याथ शक्रस्य च महात्मनः ।
प्रभावानुभवश्चैव शिवलोकस्य वर्णनम् ॥ ५३
भूमौ रुद्रस्य लोकञ्च पाताले हाटकेश्वरम् ।
तपसां लक्षणञ्चैव द्विजानां वैभवं तथा ॥ ५४
आधिक्यं सर्व्वमूर्त्तीनां लिङ्गमूर्त्तिर्विशेषतः ।
लिङ्गेऽस्मिन्नानुपूर्व्वेण विस्तरेणानुकीर्त्त्यते ॥ ५५
एतज्ज्ञात्वा पुराणस्य सङ्क्षेपं कीर्त्तयेत् तु यः ।
सर्व्वपापविनिर्म्मुक्तो ब्रह्मलोकं स गच्छति ॥ ५६

इति श्रीलैङ्गे महापुराणे अनुक्रमणिका
नाम द्वितीयोऽध्यायः ॥२॥

---

## तृतीयोऽध्यायः ।

सूत उवाच ।

अलिङ्गो लिङ्गमूलन्तु अव्यक्तं लिङ्गमुच्यते ।
अलिङ्गः शिव इत्युक्तो लिङ्गं शैवमिति स्मृतम् ॥ १
प्रधानं प्रकृतिश्चेति यदाहुर्लिङ्गमुत्तमम् ।
गन्ध-वर्ण-रसैर्हीनं शब्दस्पर्शादिवर्ज्जितम् ॥ २
अगुणं ध्रुवमक्षय्यमलिङ्गं शिवलक्षणम् ।
गन्ध-वर्ण-रसैर्युक्तं शब्दस्पर्शादिलक्षणम् ॥ ३
जगद्योनिं महाभूतं स्थूलं सूक्ष्मं द्विजोत्तमाः ।
विग्रहो जगतां लिङ्गमलिङ्गादभवत् स्वयम् ॥ ४
सप्तधा चाष्टधा चैव तथैकादशधा पुनः ।
लिङ्गान्यलिङ्गस्य तथा मायया विततानि तु ॥ ५
तेभ्यः प्रधानदेवानां त्रयमासीच्छिवात्मकम् ।
एकस्मात् त्रिष्वभूद्विश्वमेकेन परिरक्षितम् ॥ ६
एकेनैव हृतं विश्वं व्याप्तन्त्वेवं शिवेन तु ।
अलिङ्गञ्चैव लिङ्गञ्च लिङ्गालिङ्गानि मूर्त्तयः ॥ ७
यथावत् कथिताश्चैव तस्माद्ब्रह्म स्वयं जगत् ।
अलिङ्गी भगवान् बीजी स एव परमेश्वरः ॥ ८

बीजं योनिश्च निर्बीजं निर्बीजो बीजमुच्यते ।
बीजयोनिप्रधानानामात्माख्या वर्त्तते त्विह ॥ ९
परमात्मा मुनिर्ब्रह्मा नित्यबुद्धः स्वभावतः ।
विशुद्धोऽयं तथा रुद्रः पुराणे शिव उच्यते ॥ १०
शिवेन दृष्टा प्रकृतिः शैवी समभवद्द्विजाः ।
सर्गादौ सा गुणैर्युक्ता पुरा व्यक्ता स्वभावतः ॥ ११
अव्यक्तादिविशेषान्तं विश्वं तस्याः समुच्छ्रितम् ।
विश्वधात्री त्वजाख्या च शैवी सा प्रकृतिः स्मृता ॥१२
तामजां लोहितां शुक्लां कृष्णामेकां बहुप्रजाम् ।
जनित्रीमनुशेते स्म जुषमाणः स्वरूपिणीम् ॥ १३
तामेवाजामजोऽन्यस्तु भुक्तभोगां जहाति च ।
अजा जनित्री जगतां साजेन समधिष्ठिता ॥ १४
प्रादुर्बभूव स महान् पुरुषाधिष्ठितस्य च ।
अजाज्ञया प्रधानस्य सर्गकाले गुणैस्त्रिभिः ॥ १५
सिसृक्षया चोद्यमानः प्रविश्याव्यक्तमव्ययम् ।
व्यक्तसृष्टिं विकुरुते चात्मनाधिष्ठितो महान् ॥ १६
महतस्तु तथा वृत्तिः सङ्कल्पाध्यवसायिका ।
महतस्त्रिगुणस्तस्मादहङ्कारो रजोऽधिकः ॥ १७
तेनैव चावृतः सम्यगहङ्कारस्तमोऽधिकः ।
महतो भूततन्मात्रं सर्गकृद्वै बभूव च ॥ १८
अहङ्काराच्छब्दमात्रं तस्मादाकाशमव्ययम् ।
सशब्दमावृणोत् पश्चादाकाशं शब्दकारणम् ॥ १९
तन्मात्राद्भूतसर्गश्च द्विजास्त्वेवं प्रकीर्त्तितः ।
स्पर्शमात्रं तथाकाशात् तस्माद्वायुर्महामुने ॥ २०
तस्माच्च रूपमात्रन्तु ततोऽग्निश्च रसस्ततः ।
रसादापः शुभास्ताभ्यो गन्धमात्रं धरा ततः ॥ २१
आवृणोद्धि तथाकाशं स्पर्शमात्रं द्विजोत्तमाः ।
आवृणोद्रूपमात्रन्तु वायुर्वातिक्रियात्मकः ॥ २२
आवृणोद्रसमात्रं वै देवः साक्षाद्विभावसुः ।
आवृण्वाना गन्धमात्रमापः सर्व्वरसात्मिकाः ॥ २३
क्ष्मा सा पञ्चगुणा तस्मादेकोना रससम्भवा ।
त्रिगुणो भगवान् वह्निर्द्विगुणः स्पर्शसम्भवः ॥ २४
अवकाशस्ततो देव एकमात्रस्तु निष्कलः ।
तन्मात्राद्भूतसर्गश्च विज्ञेयश्च परस्परम् ॥ २५
वैकारिकः सात्त्विको वै युगपत् सम्प्रवर्त्तते ।
सर्गस्तथाप्यहङ्कारादेवमत्र प्रकीर्त्तितः ॥ २६
पञ्चबुद्धीन्द्रियाण्यस्य पञ्च कर्म्मेन्द्रियाणि तु ।
शब्दादीनामवाप्त्यर्थं मनश्चैवोभयात्मकम् ॥ २७
महदादिविशेषान्ता ह्यण्डमुत्पादयन्ति च ।
जलबुद्बुदवत् तस्मादवतीर्णः पितामहः ॥ २८
स एव भगवान् रुद्रो विष्णुर्विश्वगतः प्रभुः ।
तस्मिन्नण्डे त्विमे लोका अन्तर्व्विश्वमिदं जगत् ॥
अण्डं दशगुणेनैव वारिणा प्रावृतं बहिः ।
आपो दशगुणेनैव तद्बाह्यतेजसावृतः ॥ ३०
तेजो दशगुणेनैव बाह्यतो वायुनावृतम् ।
वायुर्दशगुणेनैव बाह्यतो नभसावृतः ॥ ३१
आकाशेनावृतो वायुरहङ्कारेण शब्दजः ।
महता शब्दहेतुर्वै प्रधानेनावृतः स्वयम् ॥ ३२
सप्ताण्डावरणान्याहुस्तस्यात्मा कमलासनः ।
कोटिकोटियुतान्यत्र चाण्डानि कथितानि तु ॥ ३३
तत्र तत्र चतुर्व्वक्त्रा ब्रह्माणो हरयो भवाः ।
सृष्टाः प्रधानेन तदा लब्ध्वा शम्भोस्तु सन्निधिम् ॥ ३
लयश्चैव तथान्योऽन्यमाद्यन्तमिति कीर्त्तितम् ।
सर्गस्य प्रतिसर्गस्य स्थितेः कर्त्ता महेश्वरः ॥ ३५
सर्गे च रजसा युक्तः सत्त्वस्थः प्रतिपालने ।
प्रतिसर्गे तमोद्रिक्तः स एव त्रिविधः क्रमात् ॥ ३६
आदिकर्त्ता च भूतानां संहर्त्ता परिपालकः ।
तस्मान्महेश्वरो देवो ब्रह्मणोऽधिपतिः शिवः ॥ ३७
सदाशिवो भवो विष्णुर्ब्रह्मा सर्व्वात्मको यतः ।
एतदण्डे तथा लोका इमे कर्त्ता पितामहः ॥ ३८
प्राकृतः कथितस्त्वेष पुरुषाधिष्ठितो मया ।
सर्गश्चाबुद्धिपूर्व्वस्तु द्विजाः प्राथमिकः शुभः ॥ ३९

इति श्रीलैङ्गे महापुराणे प्राकृतप्राथमिकसर्गकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

सूत उवाच ।

अथ प्राथमिकस्येह यः कालस्तदहः स्मृतम् ।
सर्गस्य तादृशी रात्रिः प्राकृतस्य समासतः ॥ १
दिवा सृष्टिं विकुरुते रजन्यां प्रलयं विभुः ।
औपचारिकमस्यैतदहोरात्रं न विद्यते ॥ २
दिवा विकृतयः सर्व्वे विकारा विश्वदेवताः ।
प्रजानां पतयः सर्व्वे तिष्ठन्त्यन्ये महर्षयः ॥ ३

रात्रौ सर्व्वं प्रलीयन्ते निशान्ते सम्भवन्ति च।
अहस्तु तस्य वै कल्पो रात्रिस्तादृग्विधा स्मृता ॥ ४
चतुर्युगसहस्रान्ते मनवस्तु चतुर्द्दश।
चत्वारि तु सहस्राणि वत्सराणां कृतं द्विजाः ॥ ५
तावच्छती च वै सन्ध्या सन्ध्यांशश्च कृतस्य तु।
त्रिशती द्विशती सन्ध्या तथा चैकशती क्रमात् ॥ ६
अंशकः षट्शतं तस्मात् कृतसन्ध्यांशकं विना।
त्रिद्व्येकसाहस्रमितो विना सन्ध्यांशकेन तु ॥ ७
त्रेताद्वापरतिष्याणां कृतस्य कथयामि वः।
निमेषपञ्चदशका काष्ठा स्वस्थस्य सुव्रताः ॥ ८
मर्त्यस्य चाक्ष्णोस्तस्याश्च ततस्त्रिंशतिका कला।
कलात्रिंशतिको विप्रा मुहूर्त्त इति कल्पितः ॥ ९
मुहूर्त्तपञ्चदशिका रजनी तादृशन्त्वहः।
पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ॥ १०
कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्व्वरी।
त्रिंशद्वै मानुषा मासाः पित्र्यो मासस्तु स स्मृतः ॥११
शतानि त्रीणि मासानां षष्ठ्या चाप्यधिकानि वै।
पित्र्यः संवत्सरो ह्येष मानुषेण विभाव्यते ॥ १२
मानुषेणैव मानेन वर्षाणां यच्छतं भवेत्।
पितॄणां त्रीणि वर्षाणि सङ्ख्यातानीह तानि वै ॥१३
दश वै द्व्यधिका मासाः पितृसंख्येह संस्मृता।
लौकिकेनैव मानेन अब्दो यो मानुषः स्मृतः ॥ १४
एतद्दिव्यमहोरात्रमिति लैङ्गे च पठ्यते।
दिव्ये रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ॥ १५
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्।
एते रात्र्यहनी दिव्ये प्रसंख्याते विशेषतः ॥ १६
त्रिंशद्यानि तु वर्षाणि दिव्यो मासस्तु स स्मृतः।
मानुषन्तु शतं विप्रा दिव्यमासास्त्रयस्तु ते ॥ १७
दश चैव तथाहानि दिव्यो ह्येष विधिः स्मृतः।
त्रीणि वर्षशतान्येव षष्टिवर्षाणि यानि तु ॥ १८
दिव्यः संवत्सरो ह्येष मानुषेण प्रकीर्त्तितः।
त्रीणि वर्षसहस्राणि मानुषाणि प्रमाणतः ॥ १९
त्रिंशदन्यानि वर्षाणि मतः सप्तर्षिवत्सरः।
नव यानि सहस्राणि वर्षाणां मानुषाणि तु ॥ २०
अन्यानि नवतीश्चैव ध्रौवः संवत्सरस्तु सः।
षट्त्रिंशत् तु सहस्राणि वर्षाणां मानुषाणि तु ॥२१
वर्षाणां तच्छतं ज्ञेयं दिव्यो ह्येष विधिः स्मृतः।
त्रीण्येव नियुतान्याहुर्वर्षाणां मानुषाणि तु ॥ २२
षष्टिश्चैव सहस्राणि संख्यातानि तु संख्यया।
दिव्यं वर्षसहस्रन्तु प्राहुः संख्याविदो जनाः ॥ २३
दिव्येनैव प्रमाणेन युगसंख्याप्रकल्पनम्।
पूर्व्वं कृतयुगं नाम ततस्त्रेता विधीयते ॥ २४
द्वापरश्च कलिश्चैव युगान्येतानि सुव्रताः।
अथ संवत्सरा दृष्टा मानुषेण प्रमाणतः ॥ २५
कृतस्याद्यस्य विप्रेन्द्रा दिव्यमानेन कीर्त्तितम्।
सहस्राणां शतान्यासंश्चतुर्द्दश च संख्यया ॥ २६
चत्वारिंशत्सहस्राणि तथान्यानि कृतं युगम्।
तथा दशसहस्राणां वर्षाणां शतसंख्यया ॥ २७
अशीतिश्च सहस्राणि कालस्त्रेतायुगस्य च।
सप्तैव नियुतान्याहुर्वर्षाणां मानुषाणि तु ॥ २८
विंशतिश्च सहस्राणि कालस्तु द्वापरस्य च।
तथा शतसहस्राणि वर्षाणां त्रीणि संख्यया ॥ २९
षष्टिश्चैव सहस्राणि कालः कलियुगस्य तु।
एवं चतुर्युगः काल ऋते सन्ध्यांशकात् स्मृतः ॥ ३०
नियुतान्येव षट्त्रिंशन्निरंशानि तु तानि वै।
चत्वारिंशत् तथा त्रीणि नियुतानीह संख्यया ॥३१
विंशतिश्च सहस्राणि सन्ध्यांशश्च चतुर्युगः।
एवं चतुर्युगाख्यानां साधिका ह्येकसप्ततिः ॥ ३२
कृतत्रेतादियुक्तानां मनोरन्तरमुच्यते।
मन्वन्तरस्य संख्या च वर्षाग्रेण प्रकीर्त्तिता ॥ ३३
त्रिंशत्कोट्यस्तु वर्षाणां मानुषेण द्विजोत्तमाः।
सप्तषष्टिस्तथान्यानि नियुतान्यधिकानि तु ॥ ३४
विंशतिश्च सहस्राणि कालोऽयमधिकं विना।
मन्वन्तरस्य संख्येषा लैङ्गेऽस्मिन् कीर्त्तिता द्विजाः॥३५
चतुर्युगस्य च तथा वर्षसंख्या प्रकीर्त्तिता।
चतुर्युगसहस्रं वै कल्पश्चैको द्विजोत्तमाः ॥ ३६
निशान्ते सृजते लोकान् नश्यन्ते निशि जन्तवः।
तत्र वैमानिकानान्तु अष्टाविंशतिकोटयः ॥ ३७
मन्वन्तरेषु वै संख्या सान्तरेषु यथा तथा।
त्रीणि कोटिशतान्यासन् कोट्यो द्विनवतिस्तथा ॥३८
कल्पेऽतीते तु वै विप्राः सहस्राणान्तु सप्ततिः।
पुनस्तथाष्टसाहस्रं सर्व्वत्रैव समासतः ॥ ३९
कल्पावसानिकांस्त्यक्त्वा प्रलये समुपस्थिते।
महर्लोकात् प्रयान्त्येते जनलोकं जनास्ततः ॥ ४०

कोटीनां द्वे सहस्रे तु अष्टौ कोटिशतानि तु।
द्विषष्टिश्च तथा कोट्यो नियुतानि च सप्ततिः॥ ४१
कल्पार्द्धसंख्या दिव्या व कल्पमेवन्तु कल्पयेत्।
कल्पानां वै सहस्रन्तु वर्षमेकमजस्य तु॥ ४२
वर्षाणामष्टसाहस्रं ब्राह्मं वै ब्रह्मणो युगम्।
सवनं युगसाहस्रं सर्व्वदेवोद्भवस्य तु॥ ४३
सवनानां सहस्रन्तु त्रिविधं त्रिगुणं तथा।
ब्रह्मणस्तु तथा प्रोक्तः कालः कालात्मनः प्रभोः॥४४
भवोद्भवस्तपश्चैव भव्यो रम्भः क्रतुः पुनः।
क्रतुर्वह्निर्हव्यवाहः सावित्रः शुद्ध एव च॥ ४५
उशिकः कुशिकश्चैव गान्धारो मुनिसत्तमाः।
ऋषभश्च तथा षड्जो मज्जालीयश्च मध्यमः॥ ४६
वैराजो वै निषादश्च मुख्यो वै मेघवाहनः।
पञ्चमश्चित्रकश्चैव आकूतिर्ज्ञान एव च॥ ४७
मनः सुदर्शो हंहश्च तथा वै श्वेतलोहितः।
रक्तश्च पीतवासाश्च असितः सर्व्वरूपकः॥ ४८
एवं कल्पास्तु संख्याता ब्रह्मणोऽव्यक्तजन्मनः।
कोटिकोटिसहस्राणि कल्पानां मुनिसत्तमाः॥ ४९
गतानि तावच्छेषाणि अहर्निश्यानि वै पुनः।
यरान्ते वै विकाराणि विकारं यान्ति विश्वतः॥५०
विकारस्य शिवस्याज्ञावशेनैव तु संहृतिः।
संहृते तु विकारे च प्रधाने चात्मनि स्थिते॥ ५१
साधर्म्येणावतिष्ठेते प्रधानपुरुषावुभौ।
गुणानाञ्चैव वैषम्ये विप्राः सृष्टिरिति स्मृता॥ ५२
साम्ये लयो गुणानान्तु तयोर्हेतुर्महेश्वरः।
लीलया देवदेवेन सर्गास्त्वीदृग्विधाः कृताः॥ ५३
असंख्याताश्च संक्षेपात् प्रधानादन्वधिष्ठितात्।
असंख्याताश्च कल्पाख्या ह्यसंख्याताः पितामहाः॥५४
हरयश्चाप्यसंख्यातास्त्वेक एव महेश्वरः।
प्रधानादिप्रवृत्तानि लीलया प्राकृतानि तु॥ ५५
गुणात्मिका च तद्वृत्तिस्तस्य देवस्य वै त्रिधा।
अप्राकृतस्य तस्यादिर्मध्यान्तं नास्ति चात्मनः॥ ५६
पितामहस्याथ परः परार्द्धद्वयसम्मितः।
दिवा सृष्टस्तु यत् सर्वं नश्यते निशि चास्य तत्॥५७
भूर्भुवःस्वर्महस्तत्र नश्यते चोर्द्धतो न च।
रात्रौ चैकार्णवे ब्रह्मा नष्टे स्थावरजङ्गमे॥ ५८
सुष्वापाम्भसि यस्तस्मान्नारायण इति स्मृतः।
शर्व्वर्य्यन्ते प्रबुद्धो वै दृष्ट्वा शून्यं चराचरम्॥ ५९
स्रष्टुं तदा मतिं चक्रे ब्रह्मा ब्रह्मविदां वरः।
उदकैराप्लुतां क्ष्मां तां समादाय सनातनः॥ ६०
पूर्व्ववत् स्थापयामास वाराहं रूपमास्थितः।
नदी-नद-समुद्रांश्च पूर्व्ववच्चाकरोत् प्रभुः॥ ६१
कृत्वा धरां प्रयत्नेन निम्नोन्नतिविवर्ज्जिताम्।
धरायां सोऽचिनोत्सर्व्वान्गिरीन्दग्धान्पुराग्निना॥
भूराद्यांश्चतुरो लोकान् कल्पयामास पूर्व्ववत्।
स्रष्टुञ्च भगवांश्चक्रे तदा स्रष्टा पुनर्मतिम्॥ ६२

इति श्रीलैङ्गे महापुराणे सृष्टिप्रारम्भो नाम
चतुर्थोऽध्यायः॥ ४॥

---

## पञ्चमोऽध्यायः।

सूत उवाच।

यदा स्रष्टुं मतिं चक्रे मोहश्चासीन्महात्मनः।
द्विजाश्चाबुद्धिपूर्व्वन्तु ब्रह्मणोऽव्यक्तजन्मनः॥१
तमो मोहो महामोहस्तामिस्रश्चान्धसंज्ञितः।
अविद्या पञ्चधा ह्येषा प्रादुर्भूता स्वयम्भुवः॥ २
अविद्यया मुनेर्ग्रस्तः सर्गो मुख्य इति स्मृतः।
असाधक इति स्मृत्वा सर्गो मुख्यः प्रजापतिः॥ ३
अभ्यमन्यत सोऽन्यं वै नगा मुख्योद्भवाः स्मृताः।
त्रिधा कण्ठो मुनेस्तस्य ध्यायतो वै ह्यवर्त्तत॥ ४
प्रथमं तस्य वै जज्ञे तिर्य्यक्स्रोतो महात्मनः।
ऊर्द्धस्रोतः परस्तस्य सात्त्विकः स इति स्मृतः॥५
अर्व्वाक्स्रोतोऽनुग्रहश्च तथा भूतादिकः पुनः।
ब्रह्मणो महतस्त्वाद्यो द्वितीयो भौतिकस्तथा॥ ६
सर्गस्तृतीयश्चैन्द्रियस्तुरीयो मुख्य उच्यते।
तिर्य्यग्योन्यः पञ्चमस्तु षष्ठो दैविक उच्यते॥ ७
सप्तमो मानुषो विप्रा अष्टमोऽनुग्रहः स्मृतः।
नवमश्चैव कौमारः प्राकृता वैकृतास्त्विमे॥ ८
पुरस्तादसृजद्देवः सनन्दं सनकं तथा।
सनातनं मुनिश्रेष्ठा नैष्कर्म्येण गताः परम्॥ ९
मरीचिभृग्वङ्गिरसं पुलस्त्यं पुलहं क्रतुम्।
दक्षमत्रिं वशिष्ठञ्च सोऽसृजद्योगविद्यया॥ १०
नवैते ब्रह्मणः पुत्रा ब्रह्मज्ञा ब्राह्मणोत्तमाः।
ब्रह्मवादिन एवैते ब्रह्मणः सदृशाः स्मृताः॥ ११

अङ्गुल्यस्यैव धर्म्मस्य अधर्म्मो धर्म्मसन्निधिः ।
द्वादशैव प्रजास्त्वेता ब्रह्मणोऽव्यक्तजन्मनः ॥ १२
ऋभुं सनत्कुमारञ्च ससर्ज्जादौ सनातनः ।
तावूर्द्ध्वरेतसौ दिव्यौ चाग्रजौ ब्रह्मवादिनौ ॥ १३
कुमारौ ब्रह्मणस्तुल्यौ सर्व्वज्ञौ सर्व्वभाविनौ ।
वक्ष्ये भार्य्याकुलं तेषां मुनीनामग्रजन्मनाम् ॥ १४
समासतो मुनिश्रेष्ठाः प्रजासम्भूतिमेव च ।
शतरूपान्तु वै राज्ञीं विराजमसृजत् प्रभुः ॥ १५
स्वायम्भुवात् तु वै राज्ञी शतरूपा त्वयोनिजा ।
लेभे पुत्रद्वयं पुण्या तथा कन्याद्वयञ्च सा ॥ १६
उत्तानपादो ह्यवरो धीमान् ज्येष्ठः प्रियव्रतः ।
ज्येष्ठा वरिष्ठा त्वाकूतिः प्रसूतिश्चानुजा सुता ॥ १७
उपयेमे तदाकूतिं रुचिर्नाम प्रजापतिः ।
प्रसूतिं भगवान् दक्षो लोकधात्रीञ्च योगिनीम् ॥ १८
दक्षिणासहितं यज्ञमाकूतिः सुषुवे तथा ।
दक्षिणा जनयामास दिव्यान् द्वादश पुत्रिकान् ॥ १९
प्रसूतिः सुषुवे दक्षाच्चतुर्व्विंशति च द्विजाः ।
श्रद्धां लक्ष्मीं धृतिं पुष्टिं तुष्टिं मेधां क्रियां तथा ॥ २०
बुद्धिं लज्जां वपुः शान्तिं सिद्धिं कीर्त्तिं महातपाः ।
ख्यातिं शान्तिञ्च सम्भूतिं स्मृतिं प्रीतिं क्षमां तथा ॥ २१
सन्नतिञ्चानुसूयाञ्च ऊर्ज्जां स्वाहां सुरारणिम् ।
स्वधाञ्चैव महाभागां प्रददौ च यथाक्रमम् ॥ २२
श्रद्धाद्याश्चैव कीर्त्त्यन्तास्त्रयोदश सुदारिकाः ।
धर्म्मं प्रजापतिं जग्मुः पतिं परमदुर्लभाः ॥ २३
उपयेमे भृगुर्धीमान् ख्यातिं तां भार्गवारणिम् ।
सम्भूतिञ्च मरीचिस्तु स्मृतिं चैवाङ्गिरा मुनिः ॥ २४
प्रीतिं पुलस्त्यः पुण्यात्मा क्षमां तां पुलहो मुनिः ।
क्रतुश्च सन्नतिं धीमान् अत्रिस्ताञ्चानुसूयकाम् ॥ २५
ऊर्ज्जां वशिष्ठो भगवान् वरिष्ठो वारिजेक्षणाम् ।
विभावसुस्तथा स्वाहां स्वधां वै पितरस्तथा ॥ २६
पुत्त्रीकृता सती या सा मानसी शिवसम्भवा ।
दक्षेण जगतां धात्री रुद्रमेवाश्रिता पतिम् ॥ २७
अर्द्धनारीश्वरं दृष्ट्वा सर्गादौ कनकाण्डजः ।
विभजस्वेति चाहादौ यदा जाता तदाभवत् ॥ २८
तस्याश्चैवांशजाः सर्व्वास्त्रियस्त्रिभुवने तथा ।
एकादशविधा रुद्रास्तस्य चांशोद्भवास्तथा ॥ २९
स्त्रीलिङ्गमखिलं सा वै पुंलिङ्गं नीललोहितः ।

तं दृष्ट्वा भगवान् ब्रह्मा दक्षमालोक्य सुव्रतान् ॥ ३०
भजस्व धात्रीं जगतां ममापि च तवापि च ।
पुन्नाम्नो नरकात् त्राति इति पुत्त्री त्विहोक्तितः ॥ ३१
प्रशस्ता तव कान्तेयं स्यात् पुत्त्री विश्वमातृका ।
तस्मात् पुत्त्री सती नाम्ना तवैषा च भविष्यति ॥ ३२
एवमुक्तस्तदा दक्षो नियोगाद्ब्रह्मणो मुनिः ।
लब्धा पुत्त्रीं ददौ साक्षात् सतीं रुद्राय सादरम् ॥ ३३
धर्म्मस्य पत्न्यः श्रद्धाद्याः कीर्त्तिता वै त्रयोदश ।
तासु धर्म्मप्रजां वक्ष्ये यथाक्रममनुत्तमम् ॥ ३४
कामो दर्पोऽथ नियमः सन्तोषो लोभ एव च ।
श्रुतस्तु दण्डः समयो बोधश्चैव महाद्युतिः ॥ ३५
अप्रमादश्च विनयो व्यवसायो द्विजोत्तमाः ।
क्षेमं सुखं यशश्चैव धर्म्मपुत्त्राश्च तासु वै ॥ ३६
धर्म्मस्य वै क्रियायान्तु दण्डः समय एव च ।
अप्रमादस्तथा बोधो बुद्धेर्धर्म्मस्य तौ सुतौ ॥ ३७
तस्मात् पञ्चदशैवैते तासु धर्म्मात्मजास्त्विह ।
भृगुपत्नी च सुषुवे ख्यातिर्विष्णोः प्रियां श्रियम् ॥ ३८
धातारञ्च विधातारं मेरोर्जामातरौ सुतौ ।
प्रभूतिर्नाम या पत्नी मरीचेः सुषुवे सुतौ ॥ ३९
पूर्णमासन्तु मारीचं ततः कन्याचतुष्टयम् ।
तुष्टिर्ज्ज्येष्ठा च वै दृष्टिः कृषिश्चापचितिस्तथा ॥ ४०
क्षमा च सुषुवे पुत्रान् पुत्त्रीञ्च पुलहाच्छुभाम् ।
कर्द्दमञ्च वरीयांसं सहिष्णुं मुनिसत्तमाः ॥ ४१
तथा कनकपीतां स पीवरीं पृथिवीसमाम् ।
प्रीत्यां पुलस्त्यश्च तथा जनयामास वै सुतान् ॥ ४२
दत्तोर्णं वेदबाहुञ्च पुत्त्रीञ्चान्यां दृषद्वतीम् ।
पुत्राणां षष्टिसाहस्रं सन्नतिः सुषुवे शुभा ॥ ४३
क्रतोस्तु भार्य्या सर्व्वे ते बालखिल्या इति श्रुताः ।
सिनीवालीं कुहूञ्चैव राकाञ्चानुमतिं तथा ॥ ४४
स्मृतिश्च सुषुवे पत्नी मुनेश्चाङ्गिरसस्तथा ।
लब्धानुभावमग्निञ्च कीर्त्तिमन्तञ्च सुव्रता ॥ ४५
अत्रेर्भार्य्यानुसूया वै सुषुवे षट् प्रजास्तु याः ।
तास्वेका कन्यका नाम्ना श्रुतिः सा सुतपञ्चकम् ॥ ४६
सत्यनेत्रो मुनिर्भव्यो मूर्त्तिरापः शनैश्वरः ।
सोमश्च वै श्रुतिः षष्ठी पञ्चात्रेयास्तु सूनवः ॥ ४७
ऊर्ज्जा वशिष्ठाद्दै लेभे सुतांश्च सुतवत्सला ।
ज्यायसी पुण्डरीकाक्षान् वाशिष्ठान् वरलोचना ४८

रजः सुहोत्रो बाहुश्च सवनश्चानघस्तथा।
सुतपाः शुक्र इत्येते मुनेर्वै सप्त सूनवः॥ ४९
यश्चाभिमानी भगवान् भवात्मा
पैतामहो वह्निरसुः प्रजानाम्।
स्वाहा च तस्मात् सुषुवे सुतानां
त्रयं त्रयाणां जगतां हिताय॥ ५०

इति श्रीलैङ्गे महापुराणे उत्पत्तिवर्णनं नाम पञ्चमोऽध्यायः॥ ५॥

---

## षष्ठोऽध्यायः।

सूत उवाच।

पवमानः पावकश्च शुचिरग्निश्च ते स्मृताः।
निर्मथ्यः पवमानस्तु वैद्युतः पावकः स्मृतः॥ १
शुचिः सौरस्तु विज्ञेयः स्वाहापुत्रास्त्रयस्तु ते।
पुत्रैः पौत्रैस्त्विहैतेषां संख्या संक्षेपतः स्मृता॥ २
विहृत्य सप्तकस्यादौ चत्वारिंशन्नवैव च।
इत्येते वह्नयः प्रोक्ताः प्रणीयन्तेऽध्वरेषु च॥ ३
सर्व्वे तपस्विनस्त्वेते सर्व्वे व्रतभृतः स्मृताः।
प्रजानां पतयः सर्व्वे सर्व्वे रुद्रात्मकाः स्मृताः॥ ४
अयज्वानश्च यज्वानः पितरः प्रीतिमानसाः।
अग्निष्वात्ताश्च यज्वानः शेषा वर्हिषदः स्मृताः॥ ५
मेनान्तु मानसीं तेषां जनयामास वै स्वधा।
अग्निष्वात्तात्मजा मेना मानसी लोकविश्रुता॥ ६
असूत मेना मैनाकं क्रौञ्चं तस्यानुजामुमाम्।
गङ्गां हैमवतीं जज्ञे भवाङ्गाश्लेषपावनीम्॥ ७
धरणीं जनयामास मानसीं यज्ञयाजिनीम्।
स्वधा सा मेरुराजस्य पत्नी पद्मसमानना॥ ८
पितरोऽमृतपाः प्रोक्तास्तेषाञ्चैवेह विस्तरः।
ऋषीणाञ्च कुलं सर्व्वं शृणुध्वं तत् सविस्तरम्॥ ९
वदामि पृथगध्यायसंस्थितं वस्तदूर्द्धतः।
दाक्षायणी सती याता पार्श्वं रुद्रस्य पार्व्वती॥१०
पश्चाद्दक्षं विनिन्द्यैषा पतिं लेभे भवं तथा।
तां ध्यात्वा ह्यसृजद्रुद्राननेकान् नीललोहितः॥ ११
आत्मनस्तु समान् सर्व्वान् सर्व्वलोकनमस्कृतान्।
याचितो मुनिशार्दूला ब्रह्मणा प्रहसन् दयात्।
तैस्तु सञ्छादितं सर्व्वं चतुर्द्दशविधं जगत्॥ १२

तान्दृष्ट्वा विविधान्रुद्रान् निर्म्मलान्नीललोहितान्।
जरामरणनिर्म्मुक्तान् प्राह रुद्रान् पितामहः॥ १३
नमोऽस्तु वो महादेवास्त्रिनेत्रा नीललोहिताः।
सर्व्वज्ञाः सर्व्वगा दीर्घा ह्रस्वा वामनकाः शुभाः॥ १४
हिरण्यकेशा दृष्टिघ्ना नित्या बुद्धाश्च निर्म्मलाः।
निर्द्वन्द्वा वीतरागाश्च विश्वात्मानो भवात्मजाः॥ १५
एवं स्तुत्वा तदा रुद्रान् रुद्रञ्चाह भवं शिवम्।
प्रदक्षिणीकृत्य तदा भगवान् कनकाण्डजः॥ १६
नमोऽस्तु ते महादेव प्रजा नार्हसि शङ्कर।
मृत्युहीना विभोः स्रष्टुं मृत्युयुक्ताः सृज प्रभो॥ १७
ततस्तमाह भगवान् न हि मे तादृशी स्थितिः।
स त्वं सृज यथाकामं मृत्युयुक्ताः प्रजाः प्रभो॥ १८
लब्ध्वा ससर्ज्ज सकलं शङ्कराच्चतुराननः।
जरामरणसंयुक्तं जगदेतच्चराचरम्।
शङ्करोऽपि तदा रुद्रैर्निवृत्तात्मा ह्यधिष्ठितः॥ १९
स्थाणुत्वं तस्य वै विप्राः शङ्करस्य महात्मनः।
निष्कलस्यात्मनः शम्भोः स्वेच्छाधृतशरीरिणः॥ २०
यं रुद्रः सर्व्वभूतानां करोति घृणया यतः।
शङ्करस्याप्रयत्नेन तदात्मा योगविद्यया॥ २१
वैराग्यस्थं विरक्तस्य विमुक्तिर्यच्छुमुच्यते।
अणोस्तु विषयत्यागः संसारभयतः क्रमात्॥ २२
वैराग्याज्जायते पुंसो विरागो दर्शनान्तरे।
विमुखो विगुणत्यागो विज्ञानस्याविचारतः॥ २३
तस्य चास्य च सन्धानं प्रसादात् परमेष्ठिनः।
धर्म्मो ज्ञानञ्च वैराग्यमैश्वर्य्यं शङ्करादिह॥ २४
स एव शङ्करः साक्षात् पिनाकी नीललोहितः।
ये शङ्कराश्रिताः सर्व्वे मुच्यन्ते ते न संशयः॥ २५
न गच्छन्त्येव नरकं पापिष्ठा अपि दारुणम्।
आश्रिताः शङ्करं तस्मात् प्राप्नुवन्ति च शाश्वतम्॥२६

ऋषय ऊचुः।

मायान्ताश्चैव घोराद्या ह्यष्टाविंशतिरेव च।
कोटयो नरकाणान्तु पच्यन्ते तासु पापिनः॥ २७
अनाश्रिताः शिवं रुद्रं शङ्करं नीललोहितम्।
आश्रयं सर्व्वभूतानामव्ययं जगतां पतिम्॥ २८
पुरुषं परमात्मानं पुरुहूतं पुरुष्टुतम्।
तमसा कालरुद्राख्यं रजसा कनकाण्डजम्॥ २९
सत्त्वेन सर्व्वगं विष्णुं निर्गुणत्वे महेश्वरम्॥ ३०

केन गच्छन्ति नरकं नराः केन महामते ।
कर्म्मणाऽकर्म्मणा वापि श्रोतुं कौतूहलं हि नः ॥ ३१

इति श्रीलैङ्गे महापुराणे रुद्रोत्पत्तिर्नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

सूत उवाच ।

रहस्यं वः प्रवक्ष्यामि भवस्यामिततेजसः ।
प्रभावं शङ्करस्याद्यं सङ्क्षेपात् सर्व्वदर्शिनः ॥ १
योगिनः सर्व्वतत्त्वज्ञाः परं वैराग्यमास्थिताः ।
प्राणायामादिभिश्चाष्ट-साधनैः सहचारिणः ॥ २
करुणादिगुणोपेताः कृत्वापि विविधानि ते ।
कर्म्माणि नरकं स्वर्गं गच्छन्त्येव स्वकर्म्मणा ॥ ३
प्रसादाज्जायते ज्ञानं ज्ञानाद्योगः प्रवर्त्तते ।
योगेन जायते मुक्तिः प्रसादादखिलं ततः ॥ ४

ऋषय ऊचुः ।

प्रसादाद्यदि विज्ञानं स्वरूपं वक्तुमर्हसि ।
दिव्यं माहेश्वरञ्चैव योगं योगविदां वर ॥ ५
कथं करोति भगवान् चिन्तया रहितः शिवः ।
प्रसादं योगमार्गेण कस्मिन् काले नृणां विभुः ॥ ६

रोमहर्षण उवाच ।

देवानाञ्च ऋषीणाञ्च पितॄणां सन्निधौ पुरा ।
शैलादिना तु कथितं शृण्वन्तु ब्रह्मसूनवे ॥ ७
व्यासावताराणि तथा द्वापरान्ते च सुव्रताः ।
योगाचार्य्यावताराणि तथा तिष्ये तु शूलिनः ॥ ८
तत्र तत्र विभोः शिष्याश्चत्वारः शमभाजनाः ।
प्रशिष्या बहवस्तेषां प्रसीदत्येवमीश्वरः ॥ ९
एवं क्रमागतं ज्ञानं मुखादेव नृणां विभोः ।
वैश्यान्तं ब्राह्मणाद्यं हि घृणया चानुरूपतः ॥ १०

ऋषय ऊचुः ।

द्वापरे द्वापरे व्यासाः के व कुत्रान्तरेषु वै ।
कल्पेषु कस्मिन् कल्पे नो वक्तुमर्हसि चात्र तान् ॥ ११

सूत उवाच ।

शृण्वन्तु कल्पे वाराहे द्विजा वैवस्वतान्तरे ।
व्यासांश्च साम्प्रतं रुद्रांस्तथा सर्व्वान्तरेषु वै ॥ १२
देवानाञ्च पुराणानां तथा ज्ञानप्रदर्शकान् ।
यथाक्रमं प्रवक्ष्यामि सर्व्वावर्त्तेषु साम्प्रतम् ॥ १३
क्रतुः सत्यो भार्गवश्च अङ्गिरा सविता द्विजाः ।
मृत्युः शतक्रतुर्धीमान् वशिष्ठो मुनिपुङ्गवः ॥ १४
सारस्वतस्त्रिधामा च त्रिवृतो मुनिपुङ्गवः ।
शततेजाः स्वयं धर्म्मो नारायण इति श्रुतः ॥ १५
तरक्षुश्चारुणिर्धीमांस्तथा देवः कृतञ्जयः ।
ऋतञ्जयो भरद्वाजो गौतमः कविसत्तमः ॥ १६
वाचश्रवा मुनिः साक्षात् तथा शुष्मायणिः शुचिः ।
तृणबिन्दुर्मुनी रूक्षः शक्तिः शाक्तेय उत्तरः ॥ १७
जातूकर्ण्यो हरिः साक्षात् कृष्णद्वैपायनो मुनिः ।
व्यासास्त्वेते च शृण्वन्तु कलौ योगेश्वरान् क्रमात् ॥ १८
असंख्याता हि कल्पेषु विभोः सर्व्वान्तरेषु च ।
कलौ रुद्रावताराणां व्यासानां किल गौरवात् ॥ १९
वैवस्वतान्तरे कल्पे वाराहे ये च तान् पुनः ।
अवतारान् प्रवक्ष्यामि तथा सर्व्वान्तरेषु वै ॥ २०

ऋषय ऊचुः ।

मन्वन्तराणि वाराहे वक्तुमर्हसि साम्प्रतम् ।
तथैव चोर्द्ध्वकल्पेषु सिद्धान् वैवस्वतान्तरे ॥ २१

रोमहर्षण उवाच ।

मनुः स्वायम्भुवस्त्वाद्यस्ततः स्वारोचिषो द्विजाः ।
औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ २२
वैवस्वतश्च सावर्णिर्धर्म्मः सावर्णिकः पुनः ।
पिशङ्गश्चापिशङ्गाभः शबलो वर्णकस्तथा ॥ २३
औकारान्ता अकाराद्या मनवः परिकीर्त्तिताः ।
श्वेतः पाण्डुस्तथा रक्तस्ताम्रः पीतश्च कापिलः ॥ २४
कृष्णः श्यामस्तथा धूम्रः सुधूम्रश्च द्विजोत्तमाः ।
अपिशङ्गः पिशङ्गश्च त्रिवर्णः शबलस्तथा ॥ २५
कालन्धुरस्तु कथिता वर्णतो मनवः शुभाः ।
नामतो वर्णतश्चैव वर्णतः पुनरेव च ॥ २६
स्वरात्मानः समाख्यातास्त्वन्तरेशाः समासतः ।
वैवस्वत ऋकारस्तु मनुः कृष्णः सुरेश्वरः ॥ २७
सप्तमस्तस्य वक्ष्यामि युगावर्त्तेषु योगिनः ।
समतीतेषु कल्पेषु तथा चानागतेषु वै ॥ २८
वाराहः साम्प्रतं ज्ञेयः सप्तमान्तरतः क्रमात् ।
योगावतारांश्च विभोः शिष्याणां सन्ततिं तथा ॥ २९
समीक्ष्य सर्व्वकालेषु तथावर्त्तेषु योगिनाम् ।
आद्ये श्वेतः कलौ रुद्रः सुतारो मदनस्तथा ॥ ३०

सुहोत्रः कङ्कणश्चैव लोकाक्षिर्मुनिसत्तमाः।
जैगीषव्यो महातेजा भगवान् दधिवाहनः॥ ३१
ऋषभश्च मुनिर्धीमानुग्रश्चात्रिः सुबालकः।
गौतमश्चाथ भगवान् सर्व्वदेवनमस्कृतः॥ ३२
वेदशीर्षश्च गोकर्णो गुहावासी शिखण्डभृत्।
जटामालाट्टहासश्च दारुको लाङ्गली तथा॥ ३३
महाकायमुनिः शूली दण्डी मुण्डीश्वरः स्वयम्।
सहिष्णुः सोमशर्म्मा च लकुलीशो जगद्गुरुः॥ ३४
वैवस्वतेऽन्तरे सम्यक् प्रोक्ता हि परमात्मनः।
योगाचार्य्यावतारा ये सर्व्वावर्त्तेषु सुव्रताः॥ ३५
व्यासाश्चैवं मुनिश्रेष्ठा द्वापरे द्वापरे त्विमे।
योगीश्वराणां चत्वारः शिष्याः प्रत्येकमव्ययाः॥ ३६
श्वेतः श्वेतशिखण्डी च श्वेताश्वः श्वेतलोहितः।
दुन्दुभिः शतरूपश्च ऋचीकः केतुमांस्तथा॥ ३७
विशोकश्च विकेशश्च विपाशः पापनाशनः।
सुमुखो दुर्म्मुखश्चैव दुर्द्दमो दुरतिक्रमः॥ ३८
सनकश्च सनन्दश्च प्रभुर्यश्च सनातनः।
ऋभुः सनत्कुमारश्च सुधामा विरजास्तथा॥ ३९
शङ्खपाद्वैरजश्चैव मेघः सारस्वतस्तथा।
सुवाहनो मुनिश्रेष्ठो मेघवाहो महाद्युतिः॥ ४०
कपिलश्चासुरिश्चैव तथा पञ्चशिखो मुनिः।
वाल्कलश्च महायोगी धर्म्मात्मानो महौजसः॥ ४१
पराशरश्च गर्गश्च भार्गवश्चाङ्गिरास्तथा।
बलबन्धुर्निरामित्रः केतुशृङ्गस्तपोधनः॥ ४२
लम्बोदरश्च लम्बश्च लम्बाक्षो लम्बकेशकः।
सर्व्वज्ञः समबुद्धिश्च साध्यः सर्व्वस्तथैव च॥ ४३
सुधामा काश्यपश्चैव वाशिष्ठो विरजास्तथा।
अत्रिर्देवसदश्चैव श्रवणोऽथ श्रविष्ठकः।
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः॥ ४४
कश्यपोऽप्युशनाश्चैव च्यवनोऽथ बृहस्पतिः।
उतथ्यो वामदेवश्च महायोगी महाबलः॥ ४५
वाचश्रवाः सुधीकश्च श्यावाश्वश्च यतीश्वरः।
हिरण्यनाभः कौशल्यो लोगाक्षिः कुथुमिस्तथा॥४६
सुमन्तुर्व्वर्बरी विद्वान् कबन्धः कुशिकन्धरः।
प्लक्षो दाल्भ्यायनिश्चैव केतुमान् गोपनस्तथा॥४७
भल्लावी मधुपिङ्गश्च श्वेतकेतुस्तपोनिधिः।
उशिको बृहदश्वश्च देवलः कविरेव च॥ ४८
शालिहोत्रोऽग्निवेशश्च युवनाश्वः शरद्वसुः।
छगलः कुण्डकर्णश्च कुम्भश्चैव प्रवाहकः॥ ४९
उलूको विद्युतश्चैव मण्डूको ह्याश्वलायनः।
अक्षपादः कुमारश्च उलूको वत्स एव च॥ ५०
कुशिकश्चैव गर्भश्च मित्रः कौरुष्य एव च।
शिष्या ह्येते महात्मानः सर्व्वावर्त्तेषु योगिनाम्॥५१
विमला ब्रह्मभूयिष्ठा ज्ञानयोगपरायणाः।
एते पाशुपताः सिद्धा भस्मोद्धूलितविग्रहाः॥ ५२
शिष्याः प्रशिष्याश्चैतेषां शतशोऽथ सहस्रशः।
प्राप्य पाशुपतं योगं रुद्रलोकाय संस्थिताः॥ ५३
देवादयः पिशाचान्ताः पशवः परिकीर्त्तिताः।
तेषां पतित्वात् सर्व्वेशो भवः पशुपतिः स्मृतः॥ ५४
तेन प्रणीतो रुद्रेण पशूनां पतिना द्विजाः।
योगः पाशुपतो ज्ञेयः परावरविभूतये॥ ५५

इति श्रीलैङ्गे महापुराणे मनु-व्यास-योगेश्वर-तच्छिष्यकथनं नाम सप्तमोऽध्यायः॥७॥

---

## अष्टमोऽध्यायः।

सूत उवाच।

सङ्क्षेपतः प्रवक्ष्यामि योगस्थानानि साम्प्रतम्।
कल्पितानि शिवेनैव हिताय जगतां द्विजाः॥ १
गलादधोवितस्त्यायन्नाभेरुपरि चोत्तमम्।
योगस्थानमधो नाभेरावर्त्तं मध्यमं भ्रुवोः॥ २
सर्व्वार्थज्ञाननिष्पत्तिरात्मनो योग उच्यते।
एकाग्रता भवेच्चैव सर्व्वदा तत्प्रसादतः॥ ३
प्रसादस्य स्वरूपं यत् स्वसंवेद्यं द्विजोत्तमाः।
वक्तुं न शक्यं ब्रह्माद्यैः क्रमशो जायते नृणाम्॥ ४
योगशब्देन निर्व्वाणं माहेशं पदमुच्यते।
तस्य हेतुरृषेर्ज्ञानं ज्ञानं तस्य प्रसादतः॥ ५
ज्ञानेन निर्द्दहेत् पापं निरुध्य विषयान् सदा।
निरुद्धेन्द्रियवृत्तेस्तु योगसिद्धिर्भविष्यति॥ ६
योगो निरोधो वृत्तेस्तु चित्तस्य द्विजसत्तमाः।
साधनान्यष्टधा चास्य कथितानीह सिद्धये॥ ७
यमस्तु प्रथमः प्रोक्तो द्वितीयो नियमस्तथा।
तृतीयमासनं प्रोक्तं प्राणायामस्ततः परम्॥ ८
प्रत्याहारः पञ्चमो वै धारणा च ततः परा।

ध्यानं सप्तममित्युक्तं समाधिस्त्वष्टमः स्मृतः ॥ ९
तपस्युपरमश्चैव यम इत्यभिधीयते।
अहिंसा प्रथमो हेतुर्यमस्य यमिनां वराः ॥ १०
सत्यमस्तेयमपरं ब्रह्मचर्य्या-परिग्रहौ।
नियमस्यापि वै मूलं यम एव न संशयः ॥ ११
आत्मवत् सर्व्वभूतानां हितायैव प्रवर्त्तनम्।
अहिंसैषा समाख्याता या चात्मज्ञानसिद्धिदा ॥ १२
दृष्टं श्रुतञ्चानुमितं स्वानुभूतं यथार्थतः।
कथनं सत्यमित्युक्तं परपीड़ाविवर्ज्जितम् ॥ १३
नाश्लीलं कीर्त्तयेदेवं ब्राह्मणानामिति श्रुतिः।
परदोषान् परिज्ञाय न वदेदिति चापरम् ॥ १४
अनादानं परस्वानामापद्यपि विचारतः।
मनसा कर्म्मणा वाचा तदस्तेयं समासतः ॥ १५
मैथुनस्याप्रवृत्तिर्हि मनोवाक्कायकर्म्मणा।
ब्रह्मचर्य्यमिति प्रोक्तं यतीनां ब्रह्मचारिणाम् ॥ १६
इह वैखानसानाञ्च विदाराणां विशेषतः।
सदाराणां गृहस्थानां तथैव च वदामि वः ॥ १७
स्वदारे विधिवत् कृत्वा निवृत्तिश्चान्यतः सदा।
मनसा कर्म्मणा वाचा ब्रह्मचर्य्यमिति स्मृतम् ॥ १८
मेध्यास्वनारीसम्भोगं कृत्वा स्नानं समाचरेत्।
एवं गृहस्थो युक्तात्मा ब्रह्मचारी न संशयः ॥ १९
अहिंसाप्येवमेवैषा द्विजगुर्व्वग्निपूजने।
विधिना यादृशी हिंसा सा त्वहिंसा इति स्मृता ॥ २०
स्त्रियः सदा परित्याज्याः सङ्गं नैव च कारयेत्।
कुणपेषु यथा चित्तं तथा कुर्य्याद्विचक्षणः ॥ २१
विण्मूत्रोत्सर्गकालेषु वहिर्भूमौ यथा मतिः।
तथा कार्य्या रतौ चापि स्वदारे चान्यतः कुतः ॥ २२
अङ्गारसदृशी नारी घृतकुम्भसमः पुमान्।
तस्मान्नारीषु संसर्गं दूरतः परिवर्ज्जयेत् ॥ २३
भोगेन तृप्तिर्नैवास्ति विषयाणां विचारतः।
तस्माद्विरागः कर्त्तव्यो मनसा कर्म्मणा गिरा ॥ २४
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ २५
तस्मात् त्यागः सदा कार्य्यस्त्वमृतत्वाय योगिना।
अविरक्तो यतो मर्त्त्यो नानायोनिषु वर्त्तते ॥ २६
त्यागेनैवामृतत्वं हि श्रुतिस्मृतिविदां वराः।
कर्म्मणा प्रजया नास्ति द्रव्येण द्विजसत्तमाः ॥ २७
तस्माद्विरागः कर्त्तव्यो मनोवाक्कायकर्म्मणा।
ऋतौ ऋते निवृत्तिस्तु ब्रह्मचर्य्यमिति स्मृतम् ॥ २८
यमाः सङ्क्षेपतः प्रोक्ता नियमांश्च वदामि वः।
शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः ॥ २९
व्रतोपवासमौनञ्च स्नानञ्च नियमा दश।
नियमः स्यादनीहा च शौचं तुष्टिस्तपस्तथा ॥ ३०
जपः शिवप्रणीधानं पद्मकाद्यं तथासनम्।
वाह्यमाभ्यन्तरं प्रोक्तं शौचमाभ्यन्तरं वरम् ॥ ३१
वाह्यशौचेन युक्तः संस्तथा चाभ्यन्तरं चरेत्।
आग्नेयं वारुणं ब्राह्मं कर्त्तव्यं शिवपूजकैः ॥ ३२
स्नानं विधानतः सम्यक् पश्चादाभ्यन्तरं चरेत्।
आदेहान्तं मृदालिप्य तीर्थतोयेषु सर्व्वदा ॥ ३३
अवगाह्यापि मलिनो ह्यन्तःशौचविवर्ज्जितः।
शैवला झषका मत्स्याः सत्त्वा मत्स्योपजीविनः ॥ ३४
सदावगाह्य सलिले विशुद्धाः किं द्विजोत्तमाः।
तस्मादाभ्यन्तरं शौचं सदा कार्य्यं विधानतः ॥ ३५
आत्मज्ञानाम्भसि स्नात्वा सकृदालिप्य भावतः।
सुवैराग्यमृदा शुद्धः शौचमेवं प्रकीर्त्तितम् ॥ ३६
शुद्धस्य सिद्धयो दृष्टा नैवाशुद्धस्य सिद्धयः।
न्यायेनागतया वृत्त्या सन्तुष्टो यस्तु सुव्रतः ॥ ३७
सन्तोषस्तस्य सततमतीतार्थस्य चास्मृतिः।
चान्द्रायणादिनिपुणस्तपांसि सुशुभानि च ॥ ३८
स्वाध्यायस्तु जपः प्रोक्तः प्रणवस्य त्रिधा स्मृतः।
वाचिकश्चाधमो मुख्य उपांशुश्चोत्तमोत्तमः ॥ ३९
मानसो विस्तरेणैव कल्पे पञ्चाक्षरे स्मृतः।
तथा शिवप्रणीधानं मनोवाक्कायकर्म्मणा ॥ ४०
शिवज्ञानं गुरोर्भक्तिरचला सुप्रतिष्ठिता।
निग्रहो ह्यपहृत्याशु प्रसक्तानीन्द्रियाणि च ॥ ४१
विषयेषु समासेन प्रत्याहारः प्रकीर्त्तितः।
चित्तस्य धारणा प्रोक्ता स्थानबन्धः समासतः ॥ ४२
तस्याः स्वास्थ्येन ध्यानञ्च समाधिश्च विचारतः।
तत्रैकचित्तता ध्यानं प्रत्ययान्तरवर्ज्जितम् ॥ ४३
चिन्हाशमर्थमात्रस्य देहशून्यमिव स्थितम्।
समाधिः सर्व्वहेतुश्च प्राणायाम इति स्मृतः ॥ ४४
प्राणः स्वदेहजो वायुर्यमस्तस्य निरोधनम्।
त्रिधा द्विजैर्यमः प्रोक्तो मन्दो मध्योत्तमस्तथा ॥ ४५
प्राणापाननिरोधस्तु प्राणायामः प्रकीर्त्तितः।

प्राणायामस्य मानन्तु मात्राद्वादशकं स्मृतम् ॥ ४६
नीचो द्वादशमात्रस्तु उद्घातो द्वादशः स्मृतः।
मध्यमस्तु द्विरुद्घातश्चतुर्व्विंशतिमात्रकः ॥ ४७
मुख्यस्तु यस्त्रिरुद्घातः षट्‌त्रिंशन्मात्र उच्यते।
प्रस्वेदकम्पनोत्थान-जनकश्च यथाक्रमम् ॥ ४८
आनन्दोद्भवयोगार्थं निद्रा घूर्णिस्तथैव च।
रोमाञ्चध्वनिसंविद्ध-स्वाङ्गमोटनकम्पनम् ॥ ४९
भ्रमणं स्वेदजं न्यासा संविन्मूर्च्छा भवेद्यदा।
तदोत्तमोत्तमः प्रोक्तः प्राणायामः सुशोभनः ॥ ५०
सगर्भो गर्भ इत्युक्तः स जपो विजपः क्रमात्।
इभो वा शरभो वापि दुराधर्षोऽथ केशरी ॥ ५१
गृहीतो दम्यमानस्तु यथा स्वस्थस्तु जायते।
तथा समीरणोऽस्वस्थो दुराधर्षश्च योगिनाम् ॥ ५२
न्यायतः सेव्यमानस्तु स एवं स्वस्थतां व्रजेत्।
यथैव मृगराड् नागः शरभो वापि दुर्म्मदः ॥ ५३
कालान्तरवशाद्योगाद्दम्यते परमादरात्।
तथा परिचयात्स्वास्थ्यं समत्वञ्चाधिगच्छति ॥ ५४
योगादभ्यस्यते यस्तु व्यसनं नैव जायते।
एवमभ्यस्यमानस्तु मुनेः प्राणो विनिर्द्दहेत् ॥ ५५
मनोवाक्कायजान् दोषान् कर्त्तुर्द्देहञ्च रक्षति।
संयुक्तस्य तथा सम्यक् प्राणायामेन धीमतः ॥ ५६
दोषात् तस्माच्च नश्यन्ति निश्वासस्तेन जीर्य्यते।
प्राणायामेन सिध्यन्ति दिव्याः शान्त्यादयः क्रमात् ५७
शान्तिः प्रशान्तिर्दीप्तिश्च प्रसादश्च तथा क्रमात्।
आदौ चतुष्टयस्येह प्रोक्ता शान्तिरिह द्विजाः ॥ ५८
सहजागन्तुकानाञ्च पापानां शान्तिरुच्यते।
अशान्तिः संयमः सम्यग्वचसामिति संस्मृता ॥ ५९
प्रकाशो दीप्तिरित्युक्ता सर्व्वतः सर्व्वदा द्विजाः।
सर्व्वेन्द्रियप्रसादस्तु बुद्धेर्वै मरुतामपि ॥ ६०
प्रसाद इति सम्प्रोक्तः स्वान्ते त्विह चतुष्टये।
प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ ६१
नागः कूर्म्मस्तु कृकरो देवदत्तो धनञ्जयः।
एतेषां यः प्रसादस्तु मरुतामिति संस्मृतः ॥ ६२
प्रयाणं कुरुते तस्माद्वायुः प्राण इति स्मृतः।
अपानयत्यपानस्तु आहारादीन् क्रमेण च ॥ ६३
व्यानो व्यानामयत्यङ्गं व्याधादीनां प्रकोपकः।
उद्वेजयति मर्म्माणि उदानोऽयं प्रकीर्त्तितः ॥ ६४
समं नयति गात्राणि समानः पञ्च वायवः।
उद्गारे नाग आख्यातः कूर्म्म उन्मीलने तु सः ॥ ६५
कृकरः क्षुतकायैव देवदत्तो विजृम्भणे।
धनञ्जयो महाघोषः सर्व्वगः स मृतेऽपि हि ॥ ६६
इति यो दश वायूनां प्राणायामेन सिध्यति।
प्रसादोऽस्य तुरीया तु संज्ञा विप्राश्चतुष्टये ॥ ६७
विस्वरस्तु महान् प्रज्ञा मनो ब्रह्मा चितिः स्मृतिः।
ख्यातिः संवित् ततः पश्चादीश्वरो मतिरेव च ॥ ६८
बुद्धेरेता द्विजाः संज्ञा महतः परिकीर्त्तिताः।
अस्या बुद्धेः प्रसादस्तु प्राणायामेन सिध्यति ॥ ६९
विस्वरो विस्वरीभावो द्वन्द्वानां मुनिसत्तमाः।
अग्रजः सर्व्वतत्त्वानां महान् यः परिमाणतः ॥ ७०
यत्प्रमाणगुहा प्रज्ञा मनस्तु मनुते यतः।
बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मा ब्रह्मविदां वराः ॥ ७१
सर्व्वकर्म्माणि भोगार्थं यच्चिनोति चितिः स्मृता।
स्मरते यत् स्मृतिः सर्व्वं संविदे विन्दते यतः ॥ ७२
ख्यायते यत्त्विति ख्यातिर्ज्ञानादिभिरनेकशः।
सर्व्वतत्त्वाधिपः सर्व्वं विजानाति यदीश्वरः ॥ ७३
मनुते मन्यते यस्मान्मतिर्मतिमतां वराः।
अर्थं बोधयते यच्च बुध्यते बुद्धिरुच्यते ॥ ७४
अस्या बुद्धेः प्रसादस्तु प्राणायामेन सिध्यति।
दोषान् विनिर्द्दहेत्सर्व्वान्प्राणायामादसौ यमी ॥ ७५
पातकं धारणाभिस्तु प्रत्याहारेण निर्द्दहेत्।
विषयान्विषवद्ध्यात्वाध्यानेनानीश्वरान् गुणान् ॥ ७६
समाधिना यतिश्रेष्ठाः प्रज्ञावृद्धिं विवर्द्धयेत्।
स्थानं लब्ध्वैव कुर्व्वीत योगाष्टाङ्गानि वै क्रमात् ॥ ७७
लब्धासनानि विधिवद्योगसिद्ध्यर्थमात्मवित्।
अदेशकाले योगस्य दर्शनं हि न विद्यते ॥ ७८
अग्न्यभ्यासे जले वापि शुष्कपर्णचये तथा।
जन्तुव्याप्ते श्मशाने च जीर्णगोष्ठे चतुष्पथे ॥ ७९
सशब्दे सभये वापि चैत्यवल्मीकसञ्चये।
अशुभे दुर्ज्जनाक्रान्ते मशकादिसमन्विते ॥ ८०
नाचरेद्देहबाधायां दौर्म्मनस्यादिसम्भवे।
सुगुप्ते तु शुभे रम्ये गुहायां पर्व्वतस्य तु ॥ ८१
भवक्षेत्रे सुगुप्ते वा भवारामे वनेऽपि वा।
गृहे तु सुशुभे देशे विजने जन्तुवर्ज्जिते ॥ ८२
अत्यन्तनिर्म्मले सम्यक् सुप्रलिप्ते विचित्रिते।

दर्पणोदरसङ्काशे कृष्णागुरुसुधूपिते ॥ ८३
नानापुष्पसमाकीर्णे वितानोपरिशोभिते।
फल-पल्लव-मूलाढ्ये कुश-पुष्पसमन्विते ॥ ८४
समासनस्थो योगाङ्गान्यभ्यसेत् हृषितः स्वयम्।
प्रणिपत्य गुरुं पश्चाद्भवं देवीं विनायकम् ॥ ८५
योगीश्वरान् सशिष्यांश्च योगं युञ्जीत योगवित्।
आसनं स्वस्तिकं बद्ध्वा पद्ममर्द्धासनन्तु वा ॥ ८६
समजानुस्तथा धीमानेकजानुरथापि वा।
समं दृढ़ासनो भूत्वा संहृत्य चरणावुभौ ॥ ८७
संवृतास्योपबद्धाच उरो विष्टभ्य चाग्रतः।
पार्ष्णिभ्यां वृषणौ रक्षन् तथा प्रजननं पुनः ॥ ८८
किञ्चिदुन्नामितशिरा दन्तैर्दन्तान्न संस्पृशेत्।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ ८९
तमः प्रच्छाद्य रजसा रजः सत्त्वेन छादयेत्।
ततः सत्त्वस्थितो भूत्वा शिवध्यानं समभ्यसेत् ॥ ९०
ओङ्कारवाच्यं परमं शुद्धं दीपशिखाकृतिम्।
ध्यायेद्वै पुण्डरीकस्य कर्णिकायां समाहितः ॥ ९१
नाभेरधस्ताद्वा विद्वान् ध्यात्वा कमलमुत्तमम्।
त्र्यङ्गुले चाष्टकोणं वा पञ्चकोणमथापि वा ॥ ९२
त्रिकोणञ्च तथाग्नेयं सौम्यं सौरं स्वशक्तिभिः।
सौरं सौम्यं तथाग्नेयमथवानुक्रमेण तु ॥ ९३
आग्नेयञ्च ततः सौरं सौम्यमेवं विधानतः।
अग्नेरधः प्रकल्प्यैवं धर्म्मादीनां चतुष्टयम् ॥ ९४
गुणत्रयं क्रमेणैव मण्डलोपरि भावयेत्।
सत्त्वस्थं चिन्तयेद्रुद्रं स्वशक्त्या परिमण्डितम् ॥ ९५
नाभौ वाथ गले वापि भ्रूमध्ये वा यथाविधि।
ललाटफलिकायां वा मूर्द्ध्नि ध्यानं समाचरेत् ॥ ९६
द्विदले षोड़शारे वा द्वादशारे क्रमेण तु।
दशारे वा षड़स्रे वा चतुरस्रे स्मरेच्छिवम् ॥ ९७
कनकाभे तथाङ्गारसन्निभे सुसितेऽपि वा।
द्वादशादित्यसङ्काशे चन्द्रबिम्बसमेऽपि वा ॥ ९८
विद्युत्कोटिनिभे स्थाने चिन्तयेत् परमेश्वरम्।
अग्निवर्णेऽथवा विद्युद्वलयाभे समाहितः ॥ ९९
वज्रकोटिप्रभे स्थाने पद्मरागनिभेऽपि वा।
नीललोहितबिम्बे वा योगी ध्यानं समभ्यसेत् ॥ १००
महेश्वरं हृदि ध्यायेन्नाभिपद्मे सदाशिवम्।
चन्द्रचूड़ं ललाटे तु भ्रूमध्ये शङ्करं स्वयम् ॥ १०१
दिव्ये च शाश्वतस्थाने शिवध्यानं समभ्यसेत्।
निर्म्मलं निष्कलं ब्रह्म सुशान्तं ज्ञानरूपिणम् ॥ १०२
अलक्षणमनिर्द्देश्यमणोरल्पतरं शुभम्।
निरालम्बमतर्क्यञ्च विनाशोत्पत्तिवर्ज्जितम् ॥ १०३
कैवल्यञ्चैव निर्व्वाणं निःश्रेयसमनुत्तमम्।
अमृतञ्चाक्षरं ब्रह्म अपुनर्भवमद्भुतम् ॥ १०४
महानन्दं परानन्दं योगानन्दमनामयम्।
हेयोपादेयरहितं सूक्ष्मात् सूक्ष्मतरं शिवम् ॥ १०५
स्वयंवेद्यमवेद्यं तच्छिवं ज्ञानमयं परम्।
अतीन्द्रियमनाभासं परं तत्त्वं परात्परम् ॥ १०६
सर्व्वोपाधिविनिर्म्मुक्तं ध्यानगम्यं विचारतः।
अद्वयं तमसश्चैव परस्तात् संस्थितं परम् ॥ १०७
मनस्येवं महादेवं हृत्पद्मे वापि चिन्तयेत्।
नाभौ सदाशिवञ्चापि सर्व्वदेवात्मकं विभुम् ॥ १०८
देहमध्ये शिवं देवं शुद्धज्ञानमयं विभुम्।
कन्यसेनैव मार्गेण चोद्घातेनापि शङ्करम् ॥ १०९
क्रमशः कन्यसेनैव मध्यमेनापि सुव्रताः।
उत्तमेनापि वै विद्वान् कुम्भकेन समभ्यसेत् ॥ ११०
द्वात्रिंशद्रेचयेद्धीमान् हृदि नाभौ समाहितः।
रेचकं पूरकं त्यक्त्वा कुम्भकञ्च द्विजोत्तमाः।
साक्षात्समरसेनैव देहमध्ये स्मरेच्छिवम् ॥ १११
एकीभावं समेत्यैवं तत्र यद्रससम्भवम्।
आनन्दं ब्रह्मणो विद्वान् साक्षात्समरसे स्थितः ॥ ११२
धारणा द्वादशायामा ध्यानं द्वादशधारणम्।
ध्यानद्वादशकं यावत् समाधिरभिधीयते ॥ ११३
अथवा ज्ञानिनां विप्राः सम्पर्कादेव जायते।
प्रयत्नाद्वा तयोस्तुल्यं चिराद्वा ह्यचिराद्द्विजाः ॥ ११४
योगान्तरायास्तस्याथ जायन्ते युञ्जतः पुनः।
नश्यन्त्यभ्यासतस्तेऽपि प्रणिधानेन वै गुरोः ॥ ११५

इति श्रीलैङ्गे महापुराणे अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः।

सूत उवाच।

आलस्यं प्रथमं पश्चाद्व्याधिपीड़ा प्रजायते।
प्रमादः संशयस्थाने चित्तस्येहानवस्थितिः ॥ १
अश्रद्धादर्शनं भ्रान्तिदुःखञ्च त्रिविधं ततः।

दौर्म्मनस्यमयोग्येषु विषयेषु च योग्यता ॥ २
दशधाभिप्रजायन्ते मुनेर्योगान्तरायकाः ।
आलस्यञ्चाप्रवृत्तिश्च गुरुत्वात् काय-चित्तयोः ॥ ३
व्याधयो धातुवैषम्यात् कर्म्मजा दोषजास्तथा ।
प्रमादस्तु समाधेस्तु साधनानामभावनम् ॥ ४
इदं वेत्युभयस्थत्वं विज्ञानं स्थानसंशयः ।
अनवस्थितचित्तत्वमप्रतिष्ठा हि योगिनः ॥ ५
लब्धायामपि भूमौ च चित्तस्य भवबन्धनात् ।
अश्रद्धाभावरहिता वृत्तिर्वै साधनेषु च ॥ ६
साध्ये चित्तस्य हि गुरौ ज्ञानाचारशिवादिषु ।
विपर्य्ययज्ञानमिति भ्रान्तिदर्शनमुच्यते ॥ ७
अनात्मन्यात्मविज्ञानमज्ञानात् तस्य सन्निधौ ।
दुःखमाध्यात्मिकं प्रोक्तं तथा चैवाधिभौतिकम् ॥ ८
आधिदैविकमित्युक्तं त्रिविधं सहजं पुनः ।
इच्छाविघातात् सङ्क्षोभश्चेतसस्तदुदाहृतम् ॥ ९
दौर्म्मनस्यं निरोद्धव्यं वैराग्येण परेण तु ।
तमसा रजसा चैव संस्पृष्टं दुर्म्मनः स्मृतम् ॥ १०
तदा मनसि सञ्जातं दौर्म्मनस्यमिति स्मृतम् ।
हठात् स्वीकरणं कृत्वा योग्यायोग्यविवेकतः ॥ ११
विषयेषु विचित्रेषु जन्तोर्विषयलोलता ।
अन्तराया इति ख्याता योगस्यैते हि योगिनाम्॥१२
अत्यन्तोत्साहयुक्तस्य नश्यन्ति न च संशयः ।
प्रनष्टेष्वन्तरायेषु द्विजा पश्चाद्धि योगिनः ॥ १३
उपसर्गाः प्रवर्त्तन्ते सर्व्वे ते सिद्धिसूचकाः ।
प्रतिभा प्रथमा सिद्धिर्द्वितीया श्रवणा स्मृता ॥ १४
वार्त्ता तृतीया विप्रेन्द्रास्तुरीया चेह दर्शना ।
आस्वादा पञ्चमी प्रोक्ता वेदना षष्ठिका स्मृता ॥१५
स्वल्पषट्सिद्धिसन्त्यागात् सिद्धिदाः सिद्धयो मुनेः ।
प्रतिभा प्रतिभावृत्तिः प्रतिभाव इति स्थितिः ॥ १६
बुद्धिर्विवेचना वेद्यं बुध्यते बुद्धिरुच्यते ।
सूक्ष्मे व्यवहितेऽतीते विप्रकृष्टे त्वनागते ॥ १७
सर्व्वत्र सर्व्वदा ज्ञानं प्रतिभानुक्रमेण तु ।
श्रवणात् सर्व्वशब्दानामप्रयत्नेन योगिनः ॥ १८
ह्रस्वदीर्घप्लुतादीनां गुह्यानां श्रवणादपि ।
स्पर्शस्याधिगमो यस्तु वेदना तूपपादिता ॥ १९
दर्शना दिव्यरूपाणां दर्शनञ्चाप्रयत्नतः ।
संविद्दिव्यरसे तस्मिन्नास्वादो ह्यप्रयत्नतः ॥ २०
वार्त्ता च दिव्यगन्धानां तन्मात्रा बुद्धिसंविदा ।
विन्दन्ते योगिनस्तस्मादाब्रह्मभवनं द्विजाः ॥ २१
जगत्यस्मिन् हि देहस्थं चतुःषष्टिगुणं समम् ।
औपसर्गिकमेतेषु गुणेषु गुणितं द्विजाः ॥ २२
सन्त्याज्यं सर्व्वथा सर्व्वमौपसर्गिकमात्मनः ।
पैशाचे पार्थिवञ्चाप्यं राक्षसानां पुरे द्विजाः ॥ २३
याक्षे तु तैजसं प्रोक्तं गान्धर्व्वं श्वसनात्मकम् ।
ऐन्द्रे व्योमात्मकं सर्व्वं सौम्ये चैव तु मानसम् ॥ २४
प्राजापत्ये त्वहङ्कारं ब्राह्मे बोधमनुत्तमम् ।
आद्ये चाष्टौ द्वितीये च तथा षोड़शरूपकम् ॥ २५
चतुर्व्विंशत् तृतीये तु द्वात्रिंशच्च चतुर्थके ।
चत्वारिंशत् पञ्चमे तु भूतमात्रात्मकं स्मृतम् ॥ २६
गन्धो रसस्तथा रूपं शब्दः स्पर्शस्तथैव च ।
प्रत्येकमष्टधा सिद्धं पञ्चमे तच्छतक्रतोः ॥ २७
तथाष्टचत्वारिंशच्च षट्पञ्चाशत् तथैव च ।
चतुःषष्टिगुणं ब्राह्मं लभते द्विजसत्तमाः ॥ २८
औपसर्गिकमाब्रह्म-भुवनेषु परित्यजेत् ।
लोकेष्वालोक्ययोगेन योगवित् परमं सुखम् ॥ २९
स्थूलता ह्रस्वता बाल्यं वार्द्धक्यं यौवनं तथा ।
नानाजातिस्वरूपञ्च चतुर्भिर्देहधारणम् ॥ ३०
पार्थिवांशं विना नित्यं सुरभिर्गन्धसंयुतः ।
एतदष्टगुणं प्रोक्तमैश्वर्य्यं पार्थिवं महत् ॥ ३१
जले निवसनं यद्वद्भूम्यामिव विनिर्गमः ।
इच्छेच्छक्तः स्वयं पातुं समुद्रमपि नातुरः ॥ ३२
यत्रेच्छति जगत्यस्मिन् तत्रास्य जलदर्शनम् ।
यद्यद्वस्तु समादाय भोक्तुमिच्छति कामतः ॥ ३३
तत्तद्रसान्वितं तस्य त्रयाणां देहधारणम् ।
भाण्डं विनाऽथ हस्तेन जलपिण्डस्य धारणम् ॥३४
अव्रणत्वं शरीरस्य पार्थिवेन समन्वितम् ।
एतत् षोड़शकं प्रोक्तमाप्यमैश्वर्य्यमुत्तमम् ॥ ३५
देहादग्निविनिर्म्माणं तत्तापभयवर्ज्जितम् ।
लोकं दग्धमपीहान्यदृदग्धं स्वविधानतः ॥ ३६
जलमध्ये हुतवहञ्चाधाय परिरक्षणम् ।
अग्निनिग्रहणं हस्ते स्मृतिमात्रेण चागमः ॥ ३७
भस्मीभूतविनिर्म्माणं यथापूर्व्वं स्वकामतः ।
द्वाभ्यां रूपविनिष्पत्तिर्विना तैस्त्रिभिरात्मनः ॥ ३८
चतुर्व्विंशात्मकं ह्येतत् तैजसं मुनिपुङ्गवाः ।

मनोगतित्वं भूतानामन्तर्निवसनं तथा ॥ ३९
पर्व्वतादिमहाभार-स्कन्धेनोद्वहनं पुनः।
लघुत्वञ्च गुरुत्वञ्च पाणिभ्यां वायुधारणम् ॥ ४०
अङ्गुल्यग्रनिपातेन भूमेः सर्व्वत्र कम्पनम्।
एकेन देहनिष्पत्तिर्वातैश्वर्य्यं स्मृतं बुधैः ॥ ४१
छायाविहीननिष्पत्तिरिन्द्रियाणाञ्च दर्शनम्।
आकाशगमनं नित्यमिन्द्रियार्थैः समन्वितम् ॥ ४२
दूरे च शब्दग्रहणं सर्व्वशब्दावगाहनम्।
तन्मात्रलिङ्गग्रहणं सर्व्वप्राणिनिदर्शनम् ॥ ४३
ऐन्द्रमैश्वर्य्यमित्युक्तमेतैरुक्तः पुरातनः।
यथाकामोपलब्धिश्च यथाकामविनिर्गमः ॥ ४४
सर्व्वत्राभिभवश्चैव सर्व्वगुह्यनिदर्शनम्।
कामानुरूपनिर्म्माणं वशित्वं प्रियदर्शनम् ॥ ४५
संसारदर्शनञ्चैव मानसं गुणलक्षणम्।
छेदनं ताड़नं बन्धं संसारपरिवर्त्तनम् ॥ ४६
सर्व्वभूतप्रसादश्च मृत्युकालजयस्तथा।
प्राजापत्यमिदं प्रोक्तमाहङ्कारिकमुत्तमम् ॥ ४७
अकारणजगत्सृष्टिस्तथानुग्रह एव च।
प्रलयश्चाधिकारश्च लोकवृत्तप्रवर्त्तनम् ॥ ४८
असादृश्यमिदं व्यक्तं निर्म्माणञ्च पृथक् पृथक्।
संसारस्य च कर्त्तृत्वं ब्राह्ममेतदनुत्तमम् ॥ ४९
एतावत् तत्त्वमित्युक्तं प्राधान्यं वैष्णवं पदम्।
ब्रह्मणा तद्गुणं शक्यं वेत्तुमन्यैर्न शक्यते ॥ ५०
विद्यते तत् परं शैवं विष्णुना नावगम्यते।
असंख्येयगुणं शुद्धं को जानीयाच्छिवात्मकम् ॥ ५१
व्युत्थाने सिद्धयश्चैता ह्युपसर्गाश्च कीर्त्तिताः।
निरोद्धव्याः प्रयत्नेन वैराग्येण परेण तु ॥ ५२
नाशातिशयतां ज्ञात्वा विषयेषु भयेषु च।
अश्रद्धया त्यजेत् सर्व्वं विरक्त इति कीर्त्तितः ॥ ५३
वैतृष्ण्यं पुरुषे ख्यातं गुणवैतृष्ण्यमुच्यते।
वैराग्येणैव सन्त्याज्याः सिद्धयश्चौपसर्गिकाः ॥ ५४
औपसर्गिकमाब्रह्म-भुवनेषु परित्यजेत्।
निरुध्यैव त्यजेत् सर्व्वं प्रसीदति महेश्वरः ॥ ५५
प्रसन्ने विमला मुक्तिर्वैराग्येण परेण वै।
अथवानुग्रहार्थञ्च लीलार्थं वा तदा मुनिः ॥ ५६
अनिरुध्य विचेष्टेद्यः सोऽप्येवं हि सुखी भवेत्।
क्वचिद्भूमिं परित्यज्य आकाशे क्रीड़ते श्रिया ॥ ५७
उद्गिरेच्च क्वचिद्वेदान् सूक्ष्मानर्थान् समासतः।
क्वचिच्छ्रुते तदर्थेन श्लोकबन्धं करोति सः ॥ ५८
क्वचिद्दण्डकबन्धन्तु कुर्य्याद्ग्रन्थं सहस्रशः।
मृगपक्षिसमूहस्य रुतज्ञानञ्च विन्दति-॥ ५९
ब्रह्माद्यं स्थावरान्तञ्च हस्तामलकवद्भवेत्।
बहुनात्र किमुक्तेन विज्ञानानि सहस्रशः ॥ ६०
उत्पद्यन्ते मुनिश्रेष्ठा मुनेस्तस्य महात्मनः।
अभ्यासेनैव विज्ञानं विशुद्धञ्च स्थिरं भवेत् ॥ ६१
तेजोरूपाणि सर्व्वाणि सर्व्वं पश्यति योगवित्।
देवबिम्बान्यनेकानि विमानानि सहस्रशः ॥ ६२
पश्यति ब्रह्म-विष्ण्विन्द्र-यमाग्नि-वरुणादिकान्।
ग्रह-नक्षत्र-ताराश्च भुवनानि सहस्रशः ॥ ६३
पातालतलसंस्थाश्च समाधिस्थः स पश्यति।
आत्मविद्याप्रदीपेन स्वस्थेनाचलनेन तु ॥ ६४
प्रसादामृतपूर्णेन सत्त्वपात्रस्थितेन तु।
तमो निहत्य पुरुषः पश्यति ह्यात्मनीश्वरम् ॥ ६५
तस्य प्रसादाद्धर्म्मश्च ऐश्वर्य्यं ज्ञानमेव च।
वैराग्यमपवर्गश्च नात्र कार्य्या विचारणा ॥ ६६
न शक्यो विस्तरो वक्तुं वर्षाणामयुतैरपि।
योगे पाशुपते निष्ठा स्नातव्यञ्च मुनीश्वराः ॥ ६७

इति श्रीलैङ्गे महापुराणे योगान्तरायकथनं नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः।

सूत उवाच।

सतां जितात्मनां साक्षाद्द्विजातीनां द्विजोत्तमाः।
धर्म्मज्ञानाञ्च साधूनामाचार्य्याणां शिवात्मनाम् ॥ १
दयावतां द्विजश्रेष्ठास्तथा चैव तपस्विनाम्।
सन्न्यासिनां विरक्तानां ज्ञानिनां वशगात्मनाम् ॥ २
दानिनाञ्चैव दान्तानां व्रतिनां सत्यवादिनाम्।
अलुब्धानां सयोगानां श्रुति-स्मृतिविदां द्विजाः।
श्रौत-स्मार्त्तविरुद्धानां प्रसीदति महेश्वरः ॥ ३
सदिति ब्रह्मणः शब्दस्तदन्ते ये लभन्त्युत।
सायुज्यं ब्रह्मणा यान्ति तेन सन्तः प्रचक्षते ॥ ४
दशात्मके ये विषये साधने चाष्टलक्षणे।
न क्रुध्यन्ति न हृष्यन्ति जितात्मानस्तु ते स्मृताः ॥ ५

सामान्येषु च द्रव्येषु तथा वैशेषिकेषु च।
ब्रह्म-चत्र-विशो यस्माद्युक्तास्तस्माद्दिजातयः॥ ६
वर्णाश्रमेषु युक्तस्य स्वर्गादिसुखकारिणः।
श्रौत-स्मार्त्तस्य धर्म्मस्य ज्ञानाद्धर्म्मश्च उच्यते॥ ७
विद्याशः साधनात् साधुर्ब्रह्मचारी गुरोर्हितः।
क्रियाणां साधनाच्चैव गृहस्थः साधुरुच्यते॥ ८
साधनात् तपसोऽरण्ये साधुर्वैखानसः स्मृतः।
यतमानो यतिः साधुः स्मृतो योगस्य साधनात्॥ ९
एवमाश्रमधर्म्माणां साधनात् साधवः स्मृताः।
गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा॥ १०
धर्म्माधर्म्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ।
कुशलाकुशलं कर्म्म धर्म्माधर्म्माविति स्मृतौ॥ ११
धारणार्थे महान् ह्येष धर्म्मशब्दः प्रकीर्त्तितः।
अधारणे महत्त्वे च अधर्म्म इति चोच्यते॥ १२
अत्रष्टप्रापको धर्म्म आचार्य्यैरुपदिश्यते।
अधर्म्मश्चानिष्टफलो ह्याचार्य्यैरुपदिश्यते॥ १३
वृद्धाश्चालोलुपाश्चैव आत्मवन्तो ह्यदाम्भिकाः।
सम्यग्विनीता ऋजवस्तानाचार्य्यान् प्रचक्षते॥ १४
स्वयमाचरते यस्मादाचारे स्थापयत्यपि।
आचिनोति च शास्त्रार्थानाचार्य्यस्तेन चोच्यते॥ १५
विज्ञेयं श्रवणाच्छ्रौतं स्मरणात् स्मार्त्तमुच्यते।
इज्यावेदात्मकं श्रौतं स्मार्त्तं वर्णाश्रमात्मकम्॥ १६
दृष्टानुरूपमर्थं यः पृष्टो नैवापि गूहति।
यथादृष्टप्रवादस्तु सत्यं लैङ्गेऽत्र पठ्यते॥ १७
ब्रह्मचर्य्यं तथा मौनं निराहारत्वमेव च।
अहिंसा सर्व्वतः शान्तिस्तप इत्यभिधीयते॥ १८
आत्मवत् सर्व्वभूतेषु यो हितायाहिताय च।
वर्त्तते त्वसकृद्वृत्तिः कृत्स्ना ह्येषा दया स्मृता॥ १९
यद्यदिष्टतमं द्रव्यं न्यायेनैवागतं क्रमात्।
यत्तद्गुणवते देयं दातुस्तद्दानलक्षणम्॥ २०
दानं त्रिविधमित्येतत् कनिष्ठ-ज्येष्ठ-मध्यमम्।
कारुण्यात् सर्व्वभूतेभ्यः संविभागस्तु मध्यमः॥ २१
श्रुति-स्मृतिभ्यां विहितो धर्म्मो वर्णाश्रमात्मकः।
शिष्टाचाराविरुद्धश्च स धर्म्मः साधुरुच्यते॥ २२
मायाकर्म्मफलत्यागी शिवात्मा परिकीर्त्तितः।
निवृत्तः सर्व्वसङ्गेभ्यो युक्तो योगी प्रकीर्त्तितः॥ २३
असक्तोभयतो यस्तु विषयेषु विचार्य्य च।
अलुब्धः संयमी प्रोक्तः प्रार्थितोऽपि समन्ततः॥ २४
आत्मार्थं वा परार्थं वा इन्द्रियाणीह यस्य वै।
न मिथ्या सम्प्रवर्त्तन्ते शमस्यैव तु लक्षणम्॥ २५
अनुद्विग्नो ह्यनिष्टेषु तथेष्टान् नाभिनन्दति।
प्रीति-ताप-विषादेभ्यो विनिवृत्तिर्विरक्तता॥ २६
सन्न्यासः कर्म्मणां न्यासः कृतानामकृतैः सह।
कुशलाकुशलानान्तु प्रहाणं न्यास उच्यते॥ २७
अव्यक्ताद्यविशेषान्ते विकारेऽस्मिन्नचेतने।
चेतनाचेतनान्यत्व-विज्ञानं ज्ञानमुच्यते॥ २८
एवन्तु ज्ञानयुक्तस्य श्रद्धायुक्तस्य शङ्करः।
प्रसीदति न सन्देहो धर्म्मश्चायं द्विजोत्तमाः॥ २९
किन्तु गुह्यतमं वक्ष्ये सर्व्वत्र परमेश्वरे।
भवे भक्तिर्न सन्देहस्तथा युक्तो विमुच्यते॥ ३०
अयोग्यस्यापि भगवान् भक्तस्य परमेश्वरः।
प्रसीदति न सन्देहो निगृह्य विविधं तमः॥ ३१
ज्ञानमध्यापनं होमो ध्यानं यज्ञस्तपः श्रुतम्।
दानमध्ययनं सर्व्वं भवभक्त्यै न संशयः॥ ३२
चान्द्रायणसहस्रैश्च प्राजापत्यशतैस्तथा।
मासोपवासैश्चान्यैर्वा भक्तिर्मुनिवरोत्तमाः॥ ३३
अभक्ता भगवत्यस्मिन् लोके गिरिगुहाशये।
पतन्ति चात्मभोगार्थं भक्तो भावेन मुच्यते॥ ३४
भक्तानां दर्शनादेव नृणां स्वर्गादयो द्विजाः।
न दुर्लभा न सन्देहो भक्तानां किं पुनस्तथा॥ ३५
ब्रह्म-विष्णु-सुरेन्द्राणां तथान्येषामपि स्थितिः।
भक्त्या एव मुनीनाञ्च बलसौभाग्यमेव च॥ ३६
भवेन च तथा प्रोक्तं सम्प्रेक्ष्योमां पिनाकिना।
देव्यै देवेन मधुरं वाराणस्यां पुरा द्विजाः॥ ३७
अविमुक्ते समासीना रुद्रेण परमात्मना।
रुद्राणी रुद्रमाहेदं लब्ध्वा वाराणसीं पुरीम्॥ ३८

श्रीदेव्युवाच।

केन वश्यो महादेव पूज्यो दृश्यस्त्वमीश्वरः।
तपसा विद्यया वापि योगेनेह वद प्रभो॥ ३९

सूत उवाच।

निशम्य वचनं तस्यास्तथा ह्यालोक्य पार्व्वतीम्।
आह बालेन्दुतिलकः पूर्णेन्दुवदनां हसन्॥ ४०
स्मृत्वाथ मेनया पत्न्या गिरेर्गां कथितां पुरा।
चिरकालस्थितिं प्रेक्ष्य गिरौ देव्या महात्मनः॥ ४१

देवि लब्धा पुरी रम्या त्वया यत् प्रष्टुमर्हसि ।
ख्यानार्थं कथितं मात्रा विस्मृतेह विलासिनि ॥ ४२
पुरा पितामहेनापि पृष्टः प्रश्नवतां वरे ।
यथा त्वयाद्य वै पृष्टो द्रष्टुं ब्रह्मात्मकं त्वहम् ॥ ४३
श्वेते श्वेतेन वर्णेन दृष्ट्वा कल्पे तु मां शुभे ।
सद्योजातं तथा रक्तो रक्तं वामं पितामहः ॥ ४४
पीते तत् पुरुषं पीतमघोरे कृष्णमीश्वरम् ।
ईशानं विश्वरूपाख्ये विश्वरूपं तदाह माम् ॥ ४५

पितामह उवाच ।

वाम तत्पुरुषाघोर सद्योजात महेश्वर ।
दृष्टो मया त्वं गायत्र्या देवदेव महेश्वर ॥ ४६
केन वश्यो महादेव ध्येयः कुत्र घृणानिधे ।
द्रष्टः पूज्यस्तथा देव्या वक्तुमर्हसि शङ्कर ॥ ४७

भगवानुवाच ।

अवोचं श्रद्धयैवेति वश्यो वारिजसम्भव ।
ध्येयो लिङ्गे त्वया दृष्टे विष्णुना पयसां निधौ ॥ ४८
पूज्यः पञ्चास्यरूपेण पवित्रैः पञ्चभिर्द्विजैः ।
अव भक्त्याद्य दृष्टोऽहं त्वयाब्जज जगद्गुरो ॥ ४९
सोऽपि मामाह भावार्थं दत्तं तस्मै मया पुरा ।
भावं भावेन देवेशि दृष्टवान् मां हरीश्वरम् ॥ ५०
तस्मात्तु श्रद्धया वश्यो दृश्यः श्रेष्ठगिरेः सुते ।
पूज्यो लिङ्गे न सन्देहः सर्व्वदा श्रद्धया द्विजैः ॥ ५१
श्रद्धा धर्म्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः ।
श्रद्धा स्वर्गश्च मोक्षश्च दृश्योऽहं श्रद्धया सदा ॥ ५२

इति श्रीलैङ्गे महापुराणे भक्तिभावकथनं
नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

ऋषयः ऊचुः ।

कथं वै दृष्टवान् ब्रह्मा सद्योजातं महेश्वरम् ।
वामदेवं महात्मानं पुराणपुरुषोत्तमम् ।
अघोरञ्च तथेशानं यथावद्वक्तुमर्हसि ॥ १

सूत उवाच ।

एकोनत्रिंशकः कल्पो विज्ञेयः श्वेतलोहितः ।
तस्मिंस्तत् परमं ध्यानं ध्यायतो ब्रह्मणस्तदा ॥ २
उत्पन्नस्तु शिखायुक्तः कुमारः श्वेतलोहितः ।
तं दृष्ट्वा पुरुषं श्रीमान् ब्रह्मा वै विश्वतोमुखः ॥ ३
हृदि कृत्वा महात्मानं ब्रह्मरूपिणमीश्वरम् ।
सद्योजातं ततो ब्रह्मा ध्यानयोगपरोऽभवत् ॥ ४
ध्यानयोगात् परं ज्ञात्वा ववन्दे देवमीश्वरम् ।
सद्योजातं ततो ब्रह्मा ब्रह्म वै समचिन्तयत् ॥ ५
ततोऽस्य पार्श्वतः श्वेताः प्रादुर्भूता महायशाः ।
सुनन्दो नन्दनश्चैव विश्वनन्दोपनन्दनौ ॥ ६
शिष्यास्ते वै महात्मानो यैस्तद्ब्रह्म सदावृतम् ॥ ७
तस्याग्रे श्वेतवर्णाभः श्वेतो नाम महामुनिः ।
विजज्ञेऽथ महातेजास्तस्माज्जज्ञे हरस्त्वसौ ॥ ८
तत्र ते मुनयः सर्व्वे सद्योजातं महेश्वरम् ।
प्रपन्नाः परया भक्त्या गृणन्तो ब्रह्म शाश्वतम् ॥ ९
तस्माद्विश्वेश्वरं देवं ये प्रपद्यन्ति वै द्विजाः ।
प्राणायामपरा भूत्वा ब्रह्म तत्परमानसाः ॥ १०
ते सर्व्वे पापनिर्म्मुक्ता विमला ब्रह्मवर्च्चसः ।
विष्णुलोकमतिक्रम्य रुद्रलोकं व्रजन्ति ते ॥ ११

इति श्रीलैङ्गे महापुराणे सद्योजातमाहात्म्यं
नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

सूत उवाच ।

ततस्त्रिंशत्तमः कल्पो रक्तो नाम प्रकीर्त्तितः ।
ब्रह्मा यत्र महातेजा रक्तवर्णमधारयत् ॥ १
ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः ।
प्रादुर्भूतो महातेजाः कुमारो रक्तभूषणः ॥ २
रक्तमाल्याम्बरधरो रक्तनेत्रः प्रतापवान् ।
स तं दृष्ट्वा महात्मानं कुमारं रक्तवाससम् ॥ ३
परं ध्यानं समाश्रित्य बुबुधे देवमीश्वरम् ।
स तं प्रणम्य भगवान् ब्रह्मा परमयन्त्रितः ॥ ४
वामदेवं ततो ब्रह्मा ब्रह्म वै समचिन्तयत् ।
तथा स्तुतो महादेवो ब्रह्मणा परमेश्वरः ॥ ५
प्रतीतहृदयः सर्व्वं इदमाह पितामहम् ।
ध्यायता पुत्रकामेन यस्मात् तेऽहं पितामह ॥ ६
दृष्टः परमया भक्त्या स्तुतश्च ब्रह्मपूर्व्वकम् ।
तस्माद्ध्यानबलं प्राप्य कल्पे कल्पे प्रयत्नतः ॥ ७
वेत्स्यसे मां प्रसंख्यातं लोकधातारमीश्वरम् ।

ततस्तस्य महात्मानश्चत्वारस्ते कुमारकाः॥ ८
सम्बभूवुर्महात्मानो विशुद्धा ब्रह्मवर्चसः।
विरजाश्च विवाहुश्च विशोको विश्वभावनः॥ ९
ब्रह्मण्या ब्रह्मणस्तुल्या वीरा अध्यवसायिनः।
रक्ताम्बरधराः सर्व्वे रक्तमाल्यानुलेपनाः॥ १०
रक्तकुङ्कुमलिप्ताङ्गा रक्तभस्मानुलेपनाः।
ततो वर्षसहस्रान्ते ब्रह्मलेऽध्यवसायिनः॥ ११
गृणन्तश्च महात्मानो ब्रह्म तद्वामदैविकम्।
अनुग्रहार्थं लोकानां शिष्याणां हितकाम्यया॥ १२
धर्म्मोपदेशमखिलं कृत्वा ते ब्रह्मणः प्रियाः।
पुनरेव महादेवं प्रविष्टा रुद्रमव्ययम्॥ १३
येऽपि चान्ये द्विजश्रेष्ठा युञ्जाना वाममीश्वरम्।
प्रपश्यन्ति महादेवं तद्भक्तास्तत्परायणाः॥ १४
ते सर्व्वे पापनिर्म्मुक्ता विमला ब्रह्मचारिणः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम्॥ १५

इति श्रीलैङ्गे महापुराणे वामदेवमाहात्म्यं
नाम द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

सूत उवाच।

एकत्रिंशत्तमः कल्पः पीतवासा इति स्मृतः।
ब्रह्मा यत्र महाभागः पीतवासा बभूव ह॥ १
ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः।
प्रादुर्भूतो महातेजाः कुमारः पीतवस्त्रधृक्॥ २
पीतगन्धानुलिप्ताङ्गः पीतमाल्याम्बरो युवा।
हेमयज्ञोपवीतश्च पीतोष्णीषो महाभुजः॥ ३
तं दृष्ट्वा ध्यानसंयुक्तो ब्रह्मा लोकमहेश्वरम्।
मनसा लोकधातारं प्रपेदे शरणं विभुम्॥ ४
ततो ध्यानगतस्तत्र ब्रह्मा माहेश्वरीं वराम्।
गां विश्वरूपां ददृशे महेश्वरमुखाच्च्युताम्॥ ५
चतुष्पदां चतुर्व्वक्त्रां चतुर्हस्तां चतुःस्तनीम्।
चतुर्नेत्रां चतुःशृङ्गीं चतुर्दंष्ट्रां चतुर्मुखीम्॥ ६
द्वात्रिंशद्गुणसंयुक्तामीश्वरीं सर्व्वतोमुखीम्।
स तां दृष्ट्वा महातेजा महादेवीं महेश्वरीम्॥ ७
पुनराह महादेवः सर्व्वदेवनमस्कृतः।
मतिः स्मृतिर्बुद्धिरिति गायमानः पुनः पुनः॥ ८
एह्येहीति महादेवि सातिष्ठत् प्राञ्जलिर्विभुम्।
विश्वमावृत्य योगेन जगत् सर्व्वं वशीकुरु॥ ९
अथ तामाह देवेशो रुद्राणी त्वं भविष्यसि।
ब्राह्मणानां हितार्थाय परमार्था भविष्यसि॥ १०
तथैनां पुत्रकामस्य ध्यायतः परमेष्ठिनः।
प्रददौ देवदेवेशश्चतुष्पादां जगद्गुरुः॥ ११
ततस्तां ध्यानयोगेन विदित्वा परमेश्वरीम्।
ब्रह्मा लोकगुरोः सोऽथ प्रतिपेदे महेश्वरीम्॥ १२
गायत्रीन्तु ततो रौद्रीं ध्यात्वा ब्रह्मानुयन्त्रितः।
इत्येतां वैदिकीं विद्यां रौद्रीं गायत्रीमीरिताम्।
जपित्वा तु महादेवीं ब्रह्मा लोकनमस्कृताम्।
प्रपन्नस्तु महादेवं ध्यानयुक्तेन चेतसा॥ १४
ततस्तस्य महादेवो दिव्ययोगं बहुश्रुतम्।
ऐश्वर्यं ज्ञानसम्पत्तिं वैराग्यञ्च ददौ प्रभुः॥ १५
ततोऽस्य पार्श्वतो दिव्याः प्रादुर्भूताः कुमारकाः।
पीतमाल्याम्बरधराः पीतस्रगनुलेपनाः।
पीताभोष्णीषशिरसः पीतास्याः पीतमूर्द्धजाः॥
ततो वर्षसहस्रान्त उषित्वा विमलौजसः।
योगात्मानस्तपोह्लादा ब्राह्मणानां हितैषिणः॥
धर्म्मयोगबलोपेता मुनीनां दीर्घसत्रिणाम्।
उपदिश्य महायोगं प्रविष्टास्ते महेश्वरम्॥ १८
एवमेतेन विधिना ये प्रपन्ना महेश्वरम्।
अन्येऽपि नियतात्मानो ध्यानयुक्ता जितेन्द्रियाः॥
ते सर्व्वे पापमुत्सृज्य विमला ब्रह्मवर्चसः।
प्रविशन्ति महादेवं रुद्रं ते त्वपुनर्भवाः॥ २०

इति श्रीलैङ्गे महापुराणे तत्पुरुषमाहात्म्यं
नाम त्रयोदशोऽध्यायः॥ १३॥

---

## चतुर्दशोऽध्यायः।

सूत उवाच।

ततस्तस्मिन् गते कल्पे पीतवर्णे स्वयम्भुवः।
पुनरन्यः प्रवृत्तस्तु कल्पो नाम्नासितस्तु सः॥ १
एकार्णवे तदा वृत्ते दिव्ये वर्षसहस्रके।
स्रष्टुकामः प्रजा ब्रह्मा चिन्तयामास दुःखितः॥ २
तस्य चिन्तयमानस्य पुत्रकामस्य वै प्रभोः।
कृष्णः समभवद्वर्णो ध्यायतः परमेष्ठिनः॥ ३

अथापश्यन्महातेजाः प्रादुर्भूतं कुमारकम् ।
कृष्णवर्णं महावीर्य्यं दीप्यमानं स्वतेजसा ॥ ४
कृष्णाम्बरधरोष्णीषं कृष्णयज्ञोपवीतिनम् ।
कृष्णेन मौलिना युक्तं कृष्णस्रगनुलेपनम् ॥ ५
स तं दृष्ट्वा महात्मानमघोरं घोरविक्रमम् ।
ववन्दे देवदेवेशमद्भुतं कृष्णपिङ्गलम् ॥ ६
प्राणायामपरः श्रीमान् हृदि कृत्वा महेश्वरम् ।
मनसा ध्यानयुक्तेन प्रपन्नस्तु तमीश्वरम् ॥ ७
अघोरन्तु ततो ब्रह्मा ब्रह्मरूपं व्यचिन्तयत् ।
तथा वै ध्यायमानस्य ब्रह्मणः परमेष्ठिनः ॥ ८
प्रददौ दर्शनं देवो ह्यघोरो घोरविक्रमः ।
अथास्य पार्श्वतः कृष्णाः कृष्णस्रगनुलेपनाः ॥ ९
चत्वारस्तु महात्मानः सम्बभूवुः कुमारकाः ।
कृष्णः कृष्णशिखश्चैव कृष्णास्यः कृष्णवस्त्रधृक् ॥ १०
ततो वर्षसहस्रन्तु योगतः परमेश्वरम् ।
उपासित्वा महायोगं शिष्येभ्यः प्रददुः पुनः ॥ ११
योगेन योगसम्पन्नाः प्रविश्य मनसा शिवम् ।
अमलं निर्गुणं स्थानं प्रविष्टा विश्वमीश्वरम् ॥ १२
एवमेतेन योगेन येऽपि चान्ये मनीषिणः ।
चिन्तयन्ति महादेवं गन्तारो रुद्रमव्ययम् ॥ १३

इति श्रीलैङ्गे महापुराणे अघोरोत्पत्तिवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

सूत उवाच ।

ततस्तस्मिन् गते कल्पे कृष्णवर्णे भयानके ।
तुष्टाव देवदेवेशं ब्रह्मा तं ब्रह्मरूपिणम् ॥ १
अनुगृह्य ततस्तुष्टो ब्रह्माणमवदद्धरः ।
अनेनैव तु रूपेण संहरामि न संशयः ॥ २
ब्रह्महत्यादिकान् घोरांस्तथान्यानपि पातकान् ।
हीनांश्चैव महाभाग तथैव विविधान्यपि ।
उपपातकमप्येवं तथा पापानि सुव्रत ॥ ३
मानसानि सुतीक्ष्णानि वाचिकानि पितामह ।
कायिकानि सुमिश्राणि तथा प्रासङ्गिकानि च ॥ ४
बुद्धिपूर्वं कृतान्येव सहजागन्तुकानि च ।
मातृदेहोत्थितान्येवं पितृदेहे च पातकम् ॥ ५
संहरामि न सन्देहः सर्वं पातकजं विभो ।
लक्षं जप्त्वा ह्यघोरेभ्यो ब्रह्महा मुच्यते प्रभो ॥ ६
तदर्द्धं वाचिके वत्स तदर्द्धं मानसे पुनः ।
चतुर्गुणं बुद्धिपूर्व्वं क्रोधादष्टगुणं स्मृतम् ॥ ७
वीरहा लक्षमात्रेण भ्रूणहा कोटिमभ्यसेत् ।
मातृहा नियुतं जप्त्वा शुध्यते नात्र संशयः ॥ ८
गोघ्नश्चैव कृतघ्नश्च स्त्रीघ्नः पापयुतो नरः ।
अयुताघोरमभ्यस्य मुच्यते नात्र संशयः ॥ ९
सुरापो लक्षमात्रेण बुद्ध्याऽबुद्ध्यापि वै प्रभो ।
मुच्यते नात्र सन्देहस्तदर्द्धेन च वारुणीम् ॥ १०
अस्नाताशी सहस्रेण अजपी च तथा द्विजः ।
अहुताशी सहस्रेण अदाता च विशुध्यति ॥ ११
ब्राह्मणस्वापहर्त्ता च स्वर्णस्तेयी नराधमः ।
नियुतं मानसं जप्त्वा मुच्यते नात्र संशयः ॥ १२
गुरुतल्परतो वापि मातृघ्नो वा नराधमः ।
ब्रह्मघ्नश्च जपेदेवं मानसं वै पितामह ॥ १३
सम्पर्कात् पापिनां पापं तत्समं परिभाषितम् ।
तथाप्ययुतमात्रेण पातकाद्वै प्रमुच्यते ॥ १४
संसर्गात् पातकी लक्षं जपेद्वै मानसं धिया ।
उपांशु यच्चतुर्ज्ञा वै वाचिकञ्चाष्टधा जपेत् ॥ १५
पातकार्द्धमेव स्यादुपपातकिनां स्मृतम् ।
तदर्द्धं केवले पापे नात्र कार्य्या विचारणा ॥ १६
ब्रह्महत्या सुरापानं सुवर्णस्तेयमेव च ।
कृत्वा च गुरुतल्पञ्च पापकृद्ब्राह्मणो यदि ॥ १७
ग्राह्यन्तु रुद्रगायत्र्या गोमूत्रं कापिलं द्विजाः ।
गन्धद्वारेति तस्या वै गोमयं स्वस्थमाहरेत् ॥ १८
तेजोऽसि शुक्रमित्याज्यं कापिलं संहरेद्बुधः ।
आप्यायस्वेति च क्षीरं दधिक्राव्णोऽति चाहरेत्॥१९
गव्यं दधि नवं साक्षात् कापिलं वै पितामह ।
देवस्यत्वेति मन्त्रेण संग्रहेद्वै कुशोदकम् ॥ २०
एकस्थं हेमपात्रे वा कृत्वा घोरेण राजते ।
ताम्रे वा पद्मपत्रे वा पालाशे वा दले शुभे ॥ २१
सकूर्चं सर्व्वरत्नाढ्यं क्षिप्त्वा तत्रैव काञ्चनम् ।
जपेल्लक्षमघोराख्यं हुत्वा चैव घृतादिभिः ॥ २२
घृतेन चरुणा चैव समिद्भिश्च तिलैस्तथा ।
यवैश्च व्रीहिभिश्चैव जुहुयाद्वै पृथक् पृथक् ॥ २३
प्रत्येकं सप्तवारन्तु द्रव्यालाभे घृतेन तु ।

ह्लाघोरेण देवेशं ख्लाघोरेण वै द्विजाः ॥ २४
अष्टद्रोणघृतेनैव स्नाप्य पश्चाद्विशोध्य च।
अहोरात्रोषितः स्नातः पिबेत् कूर्चं शिवाग्रतः ॥ २५
ब्राह्मं ब्रह्मजपं कुर्य्यादाचम्य च यथाविधि।
एवं कृत्वा कृतघ्नोऽपि ब्रह्महा भ्रूणहा तथा ॥ २६
वीरहा गुरुघाती च मित्रविश्वासघातकः।
स्तेयी सुवर्णस्तेयी च गुरुतल्परतः सदा ॥ २७
मद्यपी वृषलीसक्तः परदारविघषकः।
ब्रह्मस्वहा तथा गोघ्नो मातृहा पितृहा तथा ॥ २८
देवप्रच्यावकश्चैव लिङ्गप्रध्वंसकस्तथा।
तथान्यानि च पापानि मानसानि द्विजो यदि ॥ २९
वाचिकानि यथान्यानि कायिकानि सहस्रशः।
कृत्वा विमुच्यते सद्यो जन्मान्तरशतैरपि ॥ ३०
एतद्रहस्यं कथितमघोरेशप्रसङ्गतः।
तस्माज्जयेद्द्विजो नित्यं सर्व्वपापविशुद्धये ॥ ३१

इति श्रीलैङ्गे महापुराणे अघोरेशमाहात्म्यं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः।

सूत उवाच।

अथान्यो ब्रह्मणः कल्पो वर्त्तते मुनिपुङ्गवाः।
विश्वरूप इति ख्यातो नामतः परमाद्भुतः ॥ १
विनिवृत्ते तु संहारे पुनः सृष्टे चराचरे।
ब्रह्मणः पुत्रकामस्य ध्यायतः परमेष्ठिनः ॥ २
प्रादुर्भूता महानादा विश्वरूपा सरस्वती।
विश्वमाल्याम्बरधरा विश्वयज्ञोपवीतिनी ॥ ३
विश्वोष्णीषा विश्वगन्धा विश्वमाता महोष्ठिका।
तथाविधं स भगवानीशानं परमेश्वरम् ॥ ४
शुद्धस्फटिकसङ्काशं सर्व्वाभरणभूषितम्।
अथ तं मनसा ध्यात्वा युक्तात्मा वै पितामहः ॥ ५
ववन्दे देवमीशानं सर्व्वेशं सर्व्वगं प्रभुम्।
ओमीशान नमस्तेऽस्तु महादेव नमोऽस्तु ते ॥ ६
नमोऽस्तु सर्व्वविद्यानामीशान परमेश्वर।
नमोऽस्तु सर्व्वभूतानामीशान वृषवाहन ॥ ७
ब्रह्मणोऽधिपते तुभ्यं ब्रह्मणे ब्रह्मरूपिणे।
नमो ब्रह्माधिपतये शिवं मेऽस्तु सदाशिव ॥ ८
ओङ्कारमूर्त्ते देवेश सद्योजात नमो नमः।
प्रपद्ये त्वां प्रपन्नोऽस्मि सद्योजाताय व नमः ॥ ९
अभवे च भवे तुभ्यं तथा नातिभवे नमः।
भवोद्भव भवेशान मां भजस्व महाद्युते ॥ १०
वामदेव नमस्तुभ्यं ज्येष्ठाय वरदाय च।
नमो रुद्राय कालाय कलनाय नमो नमः ॥ ११
नमो विकरणायैव कालवर्णाय वर्णिने।
बलाय बलिनां नित्यं सदा विकरणाय ते ॥ १२
बलप्रमथनायैव बलिने ब्रह्मरूपिणे।
सर्व्वभूतेश्वरेशाय भूतानां दमनाय च ॥ १३
मनोन्मनाय देवाय नमस्तुभ्यं महाद्युते।
वामदेवाय वामाय नमस्तुभ्यं महात्मने ॥ १४
ज्येष्ठाय चैव श्रेष्ठाय रुद्राय वरदाय च।
कालहन्त्रे नमस्तुभ्यं नमस्तुभ्यं महात्मने ॥ १५
इति स्तवेन देवेशं ननाम वृषभध्वजम्।
यः पठेत् सकृदेवेह ब्रह्मलोकं गमिष्यति ॥ १६
श्रावयेद्वा द्विजान् श्राद्धे स याति परमां गतिम्।
एवं ध्यानगतं तत्र प्रणमन्तं पितामहम् ॥ १७
उवाच भगवानीशः प्रीतोऽहं ते किमिच्छसि।
ततस्तु प्रणतो भूत्वा वाग्विशुद्धं महेश्वरम् ॥ १८
उवाच भगवान् रुद्रं प्रीतं प्रीतेन चेतसा।
यदिदं विश्वरूपं ते विश्वगौः श्रेयसीश्वरी ॥ १९
एतद्वेदितुमिच्छामि यथेयं परमेश्वर।
कैषा भगवती देवी चतुष्पादा चतुर्म्मुखी ॥ २०
चतुःशृङ्गी चतुर्व्वक्त्रा चतुर्द्दंष्ट्रा चतुःस्तनी।
चतुर्हस्ता चतुर्नेत्रा विश्वरूपा कथं स्मृता ॥ २१
किंनामगोत्रा कस्येयं किंवीर्य्या चापि कर्म्मतः।
तस्य तद्वचनं श्रुत्वा देवदेवो वृषध्वजः ॥ २२
प्राह देववृषं ब्रह्मा ब्रह्माणस्वात्मसम्भवम्।
रहस्यं सर्व्वमन्त्राणां पावनं पुष्टिवर्द्धनम् ॥ २३
शृणुष्वैतत् परं गुह्यमादिसर्गे यथा तथा।
एवं यो वर्त्तते कल्पो विश्वरूपस्त्वसौ मतः ॥ २४
ब्रह्मस्थानमिदञ्चापि यत्र प्राप्तं त्वया प्रभो।
त्वत्तः परतरं देव विष्णुना तत्पदं शुभम् ॥ २५
वैकुण्ठेन विशुद्धेन मम वामाङ्गजेन वै।
तदाप्रभृति कल्पश्च त्रयस्त्रिंशत्तमो ह्ययम् ॥ २६
शतं शतसहस्राणामतीता ये स्वयम्भुवः।

पुरस्तात् तव देवेश तच्छृणुष्व महामते ॥ २७
आनन्दस्तु स विज्ञेय आनन्दत्वे व्यवस्थितः।
माण्डव्यगोत्रस्तपसा मम पुत्रत्वमागतः ॥ २८
त्वयि योगश्च सांख्यञ्च तपो विद्या विधिक्रिया।
ऋतं सत्यं दया ब्रह्म अहिंसा सम्मतिः क्षमा ॥ २९
ध्यानं ध्येयं दमः शान्तिर्विद्याविद्या मतिर्धृतिः।
कान्तिर्नीतिः प्रथा मेधा लज्जा दृष्टिः सरस्वती ॥३०
तुष्टिः पुष्टिः क्रिया चैव प्रसादश्च प्रतिष्ठिताः।
द्वात्रिंशल्लक्षणा ह्येषा द्वात्रिंशाक्षरसंज्ञया ॥ ३१
प्रकृतिर्विहिता ब्रह्मंस्त्वत्प्रसूतिर्महेश्वरी।
विष्णोर्भगवतश्चापि तथान्येषामपि प्रभो ॥ ३२
सैषा भगवती देवी यत्प्रसूतिः प्रतिष्ठिता।
चतुर्मुखी जगद्योनिः प्रकृतिर्गौः प्रतिष्ठिता ॥ ३३
गौरी माया च विद्या च कृष्णा हैमवतीति च।
प्रधानं प्रकृतिश्चैव यामाहुस्तत्त्वचिन्तकाः ॥ ३४

अजामेकां लोहितां शुक्लकृष्णां
विश्वप्रजां सृजमानां सरूपाम्।
अजोऽहं मां विद्धि तां विश्वरूपं
गायत्रीं गां विश्वरूपां हि बुद्ध्वा ॥ ३५

एवमुक्त्वा महादेवः ससर्ज परमेश्वरः।
ततश्च पार्श्वगा देव्याः सर्वरूपकुमारकाः ॥ ३६
जटी मुण्डी शिखण्डी च अर्द्धमुण्डश्च जज्ञिरे।
ततस्तेन यथोक्तेन योगेन सुमहौजसः ॥ ३७
दिव्यवर्षसहस्रान्ते उपासित्वा महेश्वरम्।
धर्मोपदेशमखिलं कृत्वा योगमयं दृढम् ॥ ३८
शिष्टाश्च नियतात्मानः प्रविष्टा रुद्रमीश्वरम् ॥ ३९

इति श्रीलैङ्गे महापुराणे षोड़शोऽध्यायः ॥१६॥

---

## सप्तदशोऽध्यायः।

सूत उवाच।

एवं संक्षेपतः प्रोक्तः सद्यादीनां समुद्भवः।
यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान्।
स याति ब्रह्मसायुज्यं प्रसादात् परमेष्ठिनः ॥ १

ऋषय ऊचुः।

कथं लिङ्गमभूल्लिङ्गे समभ्यर्च्यः स शङ्करः।
किं लिङ्गं कस्तथा लिङ्गी सूत वक्तुमिहार्हसि ॥ २

रोमहर्षण उवाच।

एवं देवाश्च ऋषयः प्रणिपत्य पितामहम्।
अपृच्छन् भगवल्लिङ्गं कथमासीदिति स्वयम् ॥ ३
लिङ्गे महेश्वरो रुद्रः समभ्यर्च्यः कथन्त्विति।
किं लिङ्गं कस्तथा लिङ्गी सोऽप्याह च पितामहः ॥४

पितामह उवाच।

प्रधानं लिङ्गमाख्यातं लिङ्गी च परमेश्वरः।
रक्षार्थमम्बुधौ मह्यं विष्णोस्त्वासीत् सुरोत्तमाः ॥ ५
वैमानिके गते सर्गे जनलोकं महर्षिभिः।
स्थितिकाले तदा पूर्णे ततः प्रत्याहृते तथा ॥ ६
चतुर्युगसहस्रान्ते सत्यलोकं गते सुराः।
विनाधिपत्यं समतां गतेऽन्ते ब्रह्मणो मम ॥ ७
शुष्के च स्थावरे सर्व्वे त्वनावृष्ट्या च सर्व्वशः।
पशवो मानुषा वृक्षाः पिशाचाः पिशिताशनाः ॥ ८
गन्धर्व्वाद्याः क्रमेणैव निर्दग्धा भानुभानुभिः।
एकार्णवे महाघोरे तमोभूते समन्ततः ॥ ९
सुष्वापाम्भसि योगात्मा निर्म्मलो निरुपप्लवः।
सहस्रशीर्षा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ १०
सहस्रबाहुः सर्व्वज्ञः सर्व्वदेवभवोद्भवः।
हिरण्यगर्भो रजसा तमसा शङ्करः स्वयम् ॥ ११
सत्त्वेन सर्व्वगो विष्णुः सर्व्वात्मत्वे महेश्वरः।
कालात्मा कालनाभस्तु शुक्लः कृष्णस्तु निर्गुणः ॥ १२
नारायणो महाबाहुः सर्व्वात्मा सदसन्मयः।
तथाभूतमहं दृष्ट्वा शयानं पङ्कजेक्षणम् ॥ १३
मायया मोहितस्तस्य तमवोचममर्षितः।
कस्त्वं वदेति हस्तेन समुत्थाप्य सनातनम् ॥ १४
तदा हस्तप्रहारेण तीव्रेण स दृढ़ेन तु।
प्रबुद्धोऽहीयशयनात् समासीनः क्षणं वशी ॥ १५
ददर्श निद्राविक्लिन्न-नीरजामललोचनः।
मामग्रे संस्थितं भासाध्यासितो भगवान् हरिः ॥१६
आह चोत्थाय भगवान् हसन् मां मधुरं सकृत्।
स्वागतं स्वागतं वत्स पितामह महाद्युते ॥ १७
तस्य तद्वचनं श्रुत्वा स्मितपूर्व्वं सुरर्षभाः।
रजसाविद्धवैरश्च तमवोचं जनार्द्दनम् ॥ १८
भाषसे वत्स वत्सेति सर्गसंहारकारणम्।
मामिहान्तःस्मितं कृत्वा गुरुः शिष्यमिवानघ ॥ १९
कर्त्तारं जगतां साक्षात् प्रकृतेश्च प्रवर्त्तकम्।

सनातनमजं विष्णुं विरिञ्चिं विश्वसम्भवम् ॥ २०
विश्वात्मानं विधातारं धातारं पङ्कजेक्षणम् ।
किमर्थं भाषसे मोहाद्वक्तुमर्हसि सत्वरम् ॥ २१
कोऽपि मामाह जगतां कर्त्ताहमिति लोकय ।
भर्त्ता हर्त्ता भवानङ्गादवतीर्णो ममाव्ययात् ॥ २२
विस्मृतोऽसि जगन्नाथं नारायणमनामयम् ।
पुरुषं परमात्मानं पुरुहूतं पुरुष्टुतम् ॥ २३
विष्णुमच्युतमीशानं विश्वस्य प्रभवोद्भवम् ।
तवापराधो नास्त्यत्र मम मायाकृतन्त्विदम् ॥ २४
शृणु सत्यं चतुर्व्वक्त्र सर्व्वदेवेश्वरो ह्यहम् ।
कर्त्ता नेता च हर्त्ता च न मयास्ति समो विभुः ॥ २५
अहमेव परं ब्रह्म परं तत्त्वं पितामह ।
अहमेव परं ज्योतिः परमात्मा त्वहं विभुः ॥ २६
यद्यद्दृष्टं श्रुतं सर्व्वं जगत्यस्मिंश्चराचरम् ।
तत्तद्विद्धि चतुर्व्वक्त्र सर्व्वं मन्मयमित्यथ ॥ २७
मया सृष्टं पुरा व्यक्तं चतुर्व्विंशतिकं स्वयम् ।
नित्यान्ता ह्यणवो बद्धाः सृष्टाः क्रोधोद्भवादयः ॥ २८
प्रसादाद्धि भवानण्डान्यनेकानीह लीलया ।
सृष्टा बुद्धिर्मया तस्यामहङ्कारस्त्रिधा ततः ॥ २९
तन्मात्रापञ्चकं तस्मान्मनःषष्ठेन्द्रियाणि च ।
आकाशादीनि भूतानि भौतिकानि च लीलया ॥ ३०
इत्युक्तवति तस्मिंश्च मयि चापि वचस्तथा ।
आवयोश्चाभवद्युद्धं सुघोरं रोमहर्षणम् ॥ ३१
प्रलयार्णवमध्ये तु रजसा बद्धवैरयोः ।
एतस्मिन्नन्तरे लिङ्गमभवच्चावयोः पुरः ॥ ३२
विवादशमनार्थं हि प्रबोधार्थञ्च भास्वरम् ।
ज्वालामालासहस्राढ्यं कालानलशतोपमम् ॥ ३३
क्षयवृद्धिविनिर्म्मुक्तमादिमध्यान्तवर्ज्जितम् ।
अनौपम्यमनिर्द्देश्यमव्यक्तं विश्वसम्भवम् ॥ ३४
तस्य ज्वालासहस्रेण मोहितो भगवान् हरिः ।
मोहितं प्राह मामत्र परीक्षावोऽग्निसम्भवम् ॥ ३५
अधो गमिष्याम्यनलस्तम्भस्यानुपमस्य च ।
भवानूर्द्ध्वं प्रयत्नेन गन्तुमर्हसि सत्वरम् ॥ ३६
एवं व्याहृत्य विश्वात्मा स्वरूपमकरोत् तदा ।
वाराहमहमप्याशु हंसत्वं प्राप्तवान् सुराः ॥ ३७
तदाप्रभृति मामाहुर्हंसं हंसो विराडिति ।
हंस हंसेति यो ब्रूयान्मां हंसः स भविष्यति ॥ ३८
सुश्वेतो ह्यनलाक्षश्च विश्वतः पक्षसंयुतः ।
मनोऽनिलजवो भूत्वा गतोऽहं चोर्द्ध्वतः सुराः ॥ ३९
नारायणोऽपि विश्वात्मा नीलाञ्जनचयोपमम् ।
दशयोजनविस्तीर्णं शतयोजनमायतम् ॥ ४०
मेरुपर्व्वतवर्ष्माणं गौरतीक्ष्णाग्रदंष्ट्रिणम् ।
कालादित्यसमाभासं दीर्घघोणं महास्वनम् ॥ ४१
ह्रस्वपादं विचित्राङ्गं जैत्रं दृढमनौपमम् ।
वाराहमसितं रूपमास्थाय गतवानधः ॥ ४२
एवं वर्षसहस्रन्तु त्वरन् विष्णुरधोगतः ।
नापश्यदल्पमप्यस्य मूलं लिङ्गस्य सूकरः ॥ ४३
तावत् कालं गतो ह्यूर्द्ध्वमहमप्यरिसूदनः ।
सत्वरं सर्व्वयत्नेन तस्यान्तं ज्ञातुमिच्छया ॥ ४४
श्रान्तो ह्यदृष्ट्वा तस्यान्तमहङ्कारादधोगतः ।
तथैव भगवान् विष्णुः श्रान्तः सन्त्रस्तलोचनः ॥ ४५
सर्व्वदेवभवस्तूर्णमुत्थितः स महावपुः ।
समागतो मया सार्द्धं प्रणिपत्य महामनाः ॥ ४६
मायया मोहितः शम्भोस्तस्थौ संविग्नमानसः ।
पृष्ठतः पार्श्वतश्चैव चाग्रतः परमेश्वरम् ॥ ४७
प्रणिपत्य मया सार्द्धं सस्मार किमिदन्त्विति ।
तदा समभवत् तत्र नादो वै शब्दलक्षणः ॥ ४८
ओमोमिति सुरश्रेष्ठाः सुव्यक्तः प्लुतलक्षणः ।
किमिदन्त्विति सञ्चिन्त्य मया तिष्ठन् महास्वनम् ॥ ४९
लिङ्गस्य दक्षिणे भागे तदापश्यत् सनातनम् ।
आद्यं वर्णमकारन्तु उकारञ्चोत्तरे ततः ॥ ५०
मकारं मध्यतश्चैव नादान्तं तस्य चोमिति ।
सूर्य्यमण्डलवद्दृष्ट्वा वर्णमाद्यन्तु दक्षिणे ॥ ५१
उत्तरे पावकप्रख्यमुकारं पुरुषर्षभः ।
शीतांशुमण्डलप्रख्यं मकारं मध्यमं तथा ॥ ५२
तस्योपरि तदापश्यच्छुद्धस्फटिकवत् प्रभुम् ।
तुरीयातीतममृतं निष्कलं निरुपप्लवम् ॥ ५३
निर्द्वन्द्वं केवलं शून्यं वाह्याभ्यन्तरवर्ज्जितम् ।
सवाह्याभ्यन्तरञ्चैव सवाह्याभ्यन्तरस्थितम् ॥ ५४
आदिमध्यान्तरहितमानन्दस्यापि कारणम् ।
मात्रास्तिस्रस्त्वर्द्धमात्रं नादाख्यं ब्रह्मसंज्ञितम् ॥ ५५
ऋग्यजुःसामवेदा वै मात्रारूपेण माधवः ।
वेदशब्देभ्य एवेशं विश्वात्मानमचिन्तयत् ॥ ५६
तदाभवदृषि[illegible] सारतमं प्रभुम् ।

तेनैव ऋषिणा विष्णुर्ज्ञातवान् परमेश्वरम् ॥ ५७

देव उवाच।

चिन्तया रहितो रुद्रो वाचो यन्मनसा सह।
अप्राप्य तं निवर्त्तन्ते वाच्यस्त्वेकाक्षरेण सः ॥ ५८
एकाक्षरेण तद्वाच्यमृतं परमकारणम्।
सत्यमानन्दममृतं परंब्रह्म परात्परम् ॥ ५९
एकाक्षरादकाराख्यो भगवान् कनकाण्डजः।
एकाक्षरादुकाराख्यो हरिः परमकारणम् ॥ ६०
एकाक्षरान्मकाराख्यो भगवान् नीललोहितः।
सर्गकर्त्ता अकाराख्यो ह्युकाराख्यस्तु मोहकः ॥ ६१
मकाराख्यस्तयोर्नित्यमनुग्रहकरोऽभवत्।
मकाराख्यो विभुर्वीजी ह्यकारो वीजमुच्यते ॥ ६२
उकाराख्यो हरिर्योनिः प्रधानपुरुषेश्वरः।
वीजी च वीजं तद्योनिर्नादाख्यश्च महेश्वरः ॥ ६३
वीजी विभज्य चात्मानं स्वेच्छया तु व्यवस्थितः।
अस्य लिङ्गादभूद्वीजमकारो वीजिनः प्रभोः ॥ ६४
उकारयोनौ निक्षिप्तमवर्द्धत समन्ततः।
सौवर्णमभवच्चाण्डमावेद्याद्यं तदक्षरम् ॥ ६५
अनेकाब्दं तथा चाप्सु दिव्यमण्डं व्यवस्थितम्।
ततो वर्षसहस्रान्ते द्विधाकृतमजोद्भवम् ॥ ६६
अण्डमप्सु स्थितं साक्षादाद्याख्येनेश्वरेण तु।
तस्याण्डस्य शुभं हैमं कपालञ्चोर्द्धसंस्थितम् ॥ ६७
जज्ञे यद्द्यौस्तदपरं पृथिवी पञ्चलक्षणा।
तस्मादण्डोद्भवो जज्ञे अकाराख्यश्चतुर्मुखः ॥ ६८
स स्रष्टा सर्व्वलोकानां स एव त्रिविधः प्रभुः।
एवमोमोमिति प्रोक्तमित्याहुर्यजुषां वराः ॥ ६९
यजुषां वचनं श्रुत्वा ऋचः सामानि सादरम्।
एवमेव हरे ब्रह्मन्नित्याहुः श्रुतयस्तदा ॥ ७०
ततो विज्ञाय देवेशं यथावच्छ्रुतिसम्भवैः।
मन्त्रैर्महेश्वरं देवं तुष्टाव सुमहोदयम् ॥ ७१
आवयोः स्तुतिसन्तुष्टो लिङ्गे तस्मिन् निरञ्जनः।
दिव्यं शब्दमयं रूपमास्थाय प्रहसन् स्थितः ॥ ७२
अकारस्तस्य मूर्द्धा तु ललाटं दीर्घमुच्यते।
इकारो दक्षिणं नेत्रमीकारो वामलोचनम् ॥ ७३
उकारो दक्षिणं श्रोत्रमूकारो वाममुच्यते।
ऋकारो दक्षिणं तस्य कपोलं परमेष्ठिनः ॥ ७४
वामं कपोलमॄकारो लृ लॄ नासापुटे उभे।
एकारमोष्ठमूर्द्धश्च ऐकारस्त्वधरो विभोः ॥ ७५
ओकारश्च तथौकारो दन्तपङ्क्तिद्वयं क्रमात्।
अमस्तु तालुनी तस्य देवदेवस्य धीमतः ॥ ७६
कादिपञ्चाक्षराण्यस्य पञ्च हस्तानि दक्षिणे।
चादिपञ्चाक्षराण्येवं पञ्च हस्तानि वामतः ॥ ७७
टादिपञ्चाक्षरं पादस्तादिपञ्चाक्षरं तथा।
पकारमुदरं तस्य फकारः पार्श्व उच्यते ॥ ७८
वकारो वामपार्श्वं वै भकारं स्कन्धमस्य तत्।
मकारं हृदयं शम्भोर्महादेवस्य योगिनः ॥ ७९
यकारादि-सकारान्ता विभोर्वै सप्त धातवः।
हकार आत्मरूपं वै क्षकारः क्रोध उच्यते ॥ ८०
तं दृष्ट्वा उमया सार्द्धं भगवन्तं महेश्वरम्।
प्रणम्य भगवान् विष्णुः पुनश्चापश्यदूर्द्ध्वतः ॥ ८१
ओङ्कारप्रभवं मन्त्रं कलापञ्चकसंयुतम्।
शुद्धस्फटिकसङ्काशं शुभाष्टत्रिंशदक्षरम् ॥ ८२
मेधाकरमभूद्भूयः सर्व्वधर्म्मार्थसाधकम्।
गायत्रीप्रभवं मन्त्रं हरितं वश्यकारकम् ॥ ८३
चतुर्व्विंशतिवर्णाढ्यं चतुष्कलमनुत्तमम्।
अथर्व्वमसितं मन्त्रं कलाष्टकसमायुतम् ॥ ८४
आभिचारिकमत्यर्थं त्रयस्त्रिंशच्छुभाक्षरम्।
यजुर्व्वेदसमायुक्तं पञ्चत्रिंशच्छुभाक्षरम् ॥ ८५
कलाष्टकसमायुक्तं सुश्वेतं शान्तिकं तथा।
त्रयोदशकलायुक्तं वालाद्यैः सह लोहितम् ॥ ८६
सामोद्भवं जगत्याद्यं वृद्धिसंहारकारणम्।
वर्णाः षडधिका षष्टिरस्य मन्त्रवरस्य तु ॥ ८७
पञ्च मन्त्रांस्तथा लब्ध्वा जजाप भगवान् हरिः।
अथ दृष्ट्वा कलावर्णमृग्यजुःसामरूपिणम् ॥ ८८
ईशानमीशमुकुटं पुरुषास्यं पुरातनम्।
अघोरहृदयं हृद्यं वामगुह्यं सदाशिवम् ॥ ८९
सद्यःपादं महादेवं महाभोगीन्द्रभूषणम्।
विश्वतः पादवदनं विश्वतोऽक्षिकरं शिवम् ॥ ९०
ब्रह्मणोऽधिपतिं सर्ग-स्थिति-संहारकारणम्।
तुष्टाव पुनरिष्टाभिर्वाग्भिर्वरदमीश्वरम् ॥ ९१

इति श्रीलैङ्गे महापुराणे लिङ्गोद्भवो
नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः।

विष्णुरुवाच।

एकाक्षराय रुद्राय अकारायात्मरूपिणे।
उकारायादिदेवाय विद्यादेहाय वै नमः॥ १
तृतीयाय मकाराय शिवाय परमात्मने।
सूर्य्याग्निसोमवर्णाय यजमानाय वै नमः॥ २
अग्नये रुद्ररूपाय रुद्राणां पतये नमः।
शिवाय शिवमन्त्राय सद्योजाताय वेधसे॥ ३
वामाय वामदेवाय वरदायामृताय ते।
अघोरायातिघोराय सद्योजाताय रंहसे॥ ४
ईशानाय श्मशानाय अतिवेगाय वेगिने।
नमोऽस्तु श्रुतिपादाय ऊर्द्धलिङ्गाय लिङ्गिने॥ ५
हेमलिङ्गाय हेमाय वारिलिङ्गाय चाम्भसे।
शिवाय शिवलिङ्गाय व्यापिने व्योमव्यापिने॥ ६
वायवे वायुवेगाय नमस्ते वायुव्यापिने।
तेजसे तेजसां भर्त्त्रे नमस्तेजोऽधिव्यापिने॥ ७
जलाय जलभूताय नमस्ते जलव्यापिने।
पृथिव्यै चान्तरीक्षाय पृथिवीव्यापिने नमः॥ ८
शब्दस्पर्शस्वरूपाय रसगन्धाय गन्धिने।
गणाधिपतये तुभ्यं गुह्याद्गुह्यतमाय ते॥ ९
अनन्ताय विरूपाय अनन्तानामयाय च।
शाश्वताय वरिष्ठाय वारिगर्भाय योगिने॥ १०
संस्थितायाम्भसां मध्ये आवयोमध्यवर्च्चसे।
गोप्त्रे हर्त्त्रे सदा कर्त्त्रे निधनायेश्वराय च॥ ११
अचेतनाय चिन्त्याय चेतनायासहारिणे।
अरूपाय सुरूपाय अनङ्गायाङ्गहारिणे॥ १२
भस्मदिग्धशरीराय भानुसोमाग्निहेतवे।
श्वेताय श्वेतवर्णाय तुहिनाद्रिचराय च॥ १३
सुश्वेताय सुवक्त्राय नमः श्वेतशिखाय च।
श्वेतास्याय महास्याय नमस्ते श्वेतलोहित॥ १४
सुताराय विशिष्टाय नमो दुन्दुभिने हर।
शतरूप विरूपाय नमः केतुमते सदा॥ १५
ऋद्धिशोकविशोकाय पिनाकाय कपर्द्दिने।
विपाशाय सुपाशाय नमस्ते पाशनाशिने॥ १६
सुहोत्राय हविष्याय सुब्रह्मण्याय सूरिणे।
सुमुखाय सुवक्त्राय दुर्द्दमाय दमाय च॥ १७

कङ्गाय कङ्करूपाय कङ्कणीकृतपन्नग।
सनकाय नमस्तुभ्यं सनातन सनन्दन॥ १८
सनत्कुमारसारङ्ग-मारणाय महात्मने।
लोकाक्षिणे त्रिधामाय नमो विरजसे सदा॥ १९
शङ्खपालाय शङ्खाय रजसे तमसे नमः।
सारस्वताय मेघाय मेघवाहन ते नमः॥ २०
सुवाहाय विवाहाय विवादवरदाय च।
नमः शिवाय रुद्राय प्रधानाय नमो नमः॥ २१
त्रिगुणाय नमस्तुभ्यं चतुर्व्यूहात्मने नमः।
संसाराय नमस्तुभ्यं नमः संसारहेतवे॥ २२
मोक्षाय मोक्षरूपाय मोक्षकर्त्त्रे नमो नमः।
आत्मने ऋषये तुभ्यं स्वामिने विष्णवे नमः॥ २३
नमो भगवते तुभ्यं नागानां पतये नमः।
ओङ्काराय नमस्तुभ्यं सर्व्वज्ञाय नमो नमः॥ २४
सर्व्वाय च नमस्तुभ्यं नमो नारायणाय च।
नमो हिरण्यगर्भाय आदिदेवाय ते नमः॥ २५
नमोऽस्त्वजाय पतये प्रजानां व्यूहहेतवे।
महादेवाय देवानामीश्वराय नमो नमः॥ २६
शर्व्वाय च नमस्तुभ्यं सत्याय शमनाय च।
ब्रह्मणे चैव भूतानां सर्व्वज्ञाय नमो नमः॥ २७
महात्मने नमस्तुभ्यं प्रज्ञारूपाय व नमः।
चितये चितिरूपाय स्मृतिरूपाय वै नमः॥ २८
ज्ञानाय ज्ञानगम्याय नमस्ते संविदे सदा।
शिखराय नमस्तुभ्यं नीलकण्ठाय वै नमः॥ २९
अर्द्धनारीशरीराय अव्यक्ताय नमो नमः।
एकादशविभेदाय स्थाणवे ते नमः सदा॥ ३०
नमः सोमाय सूर्य्याय भवाय भवहारिणे।
यशस्कराय देवाय शङ्करायेश्वराय च॥ ३१
नमोऽम्बिकाधिपतये उमायाः पतये नमः।
हिरण्यबाहवे तुभ्यं नमस्ते हेमरेतसे॥ ३२
नीलकेशाय वित्ताय शितिकण्ठाय वै नमः।
कपर्द्दिने नमस्तुभ्यं नागाङ्गाभरणाय च॥ ३३
वृषारूढाय सर्व्वस्य हर्त्त्रे कर्त्त्रे नमो नमः।
वीररामातिरामाय रामनाथाय ते विभो॥ ३४
नमो राजाधिराजाय राज्ञामधिगताय ते।
नमः पालाधिपतये पालाशाक्रान्तते नमः॥ ३५
नमः केयूरभूषाय गोपते ते नमो नमः।

नमः श्रीकण्ठनाथाय नमो लिकुचपाणये ॥ ३६
भुवनेशाय देवाय वेदशास्त्र नमोऽस्तु ते ।
सारङ्गाय नमस्तुभ्यं राजहंसाय ते नमः ॥ ३७
कनकाङ्गदहाराय नमः सर्पोपवीतिने ।
सर्पकुण्डलमालाय कटिसूत्रीकृताहिने ।
वेदगर्भाय गर्भाय विश्वगर्भाय ते शिव ॥ ३८

ब्रह्मोवाच ।

विररामेति संस्तुत्वा ब्रह्मणा सहितो हरिः ।
एतत् स्तोत्रवरं पुण्यं सर्व्वपापप्रणाशनम् ॥ ३९
यः पठेत् श्रावयेद्वापि ब्राह्मणान् वेदपारगान् ।
स याति ब्रह्मणो लोके पापकर्म्मरतोऽपि वै ॥ ४०
तस्माज्जपेत् पठेन्नित्यं श्रावयेद्ब्राह्मणान् शुभान् ।
सर्व्वपापविशुद्ध्यर्थं विष्णुना परिभाषितम् ॥ ४१

इति श्रीलैङ्गे महापुराणे विष्णुस्तवो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ।

सूत उवाच ।

अथोवाच महादेवः प्रीतोऽहं सुरसत्तमौ ।
पश्यतां मां महादेवं भयं सर्व्वं विमुच्यताम् ॥ १
युवां प्रसूतौ गात्राभ्यां मम पूर्व्वं महाबलौ ।
अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः ॥ २
वामे पार्श्वे च मे विष्णुर्विश्वात्मा हृदयोद्भवः ।
प्रीतोऽहं युवयोः सम्यग्वरं दद्मि यथेप्सितम् ॥ ३
एवमुक्त्वा तु तं विष्णुं कराभ्यां परमेश्वरः ।
पस्पर्श सुभगाभ्यान्तु कृपया तु कृपानिधिः ॥ ४
ततः प्रहृष्टमनसा प्रणिपत्य महेश्वरम् ।
प्राह नारायणो नाथं लिङ्गस्थं लिङ्गवर्ज्जितम् ॥ ५
यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ।
भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी ॥ ६
देवः प्रदत्तवान् देवः स्वात्मन्यव्यभिचारिणीम् ।
ब्रह्मणे विष्णवे चैव श्रद्धां शीतांशुभूषणः ॥ ७
जानुभ्यामवनीं गत्वा पुनर्नारायणः स्वयम् ।
प्रणिपत्य च विश्वेशं प्राह मन्दतरं वशी ॥ ८
आवयोर्देवदेवेश विवादमतिशोभनम् ।
इहागतो भवान् यस्माद्विवादशमनाय नौ ॥ ९
तस्य तद्वचनं श्रुत्वा पुनः प्राह हरो हरिम् ।
प्रणिपत्य स्थितं मूर्द्ध्ना कृताञ्जलिपुटं स्मयन् ॥ १०

श्रीमहादेव उवाच ।

प्रलय-स्थिति-सर्गाणां कर्त्ता त्वं धरणीपते ।
वत्स वत्स हरे विष्णो पालयैतच्चराचरम् ॥ ११
त्रिधा भिन्नो ह्यहं विष्णो ब्रह्म-विष्णु-भवाख्यया ।
सर्ग-रक्षा-लयगुणैर्निष्कलः परमेश्वरः ॥ १२
सम्मोहं त्यज भो विष्णो पालयैनं पितामहम् ।
पाद्मे भविष्यति सुतः कल्पे तव पितामहः ॥ १३
तदा द्रक्ष्यसि माञ्चैवं सोऽपि द्रक्ष्यति पद्मजः ।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयते ॥ १४
तदाप्रभृति लोकेषु लिङ्गार्च्चा सुप्रतिष्ठिता ।
लिङ्गवेदी महादेवी लिङ्गं साक्षान्महेश्वरः ॥ १५
लयनाल्लिङ्गमित्युक्तं तत्रैव निखिलं सुराः ।
यस्तु लैङ्गं पठेन्नित्यमाख्यानं लिङ्गसन्निधौ ।
स याति शिवतां विप्रो नात्र कार्य्या विचारणा ॥ १६

इति श्रीलैङ्गे महापुराणे विष्णुप्रबोधे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## विंशोऽध्यायः ।

ऋषय ऊचुः ।

कथं पाद्मे पुरा कल्पे ब्रह्मा पद्मोद्भवोऽभवत् ।
भवश्च दृष्टवांस्तेन ब्रह्मणा पुरुषोत्तमः ।
एतत् सर्व्वं विशेषेण साम्प्रतं वक्तुमर्हसि ॥ १

सूत उवाच ।

आसीदेकार्णवं घोरमविभागं तमोमयम् ।
मध्ये चैकार्णवे तस्मिन् शङ्ख-चक्र-गदाधरः ॥ २
जीमूताभोऽम्बुजाक्षश्च किरीटी श्रीपतिर्हरिः ।
नारायणमुखोद्गीर्णः सर्व्वात्मा पुरुषोत्तमः ॥ ३
अष्टबाहुर्महावक्षा लोकानां योनिरुच्यते ।
किमप्यचिन्त्यं योगात्मा योगमास्थाय योगवित् ॥ ४
फणासहस्रकलितं तमप्रतिमवर्चसम् ।
महाभोगपतेर्भोगं साध्वास्तीर्य्य महोच्छ्रयम् ॥ ५
तस्मिन् महति पर्य्यङ्के शेते चैकार्णवे प्रभुः ।
एवं तत्र शयानेन विष्णुना प्रभविष्णुना ॥ ६
आत्मारामेण क्रीडार्थं लीलया क्लिष्टकर्म्मणा ।

शतयोजनविस्तीर्णं तरुणादित्यसन्निभम् ॥ ७
वज्रदण्डं महोत्सेधं नाभ्यां सृष्टन्तु पुष्करम् ।
तस्यैवं क्रीड़मानस्य समीपं देवमीढ़ुषः ॥ ८
हेमगर्भाण्डजो ब्रह्मा रुक्मवर्णो ह्यतीन्द्रियः ।
चतुर्वक्त्रो विशालाक्षः समागम्य यदृच्छया ॥ ९
श्रिया युक्तेन दिव्येन सुशुभेन सुगन्धिना ।
क्रीड़मानञ्च पद्मेन दृष्ट्वा ब्रह्मा शुभेक्षणम् ॥ १०
स विस्मयमथागम्य सौम्यसम्पन्नया गिरा ।
प्रोवाच को भवान् शेते ह्याश्रितो मध्यमम्भसाम् ॥ ११
अथ तस्याच्युतः श्रुत्वा ब्रह्मणस्तु शुभं वचः ।
उदतिष्ठत पर्य्यङ्काद्विस्मयोत्फुल्ललोचनः ॥ १२
प्रत्युवाचोत्तरञ्चैव कल्पे कल्पे प्रतिश्रयः ।
कर्त्तव्यञ्च कृतञ्चैव क्रियते यच्च किञ्चन ॥ १३
द्यौरन्तरीक्षं भूश्चैव परं पदमहं भुवः ।
तमेवमुक्त्वा भगवान् विष्णुः पुनरथाब्रवीत् ॥ १४
कस्त्वं खलु समायातः समीपं भगवान् कुतः ।
क्व वा भूयश्च गन्तव्यं कश्च वा ते प्रतिश्रयः ॥ १५
को भवान् विश्वमूर्त्तिर्वै कर्त्तव्यं किञ्च ते मया ।
एवं ब्रुवन्तं वैकुण्ठं प्रत्युवाच पितामहः ॥ १६
मायया मोहितः शम्भोरविज्ञाय जनार्द्दनम् ।
मायया मोहितं देवमविज्ञातं महात्मनः ॥ १७
यथा भवांस्तथैवाहमादिकर्त्ता प्रजापतिः ।
सविस्मयं वचः श्रुत्वा ब्रह्मणो लोकतन्त्रिणः ॥ १८
अनुज्ञातश्च तेनाथ वैकुण्ठो विश्वसम्भवः ।
कौतूहलान्महायोगी प्रविष्टो ब्रह्मणो मुखम् ॥ १९
इमानष्टादश द्वीपान् ससमुद्रान् सपर्व्वतान् ।
प्रविश्य सुमहातेजाश्चातुर्व्वर्ण्यसमाकुलान् ॥ २०
ब्रह्मणः स्तम्बपर्य्यन्त-सप्तलोकान् सनातनान् ।
ब्रह्मणस्तूदरे दृष्ट्वा सर्व्वान् विष्णुर्महाभुजः ॥ २१
अहोऽस्य तपसो वीर्य्यमित्युक्त्वा च पुनः पुनः ।
अटित्वा विविधान्लोकान् विष्णुर्नानाविधाश्रयान् ॥ २२
ततो वर्षसहस्रान्ते नान्तं हि ददृशे यदा ।
तदास्य वक्त्रान्निष्क्रम्य पन्नगेन्द्रनिकेतनः ॥ २३
नारायणो जगद्धाता पितामहमथाब्रवीत् ।
भगवानादिरन्तश्च मध्यं कालो दिशा नभः ॥ २४
नाहमन्तं प्रपश्यामि उदरस्य तवानघ ।
एवमुक्त्वाब्रवीद्भूयः पितामहमिदं हरिः ॥ २५

भगवानेवमेवाहं शाश्वतं हि ममोदरम् ।
प्रविश्य लोकान् पश्यैताननौपम्यान् सुरोत्तम ॥
ततः प्रह्लादिनीं वाणीं श्रुत्वा तस्याभिनन्द्य च ।
श्रीपतेरुदरं भूयः प्रविवेश पितामहः ॥ २७
तानेव लोकान् गर्भस्थानपश्यत् सत्यविक्रमः ।
पर्य्यटित्वा तु देवस्य ददृशेऽन्तं न वै हरेः ॥ २८

ज्ञात्वा गतिं तस्य पितामहस्य
द्वाराणि सर्व्वाणि पिधाय विष्णुः ।
विभुर्मनः कर्त्तुमियेष चाशु
सुखं प्रसुप्तोऽहमिति प्रचिन्त्य ॥ २९

ततो द्वाराणि सर्व्वाणि पिहितानि समीक्ष्य वै ।
सूक्ष्मं कृत्वात्मनो रूपं नाभ्यां द्वारमविन्दत ॥ ३०
पद्मसूत्रानुसारेण अन्वपश्यत् पितामहः ।
उज्जहारात्मनो रूपं पुष्कराच्चतुराननः ॥ ३१
विरराजारविन्दस्थः पद्मगर्भसमद्युतिः ।
ब्रह्मा स्वयम्भूर्भगवान् जगद्योनिः पितामहः ॥ ३२
एतस्मिन्नन्तरे ताभ्यामेकैकस्य तु कृत्स्नशः ।
वर्त्तमाने तु सङ्घर्षे मध्ये तस्यार्णवस्य तु ॥ ३३
कुतोऽप्यपरिमेयात्मा भूतानां प्रभुरीश्वरः ।
शूलपाणिर्महादेवो हेमचीराम्बरच्छदः ॥ ३४
आगच्छद्यत्र सोऽनन्तो नागभोगपतिर्हरिः ।
शीघ्रं विक्रमतस्तस्य पद्भ्यामाक्रान्तपीड़िताः ॥ ३५
उद्भूतास्तूर्णमाकाशे पृथुलास्तोयबिन्दवः ।
अत्युष्णश्चातिशीतश्च वायुस्तत्र ववौ पुनः ॥ ३६
तद्दृष्ट्वा महदाश्चर्यं ब्रह्मा विष्णुमभाषत ।
अब्बिन्दवश्च शीतोष्णाः कम्पयन्त्यम्बुजं भृशम् ॥ ३७
एतन्मे संशयं ब्रूहि किं वा त्वन्यच्चिकीर्षसि ।
एतदेवंविधं वाक्यं पितामहमुखोद्गतम् ॥ ३८
श्रुत्वाप्रतिमकर्म्मा हि भगवानसुरान्तकृत् ।
किंनु खल्वत्र मे नाभ्यां भूतमन्यत् कृतालयम् ॥ ३९
वदति प्रियमत्यर्थं मन्युश्चास्य मया कृतः ।
इत्येवं मनसा ध्यात्वा प्रत्युवाचेदमुत्तरम् ॥ ४०
किमत्र भगवानद्य पुष्करे जातसम्भ्रमः ।
किं मया च कृतं देव यन्मां प्रियमनुत्तमम् ॥ ४१
भाषसे पुरुषश्रेष्ठ किमर्थं ब्रूहि तत्त्वतः ।
एवं ब्रुवाणं देवेशं लोकयात्रानुगं ततः ॥ ४२
प्रत्युवाचाम्बुजाभासो ब्रह्मा वेदनिधिः प्रभुः ।

ऽसौ तदोदरं पूर्व्वं प्रविष्टोऽहं त्वदिच्छया ॥ ४३
था ममोदरे लोकाः सर्व्वे दृष्टास्त्वया प्रभो।
वैव दृष्टाः कार्त्स्न्येन मया लोकास्तवोदरे ॥ ४४
तो वर्षसहस्रात् तु उपावृत्तस्य मेऽनघ।
या मत्सरभावेण मां वशीकर्त्तुमिच्छता ॥ ४५
शु द्वाराणि सर्व्वाणि पिहितानि समन्ततः।
तो मया महाभाग सञ्चिन्त्य स्वेन तेजसा ॥ ४६
ब्धो नाभिप्रदेशेन पद्मसूत्राद्विनिर्गमः।
भूत् ते मनसोऽल्पोऽपि व्याघातोऽयं कथञ्चन ॥ ४७
त्येषानुगतिर्विष्णो कार्य्याणामौपसर्पिणी।
न्मयानन्तरं कार्य्यं ब्रूहि किं करवाण्यहम् ॥ ४८
तः परममेयात्मा हिरण्यकशिपो रिपुः।
नवद्यां प्रियामिष्टां शिवां वाणीं पितामहात् ॥ ४९
ुत्वा विगतमात्सर्य्यं वाक्यमस्मै ददौ हरिः।
ह्येवमीदृशं कार्य्यं मयाध्यवसितं तव ॥ ५०
ां बोधयितुकामेन क्रीडापूर्व्वं यदृच्छया।
ाशु द्वाराणि सर्व्वाणि घटितानि मयात्मनः ॥ ५१
न तेऽन्यथावगन्तव्यं मान्यः पूज्यश्च मे भवान्।
सर्व्वं मर्षय कल्याण यन्मयापकृतं तव ॥ ५२
अस्मान् मयोह्यमानस्त्वं पद्मादवतर प्रभो।
नाहं भवन्तं शक्नोमि सोढुं तेजोमयं गुरुम् ॥ ५३
स होवाच वरं ब्रूहि पद्मादवतर प्रभो।
पुत्त्रो भव ममारिघ्न मुदं प्राप्स्यसि शोभनाम् ॥ ५४
सद्भाववचनं ब्रूहि पद्मादवतर प्रभो।
स त्वञ्च नो महायोगी त्वमीड्यः प्रणवात्मकः ॥ ५५
अद्यप्रभृति सर्व्वेश: श्वेतोष्णीषविभूषितः।
पद्मयोनिरिति ह्येवं ख्यातो नाम्ना भविष्यसि ॥ ५६
पुत्त्रो मे त्वं भव ब्रह्मन् सप्तलोकाधिपः प्रभो।
ततः स भगवान् देवो वरं दत्त्वा किरीटिने ॥ ५७
एवं भवतु चेत्युक्त्वा प्रीतात्मा गतमत्सरः।
प्रत्यासन्नमथायान्तं बालार्काभं महाननम् ॥ ५८
भवमत्यद्भुतं दृष्ट्वा नारायणमथाब्रवीत्।
अप्रमेयो महावक्त्रो दंष्ट्री ध्वस्तशिरोरुहः ॥ ५९
दशबाहुस्त्रिशूलाङ्को नयनैर्विश्वतः स्थितः।
लोकप्रभुः स्वयं साक्षाद्विकृतो मुञ्जमेखली ॥ ६०
मेढ्रेणोर्द्ध्वेन महता नर्द्दमानोऽतिभैरवम्।
कः खल्वेष पुमान् विष्णो तेजोराशिर्महाद्युतिः ॥ ६१
व्याप्य सर्व्वा दिशो द्याञ्च इत एवाभिवर्त्तते।
तेनैवमुक्तो भगवान् विष्णुर्ब्रह्माणमब्रवीत् ॥ ६२
पद्भ्यां तलनिपातेन यस्य विक्रमतोऽर्णवे।
वेगेन महताकाशेऽप्युत्थिताश्च जलाशयाः ॥ ६३
स्थूलाद्भिर्विश्वतोऽत्यर्थं सिच्यसे पद्मसम्भव।
घ्राणजेन च वातेन कम्प्यमानं त्वया सह ॥ ६४
दोधूयते महापद्मं स्वच्छन्दं मम नाभिजम्।
समागतो भवानीशो ह्यनादिश्चान्तकृत् प्रभुः ॥ ६५
भवानहञ्च स्तोत्रेण उपतिष्ठाव गोध्वजम्।
ततः क्रुद्धोऽम्बुजाभाक्षं ब्रह्मा प्रोवाच केशवम् ॥ ६६
भवान्न नूनमात्मानं वेत्ति लोकप्रभुं विभुम्।
ब्रह्माणं लोककर्त्तारं मां न वेत्सि सनातनम् ॥ ६७
को ह्यसौ शङ्करो नाम आवयोर्व्यतिरिच्यते।
तस्य तत् क्रोधजं वाक्यं श्रुत्वा हरिरभाषत ॥ ६८
मा मैवं वद कल्याण परिवादं महात्मनः।
महायोगेन्धनो धर्म्मो दुराधर्षो वरप्रदः ॥ ६९
हेतुरस्याथ जगतः पुराणपुरुषोऽव्ययः।
बीजी खल्वेष बीजानां ज्योतिरेकः प्रकाशते ॥ ७०
बालक्रीडनकैर्देवः क्रीडते शङ्करः स्वयम्।
प्रधानमव्ययो योनिरव्यक्तं प्रकृतिस्तमः ॥ ७१
मम चैतानि नामानि नित्यं प्रसवधर्म्मिणः।
यः कः स इति दुःखार्त्तैर्मृग्यते यतिभिः शिवः ॥ ७२
एष बीजी भवान् बीजमहं योनिः सनातनः।
स एवमुक्तो विश्वात्मा ब्रह्मा विष्णुमपृच्छत ॥ ७३
भवान् योनिरहं बीजं कथं बीजी महेश्वरः।
एतन्मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि ॥ ७४
ज्ञात्वा च विविधोत्पत्तिं ब्रह्मणो लोकतन्त्रिणः।
इमं परमसादृश्यं प्रश्नमभ्यवदद्धरिः ॥ ७५
अस्मान्महत्तरं भूतं गुह्यमन्यन्न विद्यते।
महतः परमं धाम शिवमध्यात्मिनां पदम् ॥ ७६
द्विविधञ्चैवमात्मानं प्रविभज्य व्यवस्थितः।
निष्कलस्तत्र योऽव्यक्तः सकलश्च महेश्वरः ॥ ७७
अस्य मायाविधिज्ञस्य अगम्यगहनस्य च।
पुरा लिङ्गोद्भवं बीजं प्रथमन्त्वादिसर्गिकम् ॥ ७८
मम योनौ समायुक्तं तद्बीजं कालपर्य्ययात्।
हिरण्मयमकूपारे योन्यामण्डमजायत ॥ ७९
शतानि दशवर्षाणामण्डमप्सु प्रतिष्ठितम्।

अन्ते वर्षसहस्रस्य वायुना तद्द्विधा कृतम् ॥ ८०
कपालमेकं द्यौर्जज्ञे कपालमपरं क्षितिः ।
उल्बं तस्य महोत्सेधो योऽसौ कनकपर्व्वतः ॥ ८१
ततश्च प्रतिसन्ध्यात्मा देवदेवो वरः प्रभुः ।
हिरण्यगर्भो भगवांस्त्वभिजज्ञे चतुर्म्मुखः ॥ ८२
अतारार्केन्दुनक्षत्रं शून्यं लोकमवेक्ष्य च ।
कोऽहमित्यपि च ध्याते कुमारास्तेऽभवंस्तदा ॥ ८३
प्रियदर्शनास्तु यतयो यतीनां पूर्व्वजास्तव ।
भूयो वर्षसहस्रान्ते तत एवात्मजास्तव ॥ ८४
भुवनानलसङ्काशाः पद्मपत्रायतेक्षणाः ।
श्रीमान् सनत्कुमारश्च ऋभुश्चैवोर्द्ध्वरेतसौ ॥ ८५
सनकः सनातनश्चैव तथैव च सनन्दनः ।
उत्पन्ना समकालं ते बुद्ध्यातीन्द्रियदर्शनाः ॥ ८६
उत्पन्नाः प्रतिभात्मानो जगतां स्थितिहेतवः ।
नारभन्ते च कर्म्माणि तापत्रयविवर्ज्जिताः ॥ ८७
अल्पसौख्यं बहुक्लेशं जराशोकसमन्वितम् ।
जीवनं मरणञ्चैव सम्भवश्च पुनः पुनः ॥ ८८
अल्पभूतं सुखं स्वर्गे दुःखानि नरके तथा ।
विदित्वा चागमं सर्व्वमवश्यं भवितव्यताम् ॥ ८९
ऋभुं सनत्कुमारञ्च दृष्ट्वा तव वशे स्थितौ ।
त्रयस्तु त्रीन् गुणान् हित्वा चात्मजा सनकादयः॥९०
वैवर्त्तेन तु ज्ञानेन प्रवृत्तास्ते महौजसः ।
ततस्तेषु प्रवृत्तेषु सनकादिषु वै त्रिषु ॥ ९१
भविष्यसि विमूढ़स्त्वं मायया शङ्करस्य तु ।
एवं कल्पे तु वै वृत्ते संज्ञा नश्यति तेऽनघ ॥ ९२
कल्पे शेषाणि भूतानि सूक्ष्माणि पार्थिवानि च ।
सर्व्वेषां ह्यैश्वरी माया जाग्रतिः समुदाहृता ॥ ९३
यथैष पर्व्वतो मेरुर्देवलोको ह्युदाहृतः ।
तस्य चेदं हि माहात्म्यं विद्धि देववरस्य ह ॥ ९४
ज्ञात्वा चेश्वरसद्भावं ज्ञात्वा मामम्बुजेक्षणम् ।
महादेवं महाभूतं भूतानां वरदं प्रभुम् ॥ ९५
प्रणवेनाथ साम्ना तु नमस्कृत्य जगद्गुरुम् ।
त्वाञ्च माञ्चैव संक्रुद्धो निश्वासान्निर्द्दहेदयम् ॥ ९६
एवं ज्ञात्वा महायोगमभ्युत्तिष्ठन् महाबलम् ।
अहं त्वामग्रतः कृत्वा स्तोष्याम्यनलसप्रभम् ॥ ९७

इति श्रीलैङ्गे महापुराणे विंशोऽध्यायः ॥२०॥

---

## एकविंशोऽध्यायः ।

सूत उवाच ।

ब्रह्माणमग्रतः कृत्वा ततः स गरुड़ध्वजः ।
अतीतैश्च भविष्यैश्च वर्त्तमानैस्तथैव च ।
नामभिश्छान्दसैश्चैव इदं स्तोत्रमुदीरयत् ॥

विष्णुरुवाच ।

नमस्तुभ्यं भगवते सुव्रतानन्ततेजसे ।
नमः क्षेत्राधिपतये वीजिने शूलिने नमः ॥
सुमेढ्रायार्ध्वमेढ्राय दण्डिने रूक्षरेतसे ॥
नमो ज्येष्ठाय श्रेष्ठाय पूर्व्वाय प्रथमाय च ॥
नमो मान्याय पूज्याय सद्योजाताय वै नमः
गह्वराय घटेशाय व्योमचीराम्बराय च ॥
नमस्ते ह्यस्मदादीनां भूतानां प्रभवे नमः ।
वेदानां प्रभवे चैव स्मृतीनां प्रभवे नमः ॥ ५
प्रभवे कर्म्मदानानां द्रव्याणां प्रभवे नमः ।
नमो योगस्य प्रभवे सांख्यस्य प्रभवे नमः ॥ ६
नमो ध्रुवनिबद्धानामृषीणां प्रभवे नमः ।
ऋक्षाणां प्रभवे तुभ्यं ग्रहाणां प्रभवे नमः ॥
वैद्युताशनि-मेघानां गर्ज्जितप्रभवे नमः ।
महोदधीनां प्रभवे द्वीपानां प्रभवे नमः ॥ ८
अद्रीणां प्रभवे चैव वर्षाणां प्रभवे नमः ।
नमो नदीनां प्रभवे नदानां प्रभवे नमः ॥ ९
महौषधीनां प्रभवे वृक्षाणां प्रभवे नमः ।
धर्म्मवृक्षाय धर्म्माय स्थितीनां प्रभवे नमः १०
प्रभवे च परार्द्धस्य परस्य प्रभवे नमः ।
नमो रसानां प्रभवे रत्नानां प्रभवे नमः ॥ ११
क्षणानां प्रभवे चैव लवानां प्रभवे नमः ।
अहोरात्रार्द्धमासानां मासानां प्रभवे नमः ॥
ऋतूनां प्रभवे तुभ्यं संख्यायाः प्रभवे नमः ।
प्रभवे चापरार्द्धस्य परार्द्धप्रभवे नमः ॥ १३
नमः पुराणप्रभवे सर्गाणां प्रभवे नमः ।
मन्वन्तराणां प्रभवे योगस्य प्रभवे नमः ॥ १४
चतुर्व्विधस्य सर्गस्य प्रभवेऽनन्तचक्षुषे ।
कल्पोदयनिबन्धानां वार्त्तानां प्रभवे नमः ॥ १५
नमो विश्वस्य प्रभवे ब्रह्माधिपतये नमः ।
विद्यानां प्रभवे चैव विद्याधिपतये नमः ॥ १६

ो व्रताधिपतये व्रतानां प्रभवे नमः ।
न्त्राणां प्रभवे तुभ्यं मन्त्राधिपतये नमः ॥ १७
त्त्वाणां पतये चव पशूनां पतये तमः ।
ग्वृषाय नमस्तुभ्यं पुराणवृषभाय च ॥ १८
मः पशूनां पतये गोवृषेन्द्रध्वजाय च ।
जापतीनां पतये सिद्धीनां पतये नमः ॥ १९
त्यदानवसङ्घानां रक्षसां पतये नमः ।
श्वर्व्वाणाञ्च पतये यक्षाणां पतये नमः ॥ २०
रुड़ोरगसर्पाणां पक्षिणां पतये नमः ।
र्व्वगुह्यपिशाचानां गुह्याधिपतये नमः ॥ २१
ोकर्णाय च गोमृ्े च शङ्कुकर्णाय वै नमः ।
वाहायाप्रमेयाय ऋक्षाय विरजाय च ॥ २२
मो सुराणां पतये गणानां पतये तमः ।
म्भसां पतये चैव ओजसां पतये नमः ॥ २३
मोऽस्तु लक्ष्मीपतये श्रीपते भूपते नमः ।
लावलसमूहाय अक्षोभ्यक्षोभणाय च ॥ २४
ैमशृङ्गैकशृङ्गाय वृषभाय ककुद्मिने ।
मः स्थैर्य्याय वपुषे तेजसानुव्रताय च ॥ २५
तीताय भविष्याय वर्त्तमानाय वै नमः ।
ुवर्च्चसे च वीर्य्याय शूराय ह्यजिताय च ॥ २६
रदाय वरेण्याय पुरुषाय महात्मने ।
मो भूताय भव्याय महते प्रभवाय च ॥ २७
तनाय च नमस्तुभ्यं तपसे वरदाय च ।
णवे महते चैव नमः सर्व्वगताय च ॥ २८
मो बन्धाय मोक्षाय स्वर्गाय नरकाय च ।
मो भवाय देवाय इज्याय याजकाय च ॥ २९
त्युदीर्णाय दीप्ताय तत्त्वायातिगुणाय च ।
नमः पाशाय शस्त्राय नमोऽस्त्राभरणाय च ॥ ३०
हुताय उपहूताय प्रहुतप्राशिताय च ।
नमोऽस्त्विष्टाय पूर्त्ताय अग्निष्टोमद्विजाय च ॥ ३१
सदस्याय नमश्चैव दक्षिणावभृथाय च ।
अहिंसायाप्रलोभाय पशुमन्त्रौषधाय च ॥ ३२
नमः पुष्टिप्रदानाय सुशीलाय सुशीलिने ।
अतीताय भविष्याय वर्त्तमानाय ते नमः ॥ ३३ (क)
सुवर्च्चसे च वीर्य्याय शूराय ह्यजिताय च ।
वरदाय वरेण्याय पुरुषाय महात्मने ॥ ३४

(क) षड्विंशश्लोकार्द्धे साद्द्रूप्यादिदमर्द्धं पुनरुक्तवद्भाति ।

नमो भूताय भव्याय महते चाभयाय च ।
जरासिद्ध नमस्तुभ्यमयसे वरदाय च ॥ ३५
अधरे महते चैव नमः संस्तुपताय च ।
नमश्चेन्द्रियपत्राणां लेलिहानाय स्रग्विणे ॥ ३६
विश्वाय विश्वरूपाय विश्वतः शिरसे नमः ।
सर्व्वतः पाणिपादाय रुद्रायाप्रतिमाय च ॥ ३७
नमो हव्याय कव्याय हव्यवाहाय वै नमः ।
नमः सिद्धाय मेध्याय इष्टायेज्यापराय च ॥ ३८
सुवीराय सुघोराय अक्षोभ्यक्षोभणाय च ।
सुप्रजाय सुमेधाय दीप्ताय भास्कराय च ॥ ३९
नमो बुद्धाय शुद्धाय विस्तृताय मताय च ।
नमः स्थूलाय सूक्ष्माय दृश्यादृश्याय सर्व्वशः ॥ ४०
वर्षते ज्वलते चैव वायवे शिशिराय च ।
नमस्ते वक्रकेशाय ऊरुवक्षःशिखाय च ॥ ४१
नमो नमः सुवर्णाय तपनीयनिभाय च ।
विरूपाक्षाय लिङ्गाय पिङ्गलाय महौजसे ॥ ४२
वृष्टिघ्नाय नमश्चैव नमः सौम्येक्षणाय च ।
नमो धूम्राय श्वेताय कृष्णाय लोहिताय च ॥ ४३
पिशिताय पिशङ्गाय पीताय च निषङ्गिणे ।
नमस्ते सविशेषाय निर्व्विशेषाय वै नमः ॥ ४४
नम इज्याय पूज्याय उपजीव्याय वै नमः ।
नमः क्षेम्याय वृद्धाय वत्सलाय नमो नमः ॥ ४५
नमो भूताय सत्याय सत्यासत्याय वै नमः ।
नमो वै पद्मवर्णाय मृत्युघ्नाय च मृत्यवे ॥ ४६
नमो गौराय श्यामाय कद्रवे लोहिताय च ।
महासन्ध्याभ्रवर्णाय चारुदीप्ताय दीक्षिणे ॥ ४७
नमः कमलहस्ताय दिग्वासाय कपर्द्दिने ।
अप्रमाणाय सर्व्वाय अव्ययायामराय च ॥ ४८
नमो रूपाय गन्धाय शाश्वतायाक्षताय च ।
पुरस्ताद्बृहते चैव विभ्रान्ताय कृताय च ॥ ४९
दुर्गमाय महेशाय क्रोधाय कपिलाय च ।
तर्क्यातर्क्यशरीराय बलिने रंहसाय च ॥ ५०
सिकत्याय प्रवाह्याय स्थिताय प्रसृताय च ।
सुमेधसे कुलालाय नमस्ते शशिखण्डिने ॥ ५१
चित्राय चित्रवेशाय चित्रवर्णाय मेधसे ।
चेकितानाय तुष्टाय नमस्ते निहिताय च ॥ ५२
नमः क्षान्ताय दान्ताय वज्रसंहननाय च ।

दक्षघ्नाय विषघ्नाय शितिकण्ठोर्द्धमन्यवे ॥ ५३
लेलिहाय कृतान्ताय तिग्मायुधधराय च ।
सम्मोदाय प्रमोदाय यतिवेद्याय ते नमः ॥ ५४
अनामयाय सर्व्वाय महाकालाय वै नमः ।
प्रणवप्रणवेशाय भगनेत्रान्तकाय च ॥ ५५
मृगव्याधाय दक्षाय दक्षयज्ञान्तकाय च ।
सर्व्वभूतात्मभूताय सर्व्वेशातिशयाय च ॥ ५६
पुरघ्नाय सुशस्त्राय धन्विनेऽथ परश्वधे ।
पूषदन्तविनाशाय भगनेत्रान्तकाय च ॥ ५७
कामदाय वरिष्ठाय कामाङ्गदहनाय च ।
रङ्गे करालवक्त्राय नागेन्द्रवदनाय च ॥ ५८
दैत्यानामन्तकेशाय दैत्याक्रन्दकराय च ।
हिमघ्नाय च तीक्ष्णाय आर्द्रचर्म्मधराय च ॥ ५९
श्मशानरतिनित्याय नमोऽस्तूल्मुकधारिणे ।
नमस्ते प्राणपालाय मुण्डमालाधराय च ॥ ६०
प्रहीणशोकैर्विविधैर्भूतैः परिवृताय च ।
नरनारीशरीराय देव्याः प्रियकराय च ॥ ६१
जटिने मुण्डिने चैव व्यालयज्ञोपवीतिने ।
नमोऽस्तु नृत्यशीलाय उपनृत्यप्रियाय च ॥ ६२
मन्यवे गीतशीलाय मुनिभिर्गायते नमः ।
कटङ्कटाय तिग्माय अप्रियाय प्रियाय च ॥ ६३
विभीषणाय भीष्माय भगप्रमथनाय च ।
सिद्धसङ्घानुगीताय महाभागाय वै नमः ॥ ६४
नमो मुक्ताट्टहासाय क्ष्वेडितास्फोटिताय च ।
नर्द्दते कूर्द्दते चैव नमः प्रमुदितात्मने ॥ ६५
नमो मृडाय श्वसते धावतेऽधिष्ठिते नमः ।
ध्यायते जृम्भते चैव रुदते द्रवते नमः ॥ ६६
वल्गते क्रीडते चैव लम्बोदरशरीरिणे ।
नमोऽकृत्याय कृत्याय मुण्डाय किकटाय च ॥ ६७
नम उन्मत्तदेहाय किङ्किणीकाय वै नमः ।
नमो विकृतवेशाय क्रूरायामर्षणाय च ॥ ६८
अप्रमेयाय गोप्त्रे च दीप्तायानिर्गुणाय च ।
वामप्रियाय वामाय चूडामणिधराय च ॥ ६९
नमः स्तोकाय तनवे गुणैरप्रमिताय च ।
नमो गुण्याय गुह्याय अगम्यगमनाय च ॥ ७०
लोकधात्री त्वियं भूमिः पादौ सज्जनसेवितौ ।
सर्व्वेषां सिद्धियोगानामधिष्ठानं तवोदरम् ॥ ७१

मध्येऽन्तरीक्षं विस्तीर्णं तारागणविभूषित
स्वातिः पथ इवाभाति श्रीमान् हारस्तवो
दिशो दश भुजास्तुभ्यं केयूराङ्गदभूषिताः
विस्तीर्णपरिणाहश्च नीलाञ्जनचयोपमः ॥
कण्ठस्ते शोभते श्रीमान् हेमसूत्रविभूषितः
दंष्ट्राकरालं दुर्द्धर्षमनौपम्यं मुखं तथा ॥ ७
पद्ममालाकृतोष्णीषं शिरो द्यौः शोभतेऽधि
दीप्तिः सूर्य्ये वपुश्चन्द्रे स्थैर्य्यं शैलेऽनिले ब
औष्ण्यमग्नौ तथा शैत्यमप्सु शब्दोऽम्बरे त
अक्षरान्तरनिष्यन्दाद्गुणानेतान् विदुर्बुधाः ।
जपो जप्यो महादेवो महायोगो महेश्वरः
पुरेशयो गुहावासी खेचरो रजनीचरः ॥ ७
तपोनिधिर्गुहगुरुर्नन्दनो नन्दवर्द्धनः ।
हयशीर्षा पयोधाता विधाता भूतभावनः ।
बोद्धव्यो बोधिता नेता दुर्द्धर्षो दुष्प्रकम्प्यः
बृहद्रथो भीमकर्म्मा बृहत्कीर्त्तिर्धनञ्जयः ।
घण्टाप्रियो ध्वजी छत्री पिनाकी ध्वजिनी
कवची पट्टिशी खड्गी धनुर्हस्तः परश्वधी ।
अघस्मरोऽनघः शूरो देवराजोऽरिमर्द्दनः ।
त्वां प्रसाद्य पुरास्माभिर्द्विषन्तो निहता यु
अग्निः सदार्णवाम्भस्त्वं पिबन्नपि न तृप्यसे ।
क्रोधाकारः प्रसन्नात्मा कामदः कामगः प्रि
ब्रह्मचारी चागाधश्च ब्रह्मण्यः शिष्टपूजितः ।
देवानामक्षयः कोशस्त्वया यज्ञः प्रकल्पितः ।
हव्यं तवेदं वहति वेदोक्तं हव्यवाहनः ।
प्रीते त्वयि महादेव वयं प्रीता भवामहे ॥ ८

भवानीशो नादिमांस्त्वञ्च सर्व्व-
लोकानां त्वं ब्रह्मकर्त्तादिसर्गः ।
सांख्याः प्रकृतेः परं त्वां विदित्वा
क्षीणध्यानास्त्वाममृत्युं विशन्ति ॥ ८५
योगाच्च त्वां ध्यायिनो नित्यसिद्धं
ज्ञात्वा योगान् सन्त्यजन्ते पुनस्तान् ।
ये चाप्यन्ये त्वां प्रपन्ना विशुद्धाः
स्वकर्म्मभिस्ते दिव्यभोगा भवन्ति ॥ ८६

अप्रसंख्येयतत्त्वस्य यथा विद्मः स्वशक्तितः ।
कीर्त्तितं तव माहात्म्यमपारस्य महात्मनः ॥ ८
शिवो नो भव सर्व्वत्र योऽसि सोऽसि नमोऽस्तु

सूत उवाच।

य इदं कीर्त्तयेद्भक्त्या ब्रह्म-नारायणस्तवम्।
श्रावयेद्वा द्विजान् विद्वान् शृणुयाद्वा समाहितः।
अश्वमेधायुतं कृत्वा यत् फलं तदवाप्नुयात्॥ ८९
पापाचारोऽपि यो मर्त्त्यः शृणुयाच्छिवसन्निधौ।
जपेद्वापि विनिर्म्मुक्तो ब्रह्मलोकं स गच्छति॥ ९०
श्राद्धे वा दैविके कार्य्ये यज्ञे वावभृथान्तिके।
कीर्त्तयेद्वा सतां मध्ये स याति ब्रह्मणोऽन्तिकम्॥९१

इति श्रीलैङ्गे महापुराणे ब्रह्म-विष्णुस्तुति-नामैकविंशोऽध्यायः॥ २१॥

---

## द्वाविंशोऽध्यायः।

सूत उवाच।

अत्यन्तावनतौ दृष्ट्वा मधुपिङ्गायतेक्षणः।
प्रहृष्टवदनोऽत्यर्थमभवत् स्तवकीर्त्तनात्॥ १
उमापतिर्विरूपाक्षो दक्षयज्ञविनाशनः।
पिनाकी खड्गपरशुः सुप्रीतस्तु त्रिलोचनः॥ २
ततः स भगवान् देवः श्रुत्वा वागमृतं तयोः।
जानन्नपि महादेवः क्रीड़ापूर्व्वमथाब्रवीत्॥ ३
कौ भवन्तौ महात्मानौ परस्परहितैषिणौ।
समेतावम्बुजाभाक्षावस्मिन् घोरे महाप्लवे॥ ४
तावूचतुर्महात्मानौ सन्निरीक्ष्य परस्परम्।
भगवन् किन्तु यत् तेऽद्य न विज्ञातं त्वया विभो॥५
विभो रुद्र महामाय इच्छयावां कृतौ त्वया।
तयोस्तद्वचनं श्रुत्वा अभिनन्द्याभिमान्य च॥ ६
उवाच भगवान् देवो मधुरं श्लक्ष्णया गिरा।
भो भो हिरण्यगर्भ त्वां त्वाञ्च कृष्ण ब्रवीम्यहम्॥७
प्रीतोऽहमनया भक्त्या शाश्वताक्षरयुक्तया।
भवन्तौ हृदयस्यास्य मम हृद्यतरावुभौ॥ ८
युवाभ्यां किं ददाम्यद्य वराणां वरमीप्सितम्।
अथोवाच महाभागो विष्णुर्भवमिदं वचः॥ ९
सर्व्वं मम कृतं देव परितुष्टोऽसि मे यदि।
त्वयि मे सुप्रतिष्ठा तु भक्तिर्भवतु शङ्कर॥ १०
एवमुक्तस्तु विज्ञाय सम्भावयतः केशवम्।
प्रददौ च महादेवो भक्तिं निजपदाम्बुजे॥ ११
भवान् सर्व्वस्य लोकस्य कर्त्ता त्वमधिदैवतम्।
तदेवं स्वस्ति ते वत्स गमिष्याम्यनुजेक्षण॥ १२
एवमुक्त्वा तु भगवान् ब्रह्माणञ्चापि शङ्करः।
अनुरक्त्यास्पृशद्देवो ब्रह्माणं परमेश्वरः॥ १३
कराभ्यां सुशुभाभ्याञ्च प्राह हृष्टतरः स्वयम्।
मत्समस्त्वं न सन्देहो वत्स भक्तश्च मे भवान्॥ १४
स्वस्त्यस्तु ते गमिष्यामि संज्ञा भवतु सुव्रत।
एवमुक्त्वा तु भगवांस्ततोऽन्तर्द्धानमीश्वरः॥ १५
गतवान् गणपो देवः सर्व्वदेवनमस्कृतः।
अवाप्य संज्ञां गोविन्दात् पद्मयोनिः पितामहः॥१६
प्रजाः स्रष्टुमनाश्चक्रे तप उग्रं पितामहः।
तस्यैवं तप्यमानस्य न किञ्चित् समवर्त्तत॥ १७
ततो दीर्घेण कालेन दुःखात् क्रोधो व्यजायत।
क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः॥ १८
ततस्तेभ्योऽश्रुबिन्दुभ्यो वातपित्तकफात्मकाः।
महाभागा महासत्त्वाः स्वस्तिकैरप्यलङ्कृताः॥ १९
प्रकीर्णकेशाः सर्पास्ते प्रादुर्भूता महाविषाः।
सर्पांस्तानग्रजान् दृष्ट्वा ब्रह्मात्मानमनिन्दयत्॥ २०
अहो धिक् तपसो मह्यं फलमीदृशकं यदि।
लोकवैनाशिकी जज्ञे आदावेव प्रजा मम॥ २१
तस्य तीव्राभवन्मूर्च्छा क्रोधामर्षसमुद्भवा।
मूर्च्छाभिपरितापेन जहौ प्राणान् प्रजापतिः॥२२
तस्याप्रतिमवीर्य्यस्य देहात् कारुण्यपूर्व्वकम्।
अथैकादश ते रुद्रा रुदन्तोऽभ्यक्रमंस्तथा॥ २३
रोदनात् खलु रुद्रत्वं तेषु वै समजायत।
ये रुद्रास्ते खलु प्राणा ये प्राणास्ते तदात्मकाः॥२४
प्राणाः प्राणवतां ज्ञेयाः सर्व्वभूतेष्ववस्थिताः।
अत्युग्रस्य महत्त्वस्य साधुराचरितस्य च॥ २५
प्राणांस्तस्य ददौ भूयस्त्रिशूली नीललोहितः।
लब्ध्वा सन् भगवान् ब्रह्मा देवदेवमुमापतिम्॥ २६
प्रणम्य संस्थितोऽपश्यद्गायत्र्या विश्वमीश्वरम्।
सर्व्वलोकमयं देवं दृष्ट्वा स्तुत्वा पितामहः॥ २७
ततो विस्मयमापन्नः प्रणिपत्य मुहुर्म्मुहुः।
उवाच वचनं शर्व्वं सद्यादि त्वं कथं विभो॥ २८

इति श्रीलैङ्गे महापुराणे द्वाविंशोऽध्यायः॥२२॥

---

## त्रयोविंशोऽध्यायः।

सूत उवाच।

तस्य तद्वचनं श्रुत्वा ब्रह्मणो भगवान् भवः।
ब्रह्मरूपी प्रबोधार्थं ब्रह्माणं प्राह सस्मितम् ॥ १
श्वेतकल्पो यदा ह्यासीदहमेव तदाभवम्।
श्वेतोष्णीषः श्वेतमाल्यः श्वेताम्बरधरः सितः ॥ २
श्वेतास्थिः श्वेतरोमा च श्वेतासृक् श्वेतलोहितः।
तेन नाम्ना च विख्यातः श्वेतकल्पस्तदा ह्यसौ ॥ ३
मत्प्रसूता च देवेशी श्वेताङ्गी श्वेतलोहिता।
श्वेतवर्णा तदा ह्यासीद्गायत्री ब्रह्मसंज्ञिता ॥ ४
तस्मादहञ्च देवेश त्वया गुह्येन वै पुनः।
विज्ञातः स्वेन तपसा सद्योजातत्वमागतः ॥ ५
सद्योजातेति ब्रह्मैतद्गुह्यञ्चैतत् प्रकीर्त्तितम्।
तस्माद्गुह्यत्वमापन्नं ये वेत्स्यन्ति द्विजातयः ॥ ६
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम्।
यदा चैव पुनस्त्वासील्लोहितो नाम नामतः ॥ ७
मत्कृतेन च वर्णेन कल्पो वै लोहितः स्मृतः।
तदा लोहितमांसास्थि लोहितक्षीरसम्भवा ॥ ८
लोहिताक्षी स्तनवती गायत्री गौः प्रकीर्त्तिता।
ततोऽस्या लोहितत्वेन वर्णस्य च विपर्य्ययात् ॥ ९
वामत्वाच्चैव देवस्य वामदेवत्वमागतः।
तत्रापि च महासत्त्व त्वयाहं नियतात्मना ॥ १०
विज्ञातः स्वेन योगेन तस्मिन् वर्णान्तरे स्थितः।
ततश्च वामदेवेति ख्यातिं यातोऽस्मि भूतले ॥ ११
ये चापि वामदेवत्वं ज्ञास्यन्तीह द्विजातयः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ १२
यदाहं पुनरेवेह पीतवर्णो युगक्रमात्।
मत्कृतेन च नाम्ना वै पीतकल्पोऽभवत् तदा ॥ १३
मत्प्रसूता च देवेशी पीताङ्गी पीतलोहिता।
पीतवर्णा तदा ह्यासीद्गायत्री ब्रह्मसंज्ञिता ॥ १४
तत्रापि च महासत्त्व योगयुक्तेन चेतसा।
यस्मादहं ते विज्ञातो योगतत्परमानसः ॥ १५
तत्र तत्पुरुषत्वेन विज्ञातोऽहं त्वया पुनः।
तस्मात् तत्पुरुषत्वं वै ममैतत् कनकाण्डज ॥ १६
ये मां रुद्रञ्च रुद्राणीं गायत्रीं वेदमातरम्।
वेत्स्यन्ति तपसा युक्ता विमला ब्रह्मसङ्गताः ॥ १७
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम्।
यदाहं पुनरेवासं कृष्णवर्णो भयानकः ॥ १८
मत्कृतेन च वर्णेन स कल्पः कृष्ण उच्यते।
तत्राहं कालसङ्काशः कालो लोकप्रकालकः ॥ १
विज्ञातोऽहं त्वया ब्रह्मन् घोरो घोरपराक्रमः।
मत्प्रसूता च गायत्री कृष्णाङ्गी कृष्णलोहिता ॥
कृष्णरूपा च देवेश तदासीद्ब्रह्मसंज्ञिता।
तस्माद्घोरत्वमापन्नं ये मां वेत्स्यन्ति भूतले ॥ २१
तेषामघोरः शान्तश्च भविष्याम्यहमव्ययः।
पुनश्च विश्वरूपत्वं यदा ब्रह्मन् ममाभवत् ॥ २२
तदाप्यहं त्वया ज्ञातः परमेण समाधिना।
विश्वरूपा च संवृत्ता गायत्री लोकधारिणी ॥
तस्मिन् विश्वत्वमापन्नं ये मां वेत्स्यन्ति भूतले।
तेषां शिवश्च सौम्यश्च भविष्यामि सदैव हि ॥ २४
यस्माच्च विश्वरूपो वै कल्पोऽयं समुदाहृतः।
विश्वरूपा तथा चेयं सावित्री समुदाहृता ॥ २५
सर्व्वरूपा तथा चेमे संवृत्ता मम पुत्रकाः।
चत्वारस्ते मया ख्याताः पुत्रा वै लोकसम्मताः ॥
यस्माच्च सर्व्ववर्णत्वं प्रजानाञ्च भविष्यति।
सर्व्वभक्षा च मेध्या च वर्णतश्च भविष्यति ॥ २७
मोक्षो धर्म्मस्तथार्थश्च कामश्चेति चतुष्टयम्।
यस्माद्वेदाश्च वेद्यञ्च चतुर्द्धा वै भविष्यति ॥ २८
भूतग्रामाश्च चत्वार आश्रमाश्च तथैव च।
धर्म्मस्य पादाश्चत्वारश्चत्वारो मम पुत्रकाः ॥ २९
तस्माच्चतुर्युगावस्थं जगद्वै सचराचरम्।
चतुर्द्धावस्थितश्चैव चतुष्पादो भविष्यति ॥ ३०
भूर्लोकोऽथ भुवर्लोकः स्वर्लोकश्च महस्तथा।
जनस्तपश्च सत्यञ्च विष्णुलोकस्ततः परम् ॥ ३१
अष्टाक्षरस्थितो लोकः स्थाने स्थाने तदक्षरम्।
भूर्भुवःस्वर्महश्चैव पादाश्चत्वार एव च ॥ ३२
भूर्लोकः प्रथमः पादो भुवर्लोकस्ततः परम्।
स्वर्लोको वै तृतीयश्च चतुर्थस्तु महस्तथा ॥ ३३
पञ्चमस्तु जनस्तत्र षष्ठश्च तप उच्यते।
सत्यन्तु सप्तमो लोको ह्यपुनर्भवगामिनाम् ॥ ३४
विष्णुलोकः स्मृतं स्थानं पुनरावृत्तिदुर्लभम्।
स्कान्दमौमं तथा स्थानं सर्व्वसिद्धिसमन्वितम् ॥ ३५
रुद्रलोकः स्मृतस्तस्मात् पदं तद्योगिनां शुभम्।

निर्म्ममा निरहङ्काराः कामक्रोधविवर्ज्जिताः ॥ ३६
द्रक्ष्यन्ति तद्द्विजा युक्ता ध्यानतत्परमानसाः ।
यस्माच्चतुष्पदा ह्येषा त्वया दृष्टा सरस्वती ॥ ३७
पादान्तं विष्णुलोकं वै कौमारं शान्तमुत्तमम् ।
औमं माहेश्वरञ्चैव तस्माद्दृष्टा चतुष्पदा ॥ ३८
तस्मात् तु पशवः सर्व्वे भविष्यन्ति चतुष्पदाः ।
ततश्चैषां भविष्यन्ति चत्वारस्ते पयोधराः ॥ ३९
सोमश्च मन्त्रसंयुक्तो यस्मान्मम मुखाच्च्युतः ।
जीवः प्राणभृतां ब्रह्मन् पुनः पीतस्तनाः स्मृताः ॥४०
तस्मात् सोममयञ्चैव अमृतं जीवसंज्ञितम् ।
चतुष्पादा भविष्यन्ति श्वेतत्वञ्चास्य तेन तत् ॥ ४१
यस्माच्चैव क्रिया भूत्वा द्विपदा च महेश्वरी ।
दृष्टा पुनस्त्वयैवैषा सावित्री लोकभाविनी ॥ ४२
तस्माच्च द्विपदाः सर्व्वे द्विस्तनाश्च नराः शुभाः ।
तस्माच्चेयमजा भूत्वा सर्व्ववर्णा महेश्वरी ॥ ४३
या वै दृष्टा महासत्त्वा सर्व्वभूतधरा त्वया ।
तस्माच्च विश्वरूपत्वं प्रजानां वै भविष्यति ॥ ४४
अजश्चैव महातेजा विश्वरूपो भविष्यति ।
अमोघरेताः सर्व्वत्र मुखे चास्य हुताशनः ॥ ४५
तस्मात् सर्व्वगतो मेध्यः पशुरूपो हुताशनः ।
तपसा भावितात्मानो ये मां द्रक्ष्यन्ति वै द्विजाः ॥४६
ईशित्वे च वशित्वे च सर्व्वगं सर्व्वतः स्थितम् ।
रजस्तमोभ्यां निर्म्मुक्तास्त्यक्त्वा मानुष्यकं वपुः ॥ ४७
मत्समीपमुपेष्यन्ति पुनरावृत्तिदुर्लभम् ।
इत्येवमुक्तो भगवान् ब्रह्मा रुद्रेण वै द्विजाः ॥ ४८
प्रणम्य प्रयतो भूत्वा पुनराह पितामहः ।
य एवं भगवन् विद्वान् गायत्र्या वै महेश्वरम् ॥४९
विश्वात्मानं हि सर्व्वं त्वां गायत्र्यास्तव चेश्वर ।
तस्य देहि परं स्थानं तथास्त्विति च सोऽब्रवीत् ॥५०
तस्माद्विद्वान् हि विश्वत्वमस्याश्चास्य महात्मनः ।
स याति ब्रह्मसायुज्यं वचनाद्ब्रह्मणः प्रभोः ॥ ५१

इति श्रीलैङ्गे महापुराणे त्रयो-
विंशोऽध्यायः ॥ २३ ॥

---

## चतुर्व्विंशोऽध्यायः ।

सूत उवाच ।

श्रुत्वैवमखिलं ब्रह्मा रुद्रेण परिभाषितम् ।
पुनः प्रणम्य देवेशं रुद्रमाह प्रजापतिः ॥ १
भगवन् देवदेवेश विश्वरूप महेश्वर ।
उमाधव महादेव नमो लोकाभिवन्दित ॥ २
विश्वरूप महाभाग कस्मिन् काले महेश्वर ।
या इमास्ते महादेव तनवो लोकवन्दिताः ।
कस्यां वा युगसम्भूत्यां द्रक्ष्यन्तीह द्विजातयः ॥ ३
केन वा तपसा देव ध्यानयोगेन केन वा ।
नमस्ते व महादेव शक्यो द्रष्टुं द्विजातिभिः ॥ ४
तस्य तद्वचनं श्रुत्वा शर्व्वः सम्प्रेक्ष्य तं पुरः ।
स्मयन् प्राह महादेवो ऋग्यजुःसामसम्भवः ॥ ५

श्रीभगवानुवाच ।

तपसा नैव वृत्तेन दानधर्म्मफलेन च ।
न तीर्थफलयोगेन क्रतुभिर्वाप्तदक्षिणैः ॥ ६
न वेदाध्ययनैर्वापि न वित्तेन न वेदनैः ।
न शक्यं मानवैर्द्रष्टुमृते ध्यानादहं त्विदम् ॥ ७
सप्तमे चैव वाराहे ततस्तस्मिन् पितामह ।
कल्पेश्वरोऽथ भगवान् सर्व्वलोकप्रकाशनः ॥ ८
मनुर्वैवस्वतश्चैव तव पौत्रो भविष्यति ।
तदा चतुर्युगावस्थे तस्मिन् कल्पे युगान्तिके ॥ ९
अनुग्रहार्थं लोकानां ब्राह्मणानां हिताय च ।
उत्पत्स्यामि तदा ब्रह्मन् पुनरस्मिन् युगान्तिके ॥१०
युगप्रवृत्त्या च तदा तस्मिंश्च प्रथमे युगे ।
द्वापरे प्रथमे ब्रह्मन् यदा व्यासः स्वयं प्रभुः ॥ ११
तदाहं ब्राह्मणार्थाय कलौ तस्मिन् युगान्तिके ।
भविष्यामि शिखायुक्तः श्वेतो नाम महामुनिः ॥१२
हिमवच्छिखरे रम्ये च्छागले पर्व्वतोत्तमे ।
तत्र शिष्याः शिखायुक्ता भविष्यन्ति तदा मम ॥ १३
श्वेतः श्वेतशिखश्चैव श्वेतास्यः श्वेतलोहितः ।
चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः ॥ १४
ततस्ते ब्रह्मभूयिष्ठा दृष्ट्वा ब्रह्मगतिं पराम् ।
मत्समीपं गमिष्यन्ति ध्यानयोगपरायणाः ॥ १५
ततः पुनर्यदा ब्रह्मन् द्वितीये द्वापरे प्रभुः ।
प्रजापतिर्यदा व्यासः सद्यो नाम भविष्यति ॥ १६

तदा लोकहितार्थाय सुतारो नाम नामतः।
भविष्यामि कलौ तस्मिन् शिष्यानुग्रहकाम्यया ॥१७
तत्रापि मम ते शिष्या नामतः परिकीर्त्तिताः।
दुन्दुभिः शतरूपश्च ऋचीकः केतुमांस्तदा ॥१८
प्राप्य योगं तथा ध्यानं स्थाप्य ब्रह्म च भूतले।
रुद्रलोकं गमिष्यन्ति सहचारित्वमेव च ॥ १९
तृतीये द्वापरे चैव यदा व्यासस्तु भार्गवः।
तदाप्यहं भविष्यामि दमनस्तु युगान्तिके ॥ २०
तत्रापि च भविष्यन्ति चत्वारो मम पुत्रकाः।
विकोशश्च विकेशश्च विपाशः शापनाशनः ॥ २१
तेऽपि तेनैव मार्गेण योगोक्तेन महौजसः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ २२
चतुर्थे द्वापरे चैव यदा व्यासोऽङ्गिराः स्मृतः।
तदाप्यहं भविष्यामि सुहोत्रो नाम नामतः ॥ २३
तत्रापि मम ते पुत्राश्चत्वारोऽपि तपोधनाः।
द्विजश्रेष्ठा भविष्यन्ति योगात्मानो दृढ़व्रताः ॥ २४
सुमुखो दुर्मुखश्चैव दुर्द्दरो दुरतिक्रमः।
प्राप्य योगगतिं सूक्ष्मां विमला दग्धकिल्बिषाः ॥२५
तेऽपि तेनैव मार्गेण योगयुक्ता महौजसः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ २६
पञ्चमे द्वापरे चैव व्यासस्तु सविता यदा।
तदा चापि भविष्यामि कङ्को नाम महातपाः ॥२७
अनुग्रहार्थं लोकानां योगात्मैककलागतिः।
चत्वारस्तु महाभागा विमलाः शुद्धयोनयः ॥ २८
शिष्या मम भविष्यन्ति योगात्मानो दृढ़व्रताः।
सनकः सनन्दनश्चैव प्रभुर्यश्च सनातनः ॥ २९
विभुः सनत्कुमारश्च निर्म्ममा निरहङ्कृताः।
मत्समीपमुपैष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ३०
परिवर्त्ते पुनः षष्ठे मृत्युर्व्यासो यदा विभुः।
तदाप्यहं भविष्यामि लोगाक्षिर्नाम नामतः ॥ ३१
तत्रापि मम ते शिष्या योगात्मानो दृढ़व्रताः।
भविष्यन्ति महाभागाश्चत्वारो लोकसम्मताः ॥ ३२
सुधामा विरजाश्चैव शङ्खपाद्रज एव च।
योगात्मानो महात्मानः सर्व्वे वै दग्धकिल्बिषाः ॥३३
तेऽपि तेनैव मार्गेण ध्यानयोगसमन्विताः।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ३४
सप्तमे परिवर्त्ते तु यदा व्यासः शतक्रतुः।
विभुर्नाम्ना महातेजाः प्रथितः पूर्व्वजन्मनि ॥ ३५
तदाप्यहं भविष्यामि कलौ तस्मिन् युगान्तिके।
जैगीषव्यो विभुः ख्यातः सर्व्वेषां योगिनां वरः।
तत्रापि मम ते पुत्रा भविष्यन्ति युगे तथा।
सारस्वतश्च मेघश्च मेघवाहः सुवाहनः ॥ ३७
तेऽपि तेनैव मार्गेण ध्यानयोगपरायणाः।
गमिष्यन्ति महात्मानो रुद्रलोकं निरामयम् ॥ ३
वशिष्ठश्चाष्टमे व्यासः परिवर्त्ते भविष्यति।
यदा तदा भविष्यामि नाम्नाहं दधिवाहनः ॥ ३९
तत्रापि मम ते पुत्रा योगात्मानो दृढ़व्रताः।
भविष्यन्ति महायोगा येषां नास्ति समो भुवि ॥
कपिलश्चासुरिश्चैव तथा पञ्चशिखो मुनिः।
वाष्कलश्च महायोगी धर्म्मात्मानो महौजसः ॥
प्राप्य माहेश्वरं योगं ज्ञानिनो दग्धकिल्बिषाः।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ४२
परिवर्त्ते तु नवमे व्यासः सारस्वतो यदा।
तदाप्यहं भविष्यामि ऋषभो नाम नामतः ॥ ४३
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
पराशरश्च गर्गश्च भार्गवाङ्गिरसौ तदा ॥ ४४
भविष्यन्ति महात्मानो ब्राह्मणा वेदपारगाः ॥
ध्यानमार्गं समासाद्य गमिष्यन्ति तथैव ते ॥ ४५
सर्व्वे तपोबलोत्कृष्टाः शापानुग्रहकोविदाः।
तेऽपि तेनैव मार्गेण योगोक्तेन तपस्विनः ॥ ४६
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम्।
दशमे द्वापरे व्यासः त्रिपाद्वै नाम नामतः ॥ ४७
यदा भविष्यते विप्रस्तदाहं भविता मुनिः।
हिमवच्छिखरे रम्ये भृगुतुङ्गे नगोत्तमे ॥ ४८
नाम्ना भृगोस्तु शिखरं प्रथितं देवपूजितम्।
तत्रापि मम ते पुत्रा भविष्यन्ति दृढ़व्रताः ॥ ४९
बलबन्धुर्निरामित्रः केतुशृङ्गस्तपोधनः।
योगात्मानो महात्मानस्तपोयोगसमन्विताः ॥ ५०
रुद्रलोकं गमिष्यन्ति तपसा दग्धकिल्बिषाः।
एकादशे द्वापरे तु व्यासस्तु त्रिव्रतो यदा ॥ ५१
तदाप्यहं भविष्यामि गङ्गाद्वारे कलौ तथा।
उग्रो नाम महातेजाः सर्व्वलोकेषु विश्रुतः ॥ ५२
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
लम्बोदरश्च लम्बाक्षो लम्बकेशः प्रलम्बकः ॥ ५३

प्राप्य माहेश्वरं योगं रुद्रलोकं गता हि ते ।
द्वादशे परिवर्त्ते तु शततेजा यदा मुनिः ॥ ५४
भविष्यति महातेजा व्यासस्तु कविसत्तमः ।
तदाप्यहं भविष्यामि कलाविह युगान्तिके ॥ ५५
हैतुकं वनमासाद्य अत्रिर्नाम्ना परिश्रुतः ।
तत्रापि मम ते पुत्रा भस्मस्नानानुलेपनाः ॥ ५६
भविष्यन्ति महायोगा रुद्रलोकपरायणाः ।
सर्व्वज्ञः समबुद्धिश्च साध्यः सर्व्वस्तथैव च ॥ ५७
प्राप्य माहेश्वरं योगं रुद्रलोकं गता हि ते ।
त्रयोदशे पुनः प्राप्ते परिवर्त्ते क्रमेण तु ॥ ५८
धर्म्मो नारायणो नाम व्यासस्तु भविता यदा ।
तदाप्यहं भविष्यामि वालिर्नाम महामुनिः ॥ ५९
वालखिल्याश्रमे पुण्ये पर्व्वते गन्धमादने ।
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ॥ ६०
सुधामा काश्यपश्चैव वाशिष्ठो विरजास्तथा ।
महायोगबलोपेता विमला ऊर्द्धरेतसः ॥ ६१
प्राप्य माहेश्वरं योगं रुद्रलोकं गता हि ते ।
यदा व्यासस्तरक्षुस्तु पर्य्याये तु चतुर्द्दशे ॥ ६२
तत्रापि पुनरेवाहं भविष्यामि युगान्तिके ।
वंशे लङ्गिरसां श्रेष्ठे गौतमो नाम नामतः ॥ ६३
भविष्यति महापुण्यं गौतमं नाम तद्वनम् ।
तत्रापि मम ते पुत्रा भविष्यन्ति कलौ तदा ॥ ६४
अत्रिर्देवसदश्चैव श्रवणोऽथ श्रविष्ठकः ।
योगात्मानो महात्मानः सर्व्वे योगसमन्विताः ॥ ६५
प्राप्य माहेश्वरं योगं रुद्रलोकाय ते गताः ।
ततः पञ्चदशे प्राप्ते परिवर्त्ते क्रमागते ॥ ६६
त्रैय्यारुणिर्यदा व्यासो द्वापरे समपद्यत ।
तदाप्यहं भविष्यामि नाम्ना वेदशिरा द्विजः ॥ ६७
तत्र वेदशिरो नाम अस्त्रं तत् पारमेश्वरम् ।
भविष्यति महावीर्य्यं वेदशीर्षश्च पर्व्वतः ॥ ६८
हिमवत्पृष्ठमासाद्य सरस्वत्यां नगोत्तमे ।
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ॥ ६९
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ।
योगात्मानो महात्मानः सर्व्वे ते ह्यूर्द्धरेतसः ॥ ७०
प्राप्य माहेश्वरं योगं रुद्रलोकाय ते गताः ।
व्यासो युगे षोड़शे तु यदा देवो भविष्यति ॥ ७१
तत्र योगप्रदानाय भक्तानाञ्च यतात्मनाम् ।
तदाप्यहं भविष्यामि गोकर्णो नाम नामतः ॥ ७२
भविष्यति सुपुण्यञ्च गोकर्णं नाम तद्वनम् ।
तत्रापि मम ते पुत्रा भविष्यन्ति च योगिनः ॥ ७३
काश्यपो ह्युशनाश्चैव च्यवनोऽथ बृहस्पतिः ।
तेऽपि तेनैव मार्गेण ध्यानयोगसमन्विताः ॥ ७४
प्राप्य माहेश्वरं योगं गन्तारो रुद्रमेव हि ।
ततः सप्तदशे चैव परिवर्त्ते क्रमागते ॥ ७५
यदा भविष्यति व्यासो नाम्ना देव कृतञ्जयः ।
तदाप्यहं भविष्यामि गुहावासीति नामतः ॥ ७६
हिमवच्छिखरे रम्ये महोत्तुङ्गे महालये ।
सिद्धक्षेत्रं महापुण्यं भविष्यति महालयम् ॥ ७७
तत्रापि मम ते पुत्रा योगज्ञा ब्रह्मवादिनः ।
भविष्यन्ति महात्मानो निर्म्ममा निरहङ्कृताः ॥ ७८
उतथ्यो वामदेवश्च महायोगो महाबलः ।
तेषां शतसहस्रन्तु शिष्याणां ध्यानयोगिनाम् ॥ ७९
भविष्यन्ति तदा काले सर्व्वे ते ध्यानयुञ्जकाः ।
योगाभ्यासरताश्चैव हृदि कृत्वा महेश्वरम् ॥ ८०
महालये पदं न्यस्तं दृष्ट्वा यान्ति शिवं पदम् ।
ये चान्येऽपि महात्मानः कलौ तस्मिन् युगान्तिके ॥ ८१
ध्याने मनः समाधाय विमलाः शुद्धबुद्धयः ।
मम प्रसादाद्यास्यन्ति रुद्रलोकं गतज्वराः ॥ ८२
गत्वा महालयं पुण्यं दृष्ट्वा माहेश्वरं पदम् ।
तीर्णस्तारयते जन्तुर्दश पूर्व्वान् दशोत्तरान् ॥ ८३
आत्मानमेकविंशन्तु तारयित्वा महालये ।
मम प्रसादाद्यास्यन्ति रुद्रलोकं गतज्वराः ॥ ८४
ततोऽष्टादशमे चैव परिवर्त्ते यदा विभो ।
तदा ऋतञ्जयो नाम व्यासस्तु भविता मुनिः ॥ ८५
तदाप्यहं भविष्यामि शिखण्डी नाम नामतः ।
सिद्धक्षेत्रे महापुण्ये देव-दानवपूजिते ॥ ८६
हिमवच्छिखरे रम्य शिखण्डी नाम पर्व्वतः ।
शिखण्डिनो वनञ्चापि यत्र सिद्धनिषेवितम् ॥ ८७
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ।
वाचश्रवा ऋचीकश्च श्यावाश्वश्च यतीश्वरः ॥ ८८
योगात्मानो महात्मानः सर्व्वे ते वेदपारगाः ।
प्राप्य माहेश्वरं योगं रुद्रलोकाय संवृताः ॥ ८९
अथ एकोनविंशे तु परिवर्त्ते क्रमागते ।
व्यासस्तु भविता नाम्ना भरद्वाजो महामुनिः ॥ ९०

तदाप्यहं भविष्यामि जटामाली च नामतः।
हिमवच्छिखरे रम्ये जटायुर्यत्र पर्व्वतः॥ ९१
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
हिरण्यनाभः कौशल्यो लोगाक्षिः कुथुमिस्तथा॥ ९२
ईश्वरा योगधर्म्माणः सर्व्वे ते ऊर्द्ध्वरेतसः।
प्राप्य माहेश्वरं योगं रुद्रलोकाय संस्थिताः॥ ९३
ततो विंशतिमश्चैव परिवर्त्तो यदा तदा।
गौतमस्तु तदा व्यासो भविष्यति महामुनिः॥ ९४
तदाप्यहं भविष्यामि अट्टहासस्तु नामतः।
अट्टहासप्रियाश्चैव भविष्यन्ति तदा नराः॥ ९५
तत्रैव हिमवत्पृष्ठे अट्टहासो महागिरिः।
देव-दानव-यक्षेन्द्र-सिद्ध-चारणसेवितः॥ ९६
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
योगात्मानो महात्मानो ध्यायिनो नियतव्रताः॥ ९७
सुमन्तुवर्ब्बरी विद्वान् कबन्धः कुशिकन्धरः।
प्राप्य माहेश्वरं योगं रुद्रलोकाय ते गताः॥ ९८
एकविंशे पुनः प्राप्ते परिवर्त्ते क्रमागते।
वाचश्रवाः स्मृतो व्यासो यदा स ऋषिसत्तमः॥ ९९
तदाप्यहं भविष्यामि दारुको नाम नामतः।
तस्माद्भविष्यति पुण्यं देवदारुवनं शुभम्॥ १००
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
प्लक्षो दार्भायणिश्चैव केतुमान् गौतमस्तथा॥ १०१
योगात्मानो महात्मानो नियता ऊर्द्ध्वरेतसः।
नैष्ठिकं व्रतमास्थाय रुद्रलोकाय ते गताः॥ १०२
द्वाविंशे परिवर्त्ते तु व्यासः शुष्मायणो यदा।
तदाप्यहं भविष्यामि वाराणस्यां महामुनिः॥ १०३
नाम्ना वै लाङ्गली भीमो यत्र देवाः सवासवाः।
द्रक्ष्यन्ति मां कलौ तस्मिन् भवञ्चैव हलायुधम्॥ १०४
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्म्मिकाः।
भल्लवी मधुपिङ्गश्च श्वेतकेतुः कुशस्तथा॥ १०५
प्राप्य माहेश्वरं योगं तेऽपि ध्यानपरायणाः।
विमला ब्रह्मभूयिष्ठा रुद्रलोकाय संस्थिताः॥ १०६
परिवर्त्ते त्रयोविंशे तृणविन्दुर्यदा मुनिः।
व्यासो हि भविता ब्रह्मंस्तदाहं भविता पुनः॥ १०७
श्वेतो नाम महाकायो मुनिपुत्रस्तु धार्म्मिकः॥ १०८
तत्र कालं जरिष्यामि तदा गिरिवरोत्तमे।
तेन कालञ्जरो नाम भविष्यति स पर्व्वतः॥ १०९
तत्रापि मम ते शिष्या भविष्यन्ति तपस्विनः।
उशिको बृहदश्वश्च देवलः कविरेव च॥ ११०
प्राप्य माहेश्वरं योगं रुद्रलोकाय ते गताः।
परिवर्त्ते चतुर्व्विंशे व्यास ऋक्षो यदा विभो॥ १११
तदाप्यहं भविष्यामि कलौ तस्मिन् युगान्तिके।
शूली नाम महायोगी नैमिषे देववन्दिते॥ ११२
तत्रापि मम ते शिष्या भविष्यन्ति तपोधनाः।
शालिहोत्रोऽग्निवेशश्च युवनाश्वः शरद्वसुः॥ ११३
तेऽपि तेनैव मार्गेण रुद्रलोकाय संस्थिताः।
पञ्चविंशे पुनः प्राप्ते परिवर्त्ते क्रमागते॥ ११४
वाशिष्ठस्तु यदा व्यासः शक्तिर्नाम्ना भविष्यति।
तदाप्यहं भविष्यामि दण्डी मुण्डीश्वरः प्रभुः॥ ११५
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः।
छगलः कुण्डकर्णश्च कुम्भाण्डश्च प्रवाहकः॥ ११६
प्राप्य माहेश्वरं योगममृतत्वाय ते गताः।
षड्विंशे परिवर्त्ते तु यदा व्यासः पराशरः॥ ११७
तदाप्यहं भविष्यामि सहिष्णुर्नाम नामतः।
पुरं भद्रवटं प्राप्य कलौ तस्मिन् युगान्तिके॥ ११८
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्म्मिकाः।
उलूको विद्युतश्चैव शम्बूको ह्याश्वलायनः॥ ११९
प्राप्य माहेश्वरं योगं रुद्रलोकाय ते गताः।
सप्तविंशे पुनः प्राप्ते परिवर्त्ते क्रमागते॥ १२०
जातूकर्ण्यो यदा व्यासो भविष्यति तपोधनः॥
तदाप्यहं भविष्यामि सोमशर्म्मा द्विजोत्तमः॥ १२१
प्रभासतीर्थमासाद्य योगात्मा योगविश्रुतः।
तत्रापि मम ते शिष्या भविष्यन्ति तपोधनाः॥ १२२
अक्षपादः कुमारश्च उलूको वत्स एव च।
योगात्मानो महात्मानो विमलाः शुद्धबुद्धयः॥ १२३
प्राप्य माहेश्वरं योगं रुद्रलोकं ततो गताः।
अष्टाविंशे पुनः प्राप्ते परिवर्त्ते क्रमागते॥ १२४
पराशरसुतः श्रीमान् विष्णुर्लोकपितामहः।
यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः॥ १२५
तदा षष्ठेन चांशेन कृष्णः पुरुषसत्तमः।
वसुदेवाद्यदुश्रेष्ठो वासुदेवो भविष्यति॥ १२६
तदाप्यहं भविष्यामि योगात्मा योगमायया।
लोकविस्मयनार्थाय ब्रह्मचारिशरीरकः॥ १२७
श्मशाने मृतमुत्सृष्टं दृष्ट्वा कायमनाथकम्।

ब्राह्मणानां हितार्थाय प्रविष्टो योगमायया ॥१२८
दिव्यां मेरुगुहां पुण्यां त्वया सार्द्धञ्च विष्णुना।
भविष्यामि तदा ब्रह्मन् लकुली नाम नामतः ॥१२९
कायावतार इत्येवं सिद्धक्षेत्रञ्च वै तदा।
भविष्यति सुविख्यातं यावद्भूमिर्धरिष्यति ॥ १३०
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः।
कुशिकश्चैव गर्गश्च मित्रः कौरुष्य एव च ॥ १३१
योगात्मानो महात्मानो ब्राह्मणा वेदपारगाः।
प्राप्य माहेश्वरं योगं विमला ह्यूर्द्धरेतसः ॥ १३२
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम्।
एते पाशुपताः सिद्धाः भस्मोद्धूलितविग्रहाः ॥ १३३
लिङ्गार्च्चनरता नित्यं वाह्याभ्यन्तरतः स्थिताः।
भक्त्या मयि च योगेन ध्याननिष्ठा जितेन्द्रियाः ॥१३४
संसारबन्धच्छेदार्थं ज्ञानमार्गप्रकाशकम्।
स्वरूपज्ञानसिद्ध्यर्थं योगं पाशुपतं महत् ॥ १३५
योगमार्गा अनेकाश्च ज्ञानमार्गास्त्वनेकधः।
न निवृत्तिमुपायान्ति विना पञ्चाक्षरीं क्वचित् ॥ १३६
यदा चरेत् तपश्चार्यं सर्व्वद्वन्द्वविवर्ज्जितम्।
तदा स मुक्तो मन्तव्यः पक्वं फलमिव स्थितः ॥१३७
एकाहं यः पुमान् सम्यक् चरेत् पाशुपतव्रतम्।
न सांख्ये पञ्चरात्रे वा न प्राप्नोति गतिं कदा ॥ १३८
इत्येतद्वै मया प्रोक्तमवतारेषु लक्षणम्।
मन्वादि कृष्णपर्य्यन्तमष्टाविंशद्युगक्रमात् ॥ १३९
तत्र श्रुतिसमूहानां विभागो धर्म्मलक्षणः।
भविष्यति तदा कल्पे कृष्णद्वैपायनो यदा ॥ १४०

सूत उवाच।

निशम्यैवं महातेजा महादेवेन कीर्त्तितम्।
रुद्रावतारं भगवान् प्रणिपत्य महेश्वरम्।
तुष्टाव वाग्भिरिष्टाभिः पुनः प्राह च शङ्करम् ॥१४१

पितामह उवाच।

सर्व्वे विष्णुमया देवाः सर्व्वे विष्णुमया गणाः।
न हि विष्णुसमा काचिद्गतिरन्या विधीयते ॥१४२
इत्येवं सततं वेदा गायन्ति नात्र संशयः ॥ १४३
स देवदेवो भगवांस्तव लिङ्गार्च्चने रतः।
तव प्रणामपरमः कथं देवो ह्यभूत् प्रभुः ॥ १४४

सूत उवाच।

निशम्य वचनं तस्य ब्रह्मणः परमेष्ठिनः।
अपिबन्निव चक्षुर्भ्यां प्रीतस्तत्प्रश्नगौरवात् ॥ ४५
पूजाप्रकरणं तस्मै तमालोक्याह शङ्करः।
भवान् नारायणश्चैव शक्रः साक्षात् सुरोत्तमः ॥१४६
मुनयश्च सदा लिङ्गं सम्पूज्य विधिपूर्व्वकम्।
स्वं स्वं पदं विभो प्राप्तास्तस्मात् सम्पूजयन्ति ते१४७
लिङ्गार्च्चनं विना निष्ठा नास्ति तस्माज्जनार्द्दनः।
आत्मनो जायते नित्यं श्रद्धया भगवान् प्रभुः ॥१४८
इत्येवमुक्त्वा ब्रह्माणमनुगृह्य महेश्वरः।
पुनः सम्प्रेक्ष्य देवेशं तत्रैवान्तरधीयत ॥ १४९
तमुद्दिश्य तदा ब्रह्मा नमस्कृत्य कृताञ्जलिः।
स्रष्टुं त्वशेषं भगवान् लब्धसंज्ञस्तु शङ्करात् ॥ १५०

इति श्रीलैङ्गे महापुराणे चतु-
र्व्विंशोऽध्यायः ॥२४॥

---

## पञ्चविंशोऽध्यायः।

ऋषय ऊचुः।

कथं पूज्यो महादेवो लिङ्गमूर्त्तिर्महेश्वरः।
वक्तुमर्हसि चास्माकं रोमहर्षण साम्प्रतम् ॥ १

सूत उवाच।

देव्या पृष्टो महादेवः कैलासे तां नगात्मजाम्।
अङ्कस्थामाह देवेशो लिङ्गार्च्चनविधिं क्रमात् ॥ २
तदा पार्श्वे स्थितो नन्दी शालङ्कायनकात्मजः।
श्रुत्वाखिलं पुरा प्राह ब्रह्मपुत्राय सुव्रताः ॥ ३
सनत्कुमाराय शुभं लिङ्गार्च्चनविधिं परम्।
तस्माद्व्यासो महातेजाः श्रुतवान् श्रुतिसम्मितम् ॥ ४
स्नानयोगोपचारञ्च यथा शैलादिनो मुखात्।
श्रुतवान् तत् प्रवक्ष्यामि स्नानाद्यर्च्चनाविधिम् ॥ ५

शैलादिरुवाच।

अथ स्नानविधिं वक्ष्ये ब्राह्मणानां हिताय च।
सर्व्वपापहरं साक्षाच्छिवेन कथितं पुरा ॥ ६
अनेन विधिना स्नात्वा सकृत् पूज्य च शङ्करम्।
ब्रह्मकूर्च्चञ्च पीत्वा तु सर्व्वपापैः प्रमुच्यते ॥ ७
त्रिविधं स्नानमाख्यातं देवदेवेन शम्भुना।
हिताय ब्राह्मणाद्यानां चतुर्म्मुखसुतोत्तम ॥ ८
वारुणं पुरतः कृत्वा ततश्चाग्नेयमुत्तमम्।
मन्त्रस्नानं ततः कृत्वा पूजयेत् परमेश्वरम् ॥ ९

भावदुष्टोऽम्भसि स्नात्वा भस्मना च न शुध्यति।
भावशुद्धश्चरेच्छौचमन्यथा न समाचरेत्॥ १०
सरित्सरस्तडागेषु सर्व्वेष्वाप्रलयं नरः।
स्नात्वापि भावदुष्टश्चेन्न शुध्यति न संशयः॥ ११
नृणां हि चित्तकमलं प्रबुद्धमभवद्यदा।
प्रसुप्तं तमसा ज्ञान-भानोर्भासा तदा शुचिः॥ १२
वंच्छक्षत्तिलपुष्पञ्च स्नानार्थं सक्षितं तथा।
आदाय तीरे निक्षिप्य स्नानतीर्थे कुशानि च॥ १३
प्रक्षाल्याचम्य पादौ च मलं देहाद्विशोध्य च।
द्रव्येस्तु तीरदेशस्थैस्ततः स्नानं समाचरेत्॥ १४
उद्धृतासीति मन्त्रेण पुनर्देहं विशोधयेत्।
मृदादाय ततश्चान्यदस्त्रं स्नात्वा ह्यनुत्तमम्॥ १५
गन्धद्वारां दुराधर्षामिति मन्त्रेण मन्त्रवित्।
कपिलागोमयेनैव खस्थेनैव तु लेपयेत्॥ १६
पुनः स्नात्वा परित्यज्य तद्वस्त्रं मलिनं ततः।
शुक्लवस्त्रपरीधानो भूत्वा स्नानं समाचरेत्॥ १७
सर्व्वपापविशुद्ध्यर्थमावाह्य वरुणं तथा।
सम्पूज्य मनसा देवं ध्यानयज्ञेन वै भवम्॥ १८
आचम्य त्रिस्तदा तीर्थं ह्यवगाह्य भवं स्मरन्।
पुनराचम्य विधिवदभिमन्त्र्य महाजलम्॥ १९
अवगाह्य पुनस्तस्मिन् जपेद्वै चाघमर्षणम्।
तत्तोये भानुसोमाग्नि-मण्डलञ्च स्मरेद्वशी॥ २०
आचम्य च पुनस्तस्माज्जलादुत्तीर्य्य मन्त्रवित्।
प्रविश्य तीर्थमध्ये तु पुनः पुण्यविशुद्धये॥ २१
शृङ्गेण पर्णपुटकैः पालाशैः चालितैस्तथा।
सकुशेन सपुष्पेण जलेनैवाभिषिचयेत्॥ २२
रुद्रेण पवमानेन त्वरिताख्येन मन्त्रवित्।
तरत्समन्दिवर्गाद्यैस्तथा शान्तिद्वयेन च॥ २३
शान्तिधर्म्मेण चैकेन पञ्चब्रह्मपवित्रकैः।
तत्तन्मन्त्राधिदेवानां स्वरूपञ्च ऋषीन् स्मरन्॥ २४
एवं हि चाभिषिच्याथ स्वमूर्ध्नि पयसा द्विजाः।
ध्यायेच्च त्र्यम्बकं देवं हृदि पञ्चास्यमीश्वरम्॥ २५
आचम्याचमनं कुर्य्यात् स्वसूत्रोक्तं समीक्ष्य च।
पवित्रहस्तः स्वासीनः शुचौ देशे यथाविधि॥ २६
अभ्युक्ष्य सकृदप्यापि दक्षिणेन करेण तु।
पिबेत् प्रक्षिप्य विस्तोयं चक्री भूत्वा ह्यतन्द्रितः॥ २७
प्रदक्षिणं ततः कुर्य्याद्धिंसापापप्रशान्तये।
एवं संक्षेपतः प्रोक्तं स्नानाचमनमुत्तमम्॥ २८
सर्व्वेषां ब्राह्मणानान्तु हितार्थं द्विजसत्तमाः॥ २९

इति श्रीलैङ्गे महापुराणे पञ्चविंशोऽध्यायः॥ २५

---

## षड्विंशोऽध्यायः।

नन्द्युवाच।

आवाहयेत् ततो देवीं गायत्रीं वेदमातरम्।
आयातु वरदा देवीत्यनेनैव महेश्वरीम्॥ १
पाद्यमाचमनीयञ्च तस्याश्चार्घ्यं प्रदापयेत्।
प्राणायामत्रयं कृत्वा समासीनस्थितोऽपि वा॥ २
सहस्रं वा तदर्द्धं वा शतमष्टोत्तरन्तु वा।
गायत्रीं प्रणवेनैव त्रिविधेष्वेकमाचरेत्॥ ३
अर्घ्यं दत्त्वा समभ्यर्च्य प्रणम्य शिरसा स्वयम्।
उत्तमे शिखरे देवीत्युक्त्वोद्वास्य च मातरम्॥ ४
प्राच्यालोक्याभिवन्द्येशां गायत्रीं वेदमातरम्।
कृताञ्जलिपुटो भूत्वा प्रार्थयेद्भास्करं तथा॥ ५
उदुत्यञ्च तथा चित्रं जातवेदसमेव च।
अभिवन्द्य पुनः सूर्य्यं ब्रह्माणञ्च विधानतः॥ ६
तथा सौराणि सूक्तानि ऋग्यजुःसामजानि च।
जप्त्वा प्रदक्षिणं पश्चात् त्रिः कृत्वा च विभावसोः॥ ७
आत्मानञ्चान्तरात्मानं परमात्मानमेव च।
अभिवन्द्य पुनः सूर्य्यं ब्रह्माणञ्च विभावसुम्॥ ८
मुनीन् पितॄन् यथान्यायं स्वनाम्नावाहयेत् ततः।
सर्व्वानावाहयामीति देवानावाह्य सर्व्वतः॥ ९
तर्पयेद्विधिना पश्चात् प्राङ्मुखो वा ह्युदङ्मुखः।
ध्यात्वा स्वरूपं तत् तत्त्वमभिवन्द्य यथाक्रमम्॥ १०
देवानां पुष्पतोयेन ऋषीणान्तु कुशाम्भसा।
पितॄणां तिलतोयेन गन्धयुक्तेन सर्व्वतः॥ ११
यज्ञोपवीती देवानां निवीती ऋषितर्पणम्।
प्राचीनावीती विप्रेन्द्र पितॄणां तर्पयेत् क्रमात्॥ १२
अङ्गुल्यग्रेण वै धीमांस्तर्पयेद्दैवतर्पणम्।
ऋषीन् कनिष्ठाङ्गुलिना श्रोत्रियः सर्व्वसिद्धये॥ १३
पितॄंस्तु तर्पयेद्विद्वान् दक्षिणाङ्गुष्ठकेन तु।
तथैवं मुनिशार्दूल ब्रह्मयज्ञं यजेद्द्विजः॥ १४
देवयज्ञञ्च मानुष्यं भूतयज्ञं तथैव च।
पितृयज्ञञ्च पूतात्मा यज्ञकर्म्मपरायणः॥ १५

स्वशाखाध्ययनं विप्रा ब्रह्मयज्ञ इति स्मृतः ।
अग्नौ जुहोति यच्चान्नं देवयज्ञ इति स्मृतः ॥ १६
सर्व्वेषामेव भूतानां बलिदानं विधानतः ।
भूतयज्ञ इति प्रोक्तो भूतिदः सर्व्वदेहिनाम् ॥ १७
सद्दारान् सर्व्वतत्त्वज्ञान् ब्राह्मणान् वेदपारगान् ।
प्रणम्य तेभ्यो यद्दत्तमन्नं मानुष उच्यते ॥ १८
पितॄनुद्दिश्य यद्दत्तं पितृयज्ञः स उच्यते ।
एवं पञ्च महायज्ञान् कुर्य्यात् सर्व्वार्थसिद्धये ॥ १९
सर्व्वेषां शृणु यज्ञानां ब्रह्मयज्ञः परः स्मृतः ।
ब्रह्मयज्ञरतो मर्त्त्यो ब्रह्मलोके महीयते ॥ २०
ब्रह्मयज्ञेन तुष्यन्ति सर्व्वे देवाः सवासवाः ।
ब्रह्मा च भगवान् विष्णुः शङ्करो नीललोहितः ॥ २१
वेदाश्च पितरः सर्व्वे नात्र कार्य्या विचारणा ।
ग्रामाद्बहिर्गतो भूत्वा ब्राह्मणो ब्रह्मयज्ञवित् ॥ २२
यावत् त्वष्टमभवदुंटजानां छदं नरः ।
प्राच्यामुदीच्याञ्च तथा प्रागुदीच्यामथापि वा ॥ २३
शुभ्रमाचमनं कुर्य्याद्ब्रह्मयज्ञार्थमेव तत् ।
प्रीत्यर्थञ्च ऋचां विप्राः त्रिः पीत्वा प्लाव्य प्लाव्य च ॥ २४
यजुषां परिमृज्यैवं द्विः प्रक्षाल्य च वारिणा ।
प्रीत्यर्थं सामवेदानामुपस्पृश्य च मूर्द्धनि ॥ २५
स्पृशेदथर्व्ववेदानां नेत्रे चाङ्गिरसां तथा ।
नासिके ब्राह्मणोऽङ्गानां क्षाल्य क्षाल्य च वारिणा ॥ २६
अष्टादशपुराणानां ब्रह्माद्यानां तथैव च ।
तथा चोपपुराणानां सौरादीनां यथाक्रमम् ॥ २७
मुख्यानामितिहासानां शैवादीनां तथैव च ।
श्रोत्रे स्पृशेद्धि तुष्ट्यर्थं हृदेशन्तु ततः स्पृशेत् ॥ २८
कल्पादीनान्तु सर्व्वेषां कल्पवित् कल्पवित्तमाः ।
एवमाचम्य चास्तीर्य्य दर्भपिञ्जलमात्मनः ॥ २९
कृत्वा पाणितले धीमानात्मनो दक्षिणोत्तरम् ।
हेमाङ्गुलीयसंयुक्तो ब्रह्मबन्धयुतोऽपि वा ॥ ३०
विधिवद्ब्रह्मयज्ञञ्च कुर्य्यात् सूत्री समाहितः ।
अकृत्वा च मुनिः पञ्च महायज्ञान् द्विजोत्तमः ॥ ३१
भुक्त्वा च शूकराणान्तु योनौ वै जायते नरः ।
तस्मात् सर्व्वप्रयत्नेन कर्त्तव्याः शुभमिच्छता ॥ ३२
ब्रह्मयज्ञादथ स्नानं कृत्वादौ सर्व्वयात्मनः ।
तीर्थं संगृह्य विधिवत् प्रविशेच्छिविरं वशी ॥ ३३
बहिरेव गृहात् पादौ हस्तौ प्रक्षाल्य वारिणा ।
भस्मस्नानं ततः कुर्य्याद्विधिवद्देहशुद्धये ॥ ३४
शोध्य भस्म यथान्यायं प्रणवेनाग्निहोत्रजम् ।
ज्योतिः सूर्य्य इति प्रातर्जुहुयादुदिते यतः ॥ ३५
ज्योतिरग्निस्तथा सायं सम्यक् चानुदिते मृषा ।
तस्मादुदितहोमस्थं भसितं पावनं शुभम् ॥ ३६
नास्ति सत्यसमं यस्मादसत्यं पातकञ्च यत् ।
ईशानेन शिरोदेशं मुखं तत्पुरुषेण च ॥ ३७
उरोदेशमघोरेण गुह्यं वामेन सुव्रताः ।
सद्येन पादौ सर्व्वाङ्गं प्रणवेनाभिषेचयेत् ॥ ३८
ततः प्रक्षालयेत् पादं हस्तं ब्रह्मविदां वरः ।
व्यपोह्य भस्म चादाय देवदेवमनुस्मरन् ॥ ३९
मन्त्रस्नानं ततः कुर्य्यादापोहिष्ठादिभिः क्रमात् ।
पुण्यैश्चैव तथा मन्त्रैरृग्यजुःसामसम्भवैः ॥ ४०
द्विजानान्तु हितायैवं कथितं स्नानमद्य ते ।
संक्षिप्य यः सकृत् कुर्य्यात् स याति परमं पदम् ॥ ४१

इति श्रीलैङ्गे महापुराणे षड्-
विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः ।

शैलादिरुवाच ।

वक्ष्यामि शृणु संक्षेपाल्लिङ्गार्च्चनविधिक्रमम् ।
वक्तुं वर्षशतेनापि न शक्यं विस्तरेण यत् ॥ १
एवं स्नात्वा यथान्यायं पूजास्थानं प्रविश्य च ।
प्राणायामत्रयं कृत्वा ध्यायेद्देवं त्रियम्बकम् ॥ २
पञ्चवक्त्रं दशभुजं शुद्धस्फटिकसन्निभम् ।
सर्व्वाभरणसंयुक्तं चित्राम्बरविभूषितम् ॥ ३
तस्य रूपं समाश्रित्य दहनप्लावनादिभिः ।
शैवीं तनुं समास्थाय पूजयेत् परमेश्वरम् ॥ ४
देहशुद्धिञ्च कृत्वैव मूलमन्त्रं न्यसेत् क्रमात् ।
सर्व्वत्र प्रणवेनैव ब्रह्माणि च यथाक्रमम् ॥ ५
सूत्रे नमः शिवायेति छन्दांसि परमे शुभे ।
मन्त्राणि सूक्ष्मरूपेण संस्थितानि यतस्ततः ॥ ६
न्यग्रोधवीजे न्यग्रोधस्तथा सूत्रे तु शोभने ।
महत्यपि महद्ब्रह्म-संस्थितं सूक्ष्मवत् स्वयम् ॥ ७
सेचयेदर्च्चनस्थानं गन्ध-चन्दन-वारिणा ।
द्रव्याणि शोधयेत् पश्चात् क्षालनप्रोक्षणादिभिः ॥ ८

चालनं प्रोक्षणञ्चैव प्रणवेन विधीयते ।
प्रोक्षणी चार्घ्यपात्रञ्च पाद्यपात्रमनुक्रमात् ॥ ९
तथा ह्याचमनीयार्थं कल्पितं पात्रमेव च ।
स्थापयेद्विधिना धीमानवगुण्ठ्य यथाविधि ॥ १०
दर्भैराच्छादयेच्चैव प्रोक्षयेच्छुद्धवारिणा ।
तेषु तेष्वथ सर्व्वेषु क्षिपेत् तोयं सुशीतलम् ॥ ११
प्रणवेन क्षिपेत् तेषु द्रव्याण्यालोक्य बुद्धिमान् ।
उशीरं चन्दनञ्चैव पाद्ये तु परिकल्पयेत् ॥ १२
जाति-कङ्कोल-कर्पूर-बहुमूल-तमालकम् ।
चूर्णयित्वा यथान्यायं क्षिपेदाचमनीयके ॥ १३
एवं सर्व्वेषु पात्रेषु दापयेच्चन्दनं तथा ।
कर्पूरञ्च यथान्यायं पुष्पाणि विविधानि च ॥ १४
कुशाग्रमक्षतांश्चैव यव-व्रीहि-तिलानि च ।
आज्य-सिद्धार्थ-पुष्पाणि भसितञ्चार्घ्यपात्रके ॥ १५
कुश-पुष्प-यव-व्रीहि-बहुमूल-तमालकम् ।
दापयेत् प्रोक्षणीपात्रे भसितं प्रणवेन च ॥ १६
न्यसेत् पञ्चाक्षरञ्चैव गायत्रीं रुद्रदेवताम् ।
केवलं प्रणवं वापि वेदसारमनुत्तमम् ॥ १७
अथ सम्प्रोक्षयेत् पश्चात् द्रव्याणि प्रणवेन तु ।
प्रोक्षणीपात्रसंस्थेन ईशानाद्यैश्च पञ्चभिः ॥ १८
पार्श्वतो देवदेवस्य नन्दिनं मां समर्च्चयेत् ।
दीप्तानलायुतप्रख्यं त्रिनेत्रं त्रिदशेश्वरम् ॥ १९
बालेन्दुमुकुटञ्चैव हरिवक्त्रं चतुर्भुजम् ।
पुष्पमालाधरं सौम्यं सर्व्वाभरणभूषितम् ॥ २०
उत्तरे चात्मनः पुत्त्रीं भार्य्याञ्च मरुतां शुभाम् ।
सुयशां सुव्रतां चाम्बापादमण्डनतत्पराम् ॥ २१
एवं पूज्य प्रविश्यान्तर्भवनं परमेष्ठिनः ।
दत्त्वा पुष्पाञ्जलिं भक्त्या पञ्चमूर्द्धसु पञ्चभिः ॥ २२
गन्धपुष्पैस्तथा धूपैर्विविधैः पूज्य शङ्करम् ।
स्कन्दं विनायकं देवीं लिङ्गशुद्धिञ्च कारयेत् ॥ २३
जप्त्वा सर्व्वाणि मन्त्राणि प्रणवादिनमोऽन्तकम् ।
कल्पयेदासनं पश्चात् पद्माख्यं प्रणवेन तत् ॥ २४
तस्य पूर्व्वदलं साक्षादणिमामयमक्षरम् ।
लघिमा दक्षिणञ्चैव महिमा पश्चिमं तथा ॥ २५
प्राप्तिस्तथोत्तरं पत्रं प्राकाम्यं पावकस्य तु ।
ईशित्वं नैर्ऋतं पत्रं वशित्वं वायुगोचरे ॥ २६
सर्व्वज्ञत्वं तथैशान्यं कर्णिका सोम उच्यते ।

सोमस्याधस्तथा सूर्य्यस्तस्याधः पावकः स्वयम् ॥
धर्म्मादयो विदिक्ष्वेते त्वनन्तं कल्पयेत् क्रमात् ।
अव्यक्तादि चतुर्दिक्षु सोमस्यान्ते गुणत्रयम् ॥ २८
आत्मत्रयं ततश्चोर्द्ध्वं तस्यान्ते शिवपीठिका ।
सद्योजातं प्रपद्यामीत्यावाह्य परमेश्वरम् ॥ २९
वामदेवेन मन्त्रेण स्थापयेदासनोपरि ।
सान्निध्यं रुद्रगायत्र्या अघोरेण निरुध्य च ॥ ३०
ईशानः सर्व्वविद्यानामिति मन्त्रेण पूजयेत् ।
पाद्यमाचमनीयञ्च विभोश्चार्घ्यं प्रदापयेत् ॥ ३१
स्नापयेद्विधिना रुद्रं गन्धचन्दनवारिणा ।
पञ्चगव्यं विधानेन गृह्य पात्रेऽभिमन्त्र्य च ॥ ३२
प्रणवेनैव गव्यैस्तु स्नापयेच्च यथाविधि ।
आज्येन मधुना चैव तथा चेक्षुरसेन च ॥ ३३
पुण्यैर्द्रव्यैर्महादेवं प्रणवेनाभिषिञ्चयेत् ।
जलभाण्डैः पवित्रैस्तु मन्त्रैस्तोयं क्षिपेत् ततः ॥ ३४
शुद्धिं कृत्वा यथान्यायं सितवस्त्रेण साधकः ।
कुशापामार्ग-कर्पूर-जातिपुष्पक-चम्पकैः ॥ ३५
करवीरैः सितैश्चैव मल्लिकाकमलोत्पलैः ।
आपूर्य्य पुष्पैः सुशुभैश्चन्दनाद्यैश्च तज्जलम् ॥ ३६
न्यसेन्मन्त्राणि तत्तोये सद्योजातादिकानि तु ।
सुवर्णकलशेनाथ तथा वै राजतेन वा ॥ ३७
ताम्रेण पद्मपत्रेण पालाशेन दलेन वा ।
शङ्खेन मृण्मयेनाथ शोधितेन शुभेन वा ॥ ३८
सकूर्च्चेन सपुष्पेण स्नापयेन्मन्त्रपूर्व्वकम् ।
मन्त्राणि ते प्रवक्ष्यामि शृणु सर्व्वार्थसिद्धये ॥ ३९
यैर्लिङ्गं सकृदप्येवं स्नाप्य मुच्येत मानवः ।
पवमानेन मन्त्रज्ञः तथा वामीयकेन च ॥ ४०
रुद्रेण नीलरुद्रेण श्रीसूक्तेन शुभेन च ।
रजनीसूक्तकेनैव चमकेन शुभेन च ॥ ४१
होतारेणाथ शिरसा अथर्व्वेण शुभेन च ।
शान्त्या चाथ पुनः शान्त्या भारुण्डेनारुणेन च ॥ ४२
वारुणेन च ज्येष्ठेन तथा वेदव्रतेन च ।
तथान्तरेण पुण्येन सूक्तेन पुरुषेण च ॥ ४३
त्वरितेनैव रुद्रेण कपिना च कपर्द्दिना ।
आवोराजेति साम्ना तु बृहच्चन्द्रेण विष्णुना ॥ ४४
विरूपाक्षेण स्कन्देन शतरुद्रैः शिवैस्तथा ।
पञ्चब्रह्मैश्च सूत्रेण केवलप्रणवेन च ॥ ४५

स्नापयेद्देवदेवेशं सर्व्वपापप्रशान्तये ।
वस्त्रं शिवोपवीतञ्च तथा ह्याचमनीयकम् ॥ ४६
गन्धपुष्पं तथा धूपं दीपमन्नं क्रमेण तु ।
तोयं सुगन्धितञ्चैव पुनराचमनीयकम् ॥ ४७
मुकुटञ्च शुभं छत्रं तथा वै भूषणानि च ।
दापयेत् प्रणवेनैव मुखवासादिकानि च ॥ ४८
ततः स्फटिकसङ्काशं देवं निष्कलमक्षरम् ।
कारणं सर्व्वदेवानां सर्व्वलोकमयं परम् ॥ ४९
ब्रह्मेन्द्र-विष्णु-रुद्राद्यैर्ऋषिदेवैरगोचरम् ।
वेदविद्भिर्हि वेदान्तैस्त्वगोचरमिति श्रुतिः ॥ ५०
आदिमध्यान्तरहितं भेषजं भवरोगिणाम् ।
शिवतत्त्वमिति ख्यातं शिवलिङ्गे व्यवस्थितम् ॥ ५१
प्रणवेनैव मन्त्रेण पूजयेल्लिङ्गमूर्द्धनि ।
स्तोत्रं जपेच्च विधिना नमस्कारं प्रदक्षिणम् ॥ ५२
अर्घ्यं दत्त्वाथ पुष्पाणि पादयोस्तु विकीर्य्य च ।
प्रणिपत्य च देवेशमात्मन्यारोपयेच्छिवम् ॥ ५३
एवं संक्षिप्य कथितं लिङ्गार्चनमनुत्तमम् ।
आभ्यन्तरं प्रवक्ष्यामि लिङ्गार्चनमिहाद्य ते ॥ ५४

इति श्रीलैङ्गे महापुराणे सप्त-
विंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः ।

शैलादिरुवाच ।

आग्नेयं सौरममृतं बिम्बं भाव्यं ततोपरि ।
गुणत्रयञ्च हृदये तथा चात्मत्रयं क्रमात् ॥ १
तस्योपरि महादेवं निष्कलं सकलाकृतिम् ।
कान्तार्द्धारूढदेहञ्च पूजयेद्ध्यानविद्यया ॥ २
ततो बहुविधं प्रोक्तं चिन्त्यं तत्रास्ति चेद्द्वयतः ।
चिन्तकस्य ततश्चिन्ता अन्यथा नोपपद्यते ॥ ३
तस्माद्ध्येयं तथा ध्यानं यजमानः प्रयोजनम् ।
स्मरेत् तन्नान्यथा जातु बुध्यते पुरुषस्य ह ॥ ४
पुरे शेते पुरं देहं तस्मात् पुरुष उच्यते ।
याज्यं यज्ञेन यजते यजमानस्तु स स्मृतः ॥ ५
ध्येयो महेश्वरो ध्यानं चिन्तनं निर्वृतिः फलम् ।
प्रधानपुरुषेशानं यथातथ्यं प्रपद्यते ॥ ६
इह षड्विंशको ध्येयो ध्याता वै पञ्चविंशकः ।
चतुर्व्विंशकमव्यक्तं महदाद्यास्तु सप्त च ॥ ७
महांस्तथा त्वहङ्कारस्तन्मात्रपञ्चकं पुनः ।
कर्म्मेन्द्रियाणि पञ्चैव तथा बुद्धीन्द्रियाणि च ॥ ८
मनश्च पञ्चभूतानि शिवः षड्विंशकस्ततः ।
स एव भर्त्ता कर्त्ता च विधेरपि महेश्वरः ॥ ९
हिरण्यगर्भं रुद्रोऽसौ जनयामास शङ्करः ।
विश्वाधिकश्च विश्वात्मा विश्वरूप इति स्मृतः ॥ १०
विना यथा हि पितरं मातरं तनयास्त्विह ।
न जायन्ते तथा सोमं विना नास्ति जगत्त्रयम् ॥ ११

सनत्कुमार उवाच ।

कर्त्ता यदि महादेवः परमात्मा महेश्वरः ।
तथा कारयिता चैव कुर्व्वतोऽप्यात्मनस्तथा ॥ १२
नित्यो विशुद्धो बुद्धश्च निष्कलः परमेश्वरः ।
लयोक्तो मुक्तिदः किं वा निष्कलश्चेत्करोतिकिम् ॥ १३

शैलादिरुवाच ।

कालः करोति सकलं कालं कलयते सदा ।
निष्कलञ्च मनः सर्व्वं मन्यते सोऽपि निष्कलः ॥ १४
कर्म्मणा तस्य चैवेह जगत् सर्व्वं प्रतिष्ठितम् ।
किमत्र देवदेवस्य मूर्त्त्यष्टकमिदं जगत् ॥ १५
विनाकाशं जगन्नैव विना क्ष्मां वायुना विना ।
तेजसा वारिणा चैव यजमानं तथा विना ॥ १६
भानुना शशिना लोकस्तस्यैतास्तनवः प्रभोः ।
विचारतस्तु रुद्रस्य स्थूलमेतच्चराचरम् ॥ १७
सूक्ष्मं वदन्ति ऋषयो यन्न वाच्यं द्विजोत्तमाः ।
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ॥ १८
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ।
न भेतव्यं तथा तस्माज्ज्ञात्वानन्दं पिनाकिनः ॥ १९
विभूतयश्च रुद्रस्य मत्वा सर्व्वत्र भावतः ।
सर्व्वं रुद्र इति प्राहुर्मुनयस्तत्त्वदर्शिनः ॥ २०
नमस्कारेण सततं गौरवात् परमेष्ठिनः ।
सर्व्वन्तु खल्विदं ब्रह्म सर्व्वो वै रुद्र ईश्वरः ॥ २१
पुरुषो वै महादेवो महेशानः परः शिवः ।
एवं विभुविनिर्द्दिष्टो ध्यानं तत्रैव चिन्तनम् ॥ २२
चतुर्व्यूहेण मार्गेण विचार्य्यालोक्य सुव्रत ।
संसारहेतुः संसारो मोक्षहेतुश्च निर्वृतिः ॥ २३
चतुर्व्यूहः समाख्यातश्चिन्तकस्येह योगिनः ।
चिन्ता बहुविधा ख्याता सैकत्र परमेष्ठिना ॥ २४

स्वनिष्ठेत्येव कथिता रुद्रे रौद्री न संशयः ।
ऐन्द्री चैन्द्रे तथा सौम्या सोमे नारायणे तथा ॥ २५
सूर्य्ये वह्नौ च सर्व्वेषां सर्व्वत्रैवं विचारतः ।
शिवाहं सोऽहमित्येवं द्विधा संस्थाप्य भावतः ॥ २६
अतोऽहमौ नास्ति यस्तस्माच्चिन्ता ब्राह्मी न संशयः
एवं ब्रह्ममयं ध्यायेत् पूर्व्वं विप्र चराचरम् ॥ २७
चराचरविभागञ्च त्यजेदभिमतं स्मरन् ।
त्याज्यं ग्राह्यमलभ्यञ्च कृत्यञ्चाकृत्यमेव च ॥ २८
यस्य नास्ति सुतप्तस्य तस्य ब्राह्मी न चान्यथा ।
आभ्यन्तरं समाख्यातमेवमभ्यर्च्चनं क्रमात् ॥ २९
आभ्यन्तरार्च्चकाः पूज्या नमस्कारादिभिस्तथा ।
विरूपा विकृताश्चापि न निन्द्या ब्रह्मवादिनः ॥ ३०
आभ्यन्तरार्च्चकाः सर्व्वं न परीक्ष्या विजानता ।
निन्दका एव दुःखार्त्ता भविष्यन्त्यल्पचेतसः ॥ ३१
यथा दारुवने रुद्रं विनिन्द्य मुनयः पुरा ।
तस्मात् सेव्या नमस्कार्य्याः सदा ब्रह्मविदस्तथा ॥३२
वर्णाश्रमविनिर्म्मुक्ता वर्णाश्रमपरायणैः ॥ ३३

इति श्रीलैङ्गे महापुराणेऽष्टाविंशोऽध्यायः ॥२८॥

---

## एकोनत्रिंशोऽध्यायः ।

सनत्कुमार उवाच ।

इदानीं श्रोतुमिच्छामि पुरा दारुवने विभो ।
प्रवृत्तं तद्वनस्थानां तपसा भावितात्मनाम् ॥ १
कथं दारुवनं प्राप्तो भगवान् नीललोहितः ।
विकृतं रूपमास्थाय चोर्द्ध्वरेता दिगम्बरः ॥ २
किं प्रवृत्तं वने तस्मिन् रुद्रस्य परमात्मनः ।
वक्तुमर्हसि तत्त्वेन देवदेवस्य चेष्टितम् ॥ ३

सूत उवाच ।

तस्य तद्वचनं श्रुत्वा श्रुतिसारविदां वरः ।
शैलादस्तु भगवान् प्राह किञ्चिद्भवं हसन् ॥ ४

शैलादिरुवाच ।

मुनयो दारुगहने तपस्तेपुः सुदारुणम् ।
तुष्ट्यर्थं देवदेवस्य सदारतनयाग्नयः ॥ ५
तुष्टो रुद्रो जगन्नाथश्चेकितानो वृषध्वजः ।
धूर्ज्जटिः परमेशानो भगवान् नीललोहितः ॥ ६
प्रवृत्तिलक्षणं ज्ञानं ज्ञातुं दारुवनौकसाम् ।
परीक्षार्थं जगन्नाथः श्रद्धया क्रीड़या च सः ॥
निवृत्तिलक्षणज्ञान-प्रतिष्ठार्थञ्च शङ्करः ।
देवदारुवनस्थानां प्रवृत्तिज्ञानचेतसाम् ॥ ८
विकृतं रूपमास्थाय दिग्वासा विषमेक्षणः ।
मुग्धो द्विहस्तः कृष्णाङ्गो दिव्यं दारुवनं ययौ ।
मन्दस्मितञ्च भगवान् स्त्रीणां मनसिजोद्भवम् ।
भ्रूविलासञ्च गानञ्च चकारातीव सुन्दरः ॥ १०
सम्प्रेक्ष्य नारीवृन्दं वै मुहुर्मुहुरनङ्गहा ।
अनङ्गवृद्धिमकरोदतीव मधुराकृतिः ॥ ११
वने तं पुरुषं दृष्ट्वा विकृतं नीललोहितम् ।
स्त्रियः पतिव्रताश्चापि तमेवान्वयुरादरात् ॥ १२
वनोटजद्वारगताश्च नार्य्यो
विस्रस्तवस्त्राभरणा विचेष्टाः ।
लब्ध्वा स्मितं तस्य मुखारविन्दात्
द्रुमालयस्थास्तमथान्वयुस्ताः ॥ १३
दृष्ट्वा काश्चिद्भवं नार्य्यो मदघूर्णितलोचनाः ।
विलासवाह्यास्ताश्चापि भ्रूविलासं प्रचक्रिरे ॥ १४
अथ दृष्ट्वापरा नार्य्यः किञ्चित्प्रहसिताननाः ।
किञ्चिद्विस्रस्तवसनाः स्रस्तकाञ्चीगुणा जगुः ॥ १५
काश्चित् तदा तं विपिने तु दृष्ट्वा
विप्राङ्गनाः स्रस्तनवांशुकं वा ।
स्वान् स्वान् विचित्रान् वलयान् प्रविध्य
मदान्विता बन्धुजनांश्च जग्मुः ॥ १६
काचित् तदा तं न विवेद दृष्ट्वा
विवासना स्रस्तमहांशुका च ।
शाखा विचित्रान् विटपान् प्रसिद्धान्
मदान्विता बन्धुजनांस्तथान्याः ॥ १७
काश्चिज्जगुस्तं ननृतुर्निपेतुश्च धरातले ।
निषेदुर्गजवच्चान्या प्रोवाच द्विजपुङ्गवाः ॥ १८
अन्योन्यं सस्मितं प्रेक्ष्य चालिलिङ्गुः समन्ततः ।
निरुध्य मार्गं रुद्रस्य नैपुणानि प्रचक्रिरे ॥ १९
को भवानिति चाप्यस्तमास्यतामिति चापराः ।
कुत्रेत्यथ प्रसीदेति जजल्पुः प्रीतमानसाः ॥ २०
विपरीतानि पेतुर्वै विस्रस्तांशुकमूर्द्धजाः ।
पतिव्रताः पतीनान्तु सन्निधौ भवमायया ॥ २१
दृष्ट्वा श्रुत्वा भवस्तासां चेष्टा वाक्यानि चाव्ययः ।
शुभं वाप्यशुभं वापि नोक्तवान् परमेश्वरः ॥ २२

दृष्ट्वा नारीकुलं विप्रास्तथाभूतञ्च शङ्करम्।
अतीव परुषं वाक्यं जजल्पुस्ते मुनीश्वराः॥ २३
तपांसि तेषां सर्व्वेषां प्रत्याहन्यन्त शङ्करे।
यथादित्यप्रकाशेन तारका नभसि स्थिताः॥ २४
श्रूयते ऋषिशापेन ब्रह्मणस्तु महात्मनः।
समृद्धश्रेयसां योनिर्यज्ञो वै नाशमाप्तवान्॥ २५
भृगोरपि च शापेन विष्णुः परमवीर्य्यवान्।
प्रादुर्भावान् दश प्राप्तो दुःखितश्च सदा कृतः॥ २६
इन्द्रस्यापि च धर्म्मज्ञ च्छिन्नं सवृषणं पुरा।
ऋषिणा गौतमेनोर्व्व्यां क्रुद्धेन विनिपातितम्॥ २७
गर्भवासो वसूनाञ्च शापेन विहितस्तथा।
ऋषीणाञ्चैव शापेन नहुषः सर्पतां गतः॥ २८
क्षीरोदश्च समुद्रोऽसौ निवासः सर्व्वदा हरेः।
द्वितीयश्चामृताधारो ह्यपेयो ब्राह्मणैः कृतः॥ २९
अविमुक्तेश्वरं प्राप्य वाराणस्यां जनार्द्दनः।
क्षीरेण चाभिषिच्येशं देवदेवं त्रियम्बकम्॥ ३०
श्रद्धया परया युक्तो देहाश्लेषामृतेन वै।
निषिक्तेन स्वयं देवः क्षीरेण मधुसूदनः॥ ३१
सेचयित्वाथ भगवान् ब्रह्मणा मुनिभिः समम्।
क्षीरोदं पूर्व्ववच्चक्रे निवासं चात्मनः प्रभुः॥ ३२
धर्म्मश्चैव तथा शप्तो माण्डव्येन महात्मना।
वृष्णयश्चैव कृष्णेन दुर्व्वासाद्यैर्महात्मभिः॥ ३३
राघवः सानुजश्चापि दुर्व्वासेन महात्मना।
श्रीवत्सश्च मुनेः पाद-पतनात् तस्य धीमतः॥ ३४
एते चान्ये च बहवो विप्राणां वशमागताः।
वर्ज्जयित्वा विरूपाक्षं देवदेवमुमापतिम्॥ ३५
एवं हि मोहितास्तेन नावबुध्यन्त शङ्करम्।
अत्युग्रवचनं प्रोचुश्चोग्रोऽप्यन्तरधीयत॥ ३६
तेऽपि दारुवनात् तस्मात् प्रातः संविग्नमानसाः।
पितामहं महात्मानमासीनं परमासने॥ ३७
गत्वा विज्ञापयामासुः प्रवृत्तमखिलं विभोः।
शुभे दारुवने तस्मिन् मुनयः क्षीणचेतसः॥ ३८
सोऽपि सञ्चिन्त्य मनसा क्षणादेव पितामहः।
तेषां प्रवृत्तमखिलं पुण्ये दारुवने पुरा॥ ३९
उत्थाय प्राञ्जलिर्भूत्वा प्रणिपत्य भवाय च।
उवाच त्वरं ब्रह्मा मुनीन् दारुवनालयान्॥ ४०
धिग् युष्मान् प्राप्तनिधनान् महानिधिमनुत्तमम्।
वृथा कृतं यतो विप्रा युष्माभिर्भाग्यवर्ज्जितैः॥ ४१
यस्तु दारुवने तस्मिन् लिङ्गी दृष्टोऽप्यलिङ्गिभिः।
युष्माभिर्विकृताकारः स एव परमेश्वरः॥ ४२
गृहस्थैश्च न निन्द्यास्तु सदा ह्यतिथयो द्विजाः।
विरूपाश्च स्वरूपाश्च मलिनाश्चाप्यपण्डिताः॥ ४३
सुदर्शनेन मुनिना कालमृत्युरपि स्वयम्।
पुरा भूमौ द्विजाग्र्येण जितो ह्यतिथिपूजया॥ ४४
अन्यथा नास्ति सन्तर्त्तुं गृहस्थैश्च द्विजोत्तमैः।
त्यक्त्वा चातिथिपूजां तामात्मनो भुवि शोधनम्॥ ४५
गृहस्थोऽपि पुरा जेतुं सुदर्शन इति श्रुतः।
प्रतिज्ञामकरोज्जायां भार्य्यामाह पतिव्रताम्॥ ४६
सुव्रते सुभ्रु सुभगे शृणु सर्व्वं प्रयत्नतः।
त्वया वै नावमन्तव्या गृहे ह्यतिथयः सदा॥ ४७
सर्व्व एव स्वयं साक्षादतिथिर्यत् पिनाकधृक्।
तस्मादतिथये दत्त्वा आत्मानमपि पूजय॥ ४८
एवमुक्ताथ सन्तप्ता विवशा सा पतिव्रता।
पतिमाह रुदन्ती च किमुक्तं भवता प्रभो॥ ४९
तस्यास्तद्वचनं श्रुत्वा पुनः प्राह सुदर्शनः।
देयं सर्व्वं शिवायार्य्ये शिव एवातिथिः स्वयम्॥ ५०
तस्मात् सर्व्वे पूजनीयाः सर्व्वेऽप्यतिथयः सदा।
एवमुक्ता तदा भर्त्रा भार्य्या तस्य पतिव्रता॥ ५१
शेषामिवाज्ञामादाय मूर्ध्ना सा प्राचरत् तदा।
परीक्षितुं तथा श्रद्धां तयोः साक्षाद्द्विजोत्तमाः॥ ५२
धर्म्मो द्विजोत्तमो भूत्वा जगामाथ मुनेर्गृहम्।
तं दृष्ट्वा चार्च्चयामास साघ्र्याद्यैरनघा द्विजम्॥ ५३
सम्पूजितस्तया तान्तु प्राह धर्म्मो द्विजः स्वयम्।
भद्रे कुतः पतिर्धीमांस्तव भर्त्ता सुदर्शनः॥ ५४
अन्नाद्यैरलमद्यार्य्ये त्वं दातुमिह चार्हसि।
सा च लज्जावृता नारी स्मरन्ती कथितं पुरा॥ ५५
भर्त्रा न्यमीलयन्नेत्रे चचाल च पतिव्रता।
किञ्चेत्याह पुनस्तां वै धर्म्मे चक्रे च सा मतिम्॥ ५६
निवेदितुं किलात्मानं तस्मै पत्युरिहाज्ञया।
एतस्मिन्नन्तरे भर्त्ता तस्या नार्य्याः सुदर्शनः॥ ५७
गृहद्वारं गतो धीमांस्तामुवाच महामुनिः।
एह्येहि क्व गता भद्रे तमुवाचातिथिः स्वयम्॥ ५८
भार्य्यया त्वनया सार्द्धं मैथुनस्थोऽहमद्य वै।
सुदर्शन महाभाग किं कर्त्तव्यमिहोच्यताम्॥ ५९

सुरतान्तस्तु विप्रेन्द्र सन्तुष्टोऽहं द्विजोत्तम ।
सुदर्शनस्ततः प्राह सुप्रहृष्टो द्विजोत्तमः ॥ ६०
गच्छ चैनां यथाकामं गमिष्येऽहं द्विजोत्तम ।
हृष्टोऽस्य दर्शयामास स्वात्मानं धर्म्मराट् स्वयम् ॥ ६१
अददौ चेप्सितं सर्व्वं तमाह च महाद्युतिः ।
एषा न भुक्ता विप्रेन्द्र मनसापि सुशोभना ॥ ६२
मया चैषा न सन्देहः श्रद्धां ज्ञातुमिहागतः ।
जितो वै यस्त्वया मृत्युर्धर्म्मेणैकेन सुव्रत ॥ ६३
अहोऽस्य तपसो वीर्य्यमित्युक्त्वा प्रययौ च सः ।
तस्मात् तथा पूजनीयाः सर्व्वे ह्यतिथयः सदा ॥ ६४
बहुनात्र किमुक्तेन भाग्यहीना द्विजोत्तमाः ।
तमेव शरणं तूर्णं गन्तुमर्हथ शङ्करम् ॥ ६५
तस्य तद्वचनं श्रुत्वा ब्रह्मणो ब्राह्मणर्षभाः ।
ब्रह्माणमभिवन्द्यार्त्ताः प्रोचुराकुलितेक्षणाः ॥ ६६

ब्राह्मणा ऊचुः ।

नापेक्षितं महाभाग जीवितं विकृताः स्त्रियः ।
दृष्टोऽस्माभिर्महादेवो निन्दितो यस्त्वनिन्दितः ॥ ६७
अयञ्च सर्व्वगः शूली पिनाकी नीललोहितः ।
अज्ञानाच्छापजा शक्तिः कुण्ठितास्य निरीक्षणात् ॥ ६८
वक्तुमर्हसि देवेश सन्न्यासं वै क्रमेण तु ।
द्रष्टुं वै देवदेवेशमुग्रं भीमं कपर्द्दिनम् ॥ ६९

पितामह उवाच ।

आदौ वेदानधीत्यैव श्रद्धया च गुरोः सदा ।
विचार्य्यार्थं मुनेर्धर्म्मान् प्रतिज्ञाय द्विजोत्तमाः ॥ ७०
ग्रहणान्तं हि वा विद्वानथ द्वादशवार्षिकम् ।
स्नात्वाहृत्य च दारान् वै पुत्रानुत्पाद्य सुव्रतान् ॥ ७१
वृत्तिभिश्चानुरूपाभिस्तान् विभज्य सुतान् मुनिः ।
अग्निष्टोमादिभिश्चेष्ट्वा यज्ञैर्यज्ञेश्वरं विभुम् ॥ ७२
पूजयेत् परमात्मानं प्राप्यारण्यं विभावसौ ।
मुनिर्द्वादशवर्षं वा वर्षमात्रमथापि वा ॥ ७३
अर्द्धद्वादशकं वापि दिनद्वादशकन्तु वा ।
क्षीरभुक् संयतः शान्तः सर्व्वान् सम्पूजयेत्सुरान् ॥ ७४
इष्ट्वैवं जुहुयादग्नौ यज्ञपात्राणि मन्त्रतः ।
अप्सु वै पार्थिवं न्यस्य गुरवे तैजसानि तु ॥ ७५
स्वधनं सकलञ्चैव ब्राह्मणेभ्यो विशङ्कया ।
प्रणिपत्य गुरुं भूमौ विरक्तः सन्न्यसेद्यतिः ॥ ७६
निकृत्य केशान् सशिखानुपवीतं विसृज्य च ।
पञ्चभिर्जुहुयादप्सु भूः स्वाहेति विचक्षणः ॥
ततश्चोर्ध्वं चरेद्देवं यतिः शिवविमुक्तये ।
व्रतेनानशनेनापि तोयवृत्त्यापि वा पुनः ॥ ७
पर्णवृत्त्या पयोवृत्त्या फलवृत्त्यापि वा यतिः ।
एवं जीवन् मृतो नो चेत् षण्मासाद्वत्सरात्तु
प्रस्थानादिकमायासं स्वदेहस्य चरेद्यतिः ।
शिवसायुज्यमाप्नोति कर्म्मणाप्येवमाचरन् ॥ ८
सद्योऽपि लभते मुक्तिं भक्तियुक्तो दृढव्रताः ॥

त्यागेन वा किं विधिनाप्यनेन
भक्तस्य रुद्रस्य शुभैर्व्रतैश्च ।
यज्ञैश्च दानैर्विविधैश्च होमै-
र्लब्धैश्च शास्त्रैर्विविधैश्च वेदैः ॥ ८२

श्वेतेनैवं जितो मृत्युर्भवभक्त्या महात्मना ।
वोऽस्तु भक्तिर्महादेवे शङ्करे परमात्मनि ॥ ८३

इति श्रीलैङ्गे महापुराणे एकोन-
त्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

शैलादिरुवाच ।

एवमुक्तास्तदा तेन ब्रह्मणा ब्राह्मणर्षभाः ।
श्वेतस्य च कथां पुण्यामपृच्छन् परमर्षयः ॥ १

पितामह उवाच ।

श्वेतो नाम मुनिः श्रीमान् गतायुर्गिरिगह्वरे ।
शक्तो ह्यभ्यर्च्य यद्भक्त्या तुष्टाव च महेश्वरम् ॥
रुद्राध्यायेन पुण्येन नमस्तेत्यादिना द्विजाः ।
ततः कालो महातेजाः कालप्राप्तं द्विजोत्तमम्
नेतुं सञ्चिन्त्य विप्रेन्द्राः सान्निध्यमकरोन्मुनेः ।
श्वेतोऽपि दृष्ट्वा तं कालं कालप्राप्तोऽपि शङ्करम्
पूजयामास पुण्यात्मा त्रियम्बकमनुस्मरन् ।
त्रियम्बकं यजेद्देवं सुगन्धिं पुष्टिवर्द्धनम् ॥ ५
किं करिष्यति मे मृत्युर्मृत्योर्मृत्युरहं यतः ।
तं दृष्ट्वा सस्मितं प्राह श्वेतं लोकभयङ्करः ॥ ६
एह्येहि श्वेत चानेन विधिना किं फलं तव ।
रुद्रो वा भगवान् विष्णुर्ब्रह्मा वा जगदीश्वरः ॥
कः समर्थः परित्रातुं मया ग्रस्तं द्विजोत्तम ।
अनेन मम किं विप्र रौद्रेण विधिना प्रभोः ॥ ८

तु यस्योत्थितश्चाहं यमलोकं चयेन वै।
प्रमादृतायुस्त्वं तस्मान्मुने नेतुमिहोद्यतः॥ ९
स्य तद्वचनं श्रुत्वा भैरवं धर्म्ममिश्रितम्।
हा रुद्र रुद्र रुद्रेति ललाप मुनिपुङ्गवः॥ १०
तं प्राह च महादेवं कालं सम्प्रेक्ष्य वै द्रुया।
नेत्रेण वाष्पमिश्रेण सम्भ्रान्तेन समाकुलः॥ ११
श्वेत उवाच।
त्वया किं काल नो नाथस्त्वस्ति वेत्ति वृषध्वजः।
लिङ्गेऽस्मिन् शङ्करो रुद्रः सर्व्वदेवभवोद्भवः॥ १२
अतीवभवभक्तानां मद्विधानां महात्मनाम्।
विधिना किं महाबाहो गच्छ गच्छ यथागतम्॥१३
ततो निशम्य कुपितस्तीक्ष्णदंष्ट्रो भयङ्करः।
श्रुत्वा श्वेतस्य तद्वाक्यं पाशहस्तो भयावहः॥ १४
सिंहनादं महत् कृत्वा चास्फाल्य च मुहुर्म्मुहुः।
बबन्ध च मुनिं कालः कालप्राप्तं तमाह च॥ १५
मया बद्धोऽसि विप्रर्षे श्वेत नेतुं यमालयम्।
अद्य वै देवदेवेन तव रुद्रेण किं कृतम्॥ १६
क्व शर्व्वस्तव भक्तिश्च क्व पूजा पूजया फलम्।
क्व चाहं क्व च मे भीतिः श्वेत बद्धोऽसि वै मया॥१७
लिङ्गेऽस्मिन् संस्थितः श्वेत तव रुद्रो महेश्वरः।
निश्चेष्टोऽसौ महादेवः कथं पूज्यो महेश्वरः॥ १८
ततः सदाशिवः स्वयं द्विजं निहन्तुमागतम्।
निहन्तुमन्तकं स्मयन् स्मरारियज्ञहा हरः॥ १९
त्वरन् विनिर्गतः परः शिवः स्वयं त्रिलोचनः।
त्रियम्बकोऽम्बया समं स नन्दिना गणेश्वरैः॥ २०
ससर्ज्ज जीवितं क्षणाद्भवं निरीक्ष्य वै भयात्।
पपात चाशु वै बली मुनेस्तु सन्निधौ द्विजाः॥ २१
ननाद चोर्द्ध्वमुच्चधीर्निरीक्ष्य चान्तकान्तकम्।
निरीक्षणेन वै मृतं भवस्य विप्रपुङ्गवाः॥ २२
विनेदुरुच्चमीश्वराः सुरेश्वरा महेश्वरम्।
प्रणेमुरम्बिकामुमां मुनिश्वरास्तु हर्षिताः॥ २३
ससर्ज्जुरस्य मूर्द्ध्नि वै मुनेर्भवस्य खेचराः।
सुशोभनं सुशीतलं सुपुष्पवर्षमम्बरात्॥ २४
अहो निरीक्ष्य चान्तकं मृतं तदा सुविस्मितः।
शिलाशनात्मजोऽव्ययं शिवं प्रणम्य शङ्करम्॥ २५
उवाच बालधीश्वरः प्रसीद चेति वै मुनेः।
महेश्वरं महेश्वरस्य चानुगो गणेश्वरः॥ २६

ततो विवेश भगवाननुगृह्य द्विजोत्तमम्।
क्षणाद्गूढशरीरं हि ध्वस्तं दृष्ट्वान्तकं क्षणात्॥२७
तस्मान्मृत्युञ्जयश्चैव सर्व्वेषामपि शङ्करम्॥ २८
बहुना किं प्रलापेन संन्यस्याभ्यर्च्य वै भवम्।
भक्त्या चापरया तस्मिन् विशोका वै भविष्यथ॥ २९
शैलादिरुवाच।
एवमुक्तास्तदा तेन ब्रह्मणा ब्रह्मवादिनः।
प्रसीद भक्तिदर्वेशे भवे रुद्रे पिनाकिनि॥ ३०
केन वा तपसा देव यज्ञेनाप्यथ केन वा।
व्रतैर्वा भगवद्भक्ता भविष्यन्ति द्विजातयः॥ ३१
पितामह उवाच।
न दानेन मुनिश्रेष्ठास्तपसा च न विद्यया।
यज्ञैर्होमैर्व्रतैर्वेदैर्योगशास्त्रैर्निरोधनैः॥ ३२
प्रसादेनैव सा भक्तिः शिवे परमकारणे।
अथ तस्य वचः श्रुत्वा सर्व्वे ते परमर्षयः॥ ३३
सदारतनयाः श्रान्ताः प्रणेमुश्च पितामहम्।
तस्मात् पाशुपती भक्तिर्धर्म्मकामार्थसिद्धिदा॥ ३४
मुनेर्विजयदा चैव सर्व्वमृत्युजयप्रदा।
दधीचस्तु पुरा भक्त्या हरिं जित्वामरैर्विभुम्॥ ३५
क्षुपं जघान पादेन वज्रास्थिलञ्च लब्धवान्।
मयापि निर्ज्जितो मृत्युर्महादेवस्य कीर्त्तनात्॥ ३६
श्वेतेनापि गतेनास्यं मृत्योर्मुनिवरेण तु।
महादेवप्रसादेन जितो मृत्युर्यथा मया॥ ३७
इति श्रीलैङ्गे महापुराणे त्रिंशोऽध्यायः॥३०॥

---

## एकत्रिंशोऽध्यायः।

सनत्कुमार उवाच।
कथं भव-प्रसादेन देवदारु-वनौकसः।
प्रपन्नाः शरणं देवं वक्तुमर्हसि मे प्रभो॥ १
शैलादिरुवाच।
तानुवाच महाभागान् भगवानात्मभूः स्वयम्।
देवदारुवनस्थांस्तु तपसा पावकप्रभान्॥ २
पितामह उवाच।
एष देवो महादेवो विज्ञेयस्तु महेश्वरः।
न तस्मात् परमं किञ्चित् पदं समधिगम्यते॥ ३
देवानाञ्च ऋषीणाञ्च पितॄणाञ्चव स प्रभुः।

सहस्रयुगपर्य्यन्ते प्रलये सर्व्वदेहिनः ॥ ४
संहरत्येष भगवान् कालो भूत्वा महेश्वरः।
एष चैव प्रजाः सर्व्वाः सृजत्येकः स्वतेजसा ॥ ५
एषं चक्री च वज्री च श्रीवत्सकृतलक्षणः।
योगी कृतयुगे चैव त्रेतायां क्रतुरुच्यते ॥ ६
द्वापरे चैव कालाग्निर्धर्म्मकेतुः कलौ स्मृतः।
रुद्रस्य मूर्त्तयस्त्वेता येऽभिध्यायन्ति पण्डिताः ॥ ७
चतुरस्रं वहिश्चान्तरष्टास्रं पिण्डिकाश्रये।
वृत्तं सुदर्शनं योग्यमेवं लिङ्गं प्रपूजयेत् ॥ ८
तमो ह्यग्नी रजो ब्रह्मा सत्त्वं विष्णुः प्रकाशकम्।
मूर्त्तिरेका स्थिता चास्य मूर्त्तयः परिकीर्त्तिताः ॥९
यत्र तिष्ठति तद्ब्रह्म योगेन तु समन्वितम्।
तस्माद्धि देवदेवेशमीशानं प्रभुमव्ययम् ॥ १०
आराधयन्ति विप्रेन्द्रा जितक्रोधा जितेन्द्रियाः।
लिङ्गं कृत्वा यथान्यायं सर्व्वलक्षणसंयुतम् ॥ ११
अङ्गुष्ठमात्रं सुशुभं सुवृत्तं सर्व्वसम्मतम्।
समनाभं तथाष्टास्रं षोड़शास्रमथापि वा ॥ १२
सुवृत्तं मण्डलं दिव्यं सर्व्वकामफलप्रदम्।
वेदिका द्विगुणा तस्य समा वा सर्व्वसम्मता ॥ १३
गोमुखी च त्रिभागैका वेद्या लक्षणसंयुता।
पट्टिका च समन्ताद्वै यवमात्रा द्विजोत्तमाः ॥ १४
सौवर्णं राजतं शैलं कृत्वा ताम्रमयं तथा।
वेदिकायाश्च विस्तारं त्रिगुणं वै समन्ततः ॥ १५
वर्त्तुलं चतुरस्रं वा षड़स्रं वा त्रिरस्रकम्।
समन्तान्निर्व्रणं शुभ्रं लक्षणैस्तत् सुलक्षितम् ॥ १६
प्रतिष्ठाप्य यथान्यायं पूजालक्षणसंयुतम्।
कलशं स्थापयेत् तस्य वेदिमध्ये तथा द्विजाः ॥ १७
सहिरण्यं सवीजञ्च ब्रह्मभिश्चाभिमन्त्रितम्।
सेचयेच्च ततो लिङ्गं पवित्रैः पञ्चभिः शुभैः ॥ १८
पूजयेच्च यथालाभं ततः सिद्धिमवाप्स्यथ।
समाहिता पूजयध्वं सपुत्त्राः सह बन्धुभिः ॥ १९
सर्व्वे प्राञ्जलयो भूत्वा शूलपाणिं प्रपद्यत।
ततो द्रक्ष्यथ देवेशं दुर्द्दर्शमकृतात्मभिः ॥ २०
यं दृष्ट्वा सर्व्वमज्ञानमधर्म्मश्च प्रणश्यति।
ततः प्रदक्षिणं कृत्वा ब्रह्माणममितौजसम् ॥ २१
सम्प्रस्थिता वनौकास्ते देवदारुवनं ततः।
आराधयितुमारब्धा ब्रह्मणा कथितं यथा ॥ २२

स्थण्डिलेषु विचित्रेषु पर्व्वतानां गुहासु च।
नदीनाञ्च विविक्तेषु पुलिनेषु शुभेषु च ॥ २३
शैवालशोभनाः केचित् केचिदन्तर्जलेशयाः।
केचिदभ्रावकाशास्तु पादाङ्गुष्ठाग्रधिष्ठिताः।
दन्तोलूखलिनस्त्वन्ये अश्मकुट्टास्तथापरे।
स्थानवीरासनास्त्वन्ये मृगचर्य्यारताः परे ॥ २
कालं नयन्ति तपसा पूजया च महाधियः।
एवं संवत्सरे पूर्णे वसन्ते समुपस्थिते ॥ २६
ततस्तेषां प्रसादार्थं भक्तानामनुकम्पया।
देवः कृतयुगे तस्मिन् गिरौ हिमवतः शुभे ॥ २
देवदारुवनं प्राप्तः प्रसन्नः परमेश्वरः।
भस्मपांसूपदिग्धाङ्गो नग्नो विकृतलक्षणः ॥ २
उल्मुकव्यग्रहस्तश्च रक्तपिङ्गललोचनः।
क्वचिच्च हसते रौद्रं क्वचिद्गायति विस्मितः ॥
क्वचिन्नृत्यति शृङ्गारं क्वचिद्रौति मुहुर्मुहुः।
आश्रमे ह्यटते भैक्ष्यं याचते च पुनः पुनः ॥ ३
मायां कृत्वा तथारूपां देवस्तद्वनमागतः।
ततस्ते मुनयः सर्व्वे तुष्टुवुश्च समाहिताः ॥ ३१
अद्भिर्विविधमाल्यैश्च धूपैर्गन्धैस्तथैव च।
सपत्नीका महाभागाः सपुत्त्राः सपरिच्छदाः
मुनयस्ते तथा वाग्भिरीश्वरं चेदमब्रुवन्।
अज्ञानाद्देवदेवेश यदस्माभिरनुष्ठितम् ॥ ३२
कर्म्मणा मनसा वाचा तत् सर्व्वं क्षन्तुमर्हसि।
चरितानि विचित्राणि गुह्यानि गहनानि च ॥
ब्रह्मादीनाञ्च देवानां दुर्विज्ञेयानि ते हर।
अगतिं ते न जानीमो गतिं नैव च नैव च ॥ ३
विश्वेश्वर महादेव योऽसि सोऽसि नमोऽस्तु ते
स्तुवन्ति त्वां महात्मानो देवदेवं महेश्वरम् ॥
नमो भवाय भव्याय भावनायोद्भवाय च।
अनन्तबलवीर्य्याय भूतानां पतये नमः ॥ ३७
संहर्त्त्रे च पिशङ्गाय अव्ययाय व्ययाय च।
गङ्गासलिलधाराय आधाराय गुणात्मने ॥ ३
त्र्यम्बकाय त्रिनेत्राय त्रिशूलवरधारिणे।
कन्दर्पाय हुताशाय नमोऽस्तु परमात्मने ॥ ३
शङ्कराय वृषाङ्काय गणानां पतये नमः।
दण्डहस्ताय कालाय पाशहस्ताय वै नमः ॥ ४
वेदमन्त्रप्रधानाय शतजिह्वाय वै नमः।

भूतं भव्यं भविष्यच्च स्थावरं जङ्गमञ्च यत् ॥ ४१
तव देहात् समुत्पन्नं देव सर्व्वमिदं जगत्।
पासि हंसि च भद्रं ते प्रसीद भगवंस्ततः ॥ ४२
अज्ञानाद्यदि विज्ञानाद्यत् किञ्चित् कुरुते नरः।
तत् सर्व्वं भगवानेव कुरुते योगमायया ॥ ४३
एवं स्तुत्वा तु मुनयः प्रहृष्टैरन्तरात्मभिः।
याचन्त तपसा युक्ताः पश्यामस्त्वां यथा पुरा ॥ ४४
ततो देवः प्रसन्नात्मा स्वमेवास्थाय शङ्करः।
रूपं त्र्यक्षञ्च सन्द्रष्टुं दिव्यं चक्षुरदात् प्रभुः ॥ ४५
लब्धदृष्ट्या तया दृष्ट्वा देवदेवं त्रियम्बकम्।
पुनस्तुष्टुवुरीशानं देवदारुवनौकसः ॥ ४६

इति श्रीलैङ्गे महापुराणे एक-
त्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः।

ऋषय ऊचुः।

नमो दिग्वाससे नित्यं कृतान्ताय त्रिशूलिने।
विकटाय करालाय करालवदनाय च ॥ १
अरूपाय सुरूपाय विश्वरूपाय ते नमः।
कटङ्कटाय रुद्राय स्वाहाकाराय वै नमः ॥ २
सर्व्वप्रणतदेहाय स्वयञ्च प्रणतात्मने।
नित्यं नीलशिखण्डाय श्रीकण्ठाय नमो नमः ॥ ३
नीलकण्ठाय देवाय चिताभस्माङ्गधारिणे।
त्वं ब्रह्मा सर्व्वदेवानां रुद्राणां नीललोहितः ॥ ४
आत्मा च सर्व्वभूतानां सांख्यैः पुरुष उच्यते।
पर्व्वतानां महामेरुर्नक्षत्राणाञ्च चन्द्रमाः ॥ ५
ऋषीणाञ्च वशिष्ठस्त्वं देवानां वासवस्तथा।
ओङ्कारः सर्व्ववेदानां श्रेष्ठं साम च सामसु ॥ ६
आरण्यानां पशूनाञ्च सिंहस्त्वं परमेश्वरः।
ग्राम्याणामृषभश्चासि भगवान् लोकपूजितः ॥ ७
सर्व्वथा वर्त्तमानोऽपि यो यो भावो भविष्यति।
त्वामेव तत्र पश्यामो ब्रह्मणा कथितं यथा ॥ ८
कामः क्रोधश्च लोभश्च विषादो मद एव च।
एतदिच्छामहे बोद्धुं प्रसीद परमेश्वर ॥ ९
महासंहरणे प्राप्ते त्वया देव कृतात्मना।
करं ललाटे संविध्य वह्निरुत्पादितस्त्वया ॥ १०
तेनाग्निना तदा लोका अर्च्चिर्भिः सर्व्वतो वृताः।
तस्मादग्निसमा ह्येते बहवो विकृताग्नयः ॥ ११
कामः क्रोधश्च लोभश्च मोहो दम्भ उपद्रवः।
यानि चान्यानि भूतानि स्थावराणि चराणि च ॥ १२
दह्यन्ते प्राणिनस्ते तु त्वत्समुत्थेन वह्निना।
अस्माकं दह्यमानानां त्राता भव सुरेश्वर ॥ १३
त्वञ्च लोकहितार्थाय भूतानि परिषिञ्चसि।
महेश्वर महाभाग प्रभो शुभनिरीक्षक ॥ १४
आज्ञापय वयं नाथ कर्त्तारो वचनं तव।
भूतकोटिसहस्रेषु रूपकोटिशतेषु च ॥ १५
अन्तं गन्तुं न शक्ताः स्म देवदेव नमोऽस्तु ते ॥ १६

इति श्रीलैङ्गे महापुराणे
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः।

नन्द्युवाच।

ततस्तुतोष भगवाननुगृह्य महेश्वरः।
स्तुतिं श्रुत्वा स्तुतस्तेषामिदं वचनमब्रवीत् ॥ १
यः पठेच्छृणुयाद्वापि युष्माभिः कीर्त्तितं स्तवम्।
श्रावयेद्वा द्विजान् विप्रो गाणपत्यमवाप्नुयात् ॥ २
वक्ष्यामि वो हितं पुण्यं भक्तानां मुनिपुङ्गवाः।
स्त्रीलिङ्गमखिलं देवी प्रकृतिर्मम देहजा ॥ ३
पुंलिङ्गं पुरुषो विप्रा मम देहसमुद्भवः।
उभाभ्यामेव वै सृष्टिर्मम विप्रा न संशयः ॥ ४
न निन्देद्यतिनं तस्माद्दिग्वाससमनुत्तमम्।
बालोन्मत्तविचेष्टन्तु मत्परं ब्रह्मवादिनम् ॥ ५
ये हि मां भस्मनिरता भस्मना दग्धकिल्बिषाः।
यथोक्तकारिणो दान्ता विप्रा ध्यानपरायणाः ॥ ६
महादेवपरा नित्यं चरन्तो ह्यूर्द्ध्वरेतसः।
अर्च्चयन्ति महादेवं वाङ्मनःकायसंयताः ॥ ७
रुद्रलोकमनुप्राप्य न निवर्त्तन्ति ते पुनः।
तस्मादेतद्व्रतं दिव्यमव्यक्तं व्यक्तलिङ्गिनः ॥ ८
भस्मव्रताश्च मुण्डाश्च व्रतिनो विश्वरूपिणः।
न तान् परिवदेद्विद्वान् न चैतान् नाभिलङ्घयेत् ॥ ९
न हसेन्नाप्रियं ब्रूयादमुत्रेह हितार्थवान्।
यस्तान् निन्दति मूढात्मा महादेवं स निन्दति ॥ १०

यश्चैतान् पूजयेन्नित्यं स पूजयति शङ्करम् ।
एवमेष महादेवो लोकानां हितकाम्यया ॥ ११
युगे युगे महायोगी क्रीडते भस्मगुण्ठितः ।
एवं चरत भद्रं वस्ततः सिद्धिमवाप्स्यथ ॥ १२
अतुलमिह महाभयप्रणाशहेतुं
शिवकथितं परमं पदं विदित्वा ।
व्यपगतभवलोभमोहचित्ताः
प्रणिपतिताः सहसा शिरोभिरुग्रम् ॥ १३
ततः प्रमुदिता विप्राः श्रुत्वैवं कथितं तदा ।
गन्धोदकैः सुशुद्धैश्च कुशपुष्पविमिश्रितैः ॥ १४
स्नापयन्ति महाकुम्भैरद्भिरेव महेश्वरम् ।
गायन्ति विविधैर्गुह्यैर्हूङ्कारैश्चापि सुस्वरैः ॥ १५
नमो देवाधिदेवाय महादेवाय वै नमः ।
अर्द्धनारीशरीराय सांख्ययोगप्रवर्त्तिने ॥ १६
मेघवाहनकृष्णाय गजचर्म्मनिवासिने ।
कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ॥ १७
सुरचितसुविचित्रकुण्डलाय
सुरचितमाल्यविभूषणाय तुभ्यम् ।
मृगपतिवरचर्म्मवाससे च
प्रथितयशसे नमोऽस्तु शङ्कराय ॥ १८
ततस्तान् स मुनीन् प्रीतः प्रत्युवाच महेश्वरः ।
प्रीतोऽस्मि तपसा युष्मान् वरं वृणुत सुव्रताः ॥ १९
ततस्ते मुनयः सर्व्वे प्रणिपत्य महेश्वरम् ।
भृग्वङ्गिरा वशिष्ठश्च विश्वामित्रस्तथैव च ॥ २०
गौतमोऽत्रिः सुकेशश्च पुलस्त्यः पुलहः क्रतुः ।
मरीचिः कश्यपः कण्वः संवर्त्तश्च महातपाः ॥ २१
ते प्रणम्य महादेवमिदं वचनमब्रुवन् ॥ २२
भस्मस्नानञ्च नग्नत्वं वामत्वं प्रतिलोमता ।
सेव्यासेव्यत्वमेवञ्च एतदिच्छाम वेदितुम् ॥ २३
ततस्तेषां वचः श्रुत्वा भगवान् परमेश्वरः ।
सस्मितं प्राह सम्प्रेक्ष्य सर्व्वान् मुनिवरांस्तदा ॥२४

इति श्रीलैङ्गे महापुराणे ऋषिवाक्यं नाम
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः ।

भगवानुवाच ।

एतद्व वः सम्प्रवक्ष्यामि कथासर्व्वस्वमद्य व ।
अग्निश्चाहं सोमकर्त्ता सोमश्चाग्निमुपाश्रितः ॥ १
कृतमेतद्वहत्यग्निर्भूयो लोकसमाश्रयात् ।
असकृत् त्वग्निना दग्धं जगत् स्थावरजङ्गमम् ।
भस्मसाद्विहितं सर्व्वं पवित्रमिदमुत्तमम् ।
भस्मना वीर्य्यमास्थाय भूतानि परिषिञ्चति ॥ ३
अग्निकार्य्यञ्च यः कृत्वा करिष्यति त्रियायुषम् ।
भस्मना मम वीर्य्येण मुच्यते सर्व्वकिल्बिषैः ॥ ४
भासतेत्येव यद्भस्म शुभं भावयते च यत् ।
भक्षणात् सर्व्वपापानां भस्मेति परिकीर्त्तितम् ।
उष्मपाः पितरो ज्ञेया देवा वै सोमसम्भवाः ।
अग्नीषोमात्मकं सर्व्वं जगत् स्थावरजङ्गमम् ।
अहमग्निर्महातेजाः सोमश्चैषा महाम्बिका ।
अहमग्निश्च सोमश्च प्रकृत्या पुरुषः स्वयम् ॥ ७
तस्माद्भस्म महाभागा मद्वीर्य्यमिति चोच्यते ।
स्ववीर्य्यं वपुषा चैव धारयामीति वै स्थितिः ॥ ८
तदाप्रभृति लोकेषु रक्षार्थमशुभेषु च ।
भस्मना क्रियते रक्षा सूतिकानां गृहेषु च ॥ ९
भस्मस्नानविशुद्धात्मा जितक्रोधो जितेन्द्रियः ।
मत्समीपं समागम्य न भूयो विनिवर्त्तते ॥ १०
व्रतं पाशुपतं योगं कापिलञ्चैव निर्म्मितम् ।
पूर्व्वं पाशुपतं ह्येतन्निर्म्मितं तदनुत्तमम् ॥ ११
शेषाश्चाश्रमिणः सर्व्वे पश्चात् सृष्टाः स्वयम्भुवा ।
सृष्टिरेषा मया सृष्टा लज्जा-मोह-भयात्मिका ।
नग्ना एव हि जायन्ते देवता मुनयस्तथा ।
ये चान्ये मानवा लोके सर्व्वे जायन्त्यवाससः ॥ १
इन्द्रियैरजितैर्नग्नो दुकूलेनापि संवृतः ।
तैरेव संवृतैर्गुप्तो न वस्त्रं कारणं स्मृतम् ॥ १४
क्षमा धृतिरहिंसा च वैराग्यञ्चैव सर्व्वशः ।
तुल्यौ मानावमानौ च तदावरणमुत्तमम् ॥ १५
भस्मस्नानेन दिग्धाङ्गो ध्यायते मनसा भवम् ।
यद्यकार्य्यसहस्राणि कृत्वा यः स्नाति भस्मना ॥ १
तत् सर्व्वं दहते भस्म यथाग्निस्तेजसा वनम् ।
तस्माद्यत्नपरो भूत्वा त्रिकालमपि यः सदा ॥ १७

भस्मना कुरुते स्नानं गाणपत्यं स गच्छति।
समाहृत्य व्रतान् सर्व्वान् गृहीत्वा व्रतमुत्तमम् ॥ १८
ध्यायन्ति ये महादेवं लीलासद्भावभाविताः।
उत्तरेणार्य्यं पन्थानं तेऽमृतत्वमवाप्नुयुः ॥ १९
दक्षिणेन च पन्थानं ये श्मशानानि भेजिरे।
अणिमा गरिमा चैव लघिमा प्राप्तिरेव च ॥ २०
इच्छाकामावसायित्वं तथा प्राकाम्यमेव च।
ईशित्वञ्च वशित्वञ्च अमरत्वञ्च ते गताः ॥ २१
इन्द्रादयस्तथा देवाः कामिकव्रतमास्थिताः।
ऐश्वर्य्यं परमं प्राप्य सर्व्वे प्रथिततेजसः ॥ २२

व्यपगतमदमोहमुक्तराग-
स्तमरजदोषविवर्ज्जितस्वभावः।
परिभवमिदमुत्तमं विदित्वा
पशुपतियोगपरो भवेत् सदैव ॥ २३

इमं पाशुपतं ध्यायन् सर्व्वपापप्रणाशनम्।
यः पठेच्च शुचिर्भूत्वा श्रद्दधानो जितेन्द्रियः ॥ २४
सर्व्वपापविशुद्धात्मा रुद्रलोकं स गच्छति।
ते सर्व्वे मुनयः श्रुत्वा वशिष्ठाद्या द्विजोत्तमाः ॥ २५
भस्मपाण्डुरदिग्धाङ्गा बभूवुर्विगतस्पृहाः।
रुद्रलोकाय कल्पान्ते संस्थिताः शिवतेजसा ॥ २६
तस्मान्न निन्द्याः पूज्याश्च विकृता मलिना अपि।
रूपान्विताश्च विप्रेन्द्राः सदा योगीन्द्रशङ्कया ॥ २७
बहुना किं प्रलापेन भवभक्ता द्विजोत्तमाः।
सम्पूज्याः सर्व्वयत्नेन शिववन्नात्र संशयः ॥ २८
मलिनाश्चैव विप्रेन्द्रा भवभक्ता दृढव्रताः।
दधीचस्तु यथा देवदेवं जित्वा व्यवस्थितः ॥ २९
नारायणं तथा लोके रुद्रभक्त्या न संशयः।
तस्मात् सर्व्वप्रयत्नेन भस्मादिग्धतनूरुहाः ॥ ३०
जटिनो मुण्डिनश्चैव नग्ना नानाप्रकारिणः।
सम्पूज्याः शिववन्नित्यं मनसा कर्म्मणा गिरा ॥ ३१

इति श्रीलैङ्गे महापुराणे चतुस्त्रिंशोऽध्यायः ॥३४॥

---

## पञ्चत्रिंशोऽध्यायः।

सनत्कुमार उवाच।

कथं जघान राजानं क्षुपं पादेन सुव्रत।
दधीचः समरे जित्वा देवदेवं जनार्द्दनम् ॥ १
वज्रास्थित्वं कथं लेभे महादेवान्महातपाः।
वक्तुमर्हसि शैलादे जितो मृत्युस्त्वया यथा ॥ २

शैलादिरुवाच।

ब्रह्मपुत्रो महातेजा राजा क्षुप इति स्मृतः।
अभून्मित्रो दधीचस्य मुनीन्द्रस्य जनेश्वरः ॥ ३
चिरात् तयोः प्रसङ्गाद्वै वादः क्षुप-दधीचयोः।
अभवत् क्षत्रियश्रेष्ठो विप्र एवेति विश्रुतः ॥ ४
अष्टानां लोकपालानां वपुर्धारयते नृपः।
तस्मादिन्द्रो ह्यहं वह्निर्यमश्च निरृतिस्तथा ॥ ५
वरुणश्चैव वायुश्च सोमो धनद एव च।
ईश्वरोऽहं न सन्देहो नावमन्तव्य एव च ॥ ६
महती देवता या सा महतश्चापि सुव्रत।
तस्मात् त्वया महाभाग च्यावनेय सदा ह्यहम् ॥ ७
नावमन्तव्य एवेह पूजनीयश्च सर्व्वथा।
श्रुत्वा तथा मतं तस्य क्षुपस्य मुनिसत्तमः ॥ ८
दधीचश्चावनिश्चोग्रो गौरवादात्मनो द्विजः।
अताडयत् क्षुपं मूर्द्ध्नि दधीचो वाममुष्टिना।
चिच्छेद वज्रेण च तं दधीचं बलवान् क्षुपः ॥ ९
ब्रह्मलोके पुरा सो हि ब्रह्मणः क्षुतसम्भवः।
लब्धं वज्रञ्च कार्य्यार्थं वज्रिणा चोदितः प्रभुः ॥ १०
स्वेच्छयैव नरो भूत्वा नरपालो बभूव सः।
तस्माद्राजा स विप्रेन्द्रमजयद् महाबलः ॥ ११
यथा वज्रधरः श्रीमान् बलवांस्तमसान्वितः
पपात भूमौ निहतो वज्रेण द्विजपुङ्गवः ॥ १२
सस्मार च तदा तत्र दुःखाद्द भार्गवं मुनिम्।
शुक्रोऽपि सन्धयामास ताडितं कुलिशेन तम् ॥ १३
योगादेत्य दधीचस्य देहं देहभृतां वरः।
सन्धाय पूर्व्ववद्देहं दधीचस्याह भार्गवः ॥ १४
भो दधीच महाभाग देवदेवमुमापतिम्।
सम्पूज्य पूज्यं ब्रह्माद्यैर्देवदेवं निरञ्जनम् ॥ १५
अवध्यो भव विप्रर्षे प्रसादात् त्र्यम्बकस्य तु।
मृतसञ्जीवनं तस्माल्लब्धमेतन्मया द्विज ॥ १६
नास्ति मृत्युभयं शम्भोर्भक्तानामिह सर्व्वतः।
मृतसञ्जीवनञ्चापि शैवमद्य वदामि ते ॥ १७
त्रियम्बकं यजामहे त्रैलोक्यपितरं प्रभुम्।
त्रिमण्डलस्य पितरं त्रिगुणस्य महेश्वरम् ॥ १८
त्रितत्त्वस्य त्रिवह्नेश्च त्रिधाभूतस्य सर्व्वतः।

त्रिविदस्य महादेवं सुगन्धिं पुष्टिवर्द्धनम् ॥ १९
सर्व्वभूतेषु सर्व्वत्र त्रिगुणे प्रकृतौ तथा ।
इन्द्रियेषु तथान्येषु देवेषु च गणेषु च ॥ २०
पुष्पेषु गन्धवत् सूक्ष्मः सुगन्धिः परमेश्वरः ।
पुष्टिश्च प्रकृतिर्यस्मात् पुरुषस्य द्विजोत्तम ॥ २१
महदादिविशेषान्त-विकल्पस्यापि सुव्रत ।
विष्णोः पितामहस्यापि मुनीनाञ्च महामुने ॥ २२
इन्द्रस्यापि च देवानां तस्माद्वै पुष्टिवर्द्धनः ।
तं देवममृतं रुद्रं कर्म्मणा तपसा तथा ॥ २३
स्वाध्यायेन च योगेन ध्यानेन च यजामहे ।
स येनानेन मृत्योर्यान्मृत्युपाशाद्भवः स्वयम् ॥ २४
बन्धमोक्षकरो यस्मादुर्व्वारुकमिव प्रभुः ।
मृतसञ्जीवनो मन्त्रो मया लब्धस्तु शङ्करात् ॥ २५
जप्त्वा हुत्वाभिमन्त्र्यैवं जलं पीत्वा दिवानिशम् ।
लिङ्गस्य सन्निधौ ध्यात्वा नास्ति मृत्युभयं द्विज ॥२६
तस्य तद्वचनं श्रुत्वा तपसाराध्य शङ्करम् ।
वज्रास्थित्वमवध्यत्वमदीनत्वञ्च लब्धवान् ॥ २७
एवमाराध्य देवेशं दधीचो मुनिसत्तमः ।
प्राप्यावध्यत्वमन्यैश्च वज्रास्थित्वं प्रयत्नतः ॥ २८
अताड़यच्च राजेन्द्रं पादमूलेन मूर्द्धनि ।
क्षुपो दधीचं वज्रेण जघानोरसि च प्रभुः ॥ २९
नाभून्नाशाय तद्वज्रं दधीचस्य महात्मनः ।
प्रभावात् परमेशस्य वज्रबद्धशरीरिणः ॥ ३०

दृष्ट्वाप्यवध्यत्वमदीनताञ्च
क्षुपो दधीचस्य तदा प्रभावम् ।
आराधयामास हरिं मुकुन्द-
मिन्द्रानुजं प्रेक्ष्य तदम्बुजाक्षम् ॥ ३१

इति श्रीलैङ्गे महापुराणे पञ्चत्रिंशोऽध्यायः ॥३५॥

---

## षट्त्रिंशोऽध्यायः ।

नन्द्युवाच ।

पूजया तस्य सन्तुष्टो भगवान् पुरुषोत्तमः ।
श्रीभूमिसहितः श्रीमान् शङ्खचक्रगदाधरः ॥१
किरीटी पद्महस्तश्च सर्व्वाभरणभूषितः ।
पीताम्बरश्च भगवान् देवैर्दैत्यैश्च संवृतः ॥ २
प्रददौ दर्शनं तस्य दिव्यं वै गरुड़ध्वजः ।
दिव्येन दर्शनेनैव दृष्ट्वा देवं जनार्द्दनम् ॥ ३
तुष्टाव वाग्भिरिष्टाभिः प्रणम्य गरुड़ध्वजम् ।
त्वमादिस्त्वमनादिश्च प्रकृतिस्त्वं जनार्द्दनः ॥ ४
पुरुषस्त्वं जगन्नाथो विष्णुर्विश्वेश्वरो भवान् ।
योऽयं ब्रह्मापि पुरुषो विश्वमूर्त्तिः पितामहः ॥ ५
तत्त्वमाद्यं भवानेव परं ज्योतिर्जनार्द्दन ।
परमात्मा परं धाम श्रीपते भूपते प्रभो ॥ ६
त्वत्क्रोधसम्भवो रुद्रस्तमसा च समावृतः ।
त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥ ७
त्वत्प्रसादात् स्वयं विष्णुः सत्त्वेन पुरुषोत्तमः ।
कालमूर्त्ते हरे विष्णो नारायण जगन्मय ॥ ८
महांस्तथा च भूतादिस्तन्मात्राणीन्द्रियाणि च ।
त्वयैवाधिष्ठितान्येव विश्वमूर्त्ते महेश्वर ॥ ९
महादेव जगन्नाथ पितामह जगद्गुरो ।
प्रसीद देवदेवेश प्रसीद परमेश्वर ॥ १०
प्रसीद त्वं जगन्नाथ शरण्यं शरणं गतः ।
वैकुण्ठ शौरे सर्व्वज्ञ वासुदेव महाभुजः ॥ ११
सङ्कर्षण महाभाग प्रद्युम्न पुरुषोत्तम ।
अनिरुद्ध महाविष्णो सदाविष्णो नमोऽस्तु ते ॥ १२
विष्णो तवासनं दिव्यमव्यक्तं मध्यतो विभुः ।
सहस्रफणसंयुक्तस्तमोमूर्त्तिर्धराधरः ॥ १३
अधश्च धर्म्मो देवेश ज्ञानं वैराग्यमेव च ।
ऐश्वर्य्यमासनस्यास्य पादरूपेण सुव्रत ॥ १४
सप्तपातालपादस्त्वं धराजघनमेव च ।
वासांसि सागराः सप्त दिशश्चैव महाभुजाः ॥ १५
द्यौर्मूर्द्धा ते विभो नाभिः खं वायुर्नासिकां गतः ।
नेत्रे सोमश्च सूर्य्यश्च केशा वै पुष्करादयः ॥ १६
नक्षत्रतारकाद्यौश्च ग्रैवेयकविभूषणम् ।
कथं स्तोष्यामि देवेशं पूज्यश्च पुरुषोत्तमः ॥ १७
श्रद्धया च कृतं दिव्यं यच्छ्रुतं यच्च कीर्त्तितम् ।
यदिष्टं तत् क्षमस्वेश नारायण नमोऽस्तु ते ॥ १८

शैलादिरुवाच ।

इदन्तु वैष्णवं स्तोत्रं सर्व्वपापप्रणाशनम् ।
यः पठेच्छृणुयाद्वापि क्षुपेण परिकीर्त्तितम् ॥ १९
श्रावयेद्वा द्विजान् भक्त्या विष्णुलोकं स गच्छति ॥
सम्पूज्य चैवं त्रिदशेश्वराद्यः
स्तुत्वा स्तुतं देवमजेयमीशम् ।

विज्ञापयामास निरीक्ष्य भक्त्या
जनार्द्दनाय प्रणिपत्य मूर्द्ध्ना ॥ २१

राजोवाच।

भगवन् ब्राह्मणः कश्चिद्दधीच इति विश्रुतः।
धर्म्मवेत्ता विनीतात्मा सखा मम पुराभवत् ॥ २२
अवध्यः सर्व्वदा सर्व्वैः शङ्कराच्चनतत्परः।
सावज्ञं वामपादेन स मां मूर्द्ध्नि सदस्यथ ॥ २३
ताड़यामास देवेश विष्णो विश्व जगत्पते।
उवाच च मदाविष्टो न बिभेमीति सर्व्वतः ॥ २४
जेतुमिच्छामि तं विप्रं दधीचं जगदीश्वरं।
यथा हितं तथा कर्त्तुं त्वमर्हसि जनार्द्दन ॥ २५

शैलादिरुवाच।

ज्ञात्वा सोऽपि दधीचस्य अवध्यत्वं महात्मनः।
सस्मार च महेशस्य प्रभावमतुलं हरिः ॥ २६
एवं स्मृत्वा हरिः प्राह ब्रह्मणः क्षुतसम्भवम्।
विप्राणां नास्ति राजेन्द्र भयमेत्य महेश्वरम् ॥ २७
विशेषाद्रुद्रभक्तानामभयं सर्व्वदा नृप।
नीचानामपि सर्व्वत्र दधीचस्यास्य किं पुनः ॥ २८
तस्मात् तव महाभाग विजयो नास्ति भूपते।
दुःखं करोमि विप्रस्य शापार्थं सस्मरस्य मे ॥ ॥ २९
भविता तस्य शापेन दक्षयज्ञे सुरैः समम्।
विनाशो मम राजेन्द्र पुनरुत्थानमेव च ॥ ३०
तस्मात् समेत्य विप्रेन्द्र सर्व्वयत्नेन भूपते।
करोमि यत्नं राजेन्द्र दधीचविजयाय ते ॥ ३१

शैलादिरुवाच।

श्रुत्वा वाक्यं क्षुपः प्राह तथास्त्विति जनार्द्दनम्।
भगवानपि विप्रस्य दधीचस्याश्रमं ययौ ॥ ३२
आस्थाय रूपं विप्रस्य भगवान् भक्तवत्सलः।
दधीचमाह ब्रह्मर्षिमभिवन्द्य जगद्गुरुः ॥ ३३

श्रीभगवानुवाच।

भो भो दधीच ब्रह्मर्षे भवार्च्चनरताव्यय।
वरमेकं वृणे त्वत्तस्तं भवान् दातुमर्हति ॥ ३४
याचितो देवदेवेन दधीचः प्राह विष्णुना।
ज्ञातं तवेप्सितं सर्व्वं न बिभेमि तवाप्यहम् ॥ ३५
भवान् विप्रस्य रूपेण आगतोऽसि जनार्द्दन।
भूतं भविष्यं देवेश वर्त्तमानं जनार्द्दन ॥ ३६
ज्ञातं प्रसादाद्रुद्रस्य द्विजत्वं त्यज सुव्रत।
आराधितोऽसि देवेश क्षुपेण मधुसूदन ॥ ३७
जाने तवैनां भगवन् भक्तवत्सलतां हरे।
स्थाने तवैषा भगवन् भक्तवात्सल्यता हरे ॥ ३८
अस्ति चेद्भगवन्भीतिर्भवार्च्चनरतस्य मे।
वक्तुमर्हसि यत्नेन वरदाम्बुजलोचन ॥ ३९
वदामि न मृषा तस्मान्न बिभेमि जनार्द्दन।
न बिभेमि जगत्यस्मिन् देव-दैत्य-द्विजादपि ॥ ४०

नन्द्युवाच।

श्रुत्वा वाक्यं दधीचस्य तदास्थाय जनार्द्दनः।
स्वरूपं सस्मितं प्राह सन्त्यज्य द्विजतां क्षणात् ॥ ४१

श्रीभगवानुवाच।

भयं दधीच सर्व्वत्र नास्त्येव तव सुव्रत।
भवार्च्चनरतो यस्मात्त्वं सर्व्वज्ञ एव च ॥ ४२
बिभेमीति सकृद्वक्तुं त्वमर्हसि नमस्तव।
नियोगान्मम विप्रेन्द्र क्षुपं प्रति सदस्यथ ॥ ४३
एवं श्रुत्वापि तद्वाक्यं सान्त्वं विष्णोर्महामुनिः।
न बिभेमीति तं प्राह दधीचो देवसत्तमम् ॥ ४४
प्रभावाद्देवदेवस्य शम्भोः साक्षात् पिनाकिनः।
सर्व्वस्य शङ्करस्यास्य सर्व्वज्ञस्य महामुनिः ॥ ४५
ततस्तस्य मुनेः श्रुत्वा वचनं कुपितो हरिः।
चक्रमुद्यम्य भगवान् दिधक्षुर्मुनिसत्तमम् ॥ ४६
अभवत् कुण्ठिताग्रं हि विष्णोश्चक्रं सुदर्शनम्।
प्रभावाद्धि दधीचस्य क्षुपस्यैव हि सन्निधौ ॥ ४७
दृष्ट्वा तत् कुण्ठिताग्रं हि चक्रं चक्रिणमाह सः।
दधीचः सस्मितं साक्षात् सदसद्व्यक्तिकारणम् ॥ ४८
भगवन् भवता लब्धं पुरातीव सुदारुणम्।
सुदर्शनमिति ख्यातं चक्रं विष्णो प्रयत्नतः ॥ ४९
भवस्यैतच्छुभं चक्रं न जिघांसति मामिह।
ब्रह्मास्त्राद्यैस्तथान्यैर्हि प्रयत्नं कर्त्तुमर्हसि ॥ ५०

शैलादिरुवाच।

तस्य तद्वचनं श्रुत्वा दृष्ट्वा निर्व्वीर्य्यमायुधम्।
ससर्ज्ज च पुनस्तस्मै सर्व्वास्त्राणि समन्ततः ॥ ५१
चक्रुर्देवास्ततस्तस्य विष्णोः साहाय्यमव्ययाः।
द्विजेनैकेन योद्धुं हि प्रवृत्तस्य महाबलाः ॥ ५२
कुशमुष्टिं तदादाय दधीचः संस्मरन् भवम्।
ससर्ज्ज सर्व्वदेवेभ्यो वज्रास्थिः सर्व्वतो वशी ॥ ५३
दिव्यं त्रिशूलमभवत् कालाग्निसदृशप्रभम्।

हन्धुं देवान् मतिं चक्रे युगान्ताग्निरिवापरः ॥ ५४
इन्द्रनारायणाद्यैश्च देवैस्त्यक्तानि यानि तु ।
आयुधानि समस्तानि प्रणेमुस्त्रिशिखं मुने ॥ ५५
देवाश्च दुद्रुवुः सर्व्वे ध्वस्तवीर्य्या द्विजोत्तम ।
ससर्ज्ज भगवान् विष्णुः स्वदेहात् पुरुषोत्तमः ॥ ५६
आत्मनः सदृशान् दिव्यान् लक्षलक्षायुतान् गणान् ।
तानि सर्व्वाणि सहसा ददाह मुनिसत्तमः ॥ ५७
ततो विस्मयनार्थाय विश्वमूर्त्तिरभूद्धरिः ।
तस्य देहे हरेः साक्षादपश्यद्द्विजसत्तमः ॥ ५८
दधीचो भगवान् विप्रो देवतानां गणान् पृथक् ।
रुद्राणां कोटयश्चैव गणानां कोटयस्तदा ॥ ५९
अण्डानां कोटयश्चैव विश्वमूर्त्तेस्तनौ तदा ।
दृष्ट्वैतदखिलं तत्र च्यावनिर्विस्मितं तदा ॥ ६०
विष्णुमाह जगन्नाथं जगन्मयमजं विभुम् ।
अम्भसाभ्युक्ष्य तं विष्णुं विश्वरूपं महामुनिः ॥ ६१
मायां त्यज महाबाहो प्रतिभासा विचारतः ।
विज्ञानानां सहस्राणि दुर्विज्ञेयानि माधव ॥ ६२
मयि पश्य जगत् सर्व्वं त्वया सार्द्धमनिन्दित ।
ब्रह्माणञ्च तथा रुद्रं दिव्यां दृष्टिं ददामि ते ॥ ६३
इत्युक्त्वा दर्शयामास स्वतनौ निखिलं मुनिः ।
तं प्राह च हरिं देवं सर्व्वदेवभवोद्भवम् ॥ ६४
मायया ह्यनया किंवा मन्त्रशक्त्याथवा प्रभो ।
वस्तुशक्त्याथवा विष्णो ध्यानशक्त्याथवा पुनः ॥ ६५
त्यक्त्वा मायामिमां तस्माद्योद्धुमर्हसि यत्नतः ।
एवं तस्य वचः श्रुत्वा दृष्ट्वा माहात्म्यमद्भुतम् ॥ ६६
देवाश्च दुद्रुवुर्भूयो देवं नारायणञ्च तम् ।
वारयामास निश्चेष्टं पद्मयोनिर्जगद्गुरुः ॥ ६७
निशम्य वचनं तस्य ब्रह्मणस्तेन निर्ज्जितः ।
जगाम भगवान् विष्णुः प्रणिपत्य महामुनिम् ॥ ६८
क्षुपो दुःखातुरो भूत्वा सम्पूज्य च मुनीश्वरम् ।
दधीचमभिवन्द्याशु प्रार्थयामास विक्लवः ॥ ६९
दधीच क्षम्यतां देव मयाज्ञानात् कृतं सखे ।
विष्णुनापि सुरैर्वापि रुद्रभक्तस्य किं तव ॥ ७०
प्रसीद परमेशान दुर्लभा दुर्ज्जनैर्द्विज ।
भक्तिभक्तिमतां श्रेष्ठ मद्विधैः क्षत्रियाधमैः ॥ ७१
श्रुत्वानुगृह्य तं विप्रो दधीचस्तपतां वरः ।
राजानं मुनिशार्दूलः शशाप च सुरोत्तमान् ॥ ७२
रुद्रकोपाग्निना देवाः सदेवेन्द्रा मुनीश्वरैः ।
ध्वस्ता भवन्तु देवेन विष्णुना च समन्विताः ॥ ७३
प्रजापतेर्मखे पुण्ये दक्षस्य सुमहात्मनः ।
एवं शप्त्वा क्षुपं प्रेक्ष्य पुनराह द्विजोत्तमः ॥ ७४
देवैश्च पूज्या राजेन्द्र नृपैश्च विविधैर्गणैः ।
ब्राह्मणा एव राजेन्द्र बलिनः प्रभविष्णवः ॥ ७५
इत्युक्त्वा स्वोटजं विप्रः प्रविवेश महाद्युतिः ।
दधीचमभिवन्द्यैव जगाम स्वं नृपः क्षयम् ॥ ७६
तदेव तीर्थमभवत् स्थानेश्वरमिति स्मृतम् ।
स्थानेश्वरमनुप्राप्य शिवसायुज्यमाप्नुयात् ॥ ७७
कथितस्तव संक्षेपाद्विवादः क्षुब्दधीचयोः ।
प्रभावश्च दधीचस्य भवस्य च महामुने ॥ ७८
य इदं कीर्त्तयेद्दिव्यं विवादं क्षुब्दधीचयोः ।
जित्वापमृत्युं देहान्ते ब्रह्मलोकं प्रयाति सः ॥ ७९
य इदं कीर्त्त्य संग्रामं प्रविशेत् तस्य सर्व्वदा ।
नास्ति मृत्युभयञ्चैव विजयी च भविष्यति ॥ ८०

इति श्रीलैङ्गे महापुराणे क्षुप-दधीचसंवादो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशोऽध्यायः ।

सनत्कुमार उवाच ।

भवान् कथमनुप्राप्तो महादेवमुमापतिम् ।
श्रोतुमिच्छामि तत् सर्व्वं वक्तुमर्हसि मे प्रभो ॥ १

शैलादिरुवाच ।

प्रजाकामः शिलादोऽभूत् पिता मम महामुने ।
सोऽप्यन्धः सुचिरं कालं तपस्तेपे सुदुश्चरम् ॥ २
तपतस्तस्य तपसा सन्तुष्टो वज्रधृक् प्रभुः ।
शिलादमाह तुष्टोऽस्मि वरयस्व वरानिति ॥ ३
ततः प्रणम्य देवेशं सहस्राक्षं सहामरैः ।
प्रोवाच मुनिशार्दूल कृताञ्जलिपुटो हरिम् ॥ ४

शिलाद उवाच ।

भगवन् देवतारिघ्न सहस्राक्ष वरप्रद ।
अयोनिजं मृत्युहीनं पुत्रमिच्छामि सुव्रत ॥ ५

शक्र उवाच ।

पुत्रं दास्यामि विप्रर्षे योनिजं मृत्युसंयुतम् ।
अन्यथा ते न दास्यामि मृत्युहीना न सन्ति वै ॥ ६

न दास्यति सुतं तेऽत्र मृत्युहीनमयोनिजम्।
पितामहोऽपि भगवान् किमुतान्ये महामुने ॥ ७
सोऽपि देवः स्वयं ब्रह्मा मृत्युहीनो न चेश्वरः।
योनिजश्च महातेजाश्चाब्जजः पद्मसम्भवः ॥ ८
महेश्वराङ्गजश्चैव भवान्यास्तनयः प्रभुः।
तस्याप्यायुः समाख्यातं परार्द्धद्वयसम्मितम् ॥ ९
कोटिकोटिसहस्राणि अहर्भूतानि यानि वै।
समतीतानि कल्पानां तावच्छेषाः परत्र ये ॥ १०
तस्मादयोनिजे पुत्रे मृत्युहीने प्रयत्नतः।
परित्यजाशां विप्रेन्द्र महाशात्मसमं सुतम् ॥ ११
शैलादिरुवाच।
तस्य तद्वचनं श्रुत्वा पिता मे लोकविश्रुतः।
शिलाद इति पुण्यात्मा पुनः प्राह शचीपतिम् ॥ १२
शिलाद उवाच।
भगवन्नण्डयोनित्वं पद्मयोनित्वमेव च।
महेश्वराङ्गयोनित्वं श्रुतं वै ब्रह्मणो मया ॥ १३
पुरा महेन्द्रदायादाद्दत्तश्चास्य पूर्व्वजात्।
नारदाद्धि महाबाहो कथमत्राशु नो वद ॥ १४
दाक्षायणी सा दक्षोऽपि देवः पद्मोद्भवात्मजः।
पौत्री कनकगर्भस्य कथं तस्याः सुतो विभुः ॥ १५
शक्र उवाच।
स्थाने संशयितुं विप्र तव वक्ष्यामि कारणम्।
कल्पे तत्पुरुषे वृत्तं ब्रह्मणः परमेष्ठिनः ॥ १६
ससर्ज्ज सकलं ध्यात्वा ब्रह्माणं परमेश्वरः।
जनार्द्दनो जगन्नाथः कल्पे वै मेघवाहने ॥ १७
दिव्यं वर्षसहस्रन्तु मेघो भूत्वाऽवहद्धरम्।
नारायणो महादेवं बहुमानेन सादरम् ॥ १८
दृष्ट्वा भावं महादेवो हरेः स्वात्मनि शङ्करः।
प्रददौ तस्य सकलं स्रष्टुं वै ब्रह्मणा सह ॥ १९
तदा तं कल्पमाद्यं वै मेघवाहनसंज्ञया।
हिरण्यगर्भस्तं दृष्ट्वा तस्य देहोद्भवस्तदा ॥ २०
जनार्द्दनसुतः प्राह तपसा प्राप्य शङ्करम्।
तव वामाङ्गजो विष्णुर्द्दक्षिणाङ्गभवो ह्यहम् ॥ २१
मया सह जगत् सर्व्वं तथाप्यसृजदच्युतः।
जगन्मयोऽवहद्यस्मान्मेघो भूत्वा दिवानिशम् ॥ २२
भवन्तमवहद्विष्णुर्द्देवदेवं जगद्गुरुम्।
नारायणादपि विभो भक्तोऽहं तव शङ्कर ॥ २३
प्रसीद देहि मे सर्व्वं सर्व्वात्मत्वं तव प्रभो।
तदाथ लब्ध्वा भगवान् भवात् सर्व्वात्मतां क्षणात् ॥ २४
त्वरमाणोऽथ सङ्गम्य ददर्श पुरुषोत्तमम्।
एकार्णवालये शुभ्रे त्वन्धकारे सुदारुणे ॥ २५
हेमरत्नचिते दिव्ये मनसा च विनिर्म्मिते।
दुष्प्राप्ये दुर्ज्जनैः पुण्यैः सनकाद्यैरगोचरे ॥ २६
जगदावासहृदयं ददर्श पुरुषन्त्वजः।
अनन्तभोगशय्यायां शायिनं पङ्कजेक्षणम् ॥ २७
शङ्ख-चक्र-गदा-पद्मं धारयन्तं चतुर्भुजम्।
सर्व्वाभरणसंयुक्तं शशिमण्डलसन्निभम् ॥ २८
श्रीवत्सलक्षणं देवं प्रसन्नास्यं जनार्द्दनम्।
रमामृदुकराम्भोज-स्पर्शरक्तपदाम्बुजम् ॥ २९
परमात्मानमीशानं तमसा कालरूपिणम्।
रजसा सर्व्वलोकानां सर्गलीलाप्रवर्त्तकम् ॥ ३०
सत्त्वेन सर्व्वभूतानां स्थापकं परमेश्वरम्।
सर्व्वात्मानं महात्मानं परमात्मानमीश्वरम् ॥ ३१
क्षीरार्णवेऽमृतमये शायिनं योगनिद्रया।
तं दृष्ट्वा प्राह वै ब्रह्मा भगवन्तं जनार्द्दनम् ॥ ३२
ग्रसामि त्वां प्रसादेन यथापूर्व्वं भवानहम्।
स्मयमानस्तु भगवान् प्रतिबुध्य पितामहम् ॥ ३३
उदैक्षत महाबाहुः स्मितमीषच्चकार सः।
विविश चाब्जजं तन्तु ग्रस्तस्तेन महात्मना ॥ ३४
ततस्तञ्चाब्जजब्रह्मा भ्रुवोमध्येन चाच्युतम्।
सृष्टस्तेन हरिः प्रेक्ष्य स्थितस्तस्याथ सन्निधौ ॥ ३५
एतस्मिन्नन्तरे रुद्रः सर्व्वदेवभवोद्भवः।
विकृतं रूपमास्थाय पुरा दत्तवरस्तयोः ॥ ३६
आगच्छद्यत्र वै विष्णुर्विश्वात्मा परमेश्वरः।
प्रसादमतुलं कर्त्तुं ब्रह्मणश्च हरेः प्रभुः ॥ ३७
ततः समेत्य तौ देवौ सर्व्वदेवभवोद्भवम्।
अपश्यतां भवं देवं कालाग्निसदृशं प्रभुम् ॥ ३८
तौ तं तुष्टुवतुश्चैव शर्व्वमुग्रं कपर्द्दिनम्।
प्रणेमतुश्च वरदं बहुमानेन दूरतः ॥ ३९
भवोऽपि भगवान् देवमनुगृह्य पितामहम्।
जनार्द्दनं जगन्नाथस्तत्रैवान्तरधीयत ॥ ४०

इति श्रीलैङ्गे महापुराणे ब्रह्मणो वरप्रदानं नाम सप्तत्रिंशोऽध्यायः ॥३७॥

## अष्टत्रिंशोऽध्यायः।

शैलादिरुवाच।

गते महेश्वरे देवे तमुद्दिश्य जनार्द्दनः।
प्रणम्य भगवान् प्राह पद्मयोनिमजोद्भवः॥ १

श्रीविष्णुरुवाच।

परमेशो जगन्नाथः शङ्करस्त्वेष सर्व्वगः।
आवयोरखिलस्येशः शरणञ्च महेश्वरः॥ २
अहं वामाङ्गजो ब्रह्मन् शङ्करस्य महात्मनः।
भवान् भवस्य देवस्य दक्षिणाङ्गभवः स्वयम्॥ ३
मामाहुर्ऋषयः प्रेक्ष्य प्रधानं प्रकृतिं तथा।
अव्यक्तमजमित्येवं भवन्तं पुरुषन्त्विति॥ ४
एवमाहुर्महादेवमावयोरपि कारणम्।
ईशं सर्व्वस्य जगतः प्रभुमव्ययमीश्वरम्॥ ५
सोऽपि तस्यामरेशस्य वचनाद्वारिजोद्भवः।
वरेण्यं वरदं रुद्रमस्तुवत् प्रणनाम च॥ ६
अथाश्मना प्लुतां भूमिं समादाय जनार्द्दनः।
पूर्व्ववत् स्थापयामास वाराहं रूपमास्थितः॥ ७
नदी-नद-समुद्रांश्च पूर्व्ववच्चाकरोत् प्रभुः।
कृत्वा चोर्व्वीं प्रयत्नेन निम्नोन्नतविवर्ज्जिताम्॥ ८
धरायां सोऽचिनोत् सर्व्वान् भूधरान् भूधराकृतिः।
भूराद्यांश्चतुरो लोकान् कल्पयामास पूर्व्ववत्॥ ९
स्रष्टुञ्च भगवान् चक्रे मतिं मतिमतां वरः।
मुख्यञ्च तैर्य्यग्योन्यञ्च दैविकं मानुषं तथा॥ १०
विभुश्चानुग्रहं तत्र कौमारकमहीनधीः।
पुरस्तादसृजद्देवः सनन्दं सनकं तथा॥ ११
सनातनं सतां श्रेष्ठं नैष्कर्म्म्येण गताः परम्।
मरीचिभृग्वङ्गिरसं पुलस्त्यं पुलहं क्रतुम्॥ १२
दक्षमत्रिं वशिष्ठञ्च सोऽसृजद्योगविद्यया।
सङ्कल्पञ्चैव धर्म्मञ्च ह्यधर्म्मं भगवान् प्रभुः॥ १३
द्वादशैव प्रजास्त्वेता ब्रह्मणोऽव्यक्तजन्मनः।
ऋभुं सनत्कुमारञ्च ससर्ज्जादौ सनातनः॥ १४
तौ चोर्द्धरेतसौ दिव्यौ चाग्रजौ ब्रह्मवादिनौ।
कुमारौ ब्रह्मणस्तुल्यौ सर्व्वज्ञौ सर्व्वभाविणौ॥ १५
एवं मुख्यादिकान् सृष्ट्वा पद्मयोनिः शिलाशन।
युगधर्म्मानशेषांश्च कल्पयामास विश्वसृक्॥ १६
इति श्रीलैङ्गे पुराणेऽष्टत्रिंशोऽध्यायः॥ ३८॥

## एकोनचत्वारिंशोऽध्यायः।

शैलादिरुवाच।

श्रुत्वा शक्रेण कथितं पिता मम महामुनिः।
पुनः पप्रच्छ देवेशं प्रणम्य रचिताञ्जलिः॥ १

शिलाद उवाच।

भगवन् शक्र सर्व्वज्ञ देवदेवनमस्कृत।
शचीपते जगन्नाथ सहस्राक्ष महेश्वर॥ २
युगधर्म्मान् कथं चक्रे भगवान् पद्मसम्भवः।
वक्तुमर्हसि मे सर्व्वं साम्प्रतं प्रणताय मे॥ ३

शैलादिरुवाच।

तस्य तद्वचनं श्रुत्वा शिलादस्य महात्मनः।
व्याजहार यथादृष्टं युगधर्म्मं सुविस्तरम्॥ ४

शक्र उवाच।

आद्यं कृतयुगं विद्धि ततस्त्रेतायुगं मुने।
द्वापरं तिष्यमित्येते चत्वारस्तु समासतः॥ ५
सत्त्वं कृतं रजस्त्रेता द्वापरञ्च रजस्तमः।
कलिस्तमश्च विज्ञेयं युगवृत्तिर्युगेषु च॥ ६
ध्यानं परं कृतयुगे त्रेतायां यज्ञ उच्यते।
भजनं द्वापरे शुद्धं दानमेव कलौ युगे॥ ७
चत्वारि च सहस्राणि वर्षाणां तत् कृतं युगम्।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः॥ ८
चत्वारि च सहस्राणि मानुषाणि शिलाशन।
आयुः कृतयुगे विद्धि प्रजानामिह सुव्रत॥ ९
ततः कृतयुगे तस्मिन् सन्ध्यांशे च गते तु वै।
पादावशिष्टो भवति युगधर्म्मस्तु सर्व्वतः॥ १०
चतुर्भागैकहीनन्तु त्रेतायुगमनुत्तमम्।
कृतार्द्धं द्वापरं विद्धि तदर्द्धं तिष्यमुच्यते॥ ११
त्रिशती द्विशती सन्ध्या तथा चैकशती मुने।
सन्ध्यांशकं तथाप्येवं कल्पेष्वेवं युगे युगे॥ १२
आद्ये कृतयुगे धर्म्मश्चतुष्पादः सनातनः।
त्रेतायुगे त्रिपादस्तु द्विपादो द्वापरे स्थितः॥ १३
त्रिपादहीनस्तिष्ये तु सत्तामात्रेण धिष्ठितः।
कृते तु मिथुनोत्पत्तिर्वृत्तिः साक्षाद्रसोल्लसा॥ १४
प्रजास्तृप्ताः सदा सर्व्वाः सर्व्वानन्दाश्च भोगिनः।
अधमोत्तमता तासां न विशेषाः प्रजाः शुभाः॥ १५
तुल्यमायुः सुखं रूपं तासां तस्मिन् कृते युगे।

तासां प्रीतिन च द्वन्द्व न द्वेषो नास्ति च क्रमः ॥ १६
ऊर्व्वतोदधिवासिन्यो ह्यनिकेताश्रयास्तु ताः।
विशोकाः सत्त्वबहुला एकान्तबहुलास्तथा ॥ १७
ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः।
अप्रवृत्तिः कृतयुगे कर्म्मणोः शुभ-पापयोः ॥ १८
वर्णाश्रमव्यवस्था च तदासीन्न च सङ्करः।
रसोल्लासः कालयोगात् त्रेताख्ये नश्यते द्विज ॥ १९
तस्यां सिद्धौ प्रनष्टायां अन्या सिद्धिः प्रजायते।
अपां सौक्ष्म्ये प्रतिगते तदा मेघात्मना तु व ॥ २०
मेघेभ्यः स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्जनम्।
सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले ॥ २१
प्रादुरासंस्तदा तासां वृक्षास्ते गृहसंज्ञिताः।
सर्व्वप्रत्युपभोगस्तु तासां तेभ्यः प्रजायते ॥ २२
वर्त्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः।
ततः कालेन महता तासामेव विपर्य्ययात् ॥ २३
रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत्।
विपर्य्ययेण तासान्तु तेन तत्कालभाविना ॥ २४
प्रणश्यन्ति ततः सर्व्वे वृक्षास्ते गृहसंज्ञिताः।
ततस्तेषु प्रनष्टेषु विभ्रान्ता मैथुनोद्भवाः ॥ २५
अपि ध्यायन्ति तां सिद्धिं सत्याभिध्यायिनस्तदा।
प्रादुर्ब्बभूवुस्तासान्तु वृक्षास्ते गृहसंज्ञिताः ॥ २६
वस्त्राणि ते प्रसूयन्ते फलान्याभरणानि च।
तेष्वेव जायते तासां गन्ध-वर्ण-रसान्वितम् ॥ २७
अमाक्षिकं महावीर्य्यं पुटके पुटके मधु।
तेन ता वर्त्तयन्ति स्म सुखमायुः सदैव हि ॥ २८
हृष्टपुष्टास्तया सिद्धा प्रजा वै विगतज्वराः।
ततः कालान्तरेणैव पुनर्लोभावृतास्तु ताः ॥ २९
वृक्षांस्तान् पर्य्यगृह्णन्त मधु वा माक्षिकं बलात्।
तासां तेनोपचारेण पुनर्लोभकृतेन वै ॥ ३०
प्रनष्टा मधुना सार्द्धं कल्पवृक्षाः क्वचित् क्वचित्।
तस्यामेवाल्पशिष्टायां सिद्धां कालवशात् तदा ॥३१
आवर्त्तनात् तु त्रेतायां द्वन्द्वान्यभ्युत्थितानि वै।
शीतवर्षातपैस्तीव्रैस्ततस्ता दुःखिता भृशम् ॥ ३२
द्वन्द्वैः सम्पीड्यमानाश्च चक्रुरावरणानि तु।
कृतद्वन्द्वप्रतीघाताः केतनानि गिरौ ततः ॥ ३३
पूर्व्वं निकामचारास्ता ह्यनिकेता अथावसन्।
यथायोगं यथाप्रीति निकेतेष्ववसन् पुनः ॥ ३४
कृत्वा द्वन्द्वोपघातांस्तान् वृत्त्युपायमचिन्तयन्।
नष्टेषु मधुना सार्द्धं कल्पवृक्षेषु वै तदा ॥ ३५
विषादव्याकुलास्ता वै प्रजास्तृष्णाक्षुधार्द्दिताः।
ततः प्रादुर्ब्बभौ तासां सिद्धिस्त्रेतायुगे पुनः ॥ ३६
वार्त्तायाः साधिकाप्यन्या वृष्टिस्तासां निकामतः।
तासां वृष्ट्युदकादीनि ह्यभवन्निम्नगानि तु ॥ ३७
अभवन् वृष्टिसन्तत्या स्रोतःस्थानानि निम्नगाः।
एवं नद्यः प्रवृत्तास्तु द्वितीये वृष्टिसर्ज्जने ॥ ३८
ये पुनस्तदपां स्तोकाः पतिताः पृथिवीतले।
अपां भूमेश्च संयोगादोषध्यस्तास्तदाभवन् ॥ ३९
अफालकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्द्दश।
ऋतुपुष्पफलाश्चैव वृक्षगुल्माश्च जज्ञिरे ॥ ४०
प्रादुर्भूतानि चैतानि वृक्षजात्यौषधानि च।
तेनौषधेन वर्त्तन्ते प्रजास्त्रेतायुगे तदा ॥ ४१
ततः पुनरभूत् तासां रागो लोभश्च सर्व्वशः।
अवश्यम्भाविनार्थेन त्रेतायुगवशेन च ॥ ४२
ततस्ताः पर्य्यगृह्णन्त नदीक्षेत्राणि पर्व्वतान्।
वृक्षगुल्मौषधीश्चैव प्रसह्य तु यथाबलम् ॥ ४३
विपर्य्ययेण चौषध्यः प्रनष्टास्ताश्चतुर्द्दश।
मत्वा धरां प्रविष्टास्ता इत्योषध्यः पितामहः ॥ ४४
दुदोह गां प्रयत्नेन सर्व्वभूतहिताय वै।
तदाप्रभृति चौषध्यः फालकृष्टास्त्वितस्ततः ॥ ४५
वार्त्तां कृषिं समायाता वर्त्तुकामाः प्रयत्नतः।
वार्त्ता वृत्तिः समाख्याता कृषिकामप्रयत्नतः ॥ ४६
अन्यथा जीवितं तासां नास्ति त्रेतायुगात्यये।
हस्तोद्भवा ह्यपश्चैव भवन्ति बहुशस्तदा ॥ ४७
तत्रापि जगृहुः सर्व्वे चान्योऽन्यं क्रोधमूर्च्छिताः।
सुतदारधनाद्यांस्तु बलाद्युगबलेन तु ॥ ४८
मर्य्यादायाः प्रतिष्ठार्थं ज्ञात्वा तदखिलं विभुः।
ससर्ज्ज क्षत्रियांस्त्रातुं क्षतात् कमलसम्भवः ॥ ४९
वर्णाश्रमप्रतिष्ठाञ्च चकार स्वेन तेजसा।
वृत्तेन वृत्तिना वृत्तं विश्वात्मा निर्म्ममे स्वयम् ॥ ५०
यज्ञप्रवर्त्तनञ्चैव त्रेतायामभवत् क्रमात्।
पशुयज्ञं न सेवन्ते केचित् तत्रापि सुव्रताः ॥ ५१
बलाद्विष्णुस्तदा यज्ञमकरोत् सर्व्वदृक् क्रमात्।
द्विजास्तदा प्रशंसन्ति ततस्त्वहिंसकं मुने ॥ ५२
द्वापरेष्वपि वर्त्तन्ते मतिभेदास्तदा नृणाम्।

मनसा कर्म्मणा वाचा कृच्छ्राद्वार्त्ता प्रसिध्यति ॥ ५३
तदा तु सर्व्वभूतानां कायक्लेशवशात् क्रमात् ।
लोभो धृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः ॥ ५४
वेदशाखाप्रणयनं धर्म्माणां सङ्करस्तथा ।
वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च ॥ ५५
द्वापरे तु प्रवर्त्तन्ते रागो लोभो मदस्तथा ।
वेदो व्यासैश्चतुर्द्धा तु व्यस्यते द्वापरादिषु ॥ ५६
एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते ।
संक्षयादायुषश्चैव व्यस्यते द्वापरेषु सः ॥ ५७
ऋषिपुत्त्रैः पुनर्भेदा भिद्यन्ते दृष्टिविभ्रमैः ।
मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्य्ययैः ॥ ५८
संहिता ऋग्यजुःसाम्नां संहन्यन्ते मनीषिभिः ।
सामान्या वै कृताश्चैव दृष्टिभिस्तैः पृथक् पृथक् ॥ ५९
ब्राह्मणं कल्पसूत्राणि मन्त्रप्रवचनानि च ।
अन्ये तु प्रस्थितास्तान् वै केचित्तान् प्रत्यवस्थिताः ६०
इतिहासपुराणानि भिद्यन्ते कालगौरवात् ।
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा ॥ ६१
भविष्यं नारदीयञ्च मार्कण्डेयमतः परम् ।
आग्नेयं ब्रह्मवैवर्त्तं लैङ्गं वाराहमेव च ॥ ६२
वामनाख्यं ततः कौर्म्म-मात्स्यं गारुड़मेव च ।
स्कान्दं तथा च ब्रह्माण्डं तेषां भेदः प्रकथ्यते ॥ ६३
लैङ्गमेकादशविधं प्रभिन्नं द्वापरे शुभम् ।
मन्वत्रिविष्णुहारीत-याज्ञवल्क्योशनोऽङ्गिराः ॥ ६४
-यमापस्तम्बसम्बर्त्ताः कात्यायन-बृहस्पती ।
पराशर-व्यास-शङ्ख-लिखिता दक्ष-गौतमौ ॥ ६५
शातातपो वशिष्ठश्च एवमाद्यैः सहस्रशः ।
अवृष्टिर्मरणञ्चैव तथा व्याध्याद्युपद्रवाः ॥ ६६
वाङ्मनःकर्म्मजैर्दुःखैर्निर्व्वेदो जायते ततः ।
निर्व्वेदाज्जायते तेषां दुःखमोक्षविचारणा ॥ ६७
विचारणाच्च वैराग्यं वैराग्याद्दोषदर्शनम् ।
दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसम्भवः ॥ ६८
एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे स्मृता ।
आद्ये कृते तु धर्म्मोऽस्ति स त्रेतायां प्रवर्त्तते ॥ ६९
द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे ॥ ७०

इति श्रीलैङ्गे महापुराणे एकोनचत्वा-
रिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशोऽध्यायः ।

शक्र उवाच ।

तिष्ये मायामसूयाञ्च वधञ्चैव तपस्विनाम् ।
साधयन्ति नरास्तत्र तमसा व्याकुलेन्द्रियाः ॥ १
कलौ प्रमादको रोगः सततं क्षुद्भयानि च ।
अनावृष्टिभयं घोरं देशानाञ्च विपर्य्ययः ॥ २ ।
न प्रामाण्यं श्रुतेरस्ति नृणाञ्चाधर्म्मसेवनम् ।
अधार्म्मिकास्त्वनाचारा महाकोपाल्पचेतसः ॥ ३
अनृतं ब्रुवते लुब्धास्तिष्ये जाताश्च दुष्प्रजाः ।
दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ॥ ४
विप्राणां कर्म्मदोषेण प्रजानां जायते भयम् ।
नाधीयन्ते तदा वेदान् न यजन्ति द्विजातयः ॥ ५
उत्सीदन्ति नराश्चैव क्षत्त्रियाश्च विशः क्रमात् ।
शूद्राणां मन्त्रयोगेण सम्बन्धो ब्राह्मणैः सह ॥ ६
भवतीह कलौ तस्मिन् शयनासनभोजनैः ।
राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयन्ति ते ॥ ७
भ्रूणहत्या वीरहत्या प्रजायन्ते प्रजासु वै ।
शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः ॥
राजवृत्तिस्थिताश्चौराश्चौराचाराश्च पार्थिवाः ।
एकपत्न्यो न शिष्यन्ति वर्द्धिष्यन्त्यभिसारिकाः ॥ ८
वर्णाश्रमप्रतिष्ठा नो जायते नृषु सर्व्वतः ।
तदा स्वल्पफला भूमिः क्वचिच्चापि महाफला ॥ १०
अरक्षितारो हर्त्तारः पार्थिवाश्च शिलाशन ।
शूद्रा व ज्ञानिनः सर्व्वे ब्राह्मणैरभिवन्दिताः ॥ ११
अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः ।
आसनस्था द्विजान् दृष्ट्वा न चलन्त्यल्पबुद्धयः ॥ १२
ताड़यन्ति द्विजेन्द्रांश्च शूद्रा वै स्वल्पबुद्धयः ।
आस्ये निधाय वै हस्तं कर्णे शूद्रस्य वै द्विजाः ॥ १३
नीचस्येव तदा वाक्यं वदन्ति विनयेन तम् ।
उच्चासनस्थान् शूद्रांश्च द्विजमध्ये द्विजर्षभ ॥ १४
ज्ञात्वा न हिंसते राजा कलौ कालवशेन तु ।
पुष्पैश्च वासितैश्चैव तथान्यैर्मङ्गलैः शुभैः ॥ १५
शूद्रानभ्यर्चयन्त्यल्प-श्रुतभाग्यबलान्विताः ।
न प्रेक्षन्ते गर्व्विताश्च शूद्रा द्विजवरान् द्विज ॥ १६
सेवावसरमालोक्य द्वारे तिष्ठन्ति वै द्विजाः ।
वाहनस्थान् समावृत्य शूद्रान् शूद्रोपजीविनः ॥ १७

सेवन्ते ब्राह्मणास्तत्र स्तुवन्ति स्तुतिभिः कलौ।
तपोयज्ञफलानाञ्च विक्रेतारो द्विजोत्तमाः॥ १८
यतयश्च भविष्यन्ति बहवोऽस्मिन् कलौ युगे।
पुरुषाल्पं बहुस्त्रीकं युगान्ते समुपस्थिते॥ १९
निन्दन्ति वेदविद्याञ्च द्विजाः कर्म्माणि वै कलौ।
कलौ देवो महादेवः शङ्करो नीललोहितः॥ २०
प्रकाशते प्रतिष्ठार्थं धर्म्मस्य विकृताकृतिः।
ये तं विप्रा निषेवन्ते येन केनापि शङ्करम्॥ २१
कलिदोषान् विनिर्ज्जित्य प्रयान्ति परमं पदम्।
श्वापदप्रबलत्वञ्च गवाञ्चैव परिक्षयः॥ २२
साधूनां विनिवृत्तिश्च वेद्या तस्मिन् युगक्षये।
तदा सूक्ष्मो महोदर्को दुर्लभो दानमूलवान्॥ २३
चातुराश्रमशैथिल्ये धर्म्मः प्रतिचलिष्यति।
अरक्षितारो हर्त्तारो बलिभागस्य पार्थिवाः॥ २४
युगान्तेषु भविष्यन्ति स्वरक्षणपरायणाः।
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः॥ २५
प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे।
चित्रवर्षी तदा देवो यदा प्राप्तयुगक्षयम्॥ २६
सर्व्वे वणिग्जनाश्चापि भविष्यन्त्यधमे युगे।
कुशीलचर्य्याः पाषण्डैर्व्वृथारूपैः समावृताः॥ २७
बहुयाजनको लोको भविष्यति परस्परम्।
नाव्याहृतक्रूरवाक्यो नार्ज्जवी नानसूयकः॥ २८
न कृते प्रतिकर्त्ता च युगक्षीणे भविष्यति।
निन्दकाश्चैव पतिता युगान्तस्य च लक्षणम्॥ २९
नृपशून्या वसुमती न च धान्यधनावृता।
मण्डलानि भविष्यन्ति देशेषु नगरेषु च॥ ३०
अल्पोदका चाल्पफला भविष्यति वसुन्धरा।
गोप्तारश्चाप्यगोप्तारः सम्भविष्यन्त्यशासनाः॥ ३१
हर्त्तारः परवित्तानां परदारप्रधर्षकाः।
कामात्मानो दुरात्मानो ह्यधमाः साहसप्रियाः॥३२
प्रनष्टचेष्टनाः पुंसो मुक्तकेशाश्च शूलिनः।
जनाः षोडशवर्षाश्च प्रजायन्ते युगक्षये॥ ३३
शुक्लदन्ताजिनाक्षाश्च मुण्डाः काषायवाससः।
शूद्रा धर्म्मं चरिष्यन्ति युगान्ते समुपस्थिते॥ ३४
शस्यचौरा भविष्यन्ति दृष्टचैलाभिलाषिणः।
चौराश्चौरस्वहर्त्तारो हर्त्तुर्हर्त्ता तथापरः॥ ३५
योग्यकर्म्मण्युपरते लोके निष्क्रियतां गते।
कीट-मूषक-सर्पाश्च धर्षयिष्यन्ति मानवान्॥ ३६
सुभिक्षं क्षेममारोग्यं सामर्थ्यं दुर्लभं तदा।
कौशिकीं प्रतिपत्स्यन्ते देशान् क्षुद्भयपीड़िताः॥३७
दुःखेनाभिप्लुतानाञ्च परमायुः शतं तदा।
दृश्यन्ते न च दृश्यन्ते वेदाः कलियुगेऽखिलाः॥ ३८
उत्सीदन्ति तदा यज्ञाः केवला धर्म्मपीड़िताः।
काषायिणोऽप्यनिर्ग्रन्थाः कापालिबहुलास्त्विह॥३९
वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे।
वर्णाश्रमाणां ये चान्ये पाषण्डाः परिपन्थिनः॥ ४०
उत्पद्यन्ते तदा ते वै सम्प्राप्ते तु कलौ युगे।
अधीयन्ते तदा वेदाञ्छूद्रा धर्म्मार्थकोविदाः॥ ४१
यजन्ते चाश्वमेधेन राजानः शूद्रयोनयः।
स्त्री-बाल-गोवधं कृत्वा हत्वा चैव परस्परम्॥ ४२
उपद्रवांस्तथान्योन्यं साधयन्ति तदा प्रजाः।
दुःखप्रभूतमल्पायुर्देहोत्सादः सरोगता॥ ४३
अधर्म्माभिनिवेशित्वात् तमोवृत्तं कलौ स्मृतम्।
प्रजासु ब्रह्महत्यादि तदा वै सम्प्रवर्त्तते॥ ४४
तस्मादायुर्बलं रूपं कलिं प्राप्य प्रहीयते।
तदा त्वल्पेन कालेन सिद्धिं गच्छन्ति मानवाः॥ ४५
धन्या धर्म्मं चरिष्यन्ति युगान्ते द्विजसत्तमाः।
श्रुतिस्मृत्युदितं धर्म्मं ये चरन्त्यनसूयकाः॥ ४६
त्रेतायां वार्षिको धर्म्मो द्वापरे मासिकः स्मृतः।
यथाक्लेशं चरन् प्राज्ञस्तदह्ना प्राप्नुते कलौ॥ ४७
एषा कलियुगावस्था सन्ध्यांशन्तु निबोध मे।
युगे युगे च हीयन्ते त्रींस्त्रीन् पादांस्तु सिद्धयः॥४८
युगस्वभावाः सन्ध्यास्तु तिष्ठन्तीह तु पादशः।
सन्ध्यास्वभावाः स्वांशेषु पादशस्ते प्रतिष्ठिताः॥४९
एवं सन्ध्यांशके काले सम्प्राप्ते तु युगान्तिके।
तेषां शास्ता ह्यसाधूनां भूतानां निधनोत्थितः॥५०
गोत्रेऽस्मिन् वै चन्द्रमसो नाम्ना प्रमितिरुच्यते।
मानवस्य तु सोऽंशेन पूर्व्वं स्वायम्भुवेऽन्तरे॥ ५१
समाः स विंशतिः पूर्णाः पर्य्यटन् वै वसुन्धराम्।
अनुकर्षन् स वै सेनां सवाजि-रथ-कुञ्जराम्॥ ५२
प्रगृहीतायुधैर्व्विप्रैः शतशोऽथ सहस्रशः।
स तदा तैः परिवृतो म्लेच्छान् हन्ति सहस्रशः॥५३
स हत्वा सर्व्वशश्चैव राज्ञस्तान् शूद्रयोनिजान्।
पाषण्डांस्तु ततः सर्व्वान् निःशेषं कृतवान् प्रभुः॥५४

नाद्यर्थं धार्म्मिका ये च तान् सर्व्वान् हन्ति सर्व्वतः।
वर्णव्यत्यासजाताश्च ये चताननुजीविनः ॥ ५५
प्रवृत्तचक्रो बलवान् म्लेच्छानामन्तकृत् स तु।
अधृष्यः सर्व्वभूतानां चचाराथ वसुन्धराम् ॥ ५६
मानवस्य तु सोऽंशेन देवस्येह विजज्ञिवान्।
पूर्व्वजन्मनि विष्णोस्तु प्रमितिर्नाम वीर्य्यवान् ॥ ५७
गोत्रतो वै चन्द्रमसः पूर्णे कलियुगे प्रभुः।
द्वात्रिंशेऽभ्युदिते वर्षे प्रक्रान्तो विंशतिः समाः ॥ ५८
विनिघ्नन् सर्व्वभूतानि शतशोऽथ सहस्रशः।
कृत्वा वीजावशेषान्तु पृथिवीं क्रूरकर्म्मणा ॥ ५९
परस्परनिमित्तेन कोपेनाकस्मिकेन तु।
स साधयित्वा वृषलान् प्रायशस्तानधार्म्मिकान् ॥ ६०
गङ्गा-यमुनयोर्मध्ये स्थितिं प्राप्तः सहानुगः।
ततो व्यतीते काले तु सामात्यः सहसैनिकः ॥ ६१
उत्साद्य पार्थिवान् सर्व्वान् म्लेच्छांश्चैव सहस्रशः।
तत्र सन्ध्यांशके काले सम्प्राप्ते तु युगान्तिके ॥ ६२
स्थितास्वल्पावशिष्टासु प्रजास्विह क्वचित् क्वचित्।
अप्रग्रहास्ततस्ता वै लोभाविष्टास्तु कृत्स्नशः ॥ ६३
उपहिंसन्ति चान्योन्यं प्रपिपत्य परस्परम्।
अराजके युगवशात् संशये समुपस्थिते ॥ ६४
प्रजास्ता वै ततः सर्व्वाः परस्परभयार्द्दिताः।
व्याकुलाश्च परिभ्रान्तास्त्यक्त्वा दारान् गृहाणि च ॥ ६५
स्वान् प्राणाननपेक्षन्तो निष्कारुण्याः सुदुःखिताः।
नष्टे श्रौते स्मार्त्तधर्म्मे परस्परहतास्तदा ॥ ६६
निर्म्मर्य्यादा निराक्रान्ता निःस्नेहा निरपत्रपाः।
नष्टे धर्म्मे प्रतिहता ह्रस्वकाः पञ्चविंशकाः ॥ ६७
हित्वा पुत्रांश्च दारांश्च विवादव्याकुलेन्द्रियाः।
अनावृष्टिहताश्चैव वार्त्तामुत्सृज्य दूरतः ॥ ६८
प्रत्यन्तानुपसेवन्ते हित्वा जनपदान् स्वकान्।
सरित्सागरकूपांस्ते सेवन्ते पर्व्वतांस्तथा ॥ ६९
मधुमांसैर्मूलफलैर्वर्त्तयन्ति सुदुःखिताः।
चीरपत्राजिनधरा निष्क्रिया निष्परिग्रहाः ॥ ७०
वर्णाश्रमपरिभ्रष्टाः सङ्कटं घोरमास्थिताः।
एवं कष्टमनुप्राप्ता अल्पशेषाः प्रजास्तदा ॥ ७१
जरा-व्याधि-क्षुधाविष्टा दुःखान्निर्व्वेदमानसाः।
विचारणा तु निर्व्वेदात् साम्यावस्था विचारणा ॥ ७२
साम्यावस्थात्मको बोधः सम्बोधाद्धर्म्मशीलता।

अल्पप्रश्रमयुक्तास्तु कलिशिष्टा हि व स्वयम् ॥
अहोरात्रात् तदा तासां युगन्तु परिवर्त्तते।
चित्तसम्मोहनं कृत्वा तासां वै सुप्तमत्तवत् ॥
भाविनोऽर्थस्य च बलात् ततः कृतमवर्त्तत।
प्रवृत्ते तु ततस्तस्मिन् पुनः कृतयुगे तु वै ॥ ७
उत्पन्नाः कलिशिष्टास्तु प्रजाः कार्त्तयुगास्तदा।
तिष्ठन्ति चेह ये सिद्धा अदृष्टा विचरन्ति च ॥
सप्त सप्तर्षिभिश्चैव तत्र ते तु व्यवस्थिताः।
ब्रह्म-क्षत्र-विशः शूद्रा वीजार्थं ये स्मृता इह।
कालज्ञैः सह ते सर्व्वे निर्व्विशेषास्तदाभवन्।
तेषां सप्तर्षयो धर्म्मं कथयन्तीतरेऽपि च ॥ ७८
वर्णाश्रमाचारयुक्तं श्रौतं स्मार्त्तं द्विधा तु यम्।
ततस्तेषु क्रियावत्सु वर्द्धन्ते वै प्रजाः कृते ॥ ७९
श्रौतस्मार्त्तकृतानाञ्च धर्म्मे सप्तर्षिदर्शिते।
केचिद्धर्म्मव्यवस्थार्थं तिष्ठन्तीह युगक्षये ॥ ८०
मन्वन्तराधिकारेषु तिष्ठन्ति मुनयस्तु वै।
यथादावप्रदग्धेषु तृणेष्विह ततः क्षितौ ॥ ८१
वनानां प्रथमं वृष्ट्या तेषां मूलेषु सम्भवः।
तथा कार्त्तयुगानान्तु कलिजेष्विह सम्भवः ॥ ८
एवं युगाद्युगस्येह सन्तानन्तु परस्परम्।
वर्त्तते ह्यव्यवच्छेदाद्यावन्मन्वन्तरक्षयः ॥ ८३
सुखमायुर्बलं रूपं धर्म्मोऽर्थः काम एव च।
युगेष्वेतानि हीयन्ते त्रींस्त्रीन् पादान् क्रमेण तु
स सन्ध्यांशेषु हीयन्ते युगानां धर्म्मसिद्धयः।
इत्येषा प्रतिषिद्धिर्वै कीर्त्तितैषा क्रमेण तु ॥ ८
चतुर्युगाणां सर्व्वेषामनेनैव तु साधनम्।
एषा चतुर्युगावृत्तिरासहस्राद्गुणी कृता ॥ ८६
ब्रह्मणस्तदहः प्रोक्तं रात्रिश्चैतावती स्मृता।
अनार्ज्जवं जड़ीभावो भूतानामायुषः क्षयात् ॥
एतदेव तु सर्व्वेषां युगानां लक्षणं स्मृतम्।
एषां चतुर्युगाणाञ्च गुणिता ह्येकसप्ततिः ॥ ८८
क्रमेण परिवृत्ता तु मनोरन्तरमुच्यते।
चतुर्युगे यथैकस्मिन् भवतीह यदा तु यत् ॥ ८९
तथा चान्येषु भवति पुनस्तद्वै यथाक्रमम्।
सर्गे सर्गे यथा भेदा उत्पद्यन्ते तथैव तु ॥ ९०
पञ्चविंशत्परिमिता न न्यूना नाधिकास्तथा।
तथा कल्पा युगैः सार्द्धं भवन्ति सह लक्षणैः ॥

मन्वन्तराणां सर्व्वेषामेतदेव तु लक्षणम् ॥ ९२
यथा युगानां परिवर्त्तनानि
चिरप्रवृत्तानि युगस्वभावात्।
तथा तु सन्तिष्ठति जीवलोकः
क्षयोदयाभ्यां परिवर्त्तमानः ॥ ९३
इत्येतल्लक्षणं प्रोक्तं युगानां वै समासतः।
अतीतानागतानां हि सर्व्वमन्वन्तरेषु वै ॥ ९४
मन्वन्तरेण चैकेन सर्व्वाण्येवान्तराणि च।
व्याख्यातानि न सन्देहः कल्पः कल्पेन चैव हि ॥९५
अनागतेषु तद्वच्च तर्कः कार्य्यो विजानता।
मन्वन्तरेषु सर्व्वेषु अतीतानागतेष्विह ॥ ९६
तुल्याभिमानिनः सर्व्वे नामरूपैर्भवन्त्युत।
देवा ह्यष्टविधा ये च ये च मन्वन्तरेश्वराः ॥ ९७
ऋषयो मनवश्चैव सर्व्वे तुल्यप्रयोजनाः।
एवं वर्णाश्रमाणान्तु प्रविभागो युगे युगे ॥ ९८
युगस्वभावश्च तथा विधत्ते वै तदा प्रभुः।
वर्णाश्रमविभागाश्च युगानि युगसिद्धयः ॥ ९९
युगानां परिमाणं ते कथितं हि प्रसङ्गतः।
वदामि देवीपुत्त्रत्वं पद्मयोनेः समासतः ॥ १००
इति श्रीलैङ्गे महापुराणे चत्वारिंशोऽध्यायः ॥४०॥

---

## एकचत्वारिंशोऽध्यायः।

इन्द्र उवाच।
पुनः ससर्ज्ज भगवान् प्रभ्रष्टाः पूर्व्ववत् प्रजाः।
सहस्रयुगपर्य्यन्ते प्रभाते तु पितामहः ॥ १
एवं परार्द्धे विप्रेन्द्र द्विगुणे तु यथा गते।
तदा धराम्भसि व्याप्ता ह्यापो वह्नौ समीरणे ॥ २
वह्निः समीरणश्चैव व्योम्नि तन्मात्रसंयुतः।
इन्द्रियाणि दशैकञ्च तन्मात्राणि द्विजोत्तम ॥ ३
अहङ्कारमनुप्राप्य प्रलीनास्तत्क्षणादहो।
अभिमानस्तदा तत्र महान्तं व्याप्य वै क्षणात् ॥ ४
महानपि तथाव्यक्तं प्राप्य लीनोऽभवद्द्विज।
अव्यक्तं स्वगुणैः सार्द्धं प्रलीनमभवद्भवे ॥ ५
ततः सृष्टिरभूत् तस्मात् पूर्व्ववत् पुरुषाच्छिवात्।
अथ सृष्टास्तदा तस्य मनसा तेन मानसाः ॥ ६
न व्यवर्द्धन्त लोकेऽस्मिन् प्रजाः कमलयोनिना।
वृद्ध्यर्थं भगवान् ब्रह्मा पुत्त्रैर्वै मानसैः सह ॥ ७
दुश्चरं विचचारैवं समुद्दिश्य तपः स्वयम्।
तुष्टस्तु तपसा तस्य भवो ज्ञात्वा स वाञ्छितम् ॥ ८
ललाटमध्यं निर्भिद्य ब्रह्मणः पुरुषस्य तु।
पुत्त्रस्तेऽहमिति प्रोच्य स्त्रीपुंरूपोऽभवत् तदा ॥ ९
तस्य पुत्त्रो महादेवो ह्यर्द्धनारीश्वरोऽभवत्।
ददाह भगवान् सर्व्वं ब्रह्माणञ्च जगद्गुरुम् ॥ १०
अथार्द्धमात्रां कल्याणीमात्मनः परमेश्वरीम्।
बुभुजे योगमार्गेण वृद्ध्यर्थं जगतां शिवः ॥ ११
तस्यां हरिञ्च ब्रह्माणं ससर्ज्ज परमेश्वरः।
विश्वेश्वरस्तु विश्वात्मा चास्त्रं पाशुपतं तथा ॥ १२
तस्माद्ब्रह्मा महादेव्यास्त्वंशजश्च हरिस्तथा।
अण्डजः पद्मजश्चैव भवाङ्गभव एव च ॥ १३
एतत् ते कथितं सर्व्वमितिहासं पुरातनम्।
परार्द्धं ब्रह्मणो यावत् तावद्भूतिः समासतः ॥ १४
वैराग्यं ब्रह्मणो वक्ष्ये तमोद्भूतं समासतः।
नारायणोऽपि भगवान् द्विधा कृत्वात्मनस्तनुम् ॥ १५
ससर्ज्ज सकलं तस्मात् स्वाङ्गादेव चराचरम्।
ततो ब्रह्माणमसृजद्ब्रह्मा रुद्रं पितामहः ॥ १६
मुने कल्यान्तरे रुद्रो हरिं ब्रह्माणमीश्वरम्।
ततो ब्रह्माणमसृजन्मुने कल्पान्तरे हरिः ॥ १७
नारायणं पुनर्ब्रह्मा ब्रह्माणञ्च पुनर्भवः।
तदा विचार्य्य वै ब्रह्मा दुःखं संसार इत्यजः ॥ १८
सर्गं विसृज्य चात्मानमात्मन्येव नियोज्य च।
संहृत्य प्राणसञ्चारं पाषाण इव निश्चलः ॥ १९
दशवर्षसहस्राणि समाधिस्थोऽभवत् प्रभुः।
अधोमुखन्तु यत् पद्मं हृदिसंस्थं सुशोभनम् ॥ २०
पूरितं पूरकेणैव प्रबुद्धञ्चाभवत् तदा।
तदूर्द्ध्ववक्त्रमभवत् कुम्भकेन निरोधितम् ॥ २१
तत्पद्मकर्णिकामध्ये स्थापयामास चेश्वरम्।
तदोमिति शिवं देवमर्द्धमात्रापरम्परम् ॥ २२
मृणालतन्तुभागैक-शतभागे व्यवस्थितम्।
यमैर्यमविशुद्धात्मा नियम्यैवं हृदीश्वरम् ॥ २३
यमपुष्पादिभिः पूज्यं याज्यो ह्यजरव्ययम्।
तस्य हृत्कमलस्थस्य नियोगाच्चाण्डजो विभुः ॥ २४
ललाटमस्य निर्भिद्य प्रादुरासीत् पितामहात्।
लोहितोऽभूत् स्वयं नीलः शिवस्य हृदयोद्भवः ॥ २५

अङ्गेश्चैव तु संयोगात् प्रकृत्या पुरुषः प्रभुः।
नीलश्च लोहितश्चैव यतः कालाकृतिः पुमान् ॥ २६
नीललोहित इत्युक्तस्तेन देवेन वै प्रभुः।
ब्रह्मणा भगवान् कालः प्रीतात्मा चाभवद्विभुः ॥२७
सुप्रीतमनसं देवं तुष्टाव च पितामहः।
नामाष्टकेन विश्वात्मा विश्वात्मानं महामुने ॥ २८

पितामह उवाच।

नमस्ते भगवन् रुद्र भास्करामिततेजसे।
नमो भवाय देवाय रसायाम्बुमयाय ते ॥ २९
शर्वाय क्षितिरूपाय सदा सुरभिणे नमः।
ईशाय वायवे तुभ्यं संस्पर्शाय नमो नमः ॥ ३०
पशूनां पतये चैव पावकायातितेजसे।
भीमाय व्योमरूपाय शब्दमात्राय ते नमः ॥ ३१
महादेवाय सोमाय अमृताय नमोऽस्तु ते।
उग्राय यजमानाय नमस्ते कर्म्मयोगिणे ॥ ३२
यः पठेच्छृणुयाद्वापि पैतामहमिमं स्तवम्।
रुद्राय कथितं विप्रान् श्रावयेद्वा समाहितः ॥ ३३
अष्टमूर्त्तेस्तु सायुज्यं वर्षादेकादवाप्नुयात्।
एवं स्तुत्वा महादेवमवैक्षत पितामहः ॥ ३४
तदाष्टधा महादेवः समातिष्ठत् समन्ततः।
तदा प्रकाशते भानुः कृष्णवर्त्मा निशाकरः ॥ ३५
क्षितिर्वायुः पुमानम्भः सुषिरं सर्व्वगं तथा।
तदाप्रभृति तं प्राहुरष्टमूर्त्तिरितीश्वरम् ॥ ३६
अष्टमूर्त्तेः प्रसादेन विरिञ्चिश्चासृजत् पुनः।
सृष्टेतदखिलं ब्रह्मा पुनः कल्पान्तरे प्रभुः ॥ ३७
सहस्रयुगपर्य्यन्तं संसुप्ते च चराचरे।
प्रजाः स्रष्टुमनास्तेपे तत उग्रं तपो महत् ॥ ३८
तस्यैवं तप्यमानस्य न किञ्चित् समवर्त्तत।
ततो दीर्घेण कालेन दुःखात् क्रोधो व्यजायत ॥ ३९
क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः।
ततस्तेभ्योऽश्रुबिन्दुभ्यो भूताः प्रेतास्तदाभवन् ॥ ४०
सर्व्वांस्तानग्रजान् दृष्ट्वा भूतप्रेतनिशाचरान्।
अनिन्दत तदा देवो ब्रह्मात्मानमजो विभुः ॥ ४१
जहौ प्राणांश्च भगवान् क्रोधाविष्टः प्रजापतिः।
ततः प्राणमयो रुद्रः प्रादुरासीत् प्रभोर्मुखात् ॥ ४२
अर्द्धनारीश्वरो भूत्वा बालार्कसदृशद्युतिः।
तदैकादशधात्मानं प्रविभज्य व्यवस्थितः ॥ ४३
अर्द्धेनांशेन सर्व्वात्मा ससर्ज्जाऽसौ शिवामुमाम्।
सा चासृजत् तदा लक्ष्मीं दुर्गां श्रेष्ठां सरस्वतीम्।
वामां रौद्रीं महामायां वैष्णवीं वारिजेक्षणाम्।
कलां विकिरिणीञ्चैव कालीं कमलवासिनीम्।
बलविकरिणीं देवीं बलप्रमथिनीं तथा।
सर्व्वभूतस्य दमनीं ससृजे च मनोन्मनीम् ॥
तथान्या बहवः सृष्टास्तया नार्य्यः सहस्रशः।
रुद्रैश्चैव महादेवस्ताभिस्त्रिभुवनेश्वरः ॥ ४७
सर्व्वात्मनश्च तस्याग्रे ह्यतिष्ठत् परमेश्वरः।
मृतस्य तस्य देवस्य ब्रह्मणः परमेष्ठिनः ॥
घृणी ददौ पुनः प्राणान् ब्रह्मपुत्रो महेश्वरः।
ब्रह्मणः प्रददौ प्राणानात्मस्थांस्तु तदा प्रभुः।
प्रहृष्टोऽभूत् ततो रुद्रः किञ्चित् प्रत्यागतासवः।
अभ्यभाषत देवेशो ब्रह्माणं परमं वचः ॥ ५०
मा भैर्देव महाभाग विरिञ्च जगतां गुरो।
मयेह स्थापिताः प्राणास्तस्मादुत्तिष्ठ वै प्रभो।
श्रुत्वा वचस्ततस्तस्य स्वप्नभूतं मनोगतम्।
पितामहः प्रसन्नात्मा नेत्रैः फुल्लाम्बुजप्रभैः ॥
ततः प्रत्यागतप्राणः समुदैक्षन्महेश्वरम्।
स उद्वीक्ष्य चिरं कालं स्निग्धगम्भीरया गिरा।
उवाच भगवान् ब्रह्मा समुत्थाय कृताञ्जलिः।
भो भो वद महाभाग आनन्दयसि मे मनः।
को भवानष्टमूर्त्तिर्वै स्थित एकादशात्मकः ॥

इन्द्र उवाच।

तस्य तद्वचनं श्रुत्वा व्याजहार महेश्वरः।
स्पृशन् कराभ्यां ब्रह्माणं सुखाभ्यां स सुरारिहा।

श्रीशङ्कर उवाच।

मां विद्धि परमात्मानमेनां मायामजामिति।
एते वै संस्थिता रुद्रास्त्वां रक्षितुमिहागताः ॥
ततः प्रणम्य तं ब्रह्मा देवदेवमुवाच ह।
कृताञ्जलिपुटो भूत्वा हर्षगद्गदया गिरा ॥ ५७
भगवन् देवदेवेश दुःखैराकुलितो ह्यहम्।
संसारान्मोक्तुमीशानमामिहार्हसि शङ्कर ॥ ५८
ततः प्रहस्य भगवान् पितामहमुमापतिः।
तदा रुद्रैर्जगन्नाथस्तया चान्तर्दधे विभुः ॥ ५९

इन्द्र उवाच।

[illegible] लोकेषु दुर्लभो वै त्वयोनिजः।

त्युहीनः पुमान् विद्धि सम्भूत्यः पद्मजोऽपि सः ॥६०
न्तु देवेश्वरो रुद्रः प्रसीदति यदीश्वरः।
दुर्लभो मृत्युहीनस्तव पुत्रो ह्ययोनिजः ॥ ६१
या च विष्णुना चैव ब्रह्मणा च महात्मना।
योनिजं मृत्युहीनमसमर्थं निवेदितुम् ॥ ६२
शैलादिरुवाच।
वं व्याहृत्य विप्रेन्द्रमनुगृह्य च तं हृणी।
विर्वृतो ययौ देवः सितेनेभेन वै प्रभुः ॥ ६३
इति श्रीलैङ्गे महापुराणे एकचत्वारिंशोऽध्यायः॥४१

---

## द्विचत्वारिंशोऽध्यायः।

सूत उवाच।

गते पुण्ये च वरदे सहस्राक्षे शिलाशनः।
आराधयन्महादेवं तपसातोषयद्भवम् ॥ १
अथ तस्यैवमनिशं तत्परस्य द्विजस्य तु।
दिव्यं वर्षसहस्रन्तु गतं क्षणमिवाद्भुतम् ॥ २
वल्मीकेनावृताङ्गश्च लक्ष्यः कीटगणैर्मुनिः।
वज्रसूचीमुखैश्चान्यै रक्तकीटैश्च सर्व्वतः ॥ ३
निर्मांसरुधिरत्वग्वै निर्लेपः कुड्यवत् स्थितः।
अस्थिशेषोऽभवत् पश्चात् तममन्यत शङ्करः ॥ ४
यदा स्पृष्टो मुनिस्तेन करेण च स्मरारिणा।
तदैव मुनिशार्दूलश्चोत्ससर्ज्ज क्लमं द्विजः ॥ ५
तपतस्तस्य तपसा प्रभुस्तुष्टोऽथ शङ्करः।
तुष्टस्तवेत्यथोवाच सगणश्चोमया सह ॥ ६
तपसानेन किं कार्य्यं भवतस्ते महामते।
ददामि पुत्रं सर्व्वज्ञं सर्व्वशास्त्रार्थपारगम् ॥ ७
ततः प्रणम्य देवेशं स्तुत्वोवाच शिलाशनः।
हर्षगद्गदया वाचा सोमं सोमविभूषणम् ॥ ८
शिलाद उवाच।
भगवन् देवदेवेश त्रिपुरार्द्दन शङ्कर।
अजोनिजं मृत्युहीनं पुत्रमिच्छामि सत्तम ॥ ९
सूत उवाच।
पूर्व्वमाराधितः प्राह तपसा परमेश्वरः।
शिलादं ब्रह्मणा रुद्रः प्रीत्या परमया पुनः ॥ १०
श्रीदेवदेव उवाच।
पूर्व्वमाराधितो विप्र ब्रह्मणाहं तपोधन।
तपसा चावतारार्थं मुनिभिश्च सुरोत्तमैः ॥ ११
तव पुत्रो भविष्यामि नन्दिनाम्ना त्वयोनिजः।
पिता भविष्यसि मम पितुर्वै जगतां मुने ॥ १२
एवमुक्त्वा मुनिं प्रेक्ष्य प्रणिपत्य स्थितं घृणी।
सोमः सोमोपमः प्रीतस्तत्रैवान्तरधीयत ॥ १३
लब्धपुत्रः पिता रुद्रात् प्रीतो मम महामुने।
यज्ञाङ्गणं महत् प्राप्य यज्ञार्थं यज्ञवित्तमः ॥ १४
तदङ्गणादहं शम्भोस्तनुजस्तस्य चाज्ञया।
सञ्जातः पूर्व्वमेवाहं युगान्ताग्निसमप्रभः ॥ १५
ववर्षुस्तदा पुष्करावर्त्तकाद्या
जगुः खेचराः किन्नराः सिद्धसाध्याः।
शिलादात्मजत्वं गते मय्युपेन्द्रः
ससर्ज्जाथ वृष्टिं सुपुष्पौघमिश्राम् ॥ १६
मां दृष्ट्वा कालसूर्य्याभं जटामुकुटधारिणम्।
त्र्यक्षं चतुर्भुजं बालं शूल-टङ्क-गदाधरम् ॥ १७
वज्रिणं वज्रदंष्ट्रञ्च वज्रिणाराधितं शिशुम्।
वज्रकुण्डलिनं घोरं नीरदोपमनिःस्वनम् ॥ १८
ब्रह्माद्यास्तुष्टुवुः सर्व्वे सुरेन्द्राश्च मुनीश्वराः।
नेदुः समन्ततः सर्व्वे ननृतुश्चाप्सरोगणाः ॥ १९
ऋषयो मुनिशार्दूल ऋग्यजुःसामसम्भवैः।
मन्त्रैर्माहेश्वरैः स्तुत्वा सम्प्रणेमुर्मुदान्विताः ॥ २०
ब्रह्मा हरिश्च रुद्रश्च शक्रः साक्षाच्छिवाम्बिका।
जीवश्चेन्दुर्महातेजा भास्करः पवनोऽनलः ॥ २१
ईशानो निर्ऋतिर्यक्षो यमो वरुण एव च।
विश्वेदेवास्तथा रुद्रा वसवश्च महाबलाः ॥ २२
लक्ष्मीः साक्षाच्छचीज्येष्ठा देवी चैव सरस्वती।
अदितिश्च दितिश्चैव श्रद्धा लज्जा धृतिस्तथा ॥ २३
नन्दा भद्राश्च सुरभी सुशीला सुमनास्तथा।
वृषेन्द्रश्च महातेजा धर्म्मो धर्म्मात्मजस्तथा ॥ २४
आवृत्य मां तथालिङ्ग्य तुष्टुवुर्मुनिसत्तम।
शिलादोऽपि मुनिर्दृष्ट्वा पिता मे तादृशं तदा।
प्रीत्या प्रणम्य पुण्यात्मा तुष्टाविष्टप्रदं सुतम् ॥ २५
शिलाद उवाच।
भगवन् देवदेवेश त्रियम्बक ममाव्यय।
पुत्रोऽसि जगतां यस्मात् त्राता दुःखाद्धि किं पुनः॥२६
रक्षको जगतां यस्मात् पिता मे पुत्र सर्व्वगः।
अयोनिज नमस्तुभ्यं जगद्योने पितामह ॥ २७

पितापुत्र महेशान जगताञ्च जगद्गुरो।
वत्स वत्स महाभाग पाहि मां परमेश्वर ॥ २८
त्वयाऽहं नन्दितो यस्मान्नन्दी नाम्ना सुरेश्वर।
तस्मान्नन्दय मां नन्दिन् नमामि जगदीश्वरम् ॥ २९
प्रसीद पितरौ मेऽद्य रुद्रलोकं गतौ विभो।
पितामहाश्च भो नन्दिन्नवतीर्णे महेश्वरे ॥ ३०
ममैव सफलं लोके जन्म वै जगतां प्रभो।
अवतीर्णे सुते नन्दिन् रक्षार्थं मम्मीश्वर ॥ ३१
तुभ्यं नमः सुरेशान नन्दीश्वर नमोऽस्तु ते।
पुत्र पाहि महाबाहो देवदेव जगद्गुरो ॥ ३२
पुत्रत्वमेव नन्दीश मत्वा यत् कीर्त्तितंमया।
त्वया तत् क्षम्यतां वत्स स्तवस्तव्य सुरासुरैः ॥ ३३
यः पठेच्छृणुयाद्वापि मम पुत्रप्रभाषितम्।
श्रावयेद्वा द्विजान् भक्त्या मया सार्द्धं स मोदते ॥ ३४
एवं स्तुत्वा सुतं बालं प्रणम्य बहुमानतः।
मुनीश्वरांश्च सम्प्रेक्ष्य शिलादोवाच सुव्रतः ॥ ३५
पश्यध्वं मुनयः सर्व्वे महाभाग्यं ममाव्ययः।
नन्दी यज्ञाङ्गणे देवश्चावतीर्णो यतः प्रभुः ॥ ३६
मत्समः कः पुमान् लोके देवो वा दानवोऽपि वा ॥
एष नन्दी यतो जातो यज्ञभूमौ हिताय मे ॥ ३७

इति श्रीलैङ्गे महापुराणे नन्दिकेश्वरो-
-त्पत्तिर्नाम द्विचत्वारिंशोऽध्यायः ॥४२॥

---

## त्रिचत्वारिंशोऽध्यायः।

नन्दिकेश्वर उवाच।

मया सह पिता हृष्टः प्रणम्य च महेश्वरम्।
उटजं स्वं जगामाशु निधिं लब्ध्वेव निर्द्धनः ॥ १
यदा गतोऽहमुटजं शिलादस्य महामुने।
तदा वै दैविकं रूपं त्यक्त्वा मानुष्यमास्थितः ॥ २
नष्टा चैव स्मृतिर्दिव्या येन केनापि कारणात्।
मानुष्यमास्थितं दृष्ट्वा पिता मे लोकपूजितः ॥ ३
विललापातिदुःखार्त्तः स्वजनैश्च समावृतः।
जातकर्म्मादिकाश्चैव चकार मम सर्व्ववित् ॥ ४
शालङ्कायनपुत्रो वै शिलादः पुत्रवत्सलः।
उपदिष्टा हि तेनैव ऋक्शाखा यजुषस्तथा ॥ ५
सामशाखासहस्रञ्च साङ्गोपाङ्गं महामुने।
आयुर्व्वेदं धनुर्व्वेदं गान्धर्व्वञ्चाश्वलक्षणम् ॥ ६
हस्तिनां चरितञ्चैव नराणाञ्चैव लक्षणम्।
सम्पूर्णे सप्तमे वर्षे ततोऽथ मुनिसत्तमौ ॥ ७
मित्रावरुणनामानौ तपोयोगबलान्वितौ।
तस्याश्रमं गतौ दिव्यौ द्रष्टुं माञ्चाज्ञया विभोः।
ऊचतुश्च महात्मानौ मां निरीक्ष्य मुहुर्मुहुः।
तात नन्द्ययमल्पायुः सर्व्वशास्त्रार्थपारगः ॥ ८
न दृष्टमेवमाश्चर्य्यमायुर्वर्षादतः परम्।
इत्युक्तवति विप्रेन्द्रः शिलादः पुत्रवत्सलः ॥ ९
समालिङ्ग्य च दुःखार्त्तो रुरोदातीव विस्वरम्।
हा पुत्र पुत्र पुत्रेति पपात च समन्ततः ॥ १०
अहो बलं दैवविधेर्विधातुश्चेति दुःखितः।
तस्य चार्त्तस्वरं श्रुत्वा तदाश्रमनिवासिनः ॥ ११
निपेतुर्विह्वलात्यर्थं रक्षाश्चक्रुश्च मङ्गलम्।
तुष्टुवुश्च महादेवं त्रियम्बकमुमापतिम् ॥ १२
हुत्वा त्रियम्बकेणैव मधुनैव च सम्प्लुताम्।
दूर्व्वामयुतसंख्यातां सर्व्वद्रव्यसमन्विताम् ॥ १३
पिता विगतसंज्ञश्च तथा चैव पितामहः।
विचेष्टश्च ललापासौ मृतवन्निपपात च ॥ १५
मृत्योर्भीतोऽहमचिराच्छिरसा चाभिवन्द्य तं।
मृतवत् पतितं साक्षात् पितरञ्च पितामहम्।
प्रदक्षिणीकृत्य च तं रुद्रजाप्यरतोऽभवम्।
हृत्पुण्डरीके सुषिरे ध्यात्वा देवं त्रियम्बकम्।
त्र्यक्षं दशभुजं शान्तं पञ्चवक्त्रं सदाशिवम्।
सरितश्चान्तरे पुण्ये स्थितं मां परमेश्वरः ॥ १८
तुष्टोऽब्रवीन्महादेवः सोमः सोमार्द्धभूषणः।
वत्स नन्दिन् महाबाहो मृत्योर्भीतिः कुतस्तव ॥ १९
मयैव प्रेषितौ विप्रौ मत्समस्त्वं न संशयः।
वत्सैतत् तव देहञ्च लौकिकं परमार्थतः ॥ २०
नास्त्येव दैविकं दृष्टं शिलादेन पुरा तव।
देवैश्च मुनिभिः सिद्धैर्गन्धर्व्वैर्दानवोत्तमैः ॥ २१
पूजितं यत् पुरा वत्स दैविकं नन्दिकेश्वर।
संसारस्य स्वभावोऽयं सुखं दुःखं पुनःपुनः ॥ २२
नृणां योनिपरित्यागः सर्व्वथैव विवेकिनः।
एवमुक्त्वा तु मा साक्षात् सर्व्वदेवमहेश्वरः ॥ २३
कराभ्यां सुशुभाभ्याञ्च उभाभ्यां परमेश्वरः।
प्रसन्नो भगवान् रुद्रः परमार्त्तिहरो हरः ॥ २४

उवाच च महादेवस्तुष्टात्मा वृषभध्वजः।
निरीक्ष्य गणपांश्चैव देवीं हिमवतः सुताम् ॥ २५
समालोक्य च तुष्टात्मा महादेवः सुरेश्वरः।
अजरो जरया त्यक्तो नित्यं दुःखविवर्ज्जितः ॥ २६
अक्षयश्चाव्ययश्चैव सपिता ससुहृज्जनः।
ममेष्टो गणपश्चैव महावीर्यो महापराक्रमः ॥ २७
दृष्टो मम सदा चैव मम पार्श्वगतः सदा।
मद्बलश्चैव भविता महायोगबलान्वितः ॥ २८
एवमुक्त्वा च मां देवो भगवान् सगणस्तदा।
कुशेशयमयीं मालां समुन्मुच्यात्मनस्तदा ॥ २९
आबबन्ध महातेजा मम देवो वृषध्वजः।
तयाहं मालया जातः शुभया कण्ठसक्तया ॥ ३०
त्र्यक्षो दशभुजश्चैव द्वितीय इव शङ्करः।
तत एव समादाय हस्तेन परमेश्वरः ॥ ३१
उवाच ब्रूहि किं तेऽद्य ददामि वरमुत्तमम्।
ततो जटाश्रितं वारि गृहीत्वा चातिनिर्म्मलम् ॥३२
उक्त्वा नदी भवस्वेति उत्ससर्ज्ज वृषध्वजः।
ततः सा दिव्यतोया च पूर्णा सितजला शुभा ॥ ३३
पद्मोत्पलवनोपेता प्रावर्त्तत महानदी।
तामाह च महादेवो नदीं परमशोभनाम् ॥ ३४
यस्माज्जटोदकादेव प्रवृत्ता त्वं महानदी।
तस्माज्जटोदका पुण्या भविष्यसि सरिद्वरा ॥ ३५
त्वयि स्नात्वा नरः कश्चित् सर्व्वपापैः प्रमुच्यते।
ततो देव्या महादेवः शिलादतनयं प्रभुः ॥ ३६
पुत्त्रस्तेऽयमिति प्रोच्य पादयोः स न्यपातयत्।
सा मामाघ्राय शिरसि पाणिभ्यां परिमार्ज्जति ॥ ३७
पुत्त्रप्रेम्णाभ्यषिञ्चच्च स्रोतोभिस्तनयैस्त्रिभिः।
पयसा शङ्खगौरेण देवदेवं निरीक्ष्य सा ॥ ३८
तानि स्रोतांसि त्रीण्यस्याः स्रोतस्विन्योऽभवंस्तदा।
नदीं त्रिस्रोतसं देवो भगवानवदद्भवः ॥ ३९
त्रिस्रोतसं नदीं दृष्ट्वा वृषः परमहर्षितः।
ननाद नादात् तस्माच्च सरिदन्या ततोऽभवत् ॥ ४०
वृषध्वनिरिति ख्याता देवदेवेन सा नदी।
जाम्बूनदमयं चित्रं सर्व्वरत्नमयं शुभम् ॥ ४१
स्वं देवश्चाद्भुतं दिव्यं निर्म्मितं विश्वकर्म्मणा।
मुकुटञ्चाबबन्धेशो मम मूर्ध्नि वृषध्वजः ॥ ४२
कुण्डले च शुभे दिव्ये वज्रवैदूर्य्यभूषिते।
आबबन्ध महादेवः स्वयमेव महेश्वरः ॥ ४३
मां तथाभ्यर्च्चितं व्योम्नि दृष्ट्वा मेघैः प्रभाकरः।
मेघाम्भसा चाभ्यषिञ्चच्छिलादनमथो मुने ॥ ४४
तस्याभिषिक्तस्य तदा प्रवृत्ता स्रोतसा भृशम्।
यस्मात् सुवर्णान्निःसृत्य नद्येषा सम्प्रवर्त्तते ॥ ४५
स्वर्णोदकेति तामाह देवदेवस्त्रियम्बकः।
जाम्बूनदमयाद्यस्माद्द्वितीया मुकुटाच्छुभा ॥ ४६
प्रावर्त्तत नदी पुण्या ऊचुर्जाम्बूनदीति ताम्।
एतत् पञ्चनदं नाम जप्येश्वरसमीपगम् ॥ ४७
यः पञ्चनदमासाद्य स्नात्वा जप्येश्वरेश्वरम्।
पूजयेच्छिवसायुज्यं प्रयात्येव न संशयः ॥ ४८
अथ देवो महादेवः सर्व्वभूतपतिर्भवः।
देवीमुवाच सर्व्वाणीमुमां गिरिसुतामजाम् ॥ ४९
देवि नन्दीश्वरं देवमभिषिञ्चामि भूतपम्।
गणेन्द्रं व्याहरिष्यामि किं वा त्वं मन्यसेऽव्यये ॥ ५०
तस्य तद्वचनं श्रुत्वा भवानी हर्षितानना।
स्मयन्ती वरदं प्राह भवं भूतपतिं पतिम् ॥ ५१
सर्व्वलोकाधिपत्यञ्च गणेशत्वं तथैव च।
दातुमर्हसि देवेश शैलादिस्तनयो मम ॥ ५२
ततः स भगवान् शर्व्वः सर्व्वलोकेश्वरेश्वरः।
सस्मार गणपान् दिव्यान् देवदेवो वृषध्वजः ॥ ५३

इति श्रीलैङ्गे महापुराणे नन्दिकेश्वरप्रादुर्भाव-नन्दिकेश्वराभिषिकमन्त्रो नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशोऽध्यायः।

शैलादिरुवाच।

स्मरणादेव रुद्रस्य सम्प्राप्ताश्च गणेश्वराः।
सर्व्वे सहस्रहस्ताश्च सहस्रायुधपाणयः ॥ १
त्रिनेत्राश्च महात्मानस्त्रिदशैरपि वन्दिताः।
कोटिकालाग्निसङ्काशा जटामुकुटधारिणः ॥ २
दंष्ट्राकरालवदना नित्या बुद्धाश्च निर्म्मलाः।
कोटिकोटिगणैस्तुल्यैरात्मना च गणेश्वराः।
असंख्याता महात्मानस्तत्राजग्मुर्मुदा युताः ॥ ३
गायन्तश्च द्रवन्तश्च नृत्यन्तश्च महाबलाः।
मुखाडम्बरवाद्यानि वादयन्तस्तथैव च ॥ ४

रथैर्नागैर्हयैश्चैव सिंहमकटवाहनाः।
विमानेषु तथारूढा हेमचित्रेषु वै गणाः ॥ ५
भेरीमृदङ्गकाद्यैश्च पणवानक-गोमुखैः।
वादित्रैर्विविधैश्चान्यैः पटहैरेकपुष्करैः ॥ ६
भेरी-मुरजसन्नादैराडम्बरक-डिण्डिमैः।
मर्द्दलैर्वेणुवीणाभिर्विविधैस्तालनिस्वनैः ॥ ७
दर्द्दुरैस्तलघातैश्च कच्छपैः पणवैरपि।
वाद्यमानैर्महायोगा आजग्मुर्देवसंसदम् ॥ ८
ते गणेशा महासत्त्वाः सर्व्वदेवेश्वरेश्वराः।
प्रणम्य देवं देवीञ्च इदं वचनमब्रुवन् ॥ ९
भगवन् देवदेवेश त्रियम्बक वृषध्वज।
किमर्थञ्च स्मृता देव आज्ञापय महाद्युते ॥ १०
किं सागरान्शोषयामो यमं वा सह किङ्करैः।
हन्मो मृत्युसुतां मृत्युं पशुवद्बन्ध पद्मजम् ॥ ११
बद्ध्वेन्द्रं सह देवैश्च सह विष्णुञ्च वायुना।
आनयामः सुसंक्रुद्धा दैत्यान् वा सह दानवैः ॥ १२
कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया।
कस्य वाद्योत्सवो देव सर्व्वकामसमृद्धये ॥ १३
तांस्तथावादिनः सर्व्वान् गणेशान् सर्व्वसम्मतान्।
उवाच देवः सम्पूज्य कोटिकोटिशतान् प्रभुः ॥ १४
शृणुध्वं यत्कृते यूयमिहाहूता जगद्धिताः।
श्रुत्वा च प्रयतात्मानः कुरुध्वं तदशङ्किताः ॥ १५
नन्दीश्वरोऽयं पुत्त्रो नः सर्व्वेषामीश्वरेश्वरः।
विप्रोऽयं नायकश्चैव सेनानीवः समृद्धिमान् ॥ १६
तमिमं मम सन्देशाद्यूयं सर्व्वेऽपि सम्मताः।
सेनान्यमभिषिञ्चध्वं महायोगपतिं पतिम् ॥ १७
एवमुक्ता भगवता गणपाः सर्व्व एव ते।
एवमस्त्विति सम्मन्त्र्य सम्भारानाहरंस्ततः ॥ १८
तस्य सर्व्वाश्रयं दिव्यं जाम्बूनदमयं शुभम्।
आसनं मेरुसङ्काशं मनोहरमुपाहरन् ॥ १९
नैकस्तम्भमयञ्चापि चामीकरवरप्रभम्।
मुक्तादामावलम्बञ्च मणिरत्नावभासितम् ॥ २०
स्तम्भैश्च वैदूर्य्यमयैः किङ्किणीजालसंवृतम्।
चारुरत्नकसंयुक्तं मण्डपं विश्वतोमुखम् ॥ २१
कृत्वा विन्यस्य तन्मध्ये तदासनवरं शुभम्।
तस्याग्रतः पादपीठं नीलवज्रावभासितम् ॥ २२
चक्रः पादप्रतिष्ठार्थं कलशौ चास्य पार्श्वगौ।
सम्पूर्णौ परमाम्भोभिररविन्दावृताननौ ॥ २३
कलशानां सहस्रन्तु सौवर्णं राजतं तथा।
ताम्रजं मृण्मयञ्चैव सर्व्वतीर्थाम्बुपूरितम् ॥ २४
वासोयुगं तथा दिव्यं गन्धं दिव्यं तथैव च।
केयूरे कुण्डले चैव मुकुटं हारमेव च ॥ २५
छत्रं शतशलाकञ्च बालव्यजनमेव च।
दत्तं महात्मना तेन ब्रह्मणा परमेष्ठिना ॥ २६
शङ्खहाराङ्गगौरेण पृष्ठेनापि विराजितम्।
व्यजनं चन्द्रशुभ्रञ्च हेमदण्डं सुचामरम् ॥ २७
ऐरावतः सुप्रतीको गजावेतौ सुपूजितौ।
मुकुटं काञ्चनञ्चैव निर्म्मितं विश्वकर्म्मणा ॥ २८
कुण्डले चामले दिव्ये वज्रञ्चैव वरायुधम्।
जाम्बूनदमयं सूत्रं केयूरद्वयमेव च ॥ २९
सम्भाराणि तथान्यानि विविधानि बहून्यपि।
समन्तान्निन्युरव्यग्रा गणपा देवसम्मताः ॥ ३०
ततो देवाश्च सेन्द्राश्च नारायणमुखास्तथा।
मुनयो भगवान् ब्रह्मा नव ब्रह्माण एव च ॥ ३१
देवैश्च लोकाः सर्व्वे ते ततो जग्मुर्मुदा युताः।
तेष्वागतेषु सर्व्वेषु भगवान् परमेश्वरः ॥ ३२
सर्व्वकार्य्यविधिं कर्त्तुमादिदेश पितामहम्।
पितामहोऽपि भगवान् नियोगाद्देव तस्य तु ॥ ३३
चकार सर्व्वं भगवानभिषिक्तं समाहितः।
अर्च्चयित्वा ततो ब्रह्मा स्वयमेवाभिषिचयत् ॥ ३४
ततो विष्णुस्ततः शक्रो लोकपालास्तथैव च।
अभिषिञ्चन्त विधिवद्गणेन्द्रं शिवशासनात् ॥ ३५
ऋषयस्तुष्टुवुश्चैव पितामहपुरोगमाः।
स्तुतवत्सु ततस्तेषु विष्णुः सर्व्वजगत्पतिः ॥ ३६
शिरस्यञ्जलिमादाय तुष्टाव च समाहितः।
प्राञ्जलिः प्रणतो भूत्वा जयशब्दं चकार च ॥ ३७
ततो गणाधिपाः सर्व्वे ततो देवास्ततोऽसुराः।
एवं स्तुतश्चाभिषिक्तो देवैः सब्रह्मकैस्तदा ॥ ३८
उद्वाहश्च कृतस्तत्र नियोगात्परमेष्ठिनः।
मरुताञ्च सुता देवी सुयशाख्या बभूव या ॥ ३९
लब्धं शशिप्रभं छत्त्रं तया तत्र विभूषितम्।
चामरे चामरासक्तहस्ताग्रैः स्त्रीगणैर्युता ॥ ४०
सिंहासनञ्च परमं तया चाधिष्ठितं मया।
अलङ्कृता महालक्ष्म्या मुकुटाद्यैः सुभूषणैः ॥ ४१

लब्धो हारश्च परमो देव्याः कण्ठगतस्तथा।
वृषेन्द्रश्च सितो नागः सिंहः सिंहध्वजस्तथा॥ ४२
रथश्च हेमच्छत्रञ्च चन्द्रबिम्बसमप्रभम्।
अद्यापि सदृशः कश्चिन्मया नास्ति विभुः क्वचित्॥४३
सान्वयश्च गृहीतेशस्तथा सम्बन्धिबान्धवैः।
आरुह्य वृषमीशानो मया देव्या गतः शिवः॥ ४४
तदा देवीं भवं दृष्ट्वा मया च प्रार्थयन् गणैः।
मुनिदेवर्षयः सिद्धा आज्ञां पाशुपतीं द्विजाः॥ ४५
अथाज्ञां प्रददौ तेषामर्हाणामाज्ञया विभोः।
नन्दिको नगजाभर्त्तुस्तेषां पाशुपतीं शुभाम्॥ ४६
तस्माद्धि मुनयो लब्ध्वा तदाज्ञां मुनिपुङ्गवात्।
भवभक्तास्तदा चासंस्तस्माद्देवं समर्चयेत्॥ ४७
नमस्कारविहीनस्तु नाम उद्गिरयेद्भवे।
ब्रह्मघ्नदशसन्तुल्यं तस्य पापं गरीयसम्॥ ४८
तस्मात् सर्व्वप्रकारेण नमस्कारादिमुच्चरेत्।
आदौ कुर्य्यान्नमस्कारं तदन्ते शिवतां व्रजेत्॥ ४९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे नन्दिकेश्वराभिषेको नाम चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

---

## पञ्चचत्वारिंशोऽध्यायः।

ऋषय ऊचुः।
सूत सुव्यक्तमखिलं कथितं शङ्करस्य तु।
सर्व्वात्मभावं रुद्रस्य स्वरूपं वक्तुमर्हसि॥ १
सूत उवाच।
भूर्भुवः स्वर्महश्चैव जनः साक्षात् तपस्तथा।
सत्यलोकश्च पातालं नरकार्णवकोटयः॥ २
तारका-ग्रह-सोमार्क-ध्रुवः सप्तर्षयस्तथा।
वैमानिकास्तथान्ये च तिष्ठन्त्यस्य प्रसादतः॥ ३
अनेन निर्म्मितास्त्वेवं तदात्मानो द्विजर्षभाः।
समष्टिरूपः सर्व्वात्मा संस्थितः सर्व्वदा शिवः॥ ४
सर्व्वात्मानं महात्मानं महादेवं महेश्वरम्।
न विजानन्ति संमूढा मायया तस्य मोहिताः॥ ५
तस्य देवस्य रुद्रस्य शरीरं वै जगत्त्रयम्।
तस्मात् प्रणम्य तं वक्ष्ये जगतां निर्णयं शुभम्॥ ६
पुरा वः कथितं सर्व्वं मयाण्डस्य यथाकृतिः।
भुवनानां स्वरूपञ्च ब्रह्माण्डे कथयाम्यहम्॥ ७
पृथिवी चान्तरीक्षञ्च स्वर्महर्जन एव च।
तपः सत्यञ्च सप्तैते लोकास्त्वण्डोद्भवाः शुभाः॥ ८
अधस्तादत्र चैतेषां द्विजाः सप्त तलानि तु।
महातलादयस्तेषामधस्तान्नरकाः क्रमात्॥ ९
महातलं हेमतलं सर्व्वरत्नोपशोभितम्।
प्रासादैश्च विचित्रैश्च भवस्यायतनैस्तथा॥ १०
अनन्तेन च संयुक्तं मुचुकुन्देन धीमता।
नृपेण बलिना चैव पातालस्वर्गवासिना॥ ११
शैलं रसातलं विप्राः शार्करं हि तलातलम्।
पीतं सुतलमित्युक्तं वितलं विद्रुमप्रभम्॥ १२
सितं हि अतलं तच्च तलं यच्च सितेतरम्।
क्ष्मायास्तु यावद्विस्तारो ह्यधस्तेषाञ्च सुव्रताः॥ १३
तलानाञ्चैव सर्व्वेषां तावत्संख्या समाहिता।
सहस्रयोजनं व्योम दशसाहस्रमेव च॥ १४
लक्षं सप्तसहस्रं हि तलानां सघनस्य तु।
व्योम्नः प्रमाणं मूलन्तु त्रिंशत्साहस्रकेण तु॥ १५
सुवर्णेन मुनिश्रेष्ठास्तथा वासुकिना शुभम्।
रसातलमिति ख्यातं तथान्यैश्च निषेवितम्॥ १६
विरोचन-हिरण्याक्ष-नरकाद्यैश्च सेवितम्।
तलातलमिति ख्यातं सर्व्वशोभासमन्वितम्॥ १७
वैनायकादिभिश्चैव कालनेमिपुरोगमैः।
पूर्व्वदेवैः समाकीर्णं सुतलञ्च तथापरैः॥ १८
वितलं दानवाद्यैश्च तारकाग्निमुखैस्तथा।
महान्तकाद्यैर्नागैश्च प्रह्लादेनासुरेण च॥ १९
वितलञ्चात्र विख्यातं कम्बलाश्वनिषेवितम्।
महाकुम्भेन वीरेण हयग्रीवेण धीमता॥ २०
शङ्कुकर्णेन सम्भिन्नं तथा नमुचिपूर्व्वकैः।
तथान्यैर्विविधैर्वीरैस्तलञ्चैव सुशोभितम्॥ २१
तलेषु तेषु सर्व्वेषु चाम्बया परमेश्वरः।
स्कन्देन नन्दिना सार्द्धं गणपैः सर्व्वतो वृतः॥ २२
तलानाञ्चैव सर्व्वेषामूर्द्धतः सप्त सत्तमाः।
क्ष्मातलानि धरा चापि सप्तधा कथयामि वः॥ २३

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे पातालवर्णनं नाम पञ्चचत्वारिंशोऽध्यायः॥ ४५॥

---

## षटचत्वारिंशोऽध्यायः ।

सूत उवाच ।

सप्तद्वीपा तथा पृथ्वी नदी-पर्व्वतसङ्कुला ।
समुद्रैः सप्तभिश्चैव सर्व्वतः समलङ्कृता ॥ १
जम्बूः प्लक्षः शाल्मलिश्च कुशः क्रौञ्चस्तथैव च ।
शाकः पुष्करनामा च द्वीपास्त्वभ्यन्तरे क्रमात् ॥ २
सप्तद्वीपेषु सर्व्वेषु साम्बः सर्व्वगणैर्वृतः ।
नानावेषधरो भूत्वा सान्निध्यं कुरुते हरः ॥ ३
क्षारोदेक्षुरसोदश्च सुरोदश्च घृतोदधिः ।
दध्यर्णवश्च क्षीरोदः स्वादूदश्चाप्यनुक्रमात् ॥ ४
समुद्रेष्विह सर्व्वेषु सर्व्वदा सगणः शिवः ।
जलरूपी भवः श्रीमान् क्रीड़ते चोर्म्मिबाहुभिः ॥ ५
क्षीरार्णवामृतमिव सदा क्षीरार्णवे हरिः ।
शेते शिवज्ञानधिया साक्षाद्वै योगनिद्रया ॥ ६
यदा प्रबुद्धो भगवान् प्रबुद्धमखिलं जगत् ।
यदा सुप्तस्तदा सुप्तं तन्मयञ्च चराचरम् ॥ ७
तेनैव सृष्टमखिलं धृतं रक्षितमेव च ।
संहृतं देवदेवस्य प्रसादात् परमेष्ठिनः ॥ ८
सुषेणा इति विख्याता यजन्ते पुरुषर्षभम् ।
अनिरुद्धं मुनिश्रेष्ठाः शङ्ख-चक्र-गदाधरम् ॥ ९
ये चानिरुद्धं पुरुषं ध्यायन्त्यात्मविदां वराः ।
नारायणसमाः सर्व्वे सर्व्वसम्पत्समन्विताः ॥ १०
सनन्दनश्च भगवान् सनकश्च सनातनः ।
वालखिल्याश्च सिद्धाश्च मित्रावरुणकौ तथा ॥ ११
यजन्ति सततं तत्र विश्वस्य प्रभवं हरिम् ॥ १२
सप्तद्वीपेषु तिष्ठन्ति नानाशृङ्गा महोदयाः ।
आसमुद्रायताः केचिद्गिरयो गह्वरैस्तथा ॥ १३
धरायाः पतयश्चासन् बहवः कालगौरवात् ।
सामर्थ्यात् परमेशानाः क्रौञ्चारेर्जनकात् प्रभोः ॥१४
मन्वन्तरेषु सर्व्वेषु अतीतानागतेष्विह ।
प्रवक्ष्यामि धरेशान् वो वक्ष्ये स्वायम्भुवेऽन्तरे ॥ १५
मन्वन्तरेषु सर्व्वेषु अतीतानागतेषु च ।
तुल्याभिमानिनश्चैव सर्व्वे तुल्यप्रयोजनाः ॥ १६
स्वायम्भुवस्य च मनोः पौत्रास्त्वासन् महाबलाः ।
प्रियव्रतात्मजा वीरास्ते दशेह प्रकीर्त्तिताः ॥ १७
आग्नीध्रश्चाग्निबाहुश्च मेधा मेधातिथिर्वपुः ।
ज्योतिष्मान् द्युतिमान् हव्यः सवनः पुत्र एव ॥
प्रियव्रतोऽभ्यषिञ्चत् तान् सप्त सप्त सुपार्थिवान् ॥
जम्बूद्वीपेश्वरं चक्रे आग्नीध्रं सुमहाबलम् ।
प्लक्षद्वीपेश्वरश्चापि तेन मेधातिथिः कृतः ॥ १९
शाल्मलेश्च वपुष्मन्तं राजानमभिषिक्तवान् ।
ज्योतिष्मन्तं कुशद्वीपे राजानं कृतवान् नृपः ॥
द्युतिमन्तञ्च राजानं क्रौञ्चद्वीपे समादिशत् ।
शाकद्वीपेश्वरञ्चापि हव्यं चक्रे प्रियव्रतः ॥ २१
पुष्कराधिपतिं चक्रे सवनञ्चापि सुव्रताः ।
पुष्करे सवनस्यापि महावीतः सुतोऽभवत् ॥ २२
धातकी चैव द्वावेतौ पुत्रौ पुत्रवतां वरौ ।
महावीतं स्मृतं वर्षं तस्य नाम्ना महात्मनः ॥ २३
नाम्ना तु धातकेश्चैव धातकीखण्डमुच्यते ।
हव्योऽप्यजनयत् पुत्रान् शाकद्वीपेश्वरः प्रभुः ॥
जलदञ्च कुमारञ्च सुकुमारं मणीचकम् ।
कुसुमोत्तर-मोदाकौ सप्तमस्तु महाद्रुमः ॥ २५
अलदं जलदस्याथ वर्षं प्रथममुच्यते ।
कुमारस्य तु कौमारं द्वितीयं परिकीर्त्तितम् ॥
सुकुमारं तृतीयन्तु सुकुमारस्य कीर्त्यते ।
मणीचकं चतुर्थन्तु माणीचकमिहोच्यते ॥ २७
कुसुमोत्तरस्य वै वर्षं पञ्चमं कुसुमोत्तरम् ।
मोदकञ्चापि मोदाकैर्वर्षं षष्ठं प्रकीर्त्तितम् ॥ २८
महाद्रुमस्य नाम्ना तु सप्तमं तं महाद्रुमम् ।
तेषान्तु नामभिस्तानि सप्त वर्षाणि तत्र वै ॥ २९
क्रौञ्चद्वीपेश्वरस्यापि पुत्रा द्युतिमतस्तु वै ।
कुशलो मनुगश्चोष्णाः पीवरश्चान्धकारकः ॥ ३०
मुनिश्च दुन्दुभिश्चैव सुता द्युतिमतस्तु वै ।
तेषां स्वनामभिर्देशाः क्रौञ्चद्वीपाश्रयाः शुभाः ॥
कुशलदेशः कुशलो मनुगस्य मनोऽनुगः ।
उष्णास्योष्णाः स्मृतो देशः पीवरः पीवरस्य च ॥
अन्धकारस्य कथितो देशो नाम्नान्धकारकः ।
मुनेर्देशो मुनिः प्रोक्तो दुन्दुभेर्दुन्दुभिः स्मृतः ॥
एते जनपदाः सप्त क्रौञ्चद्वीपेषु भास्वराः ।
ज्योतिष्मतः कुशद्वीपे सप्त चासन् महौजसः ॥
उद्भिदो वेणुमांश्चैव द्वैरथो लवणो धृतिः ।
षष्ठः प्रभाकरश्चापि सप्तमः कपिलः स्मृतः ॥ ३५
उद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम् ।

तृतीयं दरथश्चैव चतुर्थं लवणं स्मृतम्॥ ३६
पञ्चमं धृतिमत् षष्ठं प्रभाकरमनुत्तमम्।
सप्तमं कपिलं नाम कपिलस्य प्रकीर्त्तितम्॥ ३७
शाल्मलस्येश्वराः सप्त सुतास्ते वै वपुष्मतः।
श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा॥ ३८
वैद्युतो मानसश्चैव सुप्रभः सप्तमस्तथा।
श्वेतस्य देशः श्वेतस्तु हरितस्य च हारितः॥ ३९
जीमूतस्य च जीमूतो रोहितस्य च रोहितः।
वद्युतो वैद्युतश्चापि मानसस्य च मानसः॥ ४०
सुप्रभः सुप्रभस्यापि सप्त वै देशलाञ्छकाः।
प्लक्षद्वीपे तु वक्ष्यामि जम्बूद्वीपादनन्तरम्॥ ४१
सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरा नृपाः।
ज्येष्ठः शान्तभयस्तेषां सप्त वर्षाणि तानि वै॥ ४२
तस्माच्छान्तभयाच्चैव शिशिरस्तु सुखोदयः।
आनन्दश्च शिवश्चैव क्षेमकश्च ध्रुवस्तथा॥ ४३
तानि तेषान्तु नामानि सप्त वर्षाणि भागशः।
निवेशितानि तैस्तानि पूर्व्वं स्वायम्भुवेऽन्तरे॥ ४४
मेधातिथेस्तु पुत्रैस्तैः प्लक्षद्वीपनिवासिभिः।
वर्णाश्रमाचारयुताः प्रजास्तत्र निवेशिताः॥ ४५
प्लक्षद्वीपादिवर्षेषु शाकद्वीपान्तिकेषु वै।
ज्ञेयः पञ्चसु धर्म्मो वै वर्णाश्रमविभागशः॥ ४६
सुखमायुःस्वरूपञ्च बलं धर्म्मो द्विजोत्तमाः।
पञ्चस्वेतेषु द्वीपेषु सर्व्वसाधारणं स्मृतम्॥ ४७
रुद्रार्च्चनरता नित्यं महेश्वरपरायणाः।
अन्ये च पुष्करद्वीपे प्रजाताश्च प्रजेश्वराः॥ ४८
प्रजापतेश्च रुद्रस्य भावामृतसुखोत्कटाः॥ ४९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे भुवनकोषे द्वीप-द्वीपेश्वरकथनं नाम षट्चत्वारिंशोऽध्यायः॥ ४६॥

---

## सप्तचत्वारिंशोऽध्यायः।

सूत उवाच।

आग्नीध्रं ज्येष्ठदायादं काम्यपुत्रं महाबलम्।
प्रियव्रतोऽभ्यषिञ्चद्वै जम्बूद्वीपेश्वरं नृपः॥ १
सोऽतीव भवभक्तश्च तपस्वी तरुणः सदा।
भवार्च्चनरतः श्रीमान् गोमान् धीमान् द्विजप्रभाः॥ २
तस्य पुत्रा बभूवुस्ते प्रजापतिसमा नव।
सर्व्वे माहेश्वराश्चैव महादेवपरायणाः॥ ३
ज्येष्ठो नाभिरिति ख्यातः तस्य किम्पुरुषोऽनुजः।
हरिवर्षस्तृतीयस्तु चतुर्थो वै लिलावृतः॥ ४
रम्यस्तु पञ्चमस्तत्र हिरण्वान् षष्ठ उच्यते।
कुरुस्तु सप्तमस्तेषां भद्राश्वस्त्वष्टमः स्मृतः॥ ५
नवमः केतुमालस्तु तेषां देशान् निबोधत।
नाभेस्तु दक्षिणं वर्षं हेमाख्यन्तु पिता ददौ॥ ६
हेमकूटन्तु यद्वर्षं ददौ किम्पुरुषाय सः।
नैषधं यत् स्मृतं वर्षं हरये तत् पिता ददौ॥ ७
इलावृताय प्रददौ मेरुयत्र तु मध्यमः।
नीलाचलाश्रितं वर्षं रम्याय प्रददौ पिता॥ ८
श्वेतं यदुत्तरं तस्मात् पित्रा दत्तं हिरण्वते।
यदुत्तरं शृङ्गवर्षं पिता तत् कुरवे ददौ॥ ९
वर्षं माल्यवतश्चापि भद्राश्वस्य न्यवेदयत्।
गन्धमादनवर्षन्तु केतुमालाय दत्तवान्॥ १०
इत्येतानि महान्तीह नव वर्षाणि भागशः।
आग्नीध्रस्तेषु वर्षेषु पुत्रांस्तानभिषिच्य वै॥ ११
यथाक्रमं स धर्म्मात्मा ततस्तु तपसि स्थितः।
तपसा भावितश्चैव स्वाध्यायनिरतस्त्वभूत्॥ १२
स्वाध्यायनिरतः पश्चाच्छिवध्यानरतस्त्वभूत्।
यानि किम्पुरुषाद्यानि वर्षाण्यष्टौ शुभानि च॥ १३
तेषां स्वभावतः सिद्धिः सुखप्राया ह्ययत्नतः।
विपर्य्ययो न तेष्वस्ति जरामृत्युभयं न च॥ १४
धर्म्माधर्म्मौ न तेष्वास्तां नोत्तमाधममध्यमाः।
न तेष्वस्ति युगावस्था क्षेत्रेष्वष्टसु सर्व्वतः॥ १५
रुद्रक्षेत्रे मृताश्चैव जङ्गमाः स्थावरास्तथा।
भक्ताः प्रासङ्गिकाश्चापि तेषु क्षेत्रेषु यान्ति ते॥ १६
तेषां हिताय रुद्रेण चाष्टक्षेत्रं विनिर्म्मितम्।
तत्र तेषां महादेवः सान्निध्यं कुरुते सदा॥ १७
दृष्ट्वा हृदि महादेवमष्टक्षेत्रनिवासिनः।
सुखिनः सर्व्वदा तेषां स एवेह परा गतिः॥ १८
नाभेर्निसर्गं वक्ष्यामि हिमाङ्केऽस्मिन् निबोधत।
नाभिस्त्वजनयत् पुत्रं मेरुदेव्यां महामतिः॥ १९
ऋषभं पार्थिवश्रेष्ठं सर्व्वक्षत्रस्य पूजितम्।
ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः॥ २०
सोऽभिषिच्याथ ऋषभो भरतं पुत्रवत्सलः।

ज्ञानवैराग्यमाश्रित्य जितेन्द्रियमहोरगान् ॥ २१
सर्व्वात्मनात्मनि स्थाप्य परमात्मानमीश्वरम् ।
नग्नो जटी निराहारश्चीरी ध्वान्तगतो हि सः ॥ २२
निराशस्त्यक्तसन्देहः शैवमाप परं पदम् ।
हिमाद्रेर्दक्षिणं वर्षं भरताय न्यवेदयत् ॥ २३
तस्मात् तु भारतं वर्षं तस्य नाम्ना विदुर्बुधाः ।
भरतस्यात्मजो विद्वान् सुमतिर्नाम धार्म्मिकः ॥ २४
बभूव तस्मिंस्तद्राज्यं भरतः संन्यवेशयत् ।
पुत्रसङ्क्रामितश्रीको वनं राजा विवेश सः ॥ २५

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे भरतवर्ष-
कथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः ।

सूत उवाच ।

अस्य द्वीपस्य मध्ये तु मेरुर्नाम महागिरिः ।
नानारत्नमयैः शृङ्गैः स्थितः क्षितिमतां वरः ॥ १
चतुरशीतिसाहस्रमुत्सेधेन प्रकीर्त्तितः ।
प्रविष्टः षोडशाधस्ताद्विस्तृतः षोडशैव तु ॥ २
शराववत् संस्थितत्वाद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ।
विस्तारात् त्रिगुणश्चास्य परिणाहोऽनुमण्डलः ॥ ३
हेमीभूतो महेशस्य शुभाङ्गस्पर्शनेन च ।
धत्तूरपुष्पसङ्काशः सर्व्वदेवनिकेतनः ॥ ४
क्रीडाभूमिश्च देवानामनेकाश्चर्य्यसंयुतः ।
लक्षयोजन आयामस्तस्यैवन्तु महागिरेः ॥ ५
ततः षोडशसाहस्रं योजनानि क्षितेरधः ।
शेषस्योपरि विप्रेन्द्रा धरायास्तस्य शृङ्गिणः ॥ ६
मूलायामप्रमाणान्तु विस्तारान्मूलतो गिरेः ।
ऊर्ध्वविस्तारमस्यैव द्विगुणं मूलतो गिरेः ॥ ७
पूर्व्वतः पद्मरागाभो दक्षिणे हेमसन्निभः ।
पश्चिमे नीलसङ्काश उत्तरे विद्रुमप्रभः ॥ ८
अमरावती पूर्व्वभागे नानाप्रासादसङ्कुला ।
नानादेवगणैः कीर्णा मणिजालसमावृता ॥ ९
गोपुरैर्विविधाकारैर्हेमरत्नविभूषितैः ।
तोरणैर्हेमचित्रैस्तु मणिकूपैः पथि स्थितैः ॥ १०
संलापालापकुशलैः सर्व्वाभरणभूषितैः ।
स्तनभारविनम्रैश्च मदघूर्णितलोचनैः ॥ ११
स्त्रीसहस्रैः समाकीर्णा चाप्सरोभिः समन्ततः ।
दीर्घिकाभिर्विचित्राभिः फुल्लाम्भोरुहसङ्कुलैः ॥
हेमसोपानसंयुक्तैर्हेमसैकतराशिभिः ।
नीलोत्पलैश्चोत्पलैश्च हैमैश्चापि सुगन्धिभिः ॥
एवंविधैस्तटाकैश्च नदीभिश्च नदैर्युता ।
विराजते पुरी शुभ्रा तयासौ पर्व्वतः शुभः ॥
तेजस्विनी नाम पुरी आग्नेय्यां पावकस्य तु ।
अमरावतीसमा दिव्या सर्व्वभोगसमन्विता ॥
वैवस्वती दक्षिणे तु यमस्य यमिनां वरा ।
भवनैरावृता दिव्यजाम्बूनदमयैः शुभैः ॥ १६
नैर्ऋते कृष्णवर्णा च तथा शुद्धवती शुभा ।
तादृशी गन्धवन्ती च वायव्यां दिशि शोभना ॥
महोदया चोत्तरे च ऐशान्यान्तु यशोवती ॥ १८
पर्व्वतस्य दिगन्तेषु शोभते दिवि सर्व्वदा ।
ब्रह्म-विष्णु-महेशानां तथान्येषां निकेतनम् ॥
सर्व्वभोगयुतं पुण्यं दीर्घिकाभिर्नगोत्तमम् ।
सिद्धैर्यक्षैस्तु सम्पूर्णं गन्धर्व्वैर्मुनिपुङ्गवैः ॥ २०
तथान्यैर्विविधाकारैर्भूतसङ्घैश्चतुर्व्विधैः ।
गिरेरुपरि विप्रेन्द्राः शुद्धस्फटिकसन्निभम् ॥ २१
सहस्रभौमं विस्तीर्णं विमानं वामतः स्थितम् ।
तस्मिन् महाभुजः शर्व्वः सोमसूर्य्याग्निलोचनः ।
सिंहासने मणिमये देव्यास्ते षण्मुखेन च ।
हरेस्तदर्द्धं विस्तीर्णं विमानं तत्र सोऽपि च ॥
पद्मरागमयं दिव्यं पद्मजस्य च दक्षिणे ।
तस्मिन् शक्रस्य विपुलं पुरं रम्यं यमस्य च ॥
सोमस्य वरुणस्याथ निर्ऋतेः पावकस्य च ।
वायोश्चैव तु रुद्रस्य सर्व्वालयसमन्ततः ॥ २५
तेषां तेषां विमानेषु दिव्येषु विविधेषु च ।
ईशान्यामीश्वरक्षेत्रे नित्यार्च्चा च व्यवस्थिता ॥
सिद्धेश्वरैश्च भगवान् शैलादिः शिष्यसम्मतः ।
सनत्कुमारः सिद्धैस्तु सुखासीनः सुरेश्वरः ॥ २७
सनकश्च सनन्दश्च सदृशाश्च सहस्रशः ।
योगभूमिः क्वचित्तस्मिन् भोगभूमिः क्वचित् क्वचित् ।
बालसूर्य्यप्रतीकाशं विमानं तत्र शोभनम् ॥ २८
शैलादिनः शुभञ्चास्ति तस्मिन्नास्ते गणेश्वरः ॥
षण्मुखस्य गणेशस्य गणानान्तु सहस्रशः ।
[illegible] माहयां मदनस्य च ॥ ३०

तस्य जम्बूनदी नाम मूलमावेष्ट्य संस्थिता।
तस्य दक्षिणपार्श्वे तु जम्बूवृक्षः सुशोभनः॥ ३१
अत्युच्छ्रितः सुविस्तीर्णः सर्व्वकालफलप्रदः।
मेरोः समन्ताद्विस्तीर्णं शुभं वर्षमिलावृतम्॥ ३२
तत्र जम्बूफलाहाराः केचिच्चामृतभोजनाः।
जाम्बूनदसमप्रख्या नानावर्णाश्च भोगिनः॥ ३३
मेरुपादाश्रितो विप्रा द्वीपोऽयं मध्यमः शुभः।
नववर्षान्वितश्चैव नदी-नद-गिरीश्वरैः॥ ३४
नववर्षन्तु वक्ष्यामि जम्बूद्वीपं यथातथम्।
विस्तारान्मण्डलाच्चैव योजनैश्च निबोधत॥ ३५

इति श्रीलैङ्गे महापुराणे पूर्व्वभागेऽष्ट-
चत्वारिंशोऽध्यायः॥ ४८॥

---

## एकोनपञ्चाशोऽध्यायः।

### सूत उवाच।

शतमेकं सहस्राणां योजनानां स तु स्मृतः।
अनुद्वीपं सहस्राणां द्विगुणं द्विगुणोत्तरम्॥ १
पञ्चाशत्कोटिविस्तीर्णा ससमुद्रा धरा स्मृता।
द्वीपैश्च सप्तभिर्युक्ता लोकालोकावृता शुभा॥ २
नीलस्तथोत्तरे मेरोः श्वेतस्तस्योत्तरे पुनः।
शृङ्गी तस्योत्तरे विप्रास्त्रयस्ते वर्षपर्व्वताः॥ ३
जठरो देवकूटश्च पूर्व्वस्यां दिशि पर्व्वतौ।
निषधो दक्षिणे मेरोस्तस्य दक्षिणतो गिरिः
हेमकूट इति ख्यातो हिमवांस्तस्य दक्षिणे॥ ४
मेरोः पश्चिमतश्चैव पर्व्वतौ द्वौ धराधरौ।
माल्यवान् गन्धमादश्च द्वावेतावुदगायतौ॥ ५
एते पर्व्वतराजानः सिद्धचारणसेविताः।
तेषामन्तरविष्कम्भो नवसाहस्रमेकशः॥ ६
इदं हैमवतं वर्षं भारतं नाम विश्रुतम्।
हेमकूटं परं तस्मान्नाम्ना किम्पुरुषं स्मृतम्॥ ७
नैषधं हेमकूटात् तु हरिवर्षं तदुच्यते।
हरिवर्षात् परञ्चैव मेरोः शुभमिलावृतम्॥ ८
इलावृतात् परं नीलं रम्यकं नाम विश्रुतम्।
रम्यात् परतरं श्वेतं विख्यातं तद्धिरण्मयम्॥ ९
हिरण्मयात् परञ्चापि शृङ्गी चैव कुरुः स्मृतः।
धनुःसंस्थे तु विज्ञेये द्वे वर्षे दक्षिणोत्तरे॥ १०
दीर्घाणि तत्र चत्वारि मध्यतस्तदिलावृतम्।
मेरोः पश्चिमपूर्व्वेण द्वे तु दीर्घतरे स्मृते॥ ११
अर्व्वाक् तु निषधस्याथ वेद्यर्द्धञ्चोत्तरं स्मृतम्।
वेद्यर्द्धे दक्षिणे त्रीणि वर्षाणि त्रीणि चोत्तरे॥ १२
तयोर्मध्ये च विज्ञेयं मेरुमध्यमिलावृतम्।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु॥ १३
उदगायतो महाशैलो माल्यवान् नाम पर्व्वतः।
योजनानां सहस्रे द्वे उपरिष्टात् तु विस्तृतः॥ १४
आयामतश्चतुस्त्रिंशत्सहस्राणि प्रकीर्त्तितः।
तस्य प्रतीच्यां विज्ञेयः पर्व्वतो गन्धमादनः॥ १५
आयामतः स विज्ञेयो माल्यवानिव विस्तृतः।
जम्बूद्वीपस्य विस्तारात्समेन तु समन्ततः॥ १६
प्रागायताः सुपर्व्वाणः षडेते वर्षपर्व्वताः।
अवगाढ़ाश्चोभयतः समुद्रौ पूर्व्वपश्चिमौ॥ १७
हिमप्रायस्तु हिमवान् हेमकूटस्तु हेमवान्।
तरुणादित्यसङ्काशो हैरण्यो निषधः स्मृतः॥ १८
चतुर्व्वर्णः सौवर्णो मेरुश्चोर्द्ध्वायतः स्मृतः।
वृत्ताकृतिपरीणाहश्चतुरस्रः समुत्थितः॥ १९
नीलश्च वैदूर्य्यमयः श्वेतः शुक्लो हिरण्मयः।
मयूरबर्हवर्णस्तु शातकुम्भस्त्रिशृङ्गवान्॥ २०
एवं संक्षेपतः प्रोक्ताः पुनः शृणु गिरीश्वरान्।
मन्दरो देवकूटश्च पूर्व्वस्यां दिशि पर्व्वतौ॥ २१
कैलासो गन्धमादश्च हेमवांश्चैव पर्व्वतौ।
पूर्व्वतश्चायतावेतावर्णवान्तव्यवस्थितौ॥ २२
निषधः पारिपात्रश्च द्वावेतौ वरपर्व्वतौ।
यथा पूर्व्वौ तथा याम्यावेतौ पश्चिमतः श्रितौ॥ २३
त्रिशृङ्गो जारुधिश्चैव उत्तरौ वरपर्व्वतौ।
पूर्व्वतश्चायतावेतावर्णवान्तर्व्यवस्थितौ॥ २४
मर्य्यादापर्व्वतानेतानष्टावाहुर्मनीषिणः।
योऽसौ मेरुर्द्विजश्रेष्ठाः प्रांशुः कनकपर्व्वतः॥ २५
तस्य पादास्तु चत्वारश्चतुर्दिक्षु नगोत्तमाः।
यैर्विष्टब्धा न चलति सप्तद्वीपवती मही॥ २६
दशयोजनसाहस्रमायामस्तेषु पठ्यते।
पूर्व्वे तु मन्दरो नाम दक्षिणे गन्धमादनः॥ २७
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः।
महावृक्षाः समुत्पन्नाश्चत्वारो द्वीपकेतवः॥ २८
मन्दरस्य गिरेः शृङ्गे महावृक्षः स केतुराट्।

प्रलम्बशाखाशिखरः कदम्बश्चत्यपादपः ॥ २९
दक्षिणस्यापि शैलस्य शिखरे देवसेविता।
जम्बूः सदा पुष्पफला सदा माल्योपशोभिता ॥ ३०
स केतुर्दक्षिणे द्वीपे जम्बूर्लोकेषु विश्रुता।
विपुलस्यापि शैलस्य पश्चिमे च महात्मनः ॥ ३१
सञ्जातः शिखरेऽश्वत्थः स महांश्चैत्यपादपः।
सुपार्श्वस्योत्तरस्यापि शृङ्गे जातो महाद्रुमः ॥ ३२
न्यग्रोधो विपुलस्कन्धोऽनेकयोजनमण्डलः।
तेषां चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमम् ॥ ३३
अमानुष्याणि रम्याणि सर्व्वकालर्त्तुकानि च।
मनोहराणि चत्वारि देवक्रीड़नकानि च ॥ ३४
वनानि वै चतुर्दिक्षु नामतस्तु निबोधत।
पूर्व्वे चत्ररथं नाम दक्षिणे गन्धमादनम् ॥ ३५
वैभ्राजं पश्चिमे विद्यादुत्तरे सवितुर्वनम्।
मित्रेश्वरन्तु पूर्व्वे तु षष्ठेश्वरमतः परम् ॥ ३६
वर्थ्येश्वरं पश्चिमे तु उत्तरे चाम्रकेश्वरम्।
महासरांसि च तथा चत्वारि मुनिपुङ्गवाः ॥ ३७
अत्र क्रीड़न्ति मुनयः पर्व्वतेषु वनेषु च।
अरुणोदं सरः पूर्व्वं दक्षिणं मानसं स्मृतम् ॥ ३८
सितोदं पश्चिमसरो महाभद्रं तथोत्तरम्।
शाखस्य दक्षिणे चैत्रं विशाखस्य च पश्चिमे ॥ ३९
उत्तरे नैगमेयस्य कुमारस्य च पूर्व्वतः।
अरुणोदस्य पूर्व्वेण शैलेन्द्रा नामतः स्मृताः ॥ ४०
तांस्तु संक्षेपतो वक्ष्ये न शक्यं विस्तरेण तु।
सितान्तश्च कुरण्डश्च कुररश्चाचलोत्तमः ॥ ४१
विकरो मणिशैलश्च वृक्षवांश्चाचलोत्तमः।
महानीलोऽथ रुचकः सबिन्दुर्दर्दुरस्तथा ॥ ४२
वेणुमांश्च समेघश्च निषधो देवपर्व्वतः।
इत्यते पर्व्वतवरा ह्यन्ये च गिरयस्तथा ॥ ४३
पूर्व्वेण मन्दरस्यैते सिद्धावासा उदाहृताः।
तेषु तेषु गिरीन्द्रेषु गुहासु च वनेषु च ॥ ४४
रुद्रक्षेत्राणि दिव्यानि विष्णोर्नारायणस्य च।
सरसो मानसस्येह दक्षिणेन महाचलाः ॥ ४५
ये कीर्त्त्यमानास्तान् सर्व्वान् संक्षिप्य प्रवदाम्यहम्।
शलश्च विशिराश्चैव शिखरश्चाचलोत्तमः ॥ ४६
एकशृङ्गो महाशूलो गजशैलः पिशाचकः।
पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः ॥ ४७
इत्येते देवचरिता उत्कटाः पर्व्वतोत्तमाः।
तेषु तेषु च सर्व्वेषु पर्व्वतेषु वनेषु च ॥ ४८
रुद्रक्षेत्राणि दिव्यानि स्थापितानि सुरोत्तमैः।
दिग्भागे दक्षिणे प्रोक्ताः पश्चिमे च वदामि वः ॥ ४९
अपरेण सितोदश्च सुरपश्च महाबलः।
कुमुदो मधुमांश्चैव अञ्जनो मुकुटस्तथा ॥ ५०
कृष्णश्च पाण्डुरश्चैव सहस्रशिखरश्च यः।
पारिजातश्च शैलेन्द्रः श्रीशृङ्गश्चाचलोत्तमः ॥ ५१
इत्येते देवचरिता उत्कटाः पर्व्वतोत्तमाः।
सर्व्वे पश्चिमदिग्भागे रुद्रक्षेत्रसमन्विताः ॥ ५२
महाभद्रस्य सरसश्चोत्तरे च महाबलाः।
ये स्थिताः कीर्त्त्यमानांस्तान् संक्षिप्येह निबोधत ॥ ५३
शङ्खकूटो महाशैलो वृषभो हंसपर्व्वतः।
नागश्च कपिलश्चैव इन्द्रशैलश्च सानुमान् ॥ ५४
नीलः कण्टकशृङ्गश्च शतशृङ्गश्च पर्व्वतः।
पुष्पकोशः प्रशैलश्च विरजश्चाचलोत्तमः ॥ ५५
वराहपर्व्वतश्चैव मयूरश्चाचलोत्तमः।
जारुधिश्चैव शैलेन्द्र एत उत्तरसंस्थिताः ॥ ५६
तेषु शैलेषु दिव्येषु देवदेवस्य शूलिनः।
असंख्यातानि दिव्यानि विमानानि सहस्रशः ॥ ५७
एतेषां शैलमुख्यानामन्तरेषु यथाक्रमम्।
सन्ति चैवान्तरद्रोण्यः सरांस्युपवनानि च ॥ ५८
वसन्ति देवा मुनयः सिद्धाश्च शिवभाविताः।
कृतवासाः सपत्नीकाः प्रसादात् परमेष्ठिनः ॥ ५९
लक्ष्म्याद्यानां विल्ववने ककुभे कश्यपादयः।
तथा तालवने प्रोक्तमिन्द्रोपेन्द्रोरगात्मनाम् ॥ ६०
उदुम्बरे कर्द्दमस्य तथान्येषां महात्मनाम्।
विद्याधराणां सिद्धानां पुण्ये लाम्रवणे शुभे ॥ ६१
नागानां सिद्धसङ्घानां तथा निम्बवने स्थितिः।
सूर्य्यस्य किंशुकवने तथा रुद्रगणस्य च ॥ ६२
वीजपूरवने पुण्ये देवाचार्य्यो व्यवस्थितः।
कौमुदे तु वने विष्णु-प्रमुखाणां महात्मनाम् ॥ ६३
स्थलपद्मवनान्तस्थ-न्यग्रोधेऽशेषभोगिणः।
शेषस्त्वशेषजगतां पतिरास्तेऽतिगर्व्वितः ॥ ६४
स एव जगतां कालः पाताले च व्यवस्थितः।
विष्णोर्विश्वगुरोर्मूर्त्तिर्दिव्यः साक्षाद्धलायुधः ॥ ६५
शयनं देवदेवस्य स हरेः कल्पगं विभोः।

वने पनसवृक्षाणां संयुक्ता दानवादयः॥ ६६
किन्नरैरुरगाश्चैव विशाखकवने स्थिताः।
मनोहरवने वृक्षाः सर्व्वकोटिसमन्विताः॥ ६७
नन्दीश्वरो गणवरैः स्तूयमानो व्यवस्थितः।
सन्तानकस्थलीमध्ये साक्षाद्देवी सरस्वती॥ ६८
एवं संक्षेपतः प्रोक्ता वनेषु वनवासिनः।
असंख्याता मयाप्यत्र वक्तुं नो विस्तरेण तु॥ ६९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे एकोन-पञ्चाशोऽध्यायः॥ ४९॥

---

## पञ्चाशोऽध्यायः।

### सूत उवाच।

सितान्तशिखरे शक्रः पारिजातवने शुभे।
तस्य प्राच्यां कुमुदाद्रि-कूटोऽसौ बहुविस्तरः॥ १
अष्टौ पुराण्युदीर्णानि दानवानां द्विजोत्तमाः।
सुवर्णकोटरे पुण्ये राक्षसानां महात्मनाम्॥ २
नीलकानां पुराण्याहुरष्टषष्टिर्द्विजोत्तमाः।
महानीलेऽपि शैलेन्द्रे पुराणि दश पञ्च च॥ ३
हयाननानां मुख्यानां किन्नराणाञ्च सुव्रताः।
वेणुसौधे महाशैले विद्याधरपुरत्रयम्॥ ४
वैकुण्ठे गरुड़ः श्रीमान् करञ्जे नीललोहितः।
वसुधारे वसूनान्तु निवासः परिकीर्त्तितः॥ ५
रत्नधारे गिरिवरे सप्तर्षीणां महात्मनाम्।
सप्त स्थानानि पुण्यानि सिद्धावासयुतानि च॥ ६
महत् प्रजापतेः स्थानमेकशृङ्गे नगोत्तमे।
गजशैले तु दुर्गाद्याः सुमेधे वसवस्तथा॥ ७
आदित्याश्च तथा रुद्राः कृतावासास्तथाश्विनौ।
अशीतिर्देवपुर्य्यस्तु हेमकक्षे नगोत्तमे॥ ८
सुनीले रक्षसां वासः पञ्चकोटिशतानि च।
पञ्चकूटे पुराण्यासन् पञ्चकोटिप्रमाणतः॥ ९
शतशृङ्गे पुरशतं यक्षाणाममितौजसाम्।
ताम्राभे काद्रवेयाणां विशाखे तु गुहस्य वै॥ १०
श्वेतोदरे मुनिश्रेष्ठाः सुपर्णस्य महात्मनः।
पिशाचके कुवेरस्य हरिकूटे हरेर्गृहम्॥ ११
कुमुदे किन्नरावासस्त्वञ्जने चारणालयः।
कृष्णे गन्धर्व्वनिलयः पाण्डुरे पुरसप्तकम्॥ १२
विद्याधराणां विप्रेन्द्रा विश्वभोगसमन्वितम्।
सहस्रशिखरे शैले दैत्यानामुग्रकर्म्मणाम्॥ १३
पुराणान्तु सहस्राणि सप्त शक्रारिणां द्विजाः।
मुकुटे पन्नगावासः पुष्पकेतौ मुनीश्वराः॥ १४
वैवस्वतस्य सोमस्य वायोर्नागाधिपस्य च।
तक्षके चैव शैलेन्द्रे चत्वार्य्यायतनानि च॥ १५
ब्रह्मेन्द्र-विष्णु-रुद्राणां गुहस्य च महात्मनः।
कुवेरस्य च सोमस्य तथान्येषां महात्मनाम्॥ १६
सन्त्यायतनमुख्यानि मर्य्यादापर्व्वतेष्वपि।
श्रीकण्ठाद्रिगुहावासी सर्व्वावासः सहोमया॥ १७
श्रीकण्ठस्याधिपत्यं वै सर्व्वदेवेश्वरस्य च।
अण्डस्यास्य प्रवृत्तिस्तु श्रीकण्ठेन न संशयः॥ १८
अनन्तेशादयस्त्वेवं प्रत्येकञ्चाण्डपालकाः।
चक्रवर्त्तिन इत्युक्तास्ततो विद्येश्वरास्त्विह॥ १९
श्रीकण्ठाधिष्ठितान्यत्र स्थानानि च समासतः।
मर्य्यादापर्व्वतेष्वद्य शृण्वन्तु प्रवदाम्यहम्॥ २०
श्रीकण्ठाधिष्ठितं विश्वं चराचरमिदं जगत्।
कालाग्निशिवपर्य्यन्तं कथं वक्ष्ये सविस्तरम्॥ २१

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे भुवन-विन्यासोद्देश-स्थानवर्णनं नाम पञ्चाशोऽध्यायः॥ ५०॥

---

## एकपञ्चाशोऽध्यायः।

### सूत उवाच।

देवकूटे गिरौ मध्ये महाकूटे सुशोभने।
हेम-वैदूर्य्य-माणिक्य-नील-गोमेदकान्तिभिः॥ १
तथान्यैर्मणिमुख्यैश्च निर्म्मिते निर्म्मले शुभे।
शाखाशतसहस्राढ्ये-सर्व्वद्रुमविभूषिते॥ २
चम्पकाशोक-पुन्नाग-वकुलासनमण्डिते।
पारिजातकसम्पूर्णे नानापक्षिगणान्विते॥ ३
नेकधातुशतैश्चित्रे विविक्तकुसुमाकुले।
नितम्बपुष्पसालम्बे नेकसत्त्वगणान्विते॥ ४
विमलस्वादुपानीयै नेकप्रस्रवणैर्युते।
निर्झरैः कुसुमाकीर्णैरनेकैश्च विभूषिते॥ ५
पुष्पोडुपवहाभिश्च स्रवन्तीभिरलङ्कृते।
स्निग्धवर्णं महामूलमनेकस्कन्धपादपम्॥ ६

रम्यं ह्यविरलच्छायं दशयोजनमण्डलम् ।
तत्र भूतवनं नाम नानाभूतगणालयम् ॥ ७
महादेवस्य देवस्य शङ्करस्य महात्मनः ।
दीप्तमायतनं तत्र महामणिविभूषितम् ॥ ८
हेमप्राकारसंयुक्तं मणितोरणमण्डितम् ।
स्फाटिकैश्च विचित्रैश्च गोपुरैश्च समन्वितम् ॥ ९
सिंहासनैर्मणिमयैः शुभास्तरणसंयुतैः ।
चिताचितस्ततः सम्यक् सर्व्वंशाधिष्ठितैः शुभैः ॥ १०
अम्लानमालानिचितैर्नानावर्णैर्महोत्तमैः ।
मण्डपैः सुविचित्रैस्तु स्फाटिकस्तम्भसंयुतैः ॥ ११
संयुतं सर्व्वभूतेन्द्रैर्ब्रह्मेन्द्रोपेन्द्रपूजितैः ।
वराह-गज-सिंहर्क्ष-शार्दूल-करभाननैः ॥ १२
गृध्रोलूकमुखैश्चान्यैर्मृगोष्ट्राजमुखैरपि ।
प्रमथैर्विविधैः स्थूलैर्गिरिकूटोपमैः शुभैः ॥ १३
करालैर्हरिकेशैश्च रोमशैश्च महाभुजैः ।
नानावर्णाकृतिधरैर्नानासंस्थानसंस्थितैः ॥ १४
दीप्तास्यैर्दीप्तचरितैर्नन्दीश्वरमुखैः शुभैः ।
ब्रह्मेन्द्रविष्णुसङ्काशैरणिमादिगुणान्वितैः ॥ १५
शुशून्यममरैर्नित्यं महापरिषदैस्तथा ।
तत्र भूतपतेर्देवाः पूजां नित्यं प्रयुञ्जते ॥ १६
झर्झरैः शङ्खपटहैर्भेरी-डिण्डिम-गोमुखैः ।
ललितावल्गितोद्गीतैर्वृत्तवल्गितगर्ज्जितैः ॥ १७
पूजितो वै महादेवः प्रमथैः प्रमथेश्वरः ।
सिद्धर्षि-देव-गन्धर्व्वैर्ब्रह्मणा च महात्मना ॥ १८
उपेन्द्रप्रमुखैश्चान्यैः पूजितस्तत्र शङ्करः ।
विभक्तचारुशिखरं यत्र तच्छृङ्गवर्च्चसम् ॥ १९
कैलासो यक्षराजस्य कुबेरस्य महात्मनः ।
निवासः कोटियक्षाणां तथान्येषां महात्मनाम् ॥२०
तत्रापि देवदेवस्य भवस्यायतनं महत् ।
तस्मिन्नायतने सोमः सदास्ते सगणो हरः ॥ २१
यत्र मन्दाकिनी नाम नलिनीविपुलोदका ।
सुवर्णमणिसोपाना कुबेरशिखरे शुभे ॥ २२
जाम्बूनदमयैः पद्मैर्गन्धस्पर्शगुणान्वितैः ।
नीलवैदूर्य्यपत्रैश्च गन्धोपेतैर्महोत्पलैः ॥ २३
तथा कुमुदखण्डैश्च महापद्मैरलङ्कृता ।
यक्षगन्धर्व्वनारीभिरप्सरोभिश्च सेविता ॥ २४
देव-दानव-गन्धर्व्वैर्यक्ष-राक्षस-किन्नरैः ।
उपस्पृष्टजला पुण्या नदी मन्दाकिनी शुभा ॥ २५
तस्याश्चोत्तरपार्श्वे तु भवस्यायतनं शुभम् ।
वैदूर्य्यमणिसम्पन्नं तत्रास्ते शङ्करोऽव्ययः ॥ २६
द्विजाः कनकनन्दायास्तीरे वै प्राचि दक्षिणे ।
वनं द्विजसहस्राढ्यं मृगपक्षिसमाकुलम् ॥ २७
तत्रापि सगणः साम्बः क्रीड़ते द्रिसमे गृहे ।
नन्दायाः पश्चिमे तीरे किञ्चिद्वै दक्षिणाश्रिते ॥ २८
पुरं रुद्रपुरी नाम नानाप्रासादसङ्कुलम् ।
तत्रापि शतधा कृत्वा ह्यात्मानञ्चाम्बया सह ॥ २९
क्रीड़ते सगणः साम्बस्तच्छिवालयमुच्यते ।
एवं शतसहस्राणि शर्व्वस्यायतनानि तु ॥ ३०
प्रतिद्वीपे मुनिश्रेष्ठाः पर्व्वतेषु वनेषु च ।
नदी-नद-तटाकानां तीरेष्वर्णवसन्धिषु ॥ ३१

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशोऽध्यायः ।

### सूत उवाच ।

नद्यश्च बहवः प्रोक्ताः सदा बहुजलाः शुभाः ।
सरोवरेभ्यः सम्भूतास्त्वसंख्याता द्विजोत्तमाः ॥ १
प्राङ्मुखा दक्षिणास्यास्तु चोत्तरप्रभवाः शुभाः ।
पश्चिमाग्राः पवित्राश्च प्रतिवर्षं प्रकीर्त्तिताः ॥ २
आकाशाम्भोनिधिर्योऽसौ सोम इत्यभिधीयते ।
आधारः सर्व्वभूतानां देवानाममृताकरः ॥ ३
अस्मात् प्रवृत्ता पुण्योदा नदी त्वाकाशगामिनी ।
सप्तमेनानिलपथा प्रवृत्ता चामृतोदका ॥ ४
सा ज्योतींष्यनुवर्त्तन्ती ज्योतिर्गणनिषेविता ।
ताराकोटिसहस्राणां नभसश्च समायुता ॥ ५
परिवर्त्तत्यहरहर्यथा सोमस्तथैव सा ।
चलार्थशीतिश्च तथा सहस्राणां समुच्छ्रितः ॥ ६
योजनानां महामेरुः श्रीकण्ठाक्रीड़कोमलः ।
तत्रासीनो यतः शर्व्वः साम्बः सह गणेश्वरैः ॥ ७
क्रीड़ते सुचिरं कालं तस्मात् पुण्यजला शिवा ।
गिरिं मेरुं नदी पुण्या सा प्रयाति प्रदक्षिणम् ॥ ८
विभज्यमानसलिला सा जवेनानिलेन च ।
मेरोरत्तरकूटेषु निपपात चतुर्ष्वपि ॥ ९

समन्तात् समतिक्रम्य सर्व्वाद्रीन् प्रविभागशः।
नियोगाद्देवदेवस्य प्रविष्टा सा महार्णवम्॥ १०
अस्या विनिर्गता नद्यः शतशोऽथ सहस्रशः।
सर्व्वद्वीपाद्रिवर्षेषु बह्वः परिकीर्त्तिताः॥ ११
क्षुद्रनद्यस्त्वसंख्याता गङ्गा यत्रां गतास्वरात्।
केतुमाले नराः कालाः सर्व्वे पनसभोजनाः॥ १२
स्त्रियश्चोत्पलवर्णाभा जीवितञ्चायुतं स्मृतम्।
भद्राश्वे शुक्लवर्णाश्च स्त्रियश्चन्द्रांशुसन्निभाः॥ १३
कालाम्रभोजनाः सर्व्वे निरातङ्का रतिप्रियाः।
दशवर्षसहस्राणि जीवन्ति शिवभाविताः॥ १४
हिरण्मया इवात्यर्थमीश्वरार्पितचेतसः।
तथा रमणके जीवा न्यग्रोधफलभोजनाः॥ १५
दशवर्षसहस्राणि शतानि दश पञ्च च।
जीवन्ति शुक्लास्ते सर्व्वे शिवध्यानपरायणाः॥ १६
हैरण्मया महाभागा हिरण्मयवनाश्रयाः।
एकादश सहस्राणि शतानि दश पञ्च च॥ १७
वर्षाणां तत्र जीवन्ति अश्वत्थाशनजीवनाः।
हिरण्मया इवात्यर्थमीश्वरार्पितमानसाः॥ १८
कुरुवर्षे तु कुरवः स्वर्गलोकात् परिच्युताः।
सर्व्वे मैथुनजाताश्च क्षीरिणः क्षीरभोजनाः॥ १९
अन्योन्यमनुरक्ताश्च चक्रवाकसधर्म्मिणः।
अनामया ह्यशोकाश्च नित्यं सुखनिषेविणः॥ २०
त्रयोदशसहस्राणि शतानि दश पञ्च च।
जीवन्ति ते महावीर्य्या न चान्यस्त्रीनिषेविणः॥ २१
सहैव मरणं तेषां कुरूणां स्वर्गवासिनाम्।
हृष्टानां सुप्रवृद्धानां सर्व्वान्नामृतभोजिनाम्॥ २२
सदा तु चन्द्रकान्तानां सदा यौवनशालिनाम्।
श्यामाङ्गानां सदा सर्व्व-भूषणासददेहिनाम्॥ २३
जम्बूद्वीपे तु तत्रापि कुरुवर्षं सुशोभनम्।
तत्र चन्द्रप्रभं शम्भोर्विमानं चन्द्रमौलिनः॥ २४
वर्षे तु भारते मर्त्त्याः पुण्याः कर्म्मवशायुषः।
शतायुषः समाख्याता नानावर्णाल्पदेहिनः॥ २५
नानादेवार्च्चने युक्ता नानाकर्म्मफलाशिनः।
नाना ज्ञानार्थसम्पन्ना दुर्ब्बलाश्चाल्पभोगिनः॥ २६
इन्द्रद्वीपे तथा केचित् तथैव च कसेरुके।
ताम्रद्वीपं गताः केचित् केचिद्देशं गभस्तिमत्॥ २७
नागद्वीपं तथा सौम्यं गान्धर्व्वं वारुणं गताः।
केचिन्म्लेच्छाः पुलिन्दाश्च नानाजातिसमुद्भवाः॥ २८
पूर्व्वे किरातास्तस्यान्ते पश्चिमे यवनाः स्मृताः।
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च सर्व्वशः॥ २९
इज्या-युद्ध-वणिज्याभिर्वर्त्तयन्तो व्यवस्थिताः।
तेषां संव्यवहारोऽयं वर्त्ततेऽत्र परस्परम्॥ ३०
धर्म्मार्थकामसंयुक्तो वर्णानान्तु स्वकर्म्मसु।
सङ्कल्पश्चाभिमानश्च आश्रमाणां यथाविधि॥ ३१
इह स्वर्गापवर्गार्थं प्रवृत्तिर्यत्र मानुषी।
तेषाञ्च युगकर्म्माणि नान्यत्र मुनिपुङ्गवाः॥ ३२
दश वर्षसहस्राणि स्थितिः किम्पुरुषे नृणाम्।
सुवर्णवर्णाश्च नराः स्त्रियश्चाप्सरसोपमाः॥ ३३
अनामया ह्यशोकाश्च सर्व्वे ते शिवभाविताः।
शुद्धसत्त्वाश्च हेमाभाः सदाराः प्लक्षभोजनाः॥ ३४
महारजतसङ्काशा हरिवर्षेऽपि मानवाः।
देवलोकाच्च्युताः सर्व्वे देवाकाराश्च सर्व्वशः॥ ३५
हरं यजन्ति सर्व्वेशं पिबन्तीक्षुरसं शुभम्।
न जरा बाधते तेन न च जीर्य्यन्ति ते नराः॥ ३६
दश वर्षसहस्राणि तत्र जीवन्ति मानवाः।
मध्यमं यन्मया प्रोक्तं नाम्ना वर्षमिलावृतम्॥ ३७
न तत्र सूर्य्यस्तपति न ते जीर्य्यन्ति मानवाः।
चन्द्रसूर्य्यौ न नक्षत्रं न प्रकाशमिलावृते॥ ३८
पद्मप्रभाः पद्ममुखाः पद्मपत्रनिभेक्षणाः।
पद्मपत्रसुगन्धाश्च जायन्ते भवभाविताः॥ ३९
जम्बूफलरसाहारा अनिष्पन्दाः सुगन्धिनः।
देवलोकागतास्तत्र जायन्ते ह्यजरामराः॥ ४०
त्रयोदश सहस्राणि वर्षाणां ते नरोत्तमाः।
आयुःप्रमाणं जीवन्ति वर्षे दिव्ये ह्यिलावृते॥ ४१
जम्बूफलरसं पीत्वा न जरा बाधते ह्यिमान्।
न क्षुधा न क्लमश्चापि न जनो मृत्युमांस्तथा॥ ४२
तत्र जाम्बूनदं नाम कनकं देवभूषणम्।
इन्द्रगोपप्रतीकाशं जायते भास्वरन्तु तत्॥ ४३
एवं मया समाख्याता नववर्षानुवर्त्तिनः।
वर्णायुर्भोजनाद्यानि संक्षिप्य न तु विस्तरात्॥ ४४
हेमकूटे तु गन्धर्व्वा विज्ञेयाश्चाप्सरोगणाः।
सर्व्वे नागाश्च निषधे शेष-वासुकि-तक्षकाः॥ ४५
महाबलाश्च यक्षिंशद्रमन्ते याज्ञिकाः सुराः।
नीले तु वैदूर्य्यमये सिद्धा ब्रह्मर्षयोऽमलाः॥ ४६

दैत्यानां दानवानाञ्च श्वेतः पर्व्वत उच्यते।
शृङ्गवान् पर्व्वतश्चैव पितॄणां निलयः सदा॥ ४७
हिमवान् यक्षमुख्यानां भूतानामीश्वरस्य च।
सर्व्वाद्रिषु महादेवो हरिणा ब्रह्मणाऽन्वया॥ ४८
नन्दिना च गणैश्चैव वर्षेषु च वनेषु च।
नीलश्वेतत्रिशृङ्गे च भगवान् नीललोहितः॥ ४९
सिद्धैर्देवैश्च पितृभिर्दृष्टो नित्यं विशेषतः।
नीलश्च वैदूर्य्यमयः श्वेतः शुक्लो हिरण्मयः॥ ५०
मयूरवर्हवर्णस्तु शातकुम्भस्त्रिशृङ्गवान्।
एते पर्व्वतराजानो जम्बूद्वीपे व्यवस्थिताः॥ ५१

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे भुवनकोष-
स्वभाववर्णनं नाम द्विपञ्चाशोऽध्यायः॥५२॥

---

## त्रिपञ्चाशोऽध्यायः।

सूत उवाच।

प्लक्षद्वीपादिद्वीपेषु सप्त सप्तसु पर्व्वताः।
ऋज्वायताः प्रतिदिशं निविष्टा वर्षपर्व्वताः॥ १
प्लक्षद्वीपे तु वक्ष्यामि सप्त दिव्यान् महाचलान्।
गोमेदकोऽत्र प्रथमो द्वितीयश्चान्द्र उच्यते॥ २
तृतीयो नारदो नाम चतुर्थो दुन्दुभिः स्मृतः।
पञ्चमः सोमको नाम सुमनाः षष्ठ उच्यते॥ ३
स एव वैभवः प्रोक्तो वैभ्राजः सप्तमः स्मृतः।
सप्तैते गिरयः प्रोक्ताः प्लक्षद्वीपे विशेषतः॥ ४
सप्तैव शाल्मलिद्वीपे तांस्तु वक्ष्याम्यनुक्रमात्।
कुमुदश्चोत्तमश्चैव पर्व्वतश्च वलाहकः॥ ५
द्रोणः कङ्कश्च महिषः ककुद्मान् सप्तमः स्मृतः।
कुशद्वीपे तु सप्तैव द्वीपाश्च कुलपर्व्वताः॥ ६
तांस्तु संक्षेपतो वक्ष्ये नाममात्रेण वै क्रमात्।
विद्रुमः प्रथमः प्रोक्तो द्वितीयो हेमपर्व्वतः॥ ७
तृतीयो द्युतिमान् नाम चतुर्थः पुष्पितः स्मृतः।
कुशेशयः पञ्चमस्तु षष्ठो हरिगिरिः स्मृतः॥ ८
सप्तमो मन्दरः श्रीमान् महादेवनिकेतनम्।
मन्दा इति ह्यपां नाम मन्दरो धारणादपाम्॥ ९
तत्र साक्षाद्वृषाङ्कस्तु विश्वेशो विमलः शिवः।
सोमः सनन्दी भगवानास्ते हेमगृहोत्तमे॥ १०
तपसा तोषितः पूर्व्वं मन्दरेण महेश्वरः।
अविमुक्ते महाक्षेत्रे लेभे स परमं वरम्॥ ११
प्रार्थितश्च महादेवो निवासार्थं सहाम्बया।
अविमुक्तादुपागम्य चक्रे वासं स मन्दरे॥ १२
सनन्दी सगणः सोमस्तेनासौ तत्र सुव्रति।
क्रौञ्चद्वीपे तु सप्तेह क्रौञ्चाद्याः कुलपर्व्वताः॥ १
क्रौञ्चो वामनकः पश्चात् तृतीयश्चान्धकारकः।
अन्धकारात् परश्चापि दिवावृन्नाम पर्व्वतः॥ १४
दिवावृतः परश्चापि विविन्दो गिरिरुच्यते।
विविन्दात् परतश्चापि पुण्डरीको महागिरिः॥
पुण्डरीकात् परश्चापि प्रोच्यते दुन्दुभिस्वनः।
एते रत्नमयाः सप्त क्रौञ्चद्वीपस्य पर्व्वताः॥ १६
शाकद्वीपे च गिरयः सप्त तांस्तु निबोधत।
उदयो रैवतश्चापि श्यामको मुनिसत्तमाः॥ १७
राजतश्च गिरिः श्रीमानाम्बिकेयः सुशोभनः।
आम्बिकेयात् परो रम्यः सर्व्वौषधिसमन्वितः।
तथैव केशरीत्युक्तो यतो वायुः प्रजायते।
पुष्करे पर्व्वतः श्रीमानेक एव महाशिलः॥ १८
चित्रैर्मणिमयैः कूटैः शिलाजालैः समुच्छ्रितैः।
द्वीपस्य तस्य पूर्व्वार्द्धे चित्रसानुः स्थितो महान्।
योजनानां सहस्राणि ऊर्द्ध्वं पञ्चाशदुच्छ्रितः।
अधश्चैव चतुस्त्रिंशत्सहस्राणि महाचलः॥ २१
द्वीपस्यार्द्धे परिच्छिन्नः पर्व्वतो मानसोत्तरः।
स्थितो वेलासमीपे तु नवचन्द्र इवोदितः॥ २२
योजनानां सहस्राणि ऊर्द्ध्वं पञ्चाशदुच्छ्रितः।
तावदेव तु विस्तीर्णः पार्श्वतः परिमण्डलः॥ २
स एव द्वीपपश्चार्द्धे मानसः पृथिवीधरः।
एक एव महासानुः सन्निवेशाद्द्विधाकृतः॥ २४
तस्मिन् द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ।
राजतौ मानसस्याथ पर्व्वतस्यानुमण्डलौ॥ २५
महावीतन्तु यद्वर्षं बाह्यतो मानसस्य तु।
तस्यैवाभ्यन्तरो यस्तु धातकीखण्ड उच्यते॥ २६
स्वादूदकेनोदधिना पुष्करः परिवारितः।
पुष्करद्वीप-विस्तार-विस्तीर्णोऽसौ समन्ततः॥ २७
विस्तारान्मण्डलाच्चैव पुष्करस्य समो न तु।
एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः॥ २८
द्वीपस्यानन्तरो यस्तु समुद्रः सप्तमस्तु वै।
एवं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परम्॥ २९

परेण पुष्करस्याथ अनुवृत्य स्थितो महान्।
स्वादूदकसमुद्रस्तु समन्तात् परिवेष्ट्य च ॥ ३०
परेण तस्य महती दृश्यते लोकसंस्थितिः।
काञ्चनी द्विगुणा भूमिः सर्वा चैकशिलोपमा ॥ ३१
तस्याः परेण शैलस्तु मर्य्यादापरिमण्डलः।
प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥ ३२
दृश्यादृश्यगिरिर्यावत् तावदेषा धरा द्विजाः।
योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः ॥ ३३
तावांश्च विस्तरस्तस्य लोकालोकमहागिरेः।
अर्व्वाचीने तु तस्यार्द्धे चरन्ति रविरश्मयः ॥ ३४
परार्द्धे तु तमोनित्यं लोकालोकस्ततः स्मृतः।
एवं संक्षेपतः प्रोक्तो भूर्लोकस्य च विस्तरः ॥ ३५
आ भानोर्वै भुवः स्वस्तु आ ध्रुवान्मुनिसत्तमाः।
आवहाद्या निविष्टास्तु वायोर्वै सप्त नेमयः ॥ ३६
आवहः प्रवहश्चैव ततश्चानुवहस्तथा।
संवहो विवहश्चाथ ततश्चोर्द्ध्वं परावहः ॥ ३७
द्विजाः परिवहश्चेति वायोर्वै सप्त नेमयः।
वलाहकास्तथाभानुश्चन्द्रो नक्षत्रराशयः ॥ ३८
ग्रहाणि ऋषयः सप्त ध्रुवो विप्राः क्रमादिह।
योजनानां महीपृष्ठादूर्द्धं पञ्चदशाध्रुवात् ॥ ३९
नियुतान्येकनियुतं भूपृष्ठाद्भानुमण्डलम्।
रथः षोड़शसाहस्रो भास्करस्य तथोपरि ॥ ४०
चतुरशीतिशाहस्रो मेरुश्चोपरि भूतलात्।
कोटियोजनमाक्रम्य महर्लोको ध्रुवाद्ध्रुवः ॥ ४१
जनलोको महर्लोकात् तथा कोटिद्वयं द्विजाः।
जनलोकात् तपोलोकश्चतस्रः कोटयो मतः ॥ ४२
प्राजापत्याद्ब्रह्मलोकः कोटिषट्कं विसृज्य तु।
पुण्यलोकास्तु सप्तैते ह्यण्डेऽस्मिन् कथिता द्विजाः॥४३
अधः सप्ततलानान्तु नरकाणां हि कोटयः।
मायान्ताश्चैव घोराद्या अष्टाविंशतिरेव तु ॥ ४४
पापिनस्तेषु पच्यन्ते स्वस्वकर्म्मानुरूपतः।
अवीच्यन्तानि सर्व्वाणि रौरवाद्यानि तेषु च ॥ ४५
प्रत्येकं पञ्चकान्याहुर्नरकाणि विशेषतः।
अण्डमादौ मया प्रोक्तमण्डस्यावरणानि च ॥ ४६
हिरण्यगर्भसर्गश्च प्रसङ्गादङ्गविस्तरात्।
अण्डानामीदृशानान्तु कोट्यो ज्ञेयाः सहस्रशः ॥ ४७
सर्व्वगत्वात् प्रधानस्य तिर्य्यगूर्द्ध्वमधस्तथा।
अण्डेष्वेतेषु सर्व्वेषु भुवनानि चतुर्द्दश ॥ ४८
प्रत्यण्डं द्विजशार्द्दूलास्तेषां हेतुमहेश्वरः।
अण्डेषु चाण्डवाह्येषु तथाण्डावरणेषु च ॥ ४९
तमोऽन्ते च तमःपारे चाष्टमूर्त्तिर्व्यवस्थितः।
अस्यात्मनो महेशस्य महादेवस्य धीमतः ॥ ५०
अदेहिनस्त्वहो देहमखिलं परमात्मनः।
अस्याष्टमूर्त्तेः शर्व्वस्य शिवस्य गृहमेधिनः ॥ ५१
गृहिणी प्रकृतिर्दिव्या प्रजाश्च महदादयः।
पशवः किङ्करास्तस्य सर्व्वदेहाभिमानिनः ॥ ५२
आद्यन्तहीनो भगवाननन्तः
पुमान् प्रधानप्रमुखाश्च सप्त।
प्रधानमूर्त्तिस्त्वथ षोड़शाङ्गो
महेश्वरस्याष्टतनुः स एव ॥ ५३
आज्ञाबलात् तस्य धरा स्थितेह
धराधरा वारिधराः समुद्राः।
ज्योतिर्गणाः शक्रमुखाः सुराश्च
वैमानिकाः स्थावरजङ्गमाश्च ॥ ५४
दृष्ट्वा यक्षं लक्षणैर्हीनमीशं
दृष्ट्वा सेन्द्रास्ते किमेतत् त्विहेति।
यक्षं गत्वा निश्चयात् पावकाद्याः
शक्तिक्षीणाश्चाभवन् यत् ततोऽपि ॥ ५५
दग्धुं तृणं वापि समक्षमस्य
यक्षस्य वह्निर्न शशाक विप्राः।
वायुस्तृणं चालयितुं तथान्ये
स्वान् स्वान् प्रभावान् सकलामरेन्द्राः ॥ ५६
तदा स्वयं वृत्ररिपुः सुरेन्द्रैः
सुरेश्वरः सर्व्वसमृद्धिहेतुः।
सुरेश्वरं यक्षमुवाच को वा
भवानितीत्थं स कुतूहलात्मा ॥ ५७
तदा ह्यदृश्यं गत एव यक्ष-
स्तदाम्बिका हैमवती शुभाख्या।
उमाशुभैराभरणैरनेकैः
सुशोभमाना ननु चाविरासीत् ॥ ५८
तां शक्रमुख्या बहु शोभमाना-
मुमामजां हैमवतीमपृच्छन्।
किमेतदीशे बहु शोभमाने
को वाम्बिके यक्षवपुश्चकास्ति ॥ ५९

निशम्य तद्वचनमुमाम्बिकाह
त्वगोचरश्चेति सुराः सशक्राः ।
शशीमुखेनां मृगराजगामिनी-
मुमामजां लोहितशुक्लकृष्णाम् ॥ ६०
सम्भाविता सा सकलामरेन्द्रैः
सर्व्वप्रवृत्तिस्तु सुरासुराणाम् ।
अहं पुराणं प्रकृतिश्च पुंसो
यच्चस्य चाज्ञावशगेत्यथाह ॥ ६१
तस्माद्द्विजाः सर्व्वमजस्य तस्य
नियोगतश्चाण्डभूदजादे ।
अजश्च अण्डादखिलञ्च तस्मा-
ज्ज्योतिर्गणैर्लोकमजात्मकं तत् ॥ ६२

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
भुवनकोषविन्यासनिर्णयो नाम
त्रिपञ्चाशोऽध्यायः ॥५३॥

---

## चतुःपञ्चाशोऽध्यायः ।

सूत उवाच ।

ज्योतिर्गणप्रचारं वै संक्षिप्याण्डे ब्रवीम्यहम् ।
दिवसेवाणि चालोक्य ग्रहचारप्रसिद्धये ॥ १
मानसोपरि माहेन्द्री प्राच्यां मेरोः पुरी स्थिता ।
दक्षिणे भानुपुत्रस्य वरुणस्य च वारुणी ॥ २
सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः ।
अमरावती संयमनी सुखा चैव विभा क्रमात् ॥ ३
लोकपालोपरिष्टात् तु सर्व्वतो दक्षिणायने ।
काष्ठां गतस्य सूर्य्यस्य गतिर्या तां निबोधत ॥ ४
दक्षिणप्रक्रमे भानुः क्षिप्तेषुरिव धावति ।
ज्योतिषां चक्रमादाय सततं परिगच्छति ॥ ५
सुरान्तगो यदा भानुः शक्रस्य भवति प्रभुः ।
सर्व्वैः सांयमनैः सौरो ह्युदयो दृश्यते द्विजाः ॥ ६
स एव सुखवत्यान्तु निशान्तस्थः प्रदृश्यते ।
अस्तमेति पुनः सूर्य्यो विभायां विश्वदृग्विभुः ॥ ७
मया प्रोक्तोऽमरावत्यां यथाऽसौ वारितस्करः ।
तथा सां यमनीं प्राप्य सुखाञ्चैव विभां खगः ॥ ८
यदापराह्णस्त्वाग्नेय्यां पूर्व्वाह्णो नैर्ऋते द्विजाः ।
तदा त्वपररात्रश्च वायुभागे सुदारुणः ॥ ९
ईशान्यां पूर्व्वरात्रस्तु गतिरेषा च सर्व्वतः ।
एवं पुष्करमध्ये तु यदा सर्पति वारिपः ॥ १०
त्रिंशांशकन्तु मेदिन्यां मुहूर्त्तेनैव गच्छति ।
योजनानां मुहूर्त्तस्य इमां संख्यां निबोधत ॥
पूर्णा शतसहस्राणामेकत्रिंशत् तु सा स्मृता ।
पञ्चाशच्च तथान्यानि सहस्राण्यधिकानि तु ॥
मौहूर्त्तिकी गतिर्ह्येषा भास्करस्य महात्मनः ।
एतेन गतियोगेन यदा काष्ठान्तु दक्षिणाम् ॥
पर्य्यागच्छेत् पतङ्गोऽपि सौम्याशाञ्चोत्तरेऽहनि ।
मध्ये तु पुष्करस्याथ भ्रमते दक्षिणायने ॥ १४
मानसोत्तरशैले तु महातेजा विभावसुः ।
मण्डलानां शतं पूर्णं तदशीत्यधिकं विभुः ॥ १५
वाह्यञ्चाभ्यन्तरं प्रोक्तमुत्तरायणदक्षिणे ।
प्रत्यहं चरते तानि सूर्य्यो वै मण्डलानि तु ॥
कुलालचक्रपर्य्यन्तो यथा शीघ्रं प्रवर्त्तते ।
दक्षिणप्रक्रमे देवस्तथा शीघ्रं प्रवर्त्तते ॥ १७
तस्मात् प्रकृष्टां भूमिन्तु कालेनाल्पेन गच्छति ।
सूर्य्यो द्वादशभिः शीघ्रं मुहूर्त्तैर्दक्षिणायने ॥ १८
त्रयोदशार्द्धमृक्षाणामह्ना तु चरते रविः ।
मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥ १९
कुलालचक्रमध्यन्तु यथा मन्दं प्रसर्पति ।
तथोदगयने सूर्य्यः सर्पते मन्दविक्रमः ॥ २०
तस्माद्दीर्घेण कालेन भूमिमल्पान्तु गच्छति ।
स रथोऽधिष्ठितो भानोरादित्यैर्मुनिभिस्तथा ॥
गन्धर्व्वैरप्सरोभिश्च ग्रामणी-सर्प-राक्षसैः ।
प्रदीपयन् सहस्रांशुरग्रतः पृष्ठतोऽप्यधः ॥ २२
ऊर्द्ध्वतश्च करं त्यक्त्वा सभां ब्राह्मीमनुत्तमाम् ।
अम्भोभिर्मुनिभिस्त्यक्तैः सन्ध्यायान्तु निशाचरान् ।
हत्वा हत्वा तु सम्प्राप्तान् ब्राह्मणैश्चरते रविः ।
अष्टादशमुहूर्त्तन्तु उत्तरायणपश्चिमम् ॥ २४
अहर्भवति तच्चापि चरते मन्दविक्रमः ।
त्रयोदशार्द्धमृक्षाणि नक्तं द्वादशभी रविः ।
मुहूर्त्तैस्तावदृक्षाणि दिवाष्टादशभिश्चरन् ॥ २५
ततो मन्दतरं नाभ्यां चक्रं भ्रमति वै यथा ।
मृत्पिण्ड इव मध्यस्थो ध्रुवो भ्रमति वै तथा ॥ २६
त्रिंशन्मुहूर्त्तैरेवाहुरहोरात्रं पुराविदः ।
उभयोः काष्ठयोर्मध्ये भ्रमतो मण्डलानि तु ॥ २७

कुलालचक्रनाभिस्तु यथा तत्रैव वर्त्तते।
औत्तानपादो भ्रमति ग्रहैः सार्द्धं ग्रहाग्रणीः॥ २८
गणो मुनिज्योतिषान्तु मनसा तस्य सर्पति।
अधिष्ठितः पुनस्तेन भानुस्त्वादाय तिष्ठति॥ २९
किरणैः सर्व्वतस्तोयं देवो वै ससमीरणः।
औत्तानपादस्य सदा ध्रुवत्वं वै प्रसादतः॥ ३०
विष्णोरौत्तानपादेन चाप्तं तातस्य हेतुना।
आपः पीतास्तु सूर्य्येण क्रमन्ते शशिनः क्रमात्॥ ३१
निशाकरान्निःस्रवन्ते जीमूतान् प्रत्यपः क्रमात्।
वृन्दं जलमुचाञ्चैव श्वसनेनाभिताड़ितम्॥ ३२
छायां वृष्टिं विसृजतेऽभासयत् तेन भास्करः।
तोयस्य नास्ति वै नाशस्तदेव परिवर्त्तते॥ ३३
हिताय सर्व्वजन्तूनां गतिः शर्व्वेण निर्म्मिता।
भूर्भुवः स्वस्तथा ह्यापो ह्यन्नञ्चामृतमेव च॥ ३४
प्राणा वै जगतामापो भूतानि भुवनानि च।
बहुनात्र किमुक्तेन चराचरमिदं जगत्॥ ३५
अपां शिवश्च भगवानाधिपत्ये व्यवस्थितः।
अपां त्वधिपतिर्देवो भव इत्येव कीर्त्तितः।
भवात्मकं जगत् सर्व्वमिति किञ्चेह चाद्भुतम्॥ ३६
नारायणत्वं देवस्य हरेश्चाद्भिः कृतं विभोः।
जगतामालयो विष्णुस्त्वापस्तस्यालयानि तु॥ ३७
दन्दह्यमानेषु चराचरेषु
गोधूमभूतास्त्वथ निष्क्रमन्ति।
या या ऊर्द्धं मारुतेनेरिता वै
तास्तास्त्वभ्राण्यग्निना वायुना च॥ ३८
अतो धूमाग्निवातानां संयोगस्त्वभ्रमुच्यते।
वारीणि वर्षतीत्यभ्रमभ्रस्येशः सहस्रदृक्॥ ३९
यज्ञधूमोद्भवञ्चापि द्विजानां हितकृत् सदा।
दावाग्निधूमसम्भूतमभ्रं वनहितं स्मृतम्॥ ४०
मृतधूमोद्भवन्त्वभ्रमशुभाय भविष्यति।
अभिचाराग्निधूमोत्थं भूतनाशाय वै द्विजाः॥ ४१
एवं धूमविशेषेण जगतां वै हिताहितम्।
तस्मादाच्छादयेद्धूममभिचारकृतं नरः॥ ४२
अनाच्छाद्य द्विजः कुर्य्याद्धूमं यश्चाभिचारिकम्।
एवमुद्दिश्य लोकस्य चयकृच्च भविष्यति॥ ४३
अपां निधानं जीमूताः षण्मासानिह सुव्रताः।
वर्षयन्त्येव जगतां हिताय पवनाज्ञया॥ ४४
स्तनितञ्चेह वायव्यं वैद्युतं पावकोद्भवम्।
त्रिधा तेषामिहोत्पत्तिरभ्राणां मुनिपुङ्गवाः॥ ४५
न भ्रश्यन्ति यतोऽभ्राणि मेघनाम्नेष उच्यते।
काष्ठा वाह्नाश्च वैरिञ्च्याः पक्षाश्चैव पृथग्विधाः॥ ४६
आज्यानां काष्ठसंयोगाद्वह्नेर्धूमः प्रवर्त्तितः।
द्वितीयानाञ्च सम्भूतिर्विरिञ्चोच्छ्वासवायुना॥ ४७
भूभृतान्त्वथ पक्षैस्तु मघवच्छेदितैस्ततः।
वाह्नेयास्त्वथ जीमूतास्त्वावहस्थानगाः शुभाः॥ ४८
विरिञ्चोच्छ्वासजाः सर्व्वे प्रवहस्कन्धजास्ततः।
पक्षजाः पुष्करादयाश्च वर्षन्ति च यदा जलम्॥ ४९
मूकाः सशब्ददुष्टाश्चास्त्वेतैः कृत्यं यथाक्रमम्।
धामवृष्टिप्रदा दीर्घकालं शीतसमीरिणः॥ ५०
जीवकाश्च तथा चैषा विद्युत्स्तनितवर्ज्जिताः।
तिष्ठन्त्याक्रोशमात्रे तु धरापृष्ठादितस्ततः॥ ५१
अर्द्धक्रोशे तु सर्व्वे वै जीमूता गिरिवासिनः।
मेघा योजनमात्रन्तु साध्यत्वादद्भुतोयदाः॥ ५२
धरापृष्ठाद्द्विजाः छायां विद्युद्गुणसमन्विताः।
तेषां तेषां वृष्टिसर्गं त्रेधा कथितमत्र तु॥ ५३
पक्षजाः कल्पजाः सर्व्वे पर्व्वतानां महत्तमाः।
कल्पान्ते ते च वर्षन्ति रात्रौ नाशाय शारदाः॥ ५४
पक्षजाः पुष्करादयाश्च वर्षन्ति च यदा जलम्।
तदार्णवमभूत् सर्व्वं तत्र शेते निशीश्वरः॥ ५५
आग्नेयानां श्वासजानां पक्षजानां द्विजर्षभाः।
जलदानां सदा धूमो ह्याप्यायन इति स्मृतः॥ ५६
पौण्ड्रास्तु वृष्टयः सर्व्वा विद्युताः शीतमस्कराः।
पुण्ड्रदेशेषु पतिता नागानां शीकरा हिमाः॥ ५७
गाङ्गा गङ्गाम्बुसम्भूता पर्ज्जन्येन परावहैः।
नगानाञ्च नदीनाञ्च दिग्गजानां समाकुलम्॥ ५८
मेघानाञ्च पृथग्भूतं जलं प्रायाद्दिगाद्गगम्।
परावहो यः श्वसनश्चानयत्यम्बिकागुरुम्॥ ५९
सेनापतिमतिक्रम्य वृष्टिशेषं द्विजाः परम्।
अभ्येति भारते वर्षे त्वपरान्तविवृद्धये॥ ६०
वृष्टयः कथिता ह्यत्र द्विधा वस्तुविवृद्धये।
अस्यद्वयस्य संक्षेपात् प्रब्रवीमि यथामति॥ ६१
स्रष्टा भानुर्महातेजा वृष्टीनां विश्वदृग्विभुः।
सोऽपि साक्षाद्द्विजश्रेष्ठाशेशानः परमः शिवः॥ ६२
स एव तेजस्त्वोजस्तु बलं विप्रा यशः स्वयम्।

चक्षुः श्रोत्रं मनो मृत्युरात्मा मन्युर्विदिग्दिशः ॥ ६३
सत्यमृतं तथा वायुरम्बरं खचरश्च सः।
लोकपालो हरिर्ब्रह्मा रुद्रः साक्षान्महेश्वरः ॥ ६४
सहस्रकिरणः श्रीमानष्टहस्तः सुमङ्गलः।
अर्द्धनारीवपुः साक्षात् त्रिनेत्रस्त्रिदशाधिपः ॥ ६५
अस्यैवेह प्रसादात् तु वृष्टिर्नानाभवद्द्विजाः।
सहस्रगुणमुत्स्रष्टुमादत्ते किरणैर्जलम् ॥ ६६
जलस्य नाशो वृद्धिर्वा नास्त्येवास्य विचारतः।
ध्रुवेणाधिष्ठितो वायुर्वृष्टिं संहरते पुनः ॥ ६७
ग्रहान्निःसृत्य सूर्यात् तु कृत्स्ने नक्षत्रमण्डले।
चारस्यान्ते विशत्यर्कं ध्रुवेण समधिष्ठिता ॥ ६८

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे ज्योतिश्चक्रे सूर्य्य-गत्यादिकथनं नाम चतुः-पञ्चाशोऽध्यायः ॥५४॥

---

## पञ्चपञ्चाशोऽध्यायः।

सूत उवाच।

सौरं संक्षेपतो वक्ष्ये रथं शशिन एव च।
ग्रहाणामितरेषाञ्च यथा गच्छति चाम्बुपः ॥ १
सौरस्तु ब्रह्मणा सृष्टो रथस्त्वर्थवशेन सः।
संवत्सरस्यावयवैः कल्पितश्च द्विजर्षभाः ॥ २
त्रिनाभिना तु चक्रेण पञ्चारेण समन्वितः।
सौवर्णः सर्व्वदेवानामावासो भास्करस्य तु ॥ ३
नवयोजनसाहस्रो विस्तारायामतः स्मृतः।
द्विगुणोऽपि रथोपस्थादीषादण्डः प्रमाणतः ॥ ४
असङ्गैस्तु हयैर्युक्तो यतश्चक्रं ततः स्थितैः।
वाजिनस्तस्य वै सप्त च्छन्दोभिर्निर्म्मितास्तु ते ॥ ५
चक्रपक्षे निबद्धास्तु ध्रुवे चाक्षः समर्पितः।
सहाश्वचक्रो भ्रमते सहाक्षो भ्रमते ध्रुवः ॥ ६
अक्षः सहैकचक्रेण भ्रमतेऽसौ ध्रुवेरितः।
प्रेरको ज्योतिषां धीमान् ध्रुवो वै वातरश्मिभिः ॥७
युगाक्षकोटिसम्बद्धौ द्वौ रश्मी स्यन्दनस्य तु।
ध्रुवेण भ्रमते रश्मि-निबद्धः स युगाक्षयोः ॥ ८
भ्रमतो मण्डलानि स्युः खेचरस्य रथस्य तु।
युगाक्षकोटी ते तस्य दक्षिणे स्यन्दनस्य हि ॥ ९
ध्रुवेण प्रगृह्णीते व विचक्राश्वेऽञ्च रज्जुभिः।
भ्रमन्तमनुगच्छन्ति ध्रुवं रश्मी च तावुभौ ॥ १०
युगाक्षकोटिस्त्वेतस्य वातोर्म्मिस्यन्दनस्य तु।
कीले सक्ता यथा रज्जुर्भ्रमते सर्व्वतो दिशम् ॥ ११
भ्राम्यतस्तस्य रश्मी तु मण्डलेषूत्तरायणे।
वर्द्धेते दक्षिणे चैव भ्रमतो मण्डलानि तु ॥ १२
आकृष्येते यदा ते वै ध्रुवेणाधिष्ठितौ तदा।
आभ्यन्तरस्थः सूर्य्योऽथ भ्रमते मण्डलानि तु।
अशीतिमण्डलशतं काष्ठयोरन्तरं द्वयोः।
ध्रुवेण मुच्यमानाभ्यां रश्मिभ्यां पुनरेव तु ॥ १४
तथैव वाह्यतः सूर्य्यो भ्रमते मण्डलानि तु।
उद्वेष्टयन् स वेगेन मण्डलानि तु गच्छति ॥ १५
देवाश्चैव तथा नित्यं मुनयश्च दिवानिशम्।
यजन्ति सततं देवं भास्करं भवमीश्वरम् ॥ १६
स रथोऽधिष्ठितो देवैरादित्यैर्मुनिभिस्तथा।
गन्धर्व्वैरप्सरोभिश्च ग्रामणी-सर्प-राक्षसैः ॥ १७
एते वसन्ति वै सूर्य्ये द्वौ द्वौ मासौ क्रमेण तु।
आप्याययन्ति चादित्यं तेजोभिर्भास्करं शिवम्।
ग्रथितैः स्वैर्वचोभिस्तु स्तुवन्ति मुनयो रविम्।
गन्धर्व्वाप्सरसश्चैव नृत्यगेयैरुपासते ॥ १९
ग्रामणी-यक्ष-भूतानि कुर्व्वतेऽभीषुसंग्रहम्।
सर्पा वहन्ति वै सूर्य्यं यातुधानानुयान्ति च ॥ २०
वालखिल्या नयन्त्यस्तं परिवार्य्योदयाद्रविम्।
इत्येते वै वसन्तीह द्वौ द्वौ मासौ दिवाकरे ॥ २१
मधुश्च माधवश्चैव शुक्रश्च शुचिरेव च।
नभो-नभस्यौ विप्रेन्द्रा इषश्चोर्ज्जस्तथैव च ॥ २२
सहः-सहस्यौ च तथा तपस्यश्च तपः पुनः।
एते द्वादश मासास्तु वर्षं वै मानुषं द्विजाः ॥ २३
वासन्तिकस्तथा ग्रैष्मः शुभो वै वार्षिकस्तथा।
शारदश्च हिमश्चैव शैशिर ऋतवः स्मृताः ॥ २४
धाताऽर्य्यमाथ मित्रश्च वरुणश्चेन्द्र एव च।
विवस्वांश्चैव पूषा च पर्ज्जन्योऽंशुर्भगस्तथा ॥ २५
त्वष्टा विष्णुः पुलस्त्यश्च पुलहश्चात्रिरेव च।
वशिष्ठश्चाङ्गिराश्चैव भृगुर्बुद्धिमतां वरः ॥ २६
भारद्वाजो गौतमश्च कश्यपश्च क्रतुस्तथा।
जमदग्निः कौशिकश्च वासुकिः कङ्कणीकरः ॥ २७
तक्षकश्च तथा नाग एलापत्रस्तथा द्विजाः।
शङ्खपालस्तथाचान्यस्त्वैरावत इति स्मृतः ॥ २८

धनञ्जयो महापद्मस्तथा कर्कोटकः स्मृतः।
कम्बलोऽश्वतरश्चैव तुम्बुरुर्नारदस्तथा॥ २९
हाहाहूहूर्मुनिश्रेष्ठा विश्वावसुरनुत्तमः।
उग्रसेनोऽथ सुरुचिरन्यश्चैव परावसुः॥ ३०
चित्रसेनो महातेजाश्चोर्णायुश्चैव सुव्रताः।
घृताराष्ट्रः सूर्य्यवर्चा देवी साक्षात् कृतस्थला॥ ३१
शुभानना शुभश्रोणिर्दिव्या वै पुञ्जिकस्थली।
मेनका सहजन्या च प्रम्लोचाथ शुचिस्मिता॥ ३२
अनुम्लोचा घृताची च विश्वाची चोर्व्वशी तथा।
पूर्व्वचित्तिरिति ख्याता देवी साक्षात्तिलोत्तमा॥३३
रम्भा चाम्भोजवदना रथकृद्ग्रामणीः शुभः।
रथौजा रथचित्रश्च सुबाहुर्व्वैरथस्वनः॥ ३४
वरुणश्च तथैवान्यः सुषेणः सेनजिच्छुभः।
तार्च्यश्चारिष्टनेमिश्च चतजित् सत्यजित् तथा॥ ३५
रक्षोहेतिः प्रहेतिश्च पौरुषेयो वधस्तथा।
सर्पा व्याघ्रः पुनश्चापो वातो विद्युद्दिवाकरः॥ ३६
ब्रह्मोपेतश्च रक्षेन्द्रो यज्ञोपेतस्तथैव च।
एते देवादयः सर्व्वे वसन्त्यर्के क्रमेण तु॥ ३७
स्थानाभिमानिनो ह्येते गणा द्वादशसप्तकाः।
धात्रादिविष्णुपर्य्यन्ता देवा द्वादश कीर्त्तिताः॥ ३८
आदित्यं परमं भानुं भाभिराप्याययन्ति ते।
पुलस्त्याद्याः कौशिकान्ता मुनयो मुनिसत्तमाः॥३९
द्वादशैव स्तवैर्भानुं स्तुवन्ति च यथाक्रमम्।
नागाश्चाश्वतरान्तास्तु वासुकिप्रमुखाः शुभाः॥ ४०
द्वादशैव महादेवं वहन्त्येवं यथाक्रमम्।
क्रमेण सूर्य्यवर्च्चान्ता स्तुम्बुरुप्रमुखास्तुपम्॥ ४१
गीतैरेनमुपासन्ते गन्धर्व्वा द्वादशोत्तमाः।
कृतस्थलाद्या रम्भान्ता दिव्याश्चाप्सरसो रविम्॥ ४२
ताण्डवैः सरसैः सर्व्वाश्चोपासन्ते यथाक्रमम्।
दिव्याः सत्यजिदन्ताश्च ग्रामण्यो रथकृन्मुखाः॥ ४३
द्वादशास्य क्रमेणैव कुर्व्वतेऽभीषुसंग्रहम्।
प्रयान्ति यज्ञोपेतान्ता रक्षोहेतिमुखाः सह॥ ४४
सायुधा द्वादशैवैते राक्षसाश्च यथाक्रमम्।
धातार्य्यमा पुलस्त्यश्च पुलहश्च प्रजापतिः॥ ४५
उरगो वासुकिश्चैव कङ्कणीकश्च तावुभौ।
तुम्बुरुर्नारदश्चैव गन्धर्व्वौ गायतां वरौ॥ ४६
कृतस्थलाप्सराश्चैव तथा वै पुञ्जिकस्थली।
ग्रामणी रथकृच्चैव रथौजाश्चैव तावुभौ॥ ४७
रक्षोहेतिः प्रहेतिश्च यातुधानावुदाहृतौ।
मधु-माधवयोरेष गणो वसति भास्करे॥ ४८
वसन्ति ग्रीष्मकौ मासौ मित्रश्च वरुणश्च ह।
ऋषिरत्रिर्वशिष्ठश्च तक्षको नाग एव च॥ ४९
मेनका सहजन्या च गन्धर्व्वौ च हाहाहूहूः।
सुबाहुनामा ग्रामण्यौ रथचित्रश्च तावुभौ॥ ५०
पौरुषेयो वधश्चैव यातुधानावुदाहृतौ।
एते वसन्ति वै सूर्य्ये मासयोः शुचि-शुक्रयोः॥ ५१
ततः सूर्य्ये पुनश्चान्या निवसन्तीह देवताः।
इन्द्रश्चैव विवस्वांश्च अङ्गिरा भृगुरेव च॥ ५२
एलापत्रस्तथा सर्पः शङ्खपालश्च तावुभौ।
विश्वावसूग्रसेनौ च वरुणश्च रथस्वनः॥ ५३
प्रम्लोचा चैव विख्याता अनुम्लोचा च ते उभे।
यातुधानास्तथा सर्पौ व्याघ्रश्चैव तु तावुभौ॥ ५४
नभो-नभस्ययोरेष गणो वसति भास्करे।
पर्ज्जन्यश्चैव पूषा च भरद्वाजोऽथ गौतमः॥ ५५
धनञ्जय ऐरावांश्च सुरुचिः स परावसुः।
घृताची चाप्सरःश्रेष्ठा विश्वाची चातिशोभना॥ ५६
सेनजिच्च सुषेणश्च सेनानीर्ग्रामणीश्च तौ।
आपो वातश्च तावेतौ यातुधानावुभौ स्मृतौ॥ ५७
वसन्त्येते तु वै सूर्य्ये मास ऊर्ज्जे इषे च ह।
हैमन्तिकौ तु द्वौ मासौ वसन्ति च दिवाकरे॥ ५८
अंशुर्भगश्च द्वावेतौ कश्यपश्च क्रतुः सह।
भुजङ्गश्च महापद्मः सर्पः कर्कोटकस्तथा॥ ५९
चित्रसेनश्च गन्धर्व्व ऊर्णायुश्चैव तावुभौ।
उर्व्वशी पूर्व्वचित्तिश्च तथैवाप्सरसावुभे॥ ६०
तार्च्यश्चारिष्टनेमिश्च सेनानीर्ग्रामणीश्च तौ।
विद्युद्दिवाकरश्चोभौ यातुधानावुदाहृतौ॥ ६१
सहे चैव सहस्ये च वसन्त्येते दिवाकरे।
ततः शैशिरयोश्चापि मासयोर्निवसन्ति वै॥ ६२
त्वष्टा विष्णुर्जमदग्निर्विश्वामित्रस्तथैव च।
काद्रवेयौ तथा नागौ कम्बलाश्वतरावुभौ॥ ६३
धृतराष्ट्रः स गन्धर्व्वः सूर्य्यवर्चास्तथैव च।
तिलोत्तमाप्सराश्चैव देवी रम्भा मनोहरा॥ ६४
रथजित् सत्यजिच्चैव ग्रामण्यौ लोकविश्रुतौ।
ब्रह्मोपेतस्तथा रक्षो यज्ञोपेतश्च यः स्मृतः॥ ६५

एते देवा वसन्त्यर्के द्वौ द्वौ मासौ क्रमेण तु ।
स्थानाभिमानिनो ह्येते गणा द्वादशसप्तकाः ॥ ६६
सूर्य्यमाप्याययन्त्येते तेजसा तेज उत्तमम् ।
ग्रथितैः स्वैर्वचोभिस्तु स्तुवन्ति मुनयो रविम् ॥ ६७
गन्धर्व्वाप्सरसश्चैव नृत्यगेयैरुपासते ।
ग्रामणी-यक्ष-भूतानि कुर्व्वतेऽभीषुसंग्रहम् ॥ ६८
सर्पा वहन्ति वै सूर्य्यं यातुधानानुयान्ति वै ।
बालखिल्या नयन्त्यस्तं परिवार्य्योदयाद्रविम् ॥ ६९
एतेषामेव देवानां यथा तेजो यथा तपः ।
यथायोगं यथामन्त्रं यथाधर्म्मं यथाबलम् ॥ ७०
तथा तपत्यसौ सूर्य्यस्तेषामिद्धस्तु तेजसा ।
इत्येते वै वसन्तीह द्वौ द्वौ मासौ दिवाकरे ॥ ७१
ऋषयो देव-गन्धर्व्व-पन्नगाप्सरसां गणाः ।
ग्रामण्यश्च तथा यक्षा यातुधानाश्च मुख्यतः ॥ ७२
एते तपन्ति वर्षन्ति भान्ति वान्ति सृजन्ति च ।
भूतानामशुभं कर्म्म व्यपोहन्तीह कीर्त्तिताः ॥ ७३
मानवानां शुभं ह्येते हरन्ति च दुरात्मनाम् ।
दुरितं सुप्रचाराणां व्यपोहन्ति क्वचित् क्वचित् ॥ ७४
विमाने च स्थिता दिव्ये कामगे वातरंहसि ।
एते सहैव सूर्य्येण भ्रमन्ति दिवसानुगाः ॥ ७५
वर्षन्तश्च तपन्तश्च ह्लादयन्तश्च वै द्विजाः ।
गोपायन्तीह भूतानि सर्व्वाणि ह्या मनुक्षयात् ॥ ७६
स्थानाभिमानिनामेतत् स्थानं मन्वन्तरेषु वै ।
अतीतानागतानां वै वर्त्तन्ते साम्प्रतञ्च ये ॥ ७७
एते वसन्ति वै सूर्य्ये सप्तकास्ते चतुर्द्दश ।
चतुर्द्दशसु सर्व्वेषु गणा मन्वन्तरेष्विह ॥ ७८
संक्षेपाद्विस्तराच्चैव यथावृत्तं यथाश्रुतम् ।
कथितं मुनिशार्दूला देवदेवस्य धीमतः ॥ ७९
एते देवा वसन्त्यर्के द्वौ द्वौ मासौ क्रमेण तु ।
स्थानाभिमानिनो ह्येते गणा द्वादश सप्तकाः ॥ ८०
इत्येष एकचक्रेण सूर्य्यस्तूर्णं रथेन तु ।
हरितैरक्षरैरश्वैः सर्पतेऽसौ दिवाकरः ॥ ८१
अहोरात्रं रथेनासावेकचक्रेण तु भ्रमन् ।
सप्तद्वीपसमुद्रां गां सप्तभिः सर्पते दिवि ॥ ८२

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सूर्य्यरथ-
निर्णयो नाम पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

## षट्पञ्चाशोऽध्यायः ।

### सूत उवाच ।

वीथ्याश्रयाणि चरति नक्षत्राणि निशाकरः ।
त्रिचक्रोभयतोऽश्वश्च विज्ञेयस्तस्य वै रथः ॥ १
शतारैश्च त्रिभिश्चक्रैर्युक्तः शुक्लैर्हयोत्तमैः ।
दशभिस्त्वकृशैर्दिव्यैरसङ्गैस्तैर्मनोजवैः ॥ २
रथेनानेन देवैश्च पितृभिश्चैव गच्छति ।
सोमो ह्यम्बुमयैर्गोभिः शुक्लैः शुक्लगभस्तिमान् ॥
क्रमते शुक्लपक्षादौ भास्करात् परमास्थितः ।
आपूर्य्यते परस्यान्तः सततं दिवसक्रमात् ॥ ४
देवैः पीतं क्षये सोममाप्याययति नित्यशः ।
पीतं पञ्चदशाहन्तु रश्मिनैकेन भास्करः ॥ ५
आपूरयन् सुषुम्णेन भागं भागमनुक्रमात् ।
इत्येषा सूर्य्यवीर्य्येण चन्द्रस्याप्यायिता तनुः ॥ ६
स पौर्णमास्यां दृश्येत शुक्लः सम्पूर्णमण्डलः ।
एवमाप्यायितं सोमं शुक्लपक्षे दिनक्रमात् ॥ ७
ततो द्वितीयाप्रभृति बहुलस्य चतुर्द्दशीम् ।
पिबन्त्यम्बुमयं देवा मधुसौम्यं सुधामृतम् ॥ ८
सम्भृतन्त्वर्द्धमासेन अमृतं सूर्य्यतेजसा ।
पानार्थममृतं सोमं पौर्णमास्यामुपासते ॥ ९
एकरात्रिं सुराः सर्व्वे पितृभिस्त्वृषिभिः सह ।
सोमस्य कृष्णपक्षादौ भास्कराभिमुखस्य च ॥ १०
प्रक्षीयन्ते परस्यान्तः-पीयमानाः कलाः क्रमात् ।
त्रयस्त्रिंशच्छताश्चैव त्रयस्त्रिंशत् तथैव च ॥ ११
त्रयस्त्रिंशत्सहस्राणि देवाः सोमं पिबन्ति वै ।
एवं दिनक्रमात् पीते विबुधैस्तु निशाकरे ॥ १२
पीत्वार्द्धमासं गच्छन्ति अमावास्यां सुरोत्तमाः ।
पितरश्चोपतिष्ठन्ति अमावास्यां निशाकरम् ॥ १३
ततः पञ्चदशे भागे किञ्चिच्छिष्टे कलात्मके ।
अपराह्णे पितृगणा जघन्यं पर्य्युपासते ॥ १४
पिबन्ति द्विकलं कालं शिष्टा तस्य कला तु या ।
निःसृतं तदमावास्यां गभस्तिभ्यः स्वधामृतम् ॥ १५
माससृप्तिमवाप्याग्र्यां पीत्वा गच्छन्ति तेऽमृतम् ।
पितृभिः पीयमानस्य पञ्चदश्यां कला तु या ॥ १६
यावत् तु क्षीयते तस्य भागः पञ्चदशस्तु सः ।
अमावास्यां ततस्तस्या अन्तरापूर्य्यते पुनः ॥ १७

वृद्धिक्षयौ वै पक्षादौ षोडश्यां शशिनः स्मृतौ।
एवं सूर्य्यनिमित्तैषा पक्षवृद्धिर्निशाकरे॥ १८

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सोमवर्णनं नाम षट्पञ्चाशोऽध्यायः॥ ५६॥

---

## सप्तपञ्चाशोऽध्यायः।

सूत उवाच।

अष्टभिश्च हयैर्युक्तः सोमपुत्त्रस्य वै रथः।
वारितेजोमयश्चाथ पिशङ्गैश्चैव शोभनैः॥ १
दशभिश्चाकृशैरश्वैर्नानावर्णैं रथः स्मृतः।
शुक्रस्य कामयैर्युक्तो दैत्याचार्य्यस्य धीमतः॥ २
अष्टाश्वश्चाथ भौमस्य रथो हैमः सुशोभनः।
जीवस्य हैमश्चाष्टाश्वो मन्दस्यायसनिर्म्मितः॥ ३
रथ आपोमयैरश्वैर्दशभिस्तु सितेतरैः।
स्वर्भानोर्भास्करारेश्च तथा चाष्टहयः स्मृतः॥ ४
सर्व्वे ध्रुवनिवद्धा वै ग्रहास्ते वातरश्मिभिः।
एतेन भ्राम्यमाणाश्च यथायोगं व्रजन्ति वै॥ ५
यावन्त्यश्चैव ताराश्च तावन्तश्चैव रश्मयः।
सर्व्वे ध्रुवनिवद्धाश्च भ्रमन्तो भ्रामयन्ति तम्॥ ६
अलातचक्रवद्यान्ति वातचक्रेरितानि तु।
यस्माद्वहति ज्योतींषि प्रवहस्तेन स स्मृतः॥ ७
नक्षत्रसूर्य्याश्च तथा ग्रहतारागणैः सह।
उन्मुखाभिमुखाः सर्व्वे चक्रभूताः श्रिता दिवि॥ ८
ध्रुवेणाधिष्ठिताश्चैव ध्रुवमेव प्रदक्षिणम्।
प्रयान्ति चेश्वरं द्रष्टुं मेधीभूतं ध्रुवं दिवि॥ ९
नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः।
त्रिगुणस्तस्य विस्तारो मण्डलस्य प्रमाणतः॥ १०
द्विगुणः सूर्य्यविस्ताराद्विस्तारः शशिनः स्मृतः।
तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात् प्रसर्पति॥ ११
उद्धृत्य पृथिवीच्छायां निर्म्मितां मण्डलाकृतिम्।
स्वर्भानोस्तु वृहत् स्थानं तृतीयं यत् तमोमयम्॥१२
चन्द्रस्य षोड़शो भागो भार्गवस्य विधीयते।
विष्कम्भान्मण्डलाच्चैव योजनाच्च प्रमाणतः॥ १३
भार्गवात् पादहीनस्तु विज्ञेयो वै वृहस्पतिः।
पादहीनौ वक्रसौरी तथायामप्रमाणतः॥ १४
विस्तारान्मण्डलाच्चैव पादहीनस्तयोर्बुधः।
तारानक्षत्ररूपाणि वपुष्मन्तीह यानि वै॥ १५
बुधेन तानि तुल्यानि विस्तारान्मण्डलादपि।
प्रायशश्चन्द्रयोगीणि विद्यादृक्षाणि तत्त्ववित्॥ १६
तारानक्षत्ररूपाणि हीनानि तु परस्परम्।
शतानि पञ्च चत्वारि त्रीणि द्वे चैव योजने॥ १७
सर्व्वोपरिनिकृष्टानि तारकामण्डलानि तु।
योजनद्वयमात्राणि तेभ्यो ह्रस्वं न विद्यते॥ १८
उपरिष्टात् त्रयस्तेषां ग्रहा ये दूरसर्पिणः।
सौरोऽङ्गिराश्च वक्रश्च ज्ञेया मन्दविचारिणः॥ १९
तेभ्योऽधस्तात् तु चत्वारः पुनरन्ये महाग्रहाः।
सूर्य्यः सोमो बुधश्चैव भार्गवश्चैव शीघ्रगाः॥ २०
तावन्त्यस्तारकाः कोट्यो यावन्त्यृक्षाणि सर्व्वशः।
ध्रुवात् तु नियमाच्चैषामृक्षमार्गे व्यवस्थितिः॥ २१
सप्ताश्वस्यैव सूर्य्यस्य नीचोच्चत्वमनुक्रमात्।
उत्तरायणमार्गस्थो यदा पर्व्वसु चन्द्रमाः॥ २२
उच्चत्वाद्दृश्यते शीघ्रं नातिव्यक्तैर्गभस्तिभिः।
तदा दक्षिणमार्गस्थो नीचां वीथीमुपाश्रितः॥ २३
भूमिरेखावृतः सूर्य्यः पौर्णिमावास्ययोस्तदा।
दृश्यते च यथाकालं शीघ्रमस्तमुपैति च॥ २४
तस्मादुत्तरमार्गस्थो ह्यमावास्यां निशाकरः।
दृश्यते दक्षिणे मार्गे नियमाद्दृश्यते न च॥ २५
ज्योतिषां गतियोगेन सूर्य्यस्य तमसावृतः।
समानकालास्तमयौ विषुवत्सु समोदयौ॥ २६
उत्तरासु च वीथीषु व्यन्तरास्तमनोदयौ।
पौर्णिमावास्ययोर्ज्ञेयौ ज्योतिश्चक्रानुवर्त्तिनौ॥ २७
दक्षिणायनमार्गस्थो यदा चरति रश्मिवान्।
ग्रहाणाञ्चैव सर्व्वेषां सूर्य्योऽधस्तात् प्रसर्पति॥ २८
विस्तीर्णं मण्डलं कृत्वा तस्योर्द्ध्वं चरते शशी।
नक्षत्रमण्डलं कृत्स्नं सोमादूर्द्ध्वं प्रसर्पति॥ २९
नक्षत्रेभ्यो बुधश्चोर्द्ध्वं बुधादूर्द्ध्वन्तु भार्गवः।
वक्रस्तु भार्गवादूर्द्ध्वं वक्रादूर्द्ध्वं वृहस्पतिः॥ ३०
तस्माच्छनैश्चरश्चोर्द्ध्वं तस्मात् सप्तर्षिमण्डलम्।
ऋषीणाञ्चैव सप्तानां ध्रुवस्योर्द्ध्वं व्यवस्थितिः॥ ३१
तं विष्णुलोकं परमं ज्ञात्वा मुच्येत किल्बिषात्।
द्विगुणेषु सहस्रेषु योजनानां शतेषु च॥ ३२
ग्रह-नक्षत्र-तारासु उपरिष्टाद्यथाक्रमम्।
ग्रहाश्च चन्द्र-सूर्य्यौ च युतौ दिव्येन तेजसा॥ ३३

नित्यमन्येषु युज्यन्ते गच्छन्तोऽहनिशं क्रमात्।
ग्रह-नक्षत्र-सूर्य्यास्ते नीचोच्चऋजुसंस्थिताः॥ ३४
समागमे च भेदे च पश्यन्ति युगपत् प्रजाः।
ऋतवः षट् स्मृताः सर्व्वे समागच्छन्ति पञ्चधा॥३५
परस्पराश्रिता ह्येते युज्यन्ते च परस्परम्।
असङ्करेण विज्ञेयस्तेषां योगस्तु वै बुधैः॥ ३६
एवं संक्षिप्य कथितं ग्रहाणां गमनं द्विजाः।
भास्करप्रमुखाणाञ्च यथादृष्टं यथाश्रुतम्॥ ३७
ग्रहाधिपत्ये भगवान् ब्रह्मणा पद्मयोनिना।
अभिषिक्तः सहस्रांशू रुद्रेण तु यथा गुहः॥ ३८
तस्माद्ग्रहार्च्चना कार्य्या अग्नौ चोद्यं यथाविधि।
आदित्यग्रहपीड़ायां सद्भिः कार्य्यार्थसिद्धये॥ ३९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे ज्योतिश्चक्रे ग्रहचारकथनं नाम सप्तपञ्चाशोऽध्यायः॥ ५७॥

---

## अष्टपञ्चाशोऽध्यायः।

ऋषय ऊचुः।

अभ्यषिञ्चत् कथं ब्रह्मा चाधिपत्ये प्रजापतिः।
देवदैत्यमुखान् सर्व्वान् सर्व्वात्मा वद साम्प्रतम्॥१

सूत उवाच।

ग्रहाधिपत्ये भगवानभ्यषिञ्चद्दिवाकरम्।
ऋक्षाणामोषधीनाञ्च सोमं ब्रह्मा प्रजापतिः॥ २
अपाञ्च वरुणं देवं धनानां यक्षपुङ्गवम्।
आदित्यानां तथा विष्णुं वसूनां पावकं तथा॥ ३
प्रजापतीनां दक्षञ्च मरुतां शक्रमेव च।
दैत्यानां दानवानाञ्च प्रह्लादं दैत्यपुङ्गवम्॥ ४
धर्म्मं पितृणामधिपं निर्ऋतिं पिशिताशिनाम्।
रुद्रं पशूनां भूतानां नन्दिनं गणनायकम्॥ ५
वीराणां वीरभद्रञ्च पिशाचानां भयङ्करम्।
मातृणाञ्चैव चामुण्डां सर्व्वदेवनमस्कृताम्॥ ६
रुद्राणां देवदेवेशं नीललोहितमीश्वरम्।
विघ्नानां व्योमजं देवं गजास्यन्तु विनायकम्॥ ७
स्त्रीणां देवीमुमादेवीं वचसाञ्च सरस्वतीम्।
विष्णुं मायाविनाञ्चैव स्वात्मानं जगतां तथा॥ ८
हिमवन्तं गिरीणान्तु नदीनाञ्चैव जाह्नवीम्।
समुद्राणाञ्च सर्व्वेषामधिपं पयसां निधिम्॥ ९
वृक्षाणाञ्चैव चाश्वत्थं प्लक्षञ्च प्रपितामहः॥ १०

गन्धर्व्व-विद्याधर-किन्नराणा-
मीशं पुनश्चित्ररथं चकार।
नागाधिपं वासुकिमुग्रवीर्य्यं
सर्पाधिपं तक्षकमुग्रवीर्य्यम्॥ ११
दिग्वारणानामधिपं चकार
गजेन्द्रमैरावतमुग्रवीर्य्यम्।
सुपर्णमीशं पततामथाश्व-
राजानमुच्चैःश्रवसं चकार॥ १२
सिंहं मृगाणां वृषभं गवाञ्च
मृगाधिपानां शरभं चकार।
सेनाधिपानां गुहमप्रमेयं
श्रुतिस्मृतीनां लकुलीशमीशम्॥ १३

अभ्यषिञ्चत् सुधर्म्माणं तथा शङ्खपदं दिशाम्।
केतुमन्तं क्रमेणैव हेमरोमाणमेव च॥ १४
पृथिव्यां पृथुमीशानं सर्व्वेषान्तु महेश्वरम्।
चतुर्मूर्त्तिषु सर्व्वज्ञं शङ्करं वृषभध्वजम्॥ १५
प्रसादाद्भगवाञ्छम्भोश्चाभ्यषिञ्चद्यथाक्रमम्।
पुराभिषिच्य पुण्यात्मा रराज भुवनेश्वरः॥ १६
एतद्वो विस्तरेणैव कथितं मुनिपुङ्गवाः।
अभिषिक्तास्ततस्त्वेते विशिष्टा विश्वयोनिना॥ १७

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सूर्य्याद्य-भिषेककथनं नामाष्टपञ्चाशोऽध्यायः॥ ५८॥

---

## एकोनषष्टितमोऽध्यायः।

एतच्छ्रुत्वा तु मुनयः पुनस्ते संशयान्विताः।
पप्रच्छुरुत्तरं भूयस्तदा ते रोमहर्षणम्॥ १

ऋषय ऊचुः।

यदेतदुक्तं भवता सूतेह वदतां वर।
एतद्विस्तरतो ब्रूहि ज्योतिषाञ्च विनिर्णयम्॥ २
श्रुत्वा तु वचनं तेषां तदा सूतः समाहितः।
उवाच परमं वाक्यं तेषां संशयनिर्णये॥ ३

सूत उवाच।

अस्मिन्नर्थे महाप्राज्ञैर्यदुक्तं शान्तबुद्धिभिः।

एतद्धोऽहं प्रवक्ष्यामि सूर्य्या-चन्द्रमसोर्गतिम् ॥ ४
यथा दिवस्पतागीह सूर्यचन्द्रादयो ग्रहाः ।
अतः परन्तु त्रिविधमग्नेर्वक्ष्ये समुद्भवम् ।
दिव्यस्य भौतिकाख्याग्नेरथाग्नेः पार्थिवस्य च ॥ ५
व्युष्टायान्तु रजन्याञ्च ब्रह्मणोऽव्यक्तजन्मनः ।
अव्याकृतमिदन्त्वासीन्नैशेन तमसावृतम् ॥ ६
चतुर्भागावशिष्टेऽस्मिन् लोके नष्टे विशेषतः ।
स्वयम्भूर्भगवांस्तत्र लोकसर्व्वार्थसाधकः ॥ ७
खद्योतवत् स व्यचरदाविर्भावचिकीर्षया ॥ ८
सोऽग्निं सृष्ट्वाथ लोकादौ पृथिवीजलसंश्रितः ।
संहृत्य तत्प्रकाशार्थं त्रिधा व्यभजदीश्वरः ॥ ९
पवनो यस्तु लोकेऽस्मिन् पार्थिवो वह्निरुच्यते ।
यश्चासौ तपते सूर्य्ये शुचिरग्निस्तु सः स्मृतः ॥ १०
वैद्युतोऽब्जस्तु विज्ञेयस्तेषां वक्ष्ये तु लक्षणम् ।
वैद्युतो जाठरः सौरो वारिगर्भास्त्रयोऽग्नयः ॥ ११
तस्मादापः पिबन् सूर्य्यो गोभिर्दीप्यत्यसौ विभुः ।
जले चाब्जः समाविष्टो नाद्भिरग्निः प्रशाम्यति ॥१२
मानवानाञ्च कुक्षिस्थो नाद्भिः शाम्यति पावकः ।
अर्च्चिष्मान् पवनः सोऽग्निर्निष्प्रभो जाठरः स्मृतः ॥१३
यश्चायं मण्डली शुक्लो निरुष्मा सम्प्रजायते ।
प्रभा सौरी तु पादेन ह्यस्तं याते दिवाकरे ॥ १४
अग्निमाविशते रात्रौ तस्माद्दूरात् प्रकाशते ।
उद्यन्तञ्च पुनः सूर्य्यमौष्ण्यमग्नेः समाविशेत् ॥ १५
पादेन पार्थिवस्याग्नेस्तस्मादग्निस्तपत्यसौ ।
प्रकाशौष्ण्यस्वरूपे च सौराग्नेये तु तेजसी ॥ १६
परस्परानुप्रवेशादाप्यायेते परस्परम् ।
उत्तरे चैव भूम्यर्द्धे तथा ह्यग्निश्च दक्षिणे ॥ १७
उत्तिष्ठति पुनः सूर्य्यः पुनर्वै प्रविशत्यपः ।
तस्मात् ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात् ॥१८
अस्तं याति पुनः सूर्य्यो अहर्वै प्रविशत्यपः ।
तस्मान्नक्तं पुनः शुक्ला आपो दृश्यन्ति भास्वराः ॥ १९
एतेन क्रमयोगेण भूम्यर्द्धे दक्षिणोत्तरे ।
उदयास्तमने नित्यमहोरात्रं विशत्यपः ॥ २०
यश्चासौ तपते सूर्य्यः पिबन्नम्भो गभस्तिभिः ।
पार्थिवाग्निविमिश्रोऽसौ दिव्यः शुचिरिति स्मृतः ॥२१
सहस्रपादसौ वह्निर्वृत्तकुम्भनिभः स्मृतः ।
आदत्ते स तु नाड़ीनां सहस्रेण समन्ततः ॥ २२

नादेयीश्चैव सामुद्रीः कूपाश्चैव तथा घनाः ।
स्थावरा जङ्गमाश्चैव वापीकुल्यादिका अपः ॥ २३
तस्य रश्मिसहस्रं तच्छीतवर्षोष्णनिःस्रवम् ।
तासां चतुःशता नाड्यो वर्षन्ते चित्रमूर्त्तयः ॥ २४
भजनाश्चैव माल्याश्च केतनाः पतनास्तथा ।
अमृता नामतः सर्व्वा रश्मयो वृष्टिसर्ज्जनाः ॥ २५
हिमोद्वहाश्च ता नाड्यो रश्मयस्त्रिशताः पुनः ।
रैशा मेधाश्च वात्स्याश्च ह्लादिन्यो हिमसर्ज्जनाः ॥२६
चन्द्रभा नामतः सर्व्वाः पीताभाश्च गभस्तयः ।
शुक्लाश्च ककुभाश्चैव गावो विश्वभृतस्तथा ॥ २७
शुक्लास्ता नामतः सर्व्वास्त्रिशतीर्घर्म्मसर्ज्जनाः ।
सोमो बिभर्त्ति ताभिस्तु मनुष्यपितृदेवताः ॥ २८
मनुष्यानौषधेनेह स्वधया च पितॄनपि ।
अमृतेन सुरान् सर्व्वांस्तिसृभिस्तर्पयत्यसौ ॥ २९
वसन्ते चैव ग्रीष्मे च शतैः स तपते त्रिभिः ।
वर्षास्वथो शरदि च चतुर्भिः सम्प्रवर्षति ॥ ३०
हेमन्ते शिशिरे चैव हिममुत्सृजते त्रिभिः ।
इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्य्यमा ॥३१
अंशुर्विवस्वांस्त्वष्टा च पर्ज्जन्यो विष्णुरेव च ।
वरुणो माघमासे तु सूर्य्य एव तु फाल्गुने ॥ ३२
चैत्रे मासि भवेदंशुर्धाता वैशाखतापनः ।
ज्यैष्ठे मासि भवेदिन्द्र आषाढ़े चार्य्यमा रविः ॥ ३३
विवस्वान् श्रावणे मासि प्रौष्ठपादे भगः स्मृतः ।
पर्ज्जन्योऽश्वयुजे मासि त्वष्टा व कार्त्तिके रविः ॥ ३४
मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः ।
पञ्च रश्मिसहस्राणि वरुणस्यार्ककर्म्मणि ॥ ३५
श्रीमद्धिमनगजामानससरोजविहारकर्त्रे नमः ।
षड्भिः सहस्रैः पूषा तु देवोऽंशुः सप्तभिस्तथा ।
धाताष्टभिः सहस्रैस्तु नवभिस्तु शतक्रतुः ॥ ३६
विवस्वान् दशभिर्याति यात्येकादशभिर्भगः ।
सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिः स्मृतः ॥ ३७
अर्य्यमा दशभिर्याति पर्ज्जन्यो नवभिस्तथा ।
षड्भी रश्मिसहस्रैस्तु विष्णुस्तपति मेदिनीम् ॥ ३८
वसन्ते कपिलः सूर्य्यो ग्रीष्मे काञ्चनसप्रभः ।
श्वेतो वर्षासु वर्णेन पाण्डुः शरदि भास्करः ॥ ३९
हेमन्ते ताम्रवर्णस्तु शिशिरे लोहितो रविः ।
इति वर्णाः समाख्याता मया सूर्य्यसमुद्भवाः ॥ ४०

नित्यन्तेषु युज्यन्ते गच्छन्तोऽहर्निशं क्रमात् ।
ग्रह-नक्षत्र-सूर्य्यास्ते नीचोच्चऋजुसंस्थिताः ॥ ३४
समागमे च भेदे च पश्यन्ति युगपत् प्रजाः ।
ऋतवः षट् स्मृताः सर्व्वे समागच्छन्ति पञ्चधा ॥३५
परस्पराश्रिता ह्येते युज्यन्ते च परस्परम् ।
असङ्करेण विज्ञेयस्तेषां योगस्तु वै बुधैः ॥ ३६
एवं संक्षिप्य कथितं ग्रहाणां गमनं द्विजाः ।
भास्करप्रमुखाणाञ्च यथादृष्टं यथाश्रुतम् ॥ ३७
ग्रहाधिपत्ये भगवान् ब्रह्मणा पद्मयोनिना ।
अभिषिक्तः सहस्रांशू रुद्रेण तु यथा गुहः ॥ ३८
तस्माद्ग्रहार्चना कार्य्या अग्नौ चोद्यं यथाविधि ।
आदित्यग्रहपीड़ायां सद्भिः कार्य्यार्थसिद्धये ॥ ३९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे ज्योतिश्चक्रे ग्रहचारकथनं नाम सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशोऽध्यायः ।

ऋषय ऊचुः ।

अभ्यषिञ्चत् कथं ब्रह्मा चाधिपत्ये प्रजापतिः ।
देवदैत्यमुखान् सर्व्वान् सर्व्वात्मा वद साम्प्रतम् ॥१

सूत उवाच ।

ग्रहाधिपत्ये भगवानभ्यषिञ्चद्दिवाकरम् ।
ऋक्षाणामोषधीनाञ्च सोमं ब्रह्मा प्रजापतिः ॥ २
अपाञ्च वरुणं देवं धनानां यक्षपुङ्गवम् ।
आदित्यानां तथा विष्णुं वसूनां पावकं तथा ॥ ३
प्रजापतीनां दक्षञ्च मरुतां शक्रमेव च ।
दैत्यानां दानवानाञ्च प्रह्लादं दैत्यपुङ्गवम् ॥ ४
धर्म्मं पितृणामधिपं निर्ऋतिं पिशिताशिनाम् ।
रुद्रं पशूनां भूतानां नन्दिनां गणनायकम् ॥ ५
वीराणां वीरभद्रञ्च पिशाचानां भयङ्करम् ।
मातृणाञ्चैव चामुण्डां सर्व्वदेवनमस्कृताम् ॥ ६
रुद्राणां देवदेवेशं नीललोहितमीश्वरम् ।
विघ्नानां व्योमजं देवं गजास्यन्तु विनायकम् ॥ ७
स्त्रीणां देवीमुमादेवीं वचसाञ्च सरस्वतीम् ।
विष्णुं मायाविनाञ्चैव स्वात्मानं जगतां तथा ॥ ८
हिमवन्तं गिरीणान्तु नदीनाञ्चैव जाह्नवीम् ।
समुद्राणाञ्च सर्व्वेषामधिपं पयसां निधिम् ॥ ९
वृक्षाणाञ्चैव चाश्वत्थं प्लक्षञ्च प्रपितामहः ॥ १०

गन्धर्व्व-विद्याधर-किन्नराणा-
मीशं पुनश्चित्ररथं चकार ।
नागाधिपं वासुकिमुग्रवीर्य्यं
सर्पाधिपं तक्षकमुग्रवीर्य्यम् ॥ ११
दिग्वारणानामधिपं चकार
गजेन्द्रमैरावतमुग्रवीर्य्यम् ।
सुपर्णमीशं पतताममथाश्व-
राजानमुच्चैःश्रवसं चकार ॥ १२
सिंहं मृगाणां वृषभं गवाञ्च
मृगाधिपानां शरभं चकार ।
सेनाधिपानां गुहमप्रमेयं
श्रुतिस्मृतीनां लकुलीशमीशम् ॥ १३

अभ्यषिञ्चत् सुधर्म्माणं तथा शङ्खपदं दिशाम् ।
केतुमन्तं क्रमेणैव हेमरोमाणमेव च ॥ १४
पृथिव्यां पृथुमीशानं सर्व्वेषान्तु महेश्वरम् ।
चतुर्मूर्त्तिषु सर्व्वज्ञं शङ्करं वृषभध्वजम् ॥ १५
प्रसादाद्भगवाञ्छम्भोश्चाभ्यषिञ्चद्यथाक्रमम् ।
पुराभिषिच्य पुण्यात्मा रराज भुवनेश्वरः ॥ १६
एतद्वो विस्तरेणैव कथितं मुनिपुङ्गवाः ।
अभिषिक्तास्ततस्त्वेते विशिष्टा विश्वयोनिना ॥ १७

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सूर्य्याद्य-भिषिककथनं नामाष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

## एकोनषष्टितमोऽध्यायः ।

एतच्छ्रुत्वा तु मुनयः पुनस्तं संशयान्विताः ।
पप्रच्छुरुत्तरं भूयस्तदा ते रोमहर्षणम् ॥ १

ऋषय ऊचुः ।

यदेतदुक्तं भवता सूतेह वदतां वर ।
एतद्विस्तरतो ब्रूहि ज्योतिषाञ्च विनिर्णयम् ॥ २
श्रुत्वा तु वचनं तेषां तदा सूतः समाहितः ।
उवाच परमं वाक्यं तेषां संशयनिर्णये ॥ ३

सूत उवाच ।

अस्मिन्नर्थे महाप्राज्ञैर्यदुक्तं शान्तबुद्धिभिः ।

एतद्धोऽहं प्रवक्ष्यामि सूर्य्या-चन्द्रमसोर्गतिम् ॥ ४
यथा देवगृहाणीह सूर्य्यचन्द्रादयो ग्रहाः।
अतः परन्तु त्रिविधमग्नेर्वक्ष्ये समुद्भवम्।
दिव्यस्य भौतिकाख्याग्नेरथाग्नेः पार्थिवस्य च ॥ ५
व्युष्टायान्तु रजन्याञ्च ब्रह्मणोऽव्यक्तजन्मनः।
अव्याकृतमिदन्त्वासीन्नैशेन तमसावृतम् ॥ ६
चतुर्भागावशिष्टेऽस्मिन् लोके नष्टे विशेषतः।
स्वयम्भूर्भगवांस्तत्र लोकसर्व्वार्थसाधकः ॥ ७
खद्योतवत् स व्यचरदाविर्भावचिकीर्षया ॥ ८
सोऽग्निं सृष्ट्वाथ लोकादौ पृथिवीजलसंश्रितः।
संहृत्य तत्प्रकाशार्थं त्रिधा व्यभजदीश्वरः ॥ ९
पवनो यस्तु लोकेऽस्मिन् पार्थिवो वह्निरुच्यते।
यश्चासौ तपते सूर्य्ये शुचिरग्निस्तु सः स्मृतः ॥ १०
वैद्युतोऽब्जस्तु विज्ञेयस्तेषां वक्ष्ये तु लक्षणम्।
वैद्युतो जाठरः सौरो वारिगर्भास्त्रयोऽग्नयः ॥ ११
तस्मादापः पिबन् सूर्य्यो गोभिर्दीप्यत्यसौ विभुः।
जले चाब्जः समाविष्टो नाद्भिरग्निः प्रशाम्यति ॥१२
मानवानाञ्च कुक्षिस्थो नाद्भिः शाम्यति पावकः।
अर्च्चिष्मान् पवनः सोऽग्निर्निष्प्रभो जाठरः स्मृतः ॥१३
यश्चायं मण्डली शुक्लो निरुष्मा सम्प्रजायते।
प्रभा सौरी तु पादेन ह्यस्तं याते दिवाकरे ॥ १४
अग्निमाविशते रात्रौ तस्माद्दूरात् प्रकाशते।
उद्यन्तञ्च पुनः सूर्य्यमौष्ण्यमग्नेः समाविशेत् ॥ १५
पादेन पार्थिवस्याग्नेस्तस्मादग्निस्तपत्यसौ।
प्रकाशौष्ण्यस्वरूपे च सौराग्नेयी तु तेजसी ॥ १६
परस्परानुप्रवेशादाप्यायेते परस्परम्।
उत्तरे चैव भूम्यर्द्धे तथा ह्यग्निश्च दक्षिणे ॥ १७
उत्तिष्ठति पुनः सूर्य्यः पुनर्वै प्रविशत्यपः।
तस्मात् ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात् ॥१८
अस्तं याति पुनः सूर्य्यो अहर्वै प्रविशत्यपः।
तस्मान्नक्तं पुनः शुक्ला आपो दृश्यन्ति भास्वराः ॥ १९
एतेन क्रमयोगेण भूम्यर्द्धे दक्षिणोत्तरे।
उदयास्तमने नित्यमहोरात्रं विशत्यपः ॥ २०
यश्चासौ तपते सूर्य्यः पिबन्नम्भो गभस्तिभिः।
पार्थिवाग्निविमिश्रोऽसौ दिव्यः शुचिरिति स्मृतः ॥२१
सहस्रपादसौ वह्निर्वृत्तकुम्भनिभः स्मृतः।
आदत्ते स तु नाडीनां सहस्रेण समन्ततः ॥ २२

नादेयीश्चैव सामुद्रीः कूपाश्चैव तथा घनाः।
स्थावरा जङ्गमाश्चैव वापीकुल्यादिका अपः ॥ २३
तस्य रश्मिसहस्रं तच्छीतवर्षोष्णनिःस्रवम्।
तासां चतुःशता नाड्यो वर्षन्ते चित्रमूर्त्तयः ॥ २४
भजनाश्चैव माल्याश्च केतनाः पतनास्तथा।
अमृता नामतः सर्व्वा रश्मयो वृष्टिसर्ज्जनाः ॥ २५
हिमोद्वहाश्च ता नाड्यो रश्मयस्त्रिशताः पुनः।
रैश्या मेघाश्च वात्स्याश्च ह्रादिन्यो हिमसर्ज्जनाः ॥२६
चन्द्रभा नामतः सर्व्वाः पीताभाश्च गभस्तयः।
शुक्लाश्च ककुभाश्चैव गावो विश्वभृतस्तथा ॥ २७
शुक्लास्ता नामतः सर्व्वास्त्रिशतीर्घर्म्मसर्जनाः।
सोमो बिभर्त्ति ताभिस्तु मनुष्यपितृदेवताः ॥ २८
मनुष्यानौषधेनेह स्वधया च पितॄनपि।
अमृतेन सुरान् सर्व्वांस्तिसृभिस्तर्पयत्यसौ ॥ २९
वसन्ते चैव ग्रीष्मे च शतैः स तपते त्रिभिः।
वर्षास्वथो शरदि च चतुर्भिः सम्प्रवर्षति ॥ ३०
हेमन्ते शिशिरे चैव हिममुत्सृजते त्रिभिः।
इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्य्यमा ॥३१
अंशुर्विवस्वांस्त्वष्टा च पर्ज्जन्यो विष्णुरेव च।
वरुणो माघमासे तु सूर्य्य एव तु फाल्गुने ॥ ३२
चैत्रे मासि भवेदंशुर्धाता वैशाखतापनः।
ज्यैष्ठे मासि भवेदिन्द्र आषाढ़े चार्य्यमा रविः ॥ ३३
विवस्वान् श्रावणे मासि प्रौष्ठपादे भगः स्मृतः।
पर्ज्जन्योऽश्वयुजे मासि त्वष्टा व कार्त्तिके रविः ॥ ३४
मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः।
पञ्च रश्मिसहस्राणि वरुणस्यार्ककर्म्मणि ॥ ३५
श्रीमद्धिमनगजामानससरोजविहारकर्त्रे नमः।
षड्भिः सहस्रैः पूषा तु देवोंऽशुः सप्तभिस्तथा।
धाताष्टभिः सहस्रैस्तु नवभिस्तु शतक्रतुः ॥ ३६
विवस्वान् दशभिर्याति यात्येकादशभिर्भगः।
सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिः स्मृतः ॥ ३७
अर्य्यमा दशभिर्याति पर्ज्जन्यो नवभिस्तथा।
षड्भी रश्मिसहस्रैस्तु विष्णुस्तपति मेदिनीम् ॥ ३८
वसन्ते कपिलः सूर्य्यो ग्रीष्मे काञ्चनसप्रभः।
श्वेतो वर्षासु वर्णेन पाण्डुः शरदि भास्करः ॥ ३९
हेमन्ते ताम्रवर्णस्तु शिशिरे लोहितो रविः।
इति वर्णाः समाख्याता मया सूर्य्यसमुद्भवाः ॥ ४०

ओषधीषु बलं धत्ते स्वधया च पितृष्वपि।
सूर्य्योऽमरेष्वप्यमृतं त्रयं त्रिषु नियच्छति ॥ ४१
एवं रश्मिसहस्रं तत् सौरं लोकार्थसाधकम्।
भिद्यते लोकमासाद्य जलशीतोष्णनिःस्रवम् ॥ ४२
इत्येतन्मण्डलं शुक्लं भास्वरं सूर्य्यसंज्ञितम्।
नक्षत्र-ग्रह-सोमानां प्रतिष्ठा योनिरेव च ॥ ४३
चन्द्रऋक्षग्रहाः सर्व्वे विज्ञेयाः सूर्य्यसम्भवाः।
नक्षत्राधिपतिः सोमो नयनं वाममीशितुः ॥ ४४
नयनञ्चवमीशस्य दक्षिणं भास्करः स्वयम्।
तेषां जनानां लोकेऽस्मिन् नयनं नयते यतः ॥ ४५

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सूर्य्य-
रश्मिस्वरूपकथनं नाम एकोन-
षष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः।

सूत उवाच।

शेषाः पञ्च ग्रहा ज्ञेया ईश्वराः कामचारिणः।
पठ्यते चाग्निरादित्य उदकं चन्द्रमाः स्मृतः ॥ १
शेषाणां प्रकृतिं सम्यग्वक्ष्यमाणां निबोधत।
सुरसेनापतिः स्कन्दः पठ्यतेऽङ्गारको ग्रहः ॥ २
नारायणं बुधं प्राहुर्देवं ज्ञानविदो जनाः।
सर्व्वलोकप्रभुः साक्षाद्यमो लोकप्रभुः स्वयम् ॥ ३
महाग्रहो द्विजश्रेष्ठा मन्दगामी शनैश्चरः।
देवासुरगुरू द्वौ तु भानुमन्तौ महाग्रहौ ॥ ४
प्रजापतिसुतावुक्तौ ततः शुक्रबृहस्पती।
आदित्यमूलमखिलं त्रैलोक्यं नात्र संशयः ॥ ५
भवत्यस्माज्जगत् कृत्स्नं सदेवासुरमानुषम्।
रुद्रेन्द्रोपेन्द्रचन्द्राणां विप्रेन्द्राग्निदिवौकसाम् ॥ ६
द्युतिर्द्युतिमतां कृत्स्नं यत् तेजः सार्व्वलौकिकम्।
सर्व्वात्मा सर्व्वलोकेशो महादेवः प्रजापतिः ॥ ७
सूर्य्य एव त्रिलोकेशो मूलं परमदैवतम्।
ततः सञ्जायते सर्व्वं तत्रैव प्रविलीयते ॥ ८
भावाभावौ हि लोकानामादित्यान्निःसृतौ पुरा।
अविज्ञेयो ग्रहो विप्रा दीप्तिमान् सुप्रभो रविः ॥ ९
अत्र गच्छन्ति निधनं जायन्ते च पुनः पुनः।
क्षणा मुहूर्त्ता दिवसा निशाः पक्षाश्च कृत्स्नशः ॥ १०
मासाः संवत्सराश्चैव ऋतवोऽथ युगानि च।
तदादित्यादृते ह्येषा कालसंख्या न विद्यते ॥ १
कालादृते न नियमो न दीक्षा नाह्निकक्रमः।
ऋतूनाञ्च विभागश्च पुष्पं मूलं फलं कुतः ॥ १
कुतः शस्यविनिष्पत्तिस्तृणौषधिगणोऽपि च।
अभावो व्यवहाराणां जन्तूनां दिवि चेह च ॥
जगत्प्रतापनमृते भास्करं रुद्ररूपिणम् ॥
स एष कालश्चाग्निश्च द्वादशात्मा प्रजापतिः ॥
तपत्येष द्विजश्रेष्ठास्त्रैलोक्यं सचराचरम्।
स एष तेजसां राशिः समस्तः सार्व्वलौकिकः।
उत्तमं मार्गमास्थाय रात्र्यहोभिरिदं जगत्।
पार्श्वतोर्द्धमधश्चैव तापयत्येष सर्व्वशः ॥ १६
यथा प्रभाकरो दीपो गृहमध्येऽवलम्बितः।
पार्श्वतोर्द्धमधश्चैव तमो नाशयते समम् ॥ १७
तद्वत् सहस्रकिरणो ग्रहराजो जगत्प्रभुः।
सूर्य्यो गोभिर्जगत् सर्व्वमादीपयति सर्व्वतः ॥
रवे रश्मिसहस्रं यत् प्राङ्मया समुदाहृतम्।
तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः ॥ १
सुषुम्णो हरिकेशश्च विश्वकर्म्मा तथैव च।
विश्वव्यचाः पुनश्चाद्यः सन्नद्धश्च ततः परः ॥
सर्व्वावसुः पुनश्चान्यः स्वराड्न्यः प्रकीर्त्तितः।
सुषुम्णः सूर्य्यरश्मिस्तु दक्षिणा राशिमैधयत्।
न्यगूर्द्ध्वाधः प्रचारोऽस्य सुषुम्णः परिकीर्त्तितः।
हरिकेशः पुरस्ताद्यो ऋक्षयोनिः प्रकीर्त्त्यते।
दक्षिणे विश्वकर्म्मा च रश्मिर्वर्द्धयते बुधम्।
विश्वव्यचास्तु यः पश्चाच्छुक्रयोनिः स्मृतो बुधैः।
सन्नद्धश्च तु यो रश्मिः स योनिर्लोहितस्य तु।
षष्ठः सर्व्वावसू रश्मिः स योनिस्तु बृहस्पतेः ॥
शनैश्चरं पुनश्चापि रश्मिराप्यायते स्वराट्।
एवं सूर्य्यप्रभावेण नक्षत्रग्रहतारकाः ॥ २५
दृश्यन्ते दिवि ताः सर्व्वा विश्वञ्चेदं पुनर्जगत्।
न क्षीयन्ते यतस्तानि तस्मान्नक्षत्रता स्मृता ॥

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
षष्टितमोऽध्यायः ॥ ६० ॥

---

## एकषष्टितमोऽध्यायः ।

सूत उवाच ।

ग्रहाख्येतानि सर्व्वाणि आतपन्ति गभस्तिभिः ।
तेषां ग्रहाख्यथादत्ते सूर्य्यो नक्षत्रतारकाः ॥ १
चीर्णेन सुकृतेनेह सुकृतान्ते ग्रहाश्रयाः ।
तारणात् तारका ह्येताः शुक्लत्वाच्चैव तारकाः ॥ २
दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव सर्व्वशः ।
आदानान्नित्यमादित्यस्तेजसां तमसामपि ॥ ३
सवने स्यन्दनेऽर्थे च धातुरेष विभाष्यते ।
सवनात् तेजसोऽपाञ्च तेनासौ सविता मतः ॥ ४
बह्वर्थश्चन्द्र इत्येष ह्लादने धातुरुच्यते ।
शुक्लत्वे चामृतत्वे च शीतत्वे च विभाव्यते ॥ ५
सूर्य्याचन्द्रमसोर्दिव्ये मण्डले भास्वरे खगे ।
जलतेजोमये शुक्ले वृत्तकुम्भनिभे शुभे ॥ ६
घनतोयात्मकं तत्र मण्डलं शशिनः स्मृतम् ।
घनतेजोमयं शुक्लं मण्डलं भास्करस्य तु ॥ ७
वसन्ति सर्व्वदेवाश्च स्थानान्येतानि सर्व्वशः ।
मन्वन्तरेषु सर्व्वेषु ऋक्षसूर्य्यग्रहाश्रयाः ॥ ८
तेन ग्रहा गृहाख्येव तदाख्यास्ते भवन्ति च ।
सौरं सूर्य्योऽविशत् स्थानं सौम्यं सोमस्तथैव च ॥ ९
शौक्रं शुक्रोऽविशत् स्थानं षोड़शार्चिः प्रतापवान् ।
बृहद्बृहस्पतिश्चैव लोहितश्चैव लोहितम् ॥ १०
शनैश्चरं तथा स्थानं देवश्चापि शनैश्चरः ।
बौधं बुधस्तु स्वर्भानुः स्वर्भानुस्थानमाश्रितः ॥ ११
नाक्षत्राणि च सर्व्वाणि नक्षत्राणि विशन्ति च ।
गृहाख्येतानि सर्व्वाणि ज्योतींषि सुकृतात्मनाम् ॥ १२
कल्पादौ सम्प्रवृत्तानि निर्म्मितानि स्वयम्भुवा ।
स्थानान्येतानि तिष्ठन्ति यावदाभूतसंप्लवम् ॥ १३
मन्वरेषु सर्व्वेषु देवस्थानानि तानि वै ।
अभिमानिनोऽवतिष्ठन्ते देवस्थानं पुनः पुनः ॥ १४
अतीतैस्तु सहैतानि भाव्याभाव्यैः सुरैः सह ।
वर्त्तन्ते वर्त्तमानैश्च स्थानिभिस्तैः सुरैः सह ॥ १५
अस्मिन् मन्वन्तरे चैव ग्रहा वैमानिकाः स्मृताः ।
विवस्वानदितेः पुत्त्रः सूर्य्यो वैवस्वतेऽन्तरे ॥ १६
त्विमानृषिपुत्त्रस्तु सोमो देवो वसुः स्मृतः ।
शुक्रो देवस्तु विज्ञेयो भार्गवोऽसुरयाजकः ॥ १७
बृहत्तेजाः स्मृतो देवो देवाचार्य्योऽङ्गिरःसुतः ।
बुधो मनोहरश्चैव ऋषिपुत्त्रस्तु स स्मृतः ॥ १८
शनैश्चरो विरूपस्तु संज्ञापुत्त्रो विवस्वतः ।
अग्निर्विकेश्यां जज्ञे तु युवासौ लोहितार्च्चिषः ॥ १९
नक्षत्रऋक्षनामिन्यो दाक्षायण्यस्तु ताः स्मृताः ।
स्वर्भानुः सिंहिकापुत्त्रो भूतसन्तापनोऽसुरः ॥ २०
सोमर्क्षग्रहसूर्य्येषु कीर्त्तितास्त्वभिमानिनः ।
स्थानान्येतान्यथोक्तानि स्थानिन्यश्चैव देवताः ॥ २१
सौरमग्निमयं स्थानं सहस्रांशोर्विवस्वतः ।
हिमांशोस्तु स्मृतं स्थानमम्मयं शुक्लमेव च ॥ २२
आप्यं श्यामं मनोज्ञञ्च बुधरश्मिगृहं स्मृतम् ।
शुक्रस्याप्यम्मयं शुक्लं पदं षोड़शरश्मिवत् ॥ २३
नवरश्मि तु भौमस्य लोहितं स्थानमुत्तमम् ।
हरिद्राभं बृहच्चापि षोड़शार्च्चिर्बृहस्पतेः ॥ २४
अष्टरश्मि गृहञ्चापि प्रोक्तं कृष्णं शनैश्चरे ।
स्वर्भानोस्तामसं स्थानं भूतसन्तापनालयम् ॥ २५
विज्ञेयास्तारकाः सर्व्वास्त्वृषयस्त्वेकरश्मयः ।
आश्रयाः पुण्यकीर्त्तीनां शुक्लाश्चापि स्ववर्णतः ॥ २६
घनतोयात्मिका ज्ञेयाः कल्पादावेव निर्म्मिताः ।
आदित्यरश्मिसंयोगात् सम्प्रकाशात्मिकाः स्मृताः ॥ २७
नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः ।
त्रिगुणस्तस्य विस्तारो मण्डलस्य प्रमाणतः ॥ २८
द्विगुणः सूर्य्यविस्ताराद्विस्तारः शशिनः स्मृतः ।
तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात् प्रसर्पति ॥ २९
उद्धृत्य पृथिवीच्छायां निर्म्मितां मण्डलाकृतिम् ।
स्वर्भानोस्तु बृहत् स्थानं तृतीयं यत् तमोमयम् ॥ ३०
आदित्यात् तच्च निष्क्रम्य सोमं गच्छति पर्व्वसु ।
आदित्यमेति सोमाच्च पुनः सौरेषु पर्व्वसु ॥ ३१
स्वर्भानं नुदते यस्मात् तस्मात् स्वर्भानुरुच्यते ।
चन्द्रस्य षोड़शो भागो भार्गवस्य विधीयते ॥ ३२
विष्कम्भान्मण्डलाच्चैव योजनाग्रात् प्रमाणतः ।
भार्गवात् पादहीनस्तु विज्ञेयो वै बृहस्पतिः ॥ ३३
बृहस्पतेः पादहीनौ वक्रसौरी उभौ स्मृतौ ।
विस्तारान्मण्डलाच्चैव पादहीनस्तयोर्बुधः ॥ ३४
तारा-नक्षत्ररूपाणि वपुष्मन्तीह यानि वै ।
बुधेन तानि तुल्यानि विस्तारान्मण्डलाच्च वै ॥ ३५
प्रायशश्चन्द्रयोगीणि विद्यादृक्षाणि तत्त्ववित् ।

तारानक्षत्ररूपाणि हीनानि तु परस्परम् ॥ ३६
शतानि पञ्च चत्वारि त्रीणि द्वे चैव योजने।
सर्व्वोपरिनिकृष्टानि तारकामण्डलानि तु ॥ ३७
योजनान्यर्द्धमात्राणि तेभ्यो ह्रस्वं न विद्यते।
उपरिष्टात् त्रयस्तेषां ग्रहास्ते दूरसर्पिणः ॥ ३८
सौरोऽङ्गिराश्च वक्रश्च ज्ञेया मन्दविचारिणः।
पूर्व्वमेव समाख्याता गतिस्तेषां यथाक्रमम् ॥ ३९
एतेष्वेव ग्रहाः सर्व्वे नक्षत्रेषु समुत्थिताः।
विवस्वानदितेः पुत्त्रः सूर्य्यो वै मुनिसत्तमाः ॥ ४०
विशाखासु समुत्पन्नो ग्रहाणां प्रथमो ग्रहः।
त्विषिमान् धर्म्मपुत्त्रस्तु सोमो देवो वसुस्तु सः ॥ ४१
शीतरश्मिः समुत्पन्नः कृत्तिकासु निशाकरः।
षोड़शार्च्चिर्भृगोः पुत्त्रः शुक्रः सूर्य्यादनन्तरम् ॥ ४२
ताराग्रहाणां प्रवरस्तिष्ये क्षेत्रे समुत्थितः।
ग्रहश्चाङ्गिरसः पुत्त्रो द्वादशार्च्चिर्बृहस्पतिः ॥ ४३
फल्गुनीषु समुत्पन्नः पूर्व्वाख्यासु जगद्गुरुः।
नवार्च्चिर्लोहिताङ्गश्च प्रजापतिसुतो ग्रहः ॥ ४४
आषाढ़ाख्विह पूर्व्वासु समुत्पन्न इति स्मृतः।
रेवतीष्वेव सप्तार्च्चिः स्थाने सौरिः शनैश्चरः ॥ ४५
सौम्यो बुधो धनिष्ठासु पञ्चार्च्चिरुदितो ग्रहः।
तमोमयो मृत्युसुतः प्रजाक्षयकरः शिखी ॥ ४६
अश्लेषासु समुत्पन्नः सर्व्वहारी महाग्रहः।
तथा स्वनामधेयेषु दाक्षायण्यः समुत्थिताः ॥ ४७
तमोवीर्य्यमयो राहुः प्रकृत्या कृष्णमण्डलः।
भरणीषु समुत्पन्नो ग्रहश्चन्द्रार्कमर्द्दनः ॥ ४८
एते ताराग्रहाश्चापि बोद्धव्या भार्गवादयः।
जन्मनक्षत्रपीड़ासु यान्ति वैगुण्यतां यतः ॥ ४९
स्पृश्यते तेन दोषेण ततस्तद्ग्रहभक्तितः।
सर्व्वग्रहाणामेतेषामादिरादित्य उच्यते ॥ ५०
ताराग्रहाणां शुक्रस्तु केतूनाञ्चापि धूमवान्।
ध्रुवः किल ग्रहाणान्तु विभक्तानां चतुर्द्दिशम् ॥ ५१
नक्षत्राणां श्रविष्ठा स्यादयनानां तथोत्तरम्।
वर्षाणाञ्चैव पञ्चानामाद्यः संवत्सरः स्मृतः ॥ ५२
ऋतूनां शिशिरश्चापि मासानां माघ उच्यते।
पक्षाणां शुक्लपक्षस्तु तिथीनां प्रतिपत् तथा ॥ ५३
अहोरात्रविभागाणामहश्चादिः प्रकीर्त्तितम्।
मुहूर्त्तानां तथैवादि-मुहूर्त्तो रुद्रदैवतः ॥ ५४
क्षणश्चापि निमेषादिः कालः कालविदां वराः।
श्रवणान्तं धनिष्ठादि युगं स्यात् पञ्चवार्षिकम् ॥ ५५
भानोर्गतिविशेषेण चक्रवत् परिवर्त्तते।
दिवाकरः स्मृतस्तस्मात् कालकृद्विभुरीश्वरः ॥ ५६
चतुर्व्विधानां भूतानां प्रवर्त्तकनिवर्त्तकः।
तस्यापि भगवान् रुद्रः साक्षाद्देवः प्रवर्त्तकः ॥ ५७
इत्येष ज्योतिषामेवं सन्निवेशोऽर्थनिश्चयः।
लोकसंव्यवहारार्थं महादेवेन निर्म्मितः ॥ ५८
बुद्धिपूर्व्वं भगवता कल्पादौ सम्प्रवर्त्तितः।
स आश्रयोऽभिमानी च सर्व्वस्य ज्योतिरात्मकः ॥ ५९
एकरूपप्रधानस्य परिणामोऽयमद्भुतः।
नैष शक्यः प्रसंख्यातुं याथातथ्येन केनचित् ॥ ६०
गतागतं मनुष्येण ज्योतिषां मांसचक्षुषा।
आगमादनुमानाच्च प्रत्यक्षादुपपत्तितः ॥ ६१
परीक्ष्य निपुणं बुद्ध्या श्रद्धातव्यं विपश्चिता।
चक्षुः शास्त्रं जलं लेख्यं गणितं मुनिसत्तमाः ॥ ६२
पञ्चैते हेतवो ज्ञेया ज्योतिर्मानविनिर्णये ॥ ६३

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे ग्रहसंख्यावर्णनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः।

ऋषय ऊचुः।

कथं विष्णोः प्रसादाद्वै ध्रुवो बुद्धिमतां वरः।
मेधीभूतो ग्रहाणां वै वक्तुमर्हसि साम्प्रतम् ॥ १

सूत उवाच।

एतमर्थं मया पृष्टो नानाशास्त्रविशारदः।
मार्कण्डेयः पुरा प्राह मह्यं शुश्रूषवे द्विजाः ॥ २

मार्कण्डेय उवाच।

सार्व्वभौमो महातेजाः सर्व्वशास्त्रभृतां वरः।
उत्तानपादो राजा वै पालयामास मेदिनीम् ॥ ३
तस्य भार्य्याद्वयमभूत् सुनीतिः सुरुचिस्तथा।
अग्रजायामभूत् पुत्त्रः सुनीत्यान्तु महायशाः ॥ ४
ध्रुवो नाम महाप्राज्ञः कुलदीपो महामतिः।
कदाचित् सप्तवर्षोऽपि पितुरङ्कमुपाविशत् ॥ ५
सुरुचिस्तं विनिर्धूय स्वपुत्त्रं प्रीतिमानसा।
न्यवेशयत् तं विप्रेन्द्रा ह्यङ्कं रूपेण मानिता ॥ ६

अलब्धा स पितुर्धीमानङ्कं दुःखितमानसः ।
मातुः समीपमागम्य रुरोद स पुनः पुनः ॥ ७
रुदन्तं पुत्रमाहेदं माता शोकपरिप्लुता ।
सुरुचिर्दयिता भर्त्तुस्तस्याः पुत्रोऽपि तादृशः ॥ ८
मम त्वं मन्दभाग्याया जातः पुत्रोऽप्यभाग्यवान् ।
किं शोचसि किमर्थं त्वं रोदमानः पुनः पुनः ॥ ९
सन्तप्तहृदयो भूत्वा मम शोकं करिष्यसि ।
स्वस्वस्थानं ध्रुवं पुत्र स्वशक्त्या त्वं समाप्नुयाः ॥ १०
इत्युक्तः स तु मात्रा वै निर्जगाम तदा वनम् ।
विश्वामित्रं ततो दृष्ट्वा प्रणिपत्य यथाविधि ॥ ११
उवाच प्राञ्जलिर्भूत्वा भगवन् वक्तुमर्हसि ।
सर्व्वेषामुपरि स्थानं केन प्राप्स्यामि सत्तम ॥ १२
पितुरङ्के समासीनं माता मां सुरुचिर्मुने ।
व्यधूनयत् स तां राजा पिता नोवाच किञ्चन ॥ १३
एतस्मात् कारणाद्ब्रह्मंस्त्रस्तोऽहं मातरं गतः ।
सुनीतिराह मे माता मा कृथाः शोकमुत्तमम् ॥१४
स्वकर्म्मणा परं स्थानं प्राप्तुमर्हसि पुत्रक ।
तस्या हि वचनं श्रुत्वा स्थानं तव महामुने ॥ १५
प्राप्तो वनमिदं ब्रह्मन्नद्य त्वां दृष्टवान् प्रभो ।
तव प्रसादात् प्राप्स्येऽहं स्थानमद्भुतमुत्तमम् ॥ १६
इत्युक्तः स मुनिः श्रीमान् प्रहसन्निदमब्रवीत् ।
राजपुत्र शृणुष्वेदं स्थानमुत्तममाप्स्यसि ॥ १७
आराध्य जगतामीशं केशवं क्लेशनाशनम् ।
दक्षिणाङ्गभवं शम्भोर्महादेवस्य धीमतः ॥ १८
जप नित्यं महाप्राज्ञ सर्व्वपापविनाशनम् ।
इष्टदं परमं शुद्धं पवित्रममलं परम् ॥ १९
ब्रूहि मन्त्रमिमं दिव्यं प्रणवेन समन्वितम् ।
नमोऽस्तु वासुदेवाय इत्येवं नियतेन्द्रियः ॥ २०
ध्यायन् सनातनं विष्णुं जपहोमपरायणः ।
इत्युक्तः प्रणिपत्यैनं विश्वामित्रं महायशाः ॥ २१
प्राङ्मुखो नियतो भूत्वा जजाप प्रीतिमानसः ।
शाक-मूल-फलाहारः संवत्सरमतन्द्रितः ॥ २२
जजाप मन्त्रमनिशमजस्रं स पुनः पुनः ।
वेताला राक्षसा घोराः सिंहाद्याश्च महोरगाः ॥२३
तमभ्ययुर्महात्मानं बुद्धिमोहाय भीषणाः ।
जपन् स वासुदेवेति न किञ्चित् प्रतिपद्यत ॥ २४
सुनीतिरस्य या माता तस्या रूपेण संवृता ।
पिशाची समनुप्राप्ता रुरोद भृशदुःखिता ॥ २५
मम त्वमेकपुत्रोऽसि किमर्थं क्लिश्यते भवान् ।
मामनाथामपाहाय तप आस्थितवानसि ॥ २६
एवमादीनि वाक्यानि भाषमाणां महातपाः ।
अनिरीक्ष्यैव हृष्टात्मा हरेर्नाम जजाप सः ॥ २७
ततः प्रशेमुः सर्व्वत्र विघ्नरूपाणि तत्र वै ।
ततो गरुड़मारुह्य कालमेघसमद्युतिः ॥ २८
सर्व्वैर्देवैः परिवृतः स्तूयमानो महर्षिभिः ।
आययौ भगवान् विष्णुर्ध्रुवान्तिकमरातिहा ॥ २९
समागतं विलोक्याथ कोऽसावित्येव चिन्तयत् ।
पिबन्निव हृषीकेशं नयनाभ्यां जगत्पतिम् ॥ ३०
जपन् स वासुदेवेति ध्रुवस्तस्थौ महाद्युतिः ।
शङ्खप्रान्तेन गोविन्दः पस्पर्शास्यं हि तस्य वै ॥ ३१
ततः स परमं ज्ञानमवाप्य पुरुषोत्तमम् ।
तुष्टाव प्राञ्जलिर्भूत्वा सर्व्वलोकेश्वरं हरिम् ॥ ३२
प्रसीद देवदेवेश शङ्ख-चक्र-गदाधर ।
लोकात्मन् वेदगुह्यात्मन् त्वां प्रपन्नोऽस्मि केशव ॥३३
न विदुस्त्वां महात्मानं सनकाद्या महर्षयः ।
तत् कथं त्वामहं विद्यां नमस्ते भुवनेश्वर ॥ ३४
तमाह प्रहसन् विष्णुरेहि वत्स ध्रुवो भवान् ।
स्थानं ध्रुवं समासाद्य ज्योतिषामग्रभुग्भव ॥ ३५
माता त्वं सहितस्तत्र ज्योतिषां स्थानमाप्नुहि ।
मत्स्थानमेतत् परमं ध्रुवं नित्यं सुशोभनम् ॥ ३६
तपसाराध्य देवेशं पुरा लब्धं हि शङ्करात् ।
वासुदेवेति यो नित्यं प्रणवेन समन्वितम् ॥ ३७
नमस्कारसमायुक्तं भगवच्छब्दसंयुतम् ।
जपेदेवं हि यो विद्वान् ध्रुवं स्थानं प्रपद्यते ॥ ३८

सूत उवाच ।

ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः ।
मात्रा सह ध्रुवं सर्व्वे तस्मिन् स्थाने न्यवेशयन् ॥ ३९
विष्णोराज्ञां पुरस्कृत्य ज्योतिषां स्थानमाप्तवान् ।
एवं ध्रुवो महातेजा द्वादशाक्षरविद्यया ।
अवाप महतीं सिद्धिमेतत् ते कथितं मया ॥ ४०
तस्माद् यो वासुदेवाय प्रणामं कुरुते नरः ।
स याति ध्रुवसालोक्यं ध्रुवत्वं तस्य तत् तथा ॥ ४१

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे ध्रुवसंस्थान-
वर्णनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः।

ऋषय ऊचुः।

देवानां दानवानाञ्च गन्धर्व्वोरगरक्षसाम्।
उत्पत्तिं ब्रूहि सूताद्य यथाक्रममनुत्तमम् ॥ १

सूत उवाच।

सङ्कल्पाद्दर्शनात् स्पर्शात् पूर्व्वेषां सृष्टिरुच्यते।
दक्षात् प्राचेतसादूर्द्ध्वं सृष्टिर्मैथुनसम्भवा ॥ २
यदा तु सृजतस्तस्य देवर्षिगणपन्नगान्।
न वृद्धिमगमल्लोकस्तदा मैथुनयोगतः।
दक्षः पुत्त्रसहस्राणि पञ्च सूत्यामजीजनत् ॥ ३
तांस्तु दृष्ट्वा महाभागान् सिसृक्षुर्विविधाः प्रजाः।
नारदः प्राह हर्य्यश्वान् दक्षपुत्त्रान् समागतान् ॥ ४
भुवः प्रमाणं सर्व्वन्तु ज्ञात्वोर्द्ध्वमध एव च।
ततः सृष्टिं विशेषेण कुरुध्वं मुनिसत्तमाः ॥ ५
ते तु तद्वचनं श्रुत्वा प्रयाताः सर्व्वतो दिशम्।
अद्यापि न निवर्त्तन्ते समुद्रादिव सिन्धवः ॥ ६
हर्य्यश्वेषु च नष्टेषु पुनर्दक्षः प्रजापतिः।
सूत्यामेव च पुत्त्राणां सहस्रमसृजत् प्रभुः ॥ ७
शवला नाम ते विप्राः समेताः सृष्टिहेतवः।
नारदोऽनुगतान् प्राह पुनस्तान् सूर्य्यवर्च्चसः ॥ ८
भुवः प्रमाणं सर्व्वन्तु ज्ञात्वा भ्रातॄन् पुनः पुनः।
आगत्य वाथ सृष्टिं वै करिष्यथ विशेषतः ॥ ९
तेऽपि तेनैव मार्गेण जग्मुर्भ्रातृगतिं तथा।
ततस्तेष्वपि नष्टेषु षष्टिकन्याः प्रजापतिः ॥ १०
वैरिण्यां जनयामास दक्षः प्राचेतसस्तदा।
प्रादात् स दशकं धर्म्म कश्यपाय त्रयोदश ॥ ११
विंशत् सप्त च सोमाय चतस्रोऽरिष्टनेमये।
द्वे चैव भृगुपुत्त्राय द्वे कृशाश्वाय धीमते ॥ १२
द्वे चैवाङ्गिरसे तद्वत् तासां नामानि विस्तरात्।
शृणुध्वं देवमातॄणां प्रजाविस्तारमादितः ॥ १३
मरुत्वती वसुर्यामिर्लम्बा भानुररुन्धती।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च भामिनी ॥ १४
धर्म्मपत्न्यः समाख्यातास्तासां पुत्त्रान् वदामि वः।
विश्वे देवास्तु विश्वायाः साध्या साध्यानजीजनत् ॥ १५
मरुत्वत्यां मरुत्वन्तो वसोस्तु वसवस्तथा।
भानोस्तु भानवः प्रोक्ता मुहूर्त्ताया मुहूर्त्तकाः ॥ १६
लम्बाया घोषनामानो नागवीथिस्तु यामिजः।
सङ्कल्पायास्तु सङ्कल्पो वसुसर्गं वदामि वः ॥ १७
ज्योतिषन्तस्तु ये देवा व्यापकाः सर्व्वतो दिशम्।
वसवस्ते समाख्याताः सर्व्वभूतहितैषिणः ॥ १८
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः।
प्रत्यषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥ १९
अजैकपादहिर्बुध्नो विरूपाक्षः सभैरवः।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥ २०
सावित्रश्च जयन्तश्च पिनाकी चापराजितः।
एते रुद्राः समाख्याता एकादश गणेश्वराः ॥ २१
कश्यपस्य प्रवक्ष्यामि पत्नीभ्यः पुत्त्रपौत्त्रकम्।
अदितिश्च दितिश्चैव अरिष्टा सुरसा मुनिः ॥ २२
सुरभिर्विनता ताम्रा तद्वत् क्रोधवशा इला।
कद्रूस्त्विषा दनुस्तद्वत् तासां पुत्त्रान् वदामि वः ॥ २३
तुषिता नाम ये देवाश्चाक्षुषस्यान्तरे मनोः।
वैवस्वतान्तरे ते वै आदित्या द्वादश स्मृताः ॥ २४
इन्द्रो धाता भगस्त्वष्टा मित्रोऽथ वरुणोऽर्य्यमा।
विवस्वान् सविता पूषा अंशुमान् विष्णुरेव च ॥ २५
एते सहस्रकिरणा आदित्या द्वादश स्मृताः ॥ २६
दितिः पुत्त्रद्वयं लेभे कश्यपादिति नः श्रुतम्।
हिरण्यकशिपुञ्चैव हिरण्याक्षं तथैव च ॥ २७
दनुः पुत्त्रशतं लेभे कश्यपाद्बलदर्पितम्।
विप्रचित्तिः प्रधानोऽभूत् तेषां मध्ये द्विजोत्तमाः ॥ २८
ताम्रा च जनयामास षट् कन्या द्विजपुङ्गवाः।
शुकीं श्येनीञ्च भासीञ्च सुग्रीवीं गृध्रिकां शुचिम् ॥ २९
शुकी शुकानुलूकांश्च जनयामास धर्म्मतः।
श्येनी श्येनांस्तथा भासी कुरङ्गांश्च व्यजीजनत् ॥ ३०
गृध्री गृध्रान् कपोतांश्च पारावतविहङ्गमान्।
हंस-सारस-कारण्ड-प्लवाञ्छुचिरजीजनत् ॥ ३१
अजाश्व-मेषोष्ट्र-खरान् सुग्रीवी चाप्यजीजनत्।
विनता जनयामास गरुड़ञ्चारुणं शुभा ॥ ३२
सौदामिनीं तथा कन्यां सर्व्वलोकभयङ्करीम्।
सुरसायाः सहस्रन्तु सर्पाणामभवत् पुरा ॥ ३३
कद्रूः सहस्रशिरसां सहस्रं प्राप सुव्रता।
प्रधानास्तेषु विख्याताः षड्विंशतिरनुत्तमाः ॥ ३४
शेष-वासुकि-कर्कोट-शङ्खैरावत-कम्बलाः।
धनञ्जय-महानील-पद्माश्वतर-तक्षकाः ॥ ३५

एलापत्र-महापद्म-धृतराष्ट्र-बलाहकाः।
शङ्खपाल-महाशङ्ख-पुष्पदंष्ट्र-शुभाननाः॥ ३६
शङ्खलोमा च नहुषो वामनः फणितस्तथा।
कपिलो दुर्म्मुखश्चापि पतञ्जलिरिति स्मृतः॥ ३७
रक्षोगणं क्रोधवशा महामायं व्यजीजनत्।
रुद्राणाञ्च गणं तद्वद्गोमहिष्यौ वराङ्गना॥ ३८
सुरभिर्जनयामास कश्यपादिति नः श्रुतम्।
मुनिर्मुनीनाञ्च गणं गणमप्सरसां तथा॥ ३९
तथा किन्नर-गन्धर्व्वानरिष्टाजनयद्बहून्।
तृण-वृक्ष-लता-गुल्ममिला सर्व्वमजीजनत्॥ ४०
खिषा तु यक्ष-रक्षांसि जनयामास कोटिशः।
एते तु काश्यपेयाश्च संक्षेपात् परिकीर्त्तिताः॥ ४१
एतेषां पुत्रपौत्रादि-वंशाश्च बहवः स्मृताः।
एवं प्रजासु सृष्टासु कश्यपेन महात्मना॥ ४२
प्रतिष्ठितासु सर्व्वासु चरासु स्थावरासु च।
अभिषिच्याधिपत्येषु तेषां मुख्यान् प्रजापतिः॥ ४३
ततो मनुष्याधिपतिं चक्रे वैवस्वतं मनुम्।
स्वायम्भुवेऽन्तरे पूर्व्वं ब्रह्मणा येऽभिषिचिताः॥ ४४
तैरियं पृथिवी सर्व्वा सप्तद्वीपा सपर्व्वता।
यथोपदेशमद्यापि धर्म्मेण प्रतिपाल्यते॥ ४५
स्वायम्भुवेऽन्तरे पूर्व्वं ब्रह्मणा येऽभिषिचिताः।
ते ह्येते चाभिषिच्यन्ते मनवश्च भवन्ति ते॥ ४६
मन्वन्तरेष्वतीतेषु गता ह्येतेषु पार्थिवाः।
एवमन्येऽभिषिच्यन्ते प्राप्ते मन्वन्तरे ततः॥ ४७
अतीतानागताः सर्व्वे नृपा मन्वन्तरे स्मृताः।
एतानुत्पाद्य पुत्रांस्तु प्रजासन्तानकारणात्॥ ४८
कश्यपो गोत्रकामस्तु चचार स पुनस्तपः।
पुत्रो गोत्रकरो मह्यं भवतादिति चिन्तयन्॥ ४९
तस्यैवं ध्यायमानस्य कश्यपस्य महात्मनः।
ब्रह्मयोगात् सुतौ पश्चात् प्रादुर्भूतौ महौजसौ॥ ५०
वत्सरश्चासितश्चैव तावुभौ ब्रह्मवादिनौ।
वत्सरान्नैध्रुवो जज्ञे रैभ्यश्च सुमहायशाः॥ ५१
रैभ्यस्य रैभ्या विज्ञेया नैध्रुवस्य वदामि वः।
च्यवनस्य तु कन्यायां सुमेधाः समपद्यत॥ ५२
नैध्रुवस्य तु सा पत्नी माता वै कुण्डपायिनाम्।
असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत॥ ५३
शाण्डिल्यानां वरः श्रीमान् देवलः सुमहातपाः।
शाण्डिल्या नैध्रुवा रैभ्यास्त्रयः पक्षास्तु काश्यपाः॥ ५४
नवप्रकृतयो देवाः पुलस्त्यस्य वदामि वः।
चतुर्युगे ह्यतिक्रान्ते मनोरेकादशे प्रभोः॥ ५५
अर्द्धावशिष्टे तस्मिंस्तु द्वापरे सम्प्रवर्त्तिते।
मानवस्य नरिष्यन्तः पुत्र आसीद्दमः किल॥ ५६
दमस्य तस्य दायादस्तृणबिन्दुरिति स्मृतः।
त्रेतायुगमुखे राजा तृतीये सम्बभूव ह॥ ५७
तस्य कन्या लिलविला रूपेणाप्रतिमाभवत्।
पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत्॥ ५८
ऋषिरैलविलो यस्यां विश्रवाः समपद्यत।
तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्द्धनाः॥ ५९
बृहस्पतेः शुभा कन्या नाम्ना वै देववर्णिनी।
पुष्पोत्कटा बलाका च सुते माल्यवतः स्मृते॥ ६०
केकसी मालिनः कन्या तासां व श्रृणुत प्रजाः।
ज्येष्ठं वैश्रवणं तस्मात् सुषुवे देववर्णिनी॥ ६१
कैकसी चाप्यजनयत् रावणं राक्षसाधिपम्।
कुम्भकर्णं शूर्पणखां धीमन्तञ्च विभीषणम्॥ ६२
पुष्पोत्कटा ह्यजनयत् पुत्रांस्तस्माद्द्विजोत्तमाः।
महोदरं प्रहस्तञ्च महापार्श्वं खरं तथा॥ ६३
कुम्भीनसीं तथा कन्यां बलायाः श्रृणुत प्रजाः।
त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः॥ ६४
कन्या वैमालिका चापि बलायाः प्रसवः स्मृतः।
इत्येते क्रूरकर्म्माणः पौलस्त्या राक्षसा नव॥ ६५
विभीषणोऽतिशुद्धात्मा धर्म्मज्ञः परिकीर्त्तितः।
पुलस्तस्य मृगाः पुत्राः सर्व्वे व्याघ्राश्च दंष्ट्रिणः॥ ६६
भूताः पिशाचाः सर्पाश्च शूकरा हस्तिनस्तथा।
वानराः किन्नराश्चैव ये च किम्पुरुषास्तथा॥ ६७
अनपत्यः क्रतुस्तस्मिन् स्मृतो वैवस्वतेऽन्तरे।
अत्रेः पत्न्यो दशैवासन् सुन्दर्य्यश्च पतिव्रताः॥ ६८
भद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः।
भद्राभद्रा च जलदा मन्दामन्दा तथैव च॥ ६९
बलाबला च विप्रेन्द्रा या च गोपाबला स्मृता।
तथा तामरसा चैव वरक्रीड़ा च वै दश॥ ७०
आत्रेयवंशप्रभवास्तासां भर्त्ता प्रभाकरः।
स्वर्भानुपिहिते सूर्य्ये पतितेऽस्मिन् दिवो महीम्॥ ७१
ततोऽभिभूते लोकेऽस्मिन् प्रभा येन प्रवर्त्तिता।
स्वस्त्यस्तु हि तवेत्युक्ते पतन्निह दिवाकरः॥ ७२

ब्रह्मर्षिवचनात् तस्य पपात न विभुर्दिवः ।
ततः प्रभाकरेत्युक्तः प्रभुरत्रिमहर्षिभिः ॥ ७३
भद्रायां जनयामास सोमं पुत्त्रं यशस्विनम् ।
स तासु जनयामास पुनः पुत्त्रांस्तपोधनः ॥ ७४
स्वस्त्यात्रेया इति ख्याता ऋषयो वेदपारगाः ।
तेषां द्वौ ख्यातयशसौ ब्रह्मिष्ठौ च महौजसौ ॥ ७५
दत्तो ह्यत्रिवरो ज्येष्ठो दुर्व्वासास्तस्य चानुजः ।
यवीयसी स्वसा तेषाममला ब्रह्मवादिनी ॥ ७६
तस्य गोत्रद्वये जाताश्चत्वारः प्रथिता भुवि ।
श्यावश्च प्रत्वसश्चैव ववल्गुश्चाथ गह्वरः ॥ ७७
आत्रेयाणाञ्च चत्वारः स्मृताः पक्षा महात्मनाम् ।
काश्यपो नारदश्चैव पर्व्वतोऽनुद्धतस्तथा ॥ ७८
जज्ञिरे मानसा ह्येते अरुन्धत्या निबोधत ।
नारदस्तु वशिष्ठायारुन्धतीं प्रत्यपादयत् ॥ ७९
ऊर्द्धरेता महातेजा दक्षशापात् तु नारदः ।
पुरा देवासुरे युद्धे घोरे वै तारकामये ॥ ८०
अनावृष्ट्या हते लोके ह्युग्रे लोकेश्वरैः सह ।
वशिष्ठस्तपसा धीमान् धारयामास वै प्रजाः ॥ ८१
अन्नोदकं मूलफलमोषधीश्च प्रवर्त्तयन् ।
तानेतान् जीवयामास कारुण्यादौषधेन च ॥ ८२
अरुन्धत्यां वशिष्ठस्तु सुतानुत्पादयच्छतम् ।
ज्यायसोऽजनयच्छक्तेरदृश्यन्ती पराशरम् ॥ ८३
रक्षसा भक्षिते शक्तौ रुधिरेण तु वै तदा ।
काली पराशराज्जज्ञे कृष्णा द्वैपायनं प्रभुम् ॥ ८४
द्वैपायनो ह्यरण्यां वै शुकमुत्पादयत् सुतम् ।
उपमन्युञ्च पीवर्य्यां विद्धीमे शुकसूनवः ॥ ८५
भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरस्तु पञ्चमः ।
कन्या कीर्त्तिमती चैव योगमाता धृतव्रता ॥ ८६
जननी ब्रह्मदत्तस्य पत्नी सालशुहस्य च ।
श्वेतः कृष्णश्च गौरश्च श्यामो धूम्रस्तथारुणः ॥ ८७
नीलो बादरिकश्चैव सर्व्वे चैते पराशराः ।
पराशराणामष्टौ ते पक्षाः प्रोक्ता महात्मनाम् ॥ ८८
अत ऊर्द्ध्वं निबोधध्वमिन्द्रप्रमितिसम्भवम् ।
वशिष्ठस्य कपिञ्जल्यो घृताच्यामुदपद्यत ॥ ८९
त्रिमूर्त्तिर्यः समाख्यात इन्द्रप्रमितिरुच्यते ।
पृथोः सुतायां सम्भूतो भद्रस्तस्याभवद्वसुः ॥ ९०
उपमन्युः सुतस्तस्य बहवो ह्यौपमन्यवः ।
मित्रावरुणयोश्चैव कौण्डिन्या ये परिश्रुताः ॥ ९
एकार्षेयास्तथा चान्ये वाशिष्ठा नाम विश्रुताः ।
एते पक्षा वशिष्ठानां स्मृता दश महात्मनाम् ॥ ९
इत्येते ब्रह्मणः पुत्त्रा मानसा विश्रुता भुवि ।
भर्त्तारश्च महाभागा एषां वंशाः प्रकीर्त्तिताः ॥ ९
त्रिलोकधारणे शक्ता देवर्षिकुलसम्भवाः ॥ ९४
तेषां पुत्त्राश्च पौत्त्राश्च शतशोऽथ सहस्रशः ।
यैस्तु व्याप्तास्त्रयो लोकाः सूर्य्यस्येव गभस्तिभिः ॥

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे देवादि सृष्टिकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## चतुःषष्टितमोऽध्यायः ।

ऋषय ऊचुः ।

कथं हि रक्षसा शक्तिर्भक्षितः सोऽनुजैः सह ।
वाशिष्ठो वदतां श्रेष्ठ सूत वक्तुमिहार्हसि ॥ १

सूत उवाच ।

राक्षसो रुधिरो नाम वशिष्ठस्य सुतं पुरा ।
शक्तिं स भक्षयामास शक्तेः शापात् सहानुजैः ।
वशिष्ठयाज्यं विप्रेन्द्रास्तदाविश्यैव भूपतिम् ।
कल्माषपादं रुधिरो विश्वामित्रेण चोदितः ॥ ३
भक्षितः स इति श्रुत्वा वशिष्ठस्तेन रक्षसा ।
शक्तिः शक्तिमतां श्रेष्ठो भ्रातृभिः सह धर्म्मवित् ।
हा पुत्त्र पुत्त्र पुत्त्रेति क्रन्दमानो मुहुर्म्मुहुः ।
अरुन्धत्या सह मुनिः पपात भुवि दुःखितः ॥ ५
नष्टं कुलमिति श्रुत्वा मर्त्तुं चक्रे मतिं तदा ।
स्मरन् पुत्त्रशतञ्चैव शक्तिज्येष्ठञ्च शक्तिमान् ॥ ६
न तं विनाहं जीविष्ये इति निश्चित्य दुःखितः ॥ ७

आरुह्य मूर्द्धानमजात्मजोऽसौ
तथात्मवान् सर्व्वविदात्मवित्त्व ।
धराधरस्यैव तदा धरायां
पपात पत्न्या सह साश्रुदृष्टिः ॥ ८
धराधरात् तं पतितं धरा तदा
दधार तत्रापि विचित्रकण्ठी ।
कराम्बुजाभ्यां करिखेलगामिनी
रुदन्तमादाय रुरोद सा च ॥ ९

तदा तस्य स्नुषा प्राह पत्नी शक्तेर्महामुनिम्।
वशिष्ठं वदतां श्रेष्ठं रुदन्ती भयविह्वला ॥ १०
भगवन् ब्राह्मणश्रेष्ठ तव देहमिदं शुभम्।
पालयस्व विभो द्रष्टुं तव पौत्रं ममात्मजम् ॥ ११
न त्याज्यं तव विप्रेन्द्र देहमेतत् सुशोभनम्।
गर्भस्थो मम सर्व्वार्थ-साधकः शक्तिजो यतः ॥ १२
एवमुक्त्वाऽथ धर्म्मज्ञा कराभ्यां कमलेक्षणा।
उत्थाप्य श्वशुरं नत्वा नेत्रे संमृज्य वारिणा ॥ १३
दुःखितापि परित्रातुं श्वशुरं दुःखितं तदा।
अरुन्धतीञ्च कल्याणीं प्रार्थयामास दुःखिताम् ॥ १४
स्नुषावाक्यं ततः श्रुत्वा वशिष्ठोत्थाय भूतलात्।
संज्ञामवाप्य चालिङ्ग्य सा पपात सुदुःखिता ॥ १५
अरुन्धती कराभ्यां तां संस्पृश्यास्राकुलेक्षणाम्।
रुरोद मुनिशार्दूलो भार्य्यया सुतवत्सलः ॥ १६
अथ नाभ्यम्बुजे विष्णोर्यथा तस्याश्चतुर्म्मुखः।
आसीनो गर्भशय्यायां कुमार ऋचमाह सः ॥ १७
ततो निशम्य भगवान् वशिष्ठ ऋचमादरात्।
केनोक्तामिति सञ्चिन्त्य तदातिष्ठत् समाहितः ॥ १८
व्योमाङ्गणस्थोऽथ हरिः पुण्डरीकनिभेक्षणः।
वशिष्ठमाह विश्वात्मा घृणया स घृणानिधिः ॥ १९
भो वत्स वत्स विप्रेन्द्र वशिष्ठ सुतवत्सल।
तव पौत्रमुखाम्भोजादृग्वेषाद्य विनिःसृता ॥ २०
मत्समस्तव पौत्रोऽसौ शक्तिजः शक्तिमान् मुने।
तस्मादुत्तिष्ठ सन्त्यज्य शोकं ब्रह्मसुतोत्तम ॥ २१
रुद्रभक्तश्च गर्भस्थो रुद्रपूजापरायणः।
रुद्रदेवप्रभावेण कुलं ते सन्तरिष्यति ॥ २२
एवमुक्त्वा घृणी विप्रं भगवान् पुरुषोत्तमः।
वशिष्ठं मुनिशार्दूलं तत्रैवान्तरधीयत ॥ २३
ततः प्रणम्य शिरसा वशिष्ठो वारिजेक्षणम्।
अदृश्यन्त्या महातेजाः पस्पर्शोदरमादरात् ॥ २४
हा पुत्र पुत्र पुत्रेति पपात च सुदुःखितः।
ललापारुन्धतीं प्रेक्ष्य तदाऽसौ रुदतीं द्विजाः।
स्वपुत्रञ्च स्मरन् दुःखात् पुनरेह्येहि पुत्रक ॥ २५
तव पुत्रमिमं दृष्ट्वा भो शक्ते कुलधारणम्।
तवान्तिकं गमिष्यामि तव मात्रा न संशयः ॥ २६
सूत उवाच।
एवमुक्त्वारुदद्विप्र आलिङ्ग्यारुन्धतीं तदा ॥ २७
पपात ताड़यन्तीव स्वस्य कुक्षौ करेण वै।
अदृश्यन्ती जवानाथ शक्तिजस्यालयं शुभा ॥ २८
स्वोदरं दुःखिता भूमौ ललाप च पपात च।
अरुन्धती तदा भीता वशिष्ठश्च महामतिः ॥ २९
समुत्थाप्य स्नुषां बालामूचतुर्भयविह्वलौ ॥ ३०

विचारमुग्धे तव गर्भमण्डलं
कराम्बुजाभ्यां विनिहत्य दुर्लभम्।
कुलं वशिष्ठस्य समस्तमप्यहो
निहन्तुमार्य्ये कथमुद्यता वद ॥ ३१
तवात्मजं शक्तिसुतञ्च दृष्ट्वा
चास्वाद्य वक्त्रामृतमार्य्यसूनोः।
त्रातुं यतो देहमिमं मुनीन्द्रः
सुनिश्चितः पाहि ततः शरीरम् ॥ ३२

सूत उवाच।
एवं स्नुषामुपालभ्य मुनिं चारुन्धती स्थिता।
अदृश्यन्ती वशिष्ठस्य प्राह चार्त्तेति विह्वला ॥ ३३
लय्येव जीवितं चास्य मुनेर्यत् सुव्रते मम।
जीवितं रक्ष देहस्य धात्री च कुरु यद्धितम् ॥ ३४
अदृश्यन्त्युवाच।
मया यदि मुनिश्रेष्ठ त्रातुं वै निश्चितं स्वकम्।
ममाशुभं शुभं देहं कथञ्चित् पालयाम्यहम् ॥ ३५
प्रियदुःखमहं प्राप्ता श्वसती नात्र संशयः।
मुने दुःखादहं दग्धा यतः पुत्री मुने तव ॥ ३६
अहोऽद्भुतं मया दृष्टं दुःखपात्री ह्यहं विभो।
दुःखत्राता भव ब्रह्मन् ब्रह्मसूनो जगद्गुरो ॥ ३७
तथापि भर्तृरहिता दीना नारी भवेदिह।
पाहि मां तत आर्य्येन्द्र परिभूता भविष्यति ॥ ३८
पिता माता च पुत्राश्च पौत्राः श्वशुर एव च।
एते न बान्धवा स्त्रीणां भर्त्ता बन्धुः परा गतिः ॥ ३९
आत्मनो यद्धि कथितमप्यद्वैमिति पण्डितैः।
तदप्यत्र मृषा ह्यासीत् गतः शक्तिरहं स्थिता ॥ ४०
अहो ममात्र काठिन्यं मनसो मुनिपुङ्गव।
पतिं प्राणसमं त्यक्त्वा स्थिता यत्र क्षणं यतः ॥ ४१
वशिष्ठाश्वत्थमाश्रित्य ह्यमृता तु यथा लता।
निर्म्मूलाप्यमृता भर्त्रा त्यक्ता दीना स्थिताप्यहम् ॥ ४२
स्नुषावाक्यं निशम्यैवं वशिष्ठो भार्य्यया सह।
तदा चक्रे मतिं धीमान् यातुं स्वाश्रममाश्रमी ॥ ४३

कृच्छ्रात् सभार्य्यां भगवान् वशिष्ठः स्वाश्रमं क्षणात्
अदृश्यन्त्या च पुण्यात्मा संविवेश स चिन्तयन् ॥ ४४
सा गर्भं पालयामास कथञ्चिन्मुनिपुङ्गवाः।
कुलसन्धारणार्थाय शक्तिपत्नी पतिव्रता ॥ ४५
ततः सासूत तनयं दशमे मासि सुप्रभम्।
शक्तिपत्नी यथा शक्तिं शक्तिमन्तमरुन्धती ॥ ४६
असूत सा दितिर्विष्णुं यथा स्वाहा गुहं सुतम्।
अग्निं यथारणिः पत्नी शक्तेः साक्षात् पराशरम् ॥ ४७
यदा तदा शक्तिसूनुरवतीर्णो महीतले।
शक्तिस्त्यक्त्वा तदा दुःखं पितॄणां समतां ययौ ॥ ४८
भ्रातृभिः सह पुण्यात्मा आदित्यैरिव भास्करः।
रराज पितृलोकस्थो वाशिष्ठो मुनिपुङ्गवाः ॥ ४९
जगुस्तदा च पितरो ननृतुश्च पितामहाः।
प्रपितामहाश्च विप्रेन्द्रा ह्यवतीर्णे पराशरे ॥ ५०
ये ब्रह्मवादिनो भूमौ ननृतुर्दिवि देवताः।
पुष्कराद्याश्च ससृजुः पुष्पवर्षञ्च खेचराः ॥ ५१
पुरेषु राक्षसानाञ्च प्रणादं विषमं द्विजाः।
आश्रमस्थाश्च मुनयः समूहुर्हर्षसन्ततिम् ॥ ५२
अवतीर्णो यथा ह्यण्डाद्भानुः सोऽपि पराशरः।
अदृश्यन्त्याश्चतुर्व्वक्त्रो मेघजालाद्दिवाकरः ॥ ५३
सुखञ्च दुःखमभवददृश्यन्त्यास्तथा द्विजाः।
दृष्ट्वा पुत्त्रं पतिं स्मृत्वा अरुन्धत्या मुनेस्तथा ॥ ५४
दृष्ट्वा च तनयं बाला पराशरमतिद्युतिम्।
अलाप विह्वला बाला सन्नकण्ठी पपात च ॥ ५५
सा पराशरमहो महामतिं
देवदानवगणैश्च पूजितम्।
जातमात्रमनघं शुचिस्मिता
वीक्ष्य साश्रुनयना ललाप च ॥ ५६
हा वशिष्ठसुत कुत्रचिद्गतः
पश्य पुत्त्रमनघं तवात्मजम्।
त्यज्य दीनवदनां वनान्तरे
पुत्त्रदर्शनपरामिमां प्रभो ॥ ५७
शक्ते स्वञ्च सुतं पश्य भ्रातृभिः सह षण्मुखम्।
यथा महेश्वरोऽपश्यन् सगणो हृषिताननः ॥ ५८
अथ तस्यास्तदालापं वशिष्ठो मुनिसत्तमः।
श्रुत्वा स्नुषामुवाचेदं मा रोदीरिति दुःखितः ॥ ५९
आज्ञया तस्य सा शोकं वशिष्ठस्य कुलाङ्गना।
त्यक्त्वा ह्यपालयद्बालं बाला बालमृगेक्षणा ॥ ६०
दृष्ट्वा तामबलां प्राह मङ्गलाभरणैर्विना।
आसीनामाकुलां साध्वीं वासपर्य्याकुलेक्षणाम् ॥ ६१
शाक्तेय उवाच।
अम्ब मङ्गलविभूषणैर्विना
देहयष्टिरनघे न शोभते।
वक्तुमर्हसि तवाद्य कारणं
चन्द्रबिम्बरहितेव शर्व्वरी ॥ ६२
मातर्मातः कथं त्यक्त्वा मङ्गलाभरणानि वै।
आसीना भर्तृहीनेव वक्तुमर्हसि शोभने ॥ ६३
अदृश्यन्ती तदा वाक्यं श्रुत्वा तस्य सुतस्य सा।
न किञ्चिदब्रवीत् पुत्त्रं शुभं वा यदि वेतरत् ॥ ६४
अदृश्यन्तीं पुनः प्राह शाक्तेयो भगवान् मम।
मातः क्व महातेजाः पिता वद वदेति ताम् ॥ ६५
श्रुत्वा रुरोद सा वाक्यं पुत्त्रस्यातीव विह्वला।
भक्षितो रक्षसा तातस्तवेति निपपात च ॥ ६६
श्रुत्वा वशिष्ठोऽपि पपात भूमौ
पौत्त्रस्य वाक्यं स रुदन् दयालुः।
अरुन्धती चाश्रमवासिनस्तदा
मुनेर्वशिष्ठस्य मुनीश्वराश्च ॥ ६७
भक्षितो रक्षसा मातुः पिता तव मुखादिति।
श्रुत्वा पराशरो धीमान् प्राह चाश्राविलेक्षणः ॥ ६८
पराशर उवाच।
अभ्यर्च्य देवदेवेशं त्रैलोक्यं सचराचरम्।
क्षणेन मातः पितरं दर्शयामीति मे मतिः ॥ ६९
सा निशम्य वचनं तदा शुभं
सस्मिता तनयमाह विस्मिता।
तथ्यमेतदिति तं निरीक्ष्य सा
पुत्त्र पुत्त्र भवमर्च्चयेति च ॥ ७०
ज्ञात्वा शक्तिसुतस्यास्य सङ्कल्पं मुनिपुङ्गवः।
वशिष्ठो भगवान् प्राह पौत्त्रं धीमान् घृणानिधिः ॥ ७१
स्थाने पौत्त्र मुनिश्रेष्ठ सङ्कल्पस्तव सुव्रत।
तथापि शृणु लोकस्य क्षयं कर्त्तुं न चार्हसि ॥ ७२
राक्षसानामभावाय कुरु सर्व्वेश्वरार्च्चनम्।
त्रैलोक्यं शृणु शाक्तेय अपराध्यति किं तव ॥ ७३
ततस्तस्य वशिष्ठस्य नियोगाच्छक्तिनन्दनः।
राक्षसानामभावाय मतिं चक्रे महामतिः ॥ ७४



अदृश्यन्तीं वशिष्ठञ्च प्रणम्यारुन्धतीं ततः ।
कृत्वैकलिङ्गं क्षणिकं पांशुना मुनिसन्निधौ ॥ ७५
सम्पूज्य शिवसूक्तेन त्र्यम्बकेण शुभेन च ।
जप्त्वा त्वरितरुद्रञ्च शिवसङ्कल्पमेव च ॥ ७६
नीलरुद्रञ्च शाक्तेयस्तथा रुद्रञ्च शोभनम् ।
वामीयं पवमानञ्च पञ्चब्रह्म तथैव च ॥ ७७
होतारं लिङ्गसूक्तञ्च अथर्व्वशिर एव च ।
अष्टाङ्गमर्घ्यं रुद्राय दत्त्वाभ्यर्च्च्य यथाविधि ॥ ७८

पराशर उवाच ।

भगवन् रक्षसा रुद्र भक्षितो रुधिरेण वै ।
पिता मम महातेजा भ्रातृभिः सह शङ्कर ॥ ७९
द्रष्टुमिच्छामि भगवन् पितरं भ्रातृभिः सह ।
एवं विज्ञापयल्लिङ्गं प्रणिपत्य मुहुर्म्मुहुः ॥ ८०
हा रुद्र रुद्र रुद्रेति रुरोद निपपात च ।
तं दृष्ट्वा भगवान् रुद्रो देवीमाह च शङ्करः ॥ ८१
पश्य बालं महाभागे वास्पपर्य्याकुलेक्षणम् ।
ममानुस्मरणे युक्तं मदाराधनतत्परम् ॥ ८२
सा च दृष्ट्वा महादेवी पराशरमनिन्दिता ।
दुःखात् संक्लिन्नसर्व्वाङ्गमस्राकुलविलोचनम् ॥ ८३
लिङ्गार्चनविधौ सक्तं हर रुद्रेतिवादिनम् ।
प्राह भर्त्तारमीशानं शङ्करं जगतामुमा ॥ ८४
ईप्सितं यच्छ सकलं प्रसीद परमेश्वर ।
निशम्य वचनं तस्याः शङ्करः परमेश्वरः ॥ ८५
भार्य्यामार्य्यामुमां प्राह ततो हालाहलाशनः ।
रक्षाम्येनं द्विजं बालं फुल्लेन्दीवरलोचनम् ॥ ८६
ददामि दृष्टिं मद्रूप-दर्शनक्षम एष वै ।
एवमुक्त्वा गणैर्दिव्यैर्भगवान् नीललोहितः ॥ ८७
ब्रह्मेन्द्र-विष्णु-रुद्राद्यैः संवृतः परमेश्वरः ।
ददौ च दर्शनं तस्मै मुनिपुत्राय धीमते ॥ ८८
सोऽपि दृष्ट्वा महादेवमानन्दास्राविलेक्षणः ।
निपपात च हृष्टात्मा पादयोस्तस्य सादरम् ॥ ८९
पुनर्भवान्याः पादौ च नन्दिनश्च महात्मनः ।
सफलं जीवितं मेऽद्य ब्रह्मायुंस्तांस्तदाह सः ॥९०
रक्षार्थमागतस्त्वद्य मम बालेन्दुभूषणः ।
कोऽन्यः समो मया लोके देवो वा दानवोऽपि वा॥९१
अथ तस्मिन् क्षणादेव ददर्श दिवि संस्थितम् ।
पितरं भ्रातृभिः सार्द्धं शाक्तेयस्तु पराशरः ॥ ९२
सूर्य्यमण्डलसङ्काशे विमाने विश्वतोमुखे ।
भ्रातृभिः सहितं दृष्ट्वा ननाम च जहर्ष च ॥ ९३
तदा वृषध्वजो देवः सभार्य्यः सगणेश्वरः ।
वशिष्ठपुत्त्रं प्राहेदं पुत्त्रदर्शनतत्परम् ॥ ९४

श्रीमहादेव उवाच ।

शक्ते पश्य सुतं बालमानन्दास्राविलेक्षणम् ।
अदृश्यन्तीञ्च विप्रेन्द्र वशिष्ठं पितरं तव ॥ ९५
अरुन्धतीं महाभागां कल्याणीं देवतोपमाम् ।
मातरं पितरञ्चोभौ नमस्कुरु महामते ॥ ९६
तदा हरं प्रणम्याशु देवदेवमुमां तथा ।
वशिष्ठञ्च तदा श्रेष्ठं शक्तिर्वै शङ्कराज्ञया ॥ ९७
मातरञ्च महाभागां कल्याणीं पतिदेवताम् ।
अरुन्धतीं जगन्नाथ-नियोगात् प्राह शक्तिमान् ॥९८

वाशिष्ठ उवाच ।

भो वत्स वत्स विप्रेन्द्र पराशर महाद्युते ।
रक्षितोऽहं त्वया तात गर्भस्थेन महात्मना ॥ ९९
अणिमादिगुणैश्वर्य्यं मया वत्स पराशर ।
लब्धमद्याननं दृष्टं तव बाल ममाज्ञया ॥ १००
अदृश्यन्तीं महाभागां रक्ष वत्स महामते ।
अरुन्धतीञ्च पितरं वशिष्ठं मम सर्व्वदा ॥ १०१
अन्वयः सकलो वत्स मम सन्तारितस्त्वया ।
पुत्त्रेण लोकान् जयतीत्युक्तं सद्भिः सदैव हि ॥१०२
ईप्सितं वरयेशानं जगतां प्रभवं प्रभुम् ।
गमिष्याम्यभिवन्द्येशं भ्रातृभिः सह शङ्करम् ॥ १०३
एवं पुत्त्रमुपामन्त्र्य प्रणम्य च महेश्वरम् ।
निरीक्ष्य भार्य्यां स्नेहात् जगाम पितरं वशी ॥ १०४
गतं दृष्ट्वाथ पितरं तदाभ्यर्च्च्यैव शङ्करम् ।
तुष्टाव वाग्भिरिष्टाभिः शाक्तेयः शशिभूषणम् ॥ १०५
ततस्तुष्टो महादेवो मन्मथान्धकमर्द्दनः ।
अनुगृह्याथ शाक्तेयं तत्रैवान्तरधीयत ॥ १०६
गते महेश्वरे साम्बे प्रणम्य च महेश्वरम् ।
ददाह राक्षसानान्तु कुलं मन्त्रेण मन्त्रवित् ॥ १०७
तदाह पौत्त्रं धर्म्मज्ञो वशिष्ठो मुनिभिर्वृतः ।
अलमत्यन्तकोपेन तातमन्युमिमं जहि ॥ १०८
राक्षसा नापराध्यन्ति पितुस्ते विहितं तथा ।
मूढानामेव भवति क्रोधो बुद्धिमतां न हि ॥ १०९
हन्यते तात कः केन यतः स्वकृतभुक् पुमान् ।

सञ्चितस्यातिमहता वत्स क्लेशेन मानवैः ॥ ११०
यशसस्तपसश्चैव क्रोधो नाशकरः स्मृतः ।
अलं हि राक्षसैर्दग्धैर्दीनैरनपराधिभिः ॥ १११
सत्रं ते विरमत्वेतत् क्षमासारा हि साधवः ।
एवं वशिष्ठवाक्येन शाक्तेयो मुनिपुङ्गवः ॥ ११२
उपसंहृतवान् सत्रं सद्यस्तद्वाक्यगौरवात् ।
ततः प्रीतश्च भगवान् वशिष्ठो मुनिसत्तमः ॥ ११३
सम्प्राप्तश्च तदा सत्रं पुलस्त्यो ब्रह्मणः सुतः ।
वशिष्ठेन तु दत्तार्घ्यः कृतासनपरिग्रहः ॥ ११४
पराशरमुवाचेदं प्रणिपत्य स्थितं मुनिः ।
वैरे महति यद्वाक्याद्गुरोरद्याश्रिता क्षमा ॥ ११५
त्वया तस्मात् समस्तानि भवान् शास्त्राणि वेत्स्यति ।
सन्ततेर्मम न च्छेदः क्रुद्धेनापि यतः कृतः ॥ ११६
त्वया तस्मान्महाभाग ददाम्यन्यं महावरम् ।
पुराणसंहिताकर्त्ता भवान् वत्स भविष्यति ॥ ११७
देवतापरमार्थञ्च यथावद्वेत्स्यते भवान् ।
प्रवृत्तौ वा निवृत्तौ वा कर्म्मणस्तेऽमला मतिः ॥ ११८
मत्प्रसादादसन्दिग्धा तव वत्स भविष्यति ।
ततश्च प्राह भगवान् वशिष्ठो वदतां वरः ॥ ११९
पुलस्त्येन यदुक्तं ते सर्व्वमेतद्भविष्यति ।
अथ तस्य पुलस्त्यस्य वशिष्ठस्य च धीमतः ॥ १२०
प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः ।
षट्प्रकारं समस्तार्थसाधकं ज्ञानसञ्चयम् ॥ १२१
षट्साहस्रमितं सर्व्वं वेदार्थेन च संयुतम् ।
चतुर्थं हि पुराणानां संहितासु सुशोभनम् ॥ १२२
एष वः कथितः सर्व्वो वाशिष्ठानां समासतः ।
प्रभवः शक्तिसूनोश्च प्रभावो मुनिपुङ्गवाः ॥ १२३

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे वाशिष्ठ-
कथनं नाम चतुःषष्टितमोऽध्यायः ॥६४॥

---

## पञ्चषष्टितमोऽध्यायः ।

ऋषय ऊचुः ।

आदित्यवंशं सोमस्य वंशं वंशविदां वर ।
वक्तुमर्हसि चास्माकं संक्षेपाद्रोमहर्षण ॥ १

सूत उवाच ।

अदितिः सुषुवे पुत्त्रमादित्यं कश्यपाद्द्विजाः ।
तस्यादित्यस्य चैवासीद्भार्य्यात्रयमथापरम् ॥ २
संज्ञा राज्ञी प्रभा च्छाया पुत्त्रास्तासां वदामि वः ।
संज्ञा त्वाष्ट्री च सुषुवे सूर्य्यान्मनुमनुत्तमम् ॥ ३
यमञ्च यमुनाञ्चैव राज्ञी रैवतमेव च ।
प्रभा प्रभातमादित्याच्छायां संज्ञाप्यकल्पयत् ॥
छाया च तस्मात् सुषुवे सावर्णिं भास्कराद्द्विजाः ।
ततः शनिञ्च तपतीं विष्टिञ्चैव यथाक्रमम् ॥ ५
छाया स्वपुत्त्रेऽभ्यधिकं स्नेहं चक्रे मनौ तदा ।
पूर्व्वो मनुन चक्षाम यमस्तु क्रोधमूर्च्छितः ॥ ६
सन्ताड़यामास रुषा पादमुद्यम्य दक्षिणम् ।
यमेन ताड़िता सा तु च्छाया वै दुःखिताभवत् ।
छायाशापात् पदञ्चैकं यमस्य क्लिन्नमुत्तमम् ।
पूयशोणितसम्पूर्णं कृमीणां निचयान्वितम् ॥
सोऽपि गोकर्णमाश्रित्य फलकेनानिलाशनः ।
आराधयन्महादेवं यावद्वर्षायुतायुतम् ॥ ८
भवप्रसादादागत्य लोकपालत्वमुत्तमम् ।
पितृणामाधिपत्यन्तु शापमोक्षं तथैव च ॥ १०
लब्धवान् देवदेवस्य प्रभावाच्छूलपाणिनः ।
असहन्ती पुरा भानोस्तेजोमयमनिन्दिता ॥ ११
रूपं त्वाष्ट्री स्वदेहात् तु च्छायाख्यां सा त्वकल्पयत् ।
बड़वारूपमास्थाय तपस्तेपे तु सुव्रता ॥ १२
कालात् प्रयत्नतो ज्ञात्वा च्छायां छायापतिः ॥
बड़वामगमत् संज्ञामश्वरूपेण भास्करः ॥ १३
बड़वा च तदा त्वाष्ट्री संज्ञा तस्माद्दिवाकरात् ।
सुषुवे चाश्विनौ देवौ देवानान्तु भिषग्वरौ ॥
लिखितो भास्करः पश्चात् संज्ञापित्रा महात्मना ।
विष्णोश्चक्रन्तु यद्घोरं मण्डलाद्भास्करस्य तु ॥ १५
निर्म्ममे भगवांस्त्वष्टा प्रधानं दिव्यमायुधम् ।
रुद्रप्रसादाच्च शुभं सुदर्शनमिति स्मृतम् ॥ १६
लब्धवान् भगवांश्चक्रं कृष्णः कालाग्निसन्निभम् ।
मनोस्तु प्रथमस्यासन् नव पुत्त्रास्तु तत्समाः ॥ १७
इक्ष्वाकुर्नभगश्चैव धृष्णुः शर्यातिरेव च ।
नरिष्यन्तश्च वै धीमान् नाभागोऽरिष्ट एव च ॥ १८
करूषश्च पृषध्रश्च नवैते मानवाः स्मृताः ।
इला ज्येष्ठा वरिष्ठा च पुंस्त्वं प्राप च या पुरा ॥
सुद्युम्न इति विख्याता पुंस्त्वं प्राप्ता त्विला पुरा ।
मित्रावरुणयोस्तत्र प्रसादान्मुनिपुङ्गवाः ॥ २०

पुनः शरवणं प्राप्य स्त्रीत्वं प्राप्तो भवाज्ञया।
सुद्युम्नो मानवः श्रीमान् सोमवंशप्रवर्द्धये ॥ २१
इक्ष्वाकोरश्वमेधेन इला किम्पुरुषोऽभवत्।
इला किम्पुरुषत्वे च सुद्युम्न इति चोच्यते ॥ २२
मासमेकं पुमान् वीरः स्त्रीत्वं मासमभूत् पुनः।
इला बुधस्य भवनं सोमपुत्रस्य चाश्रिता ॥ २३
बुधेनान्तरमासाद्य मैथुनाय प्रवर्त्तिता।
सोमपुत्राद्बुधाच्चापि ऐलो जज्ञे पुरूरवाः ॥ २४
सोमवंशाग्रजो धीमान् भवभक्तः प्रतापवान्।
इक्ष्वाकोर्वंशविस्तारं पश्चाद्वक्ष्ये तपोधनाः ॥ २५
पुत्रत्रयमभूत् तस्य सुद्युम्नस्य द्विजोत्तमाः।
उत्कलश्च गयश्चैव विनताश्वस्तथव च ॥ २६
उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमम्।
ग :ा गयस्य चाख्याता पुरी परमशोभना ॥ २७
सुराणां संस्थितिर्यस्यां पितृणाञ्च सदा स्थितिः।
इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ॥ २८
कन्याभावाच्च सुद्युम्नो नैव भागमवाप्तवान्।
वशिष्ठवचनात् त्वासीत् प्रतिष्ठाने महाद्युतिः ॥ २९
प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य महात्मनः।
तत् पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः।
मानवेयो महाभागः स्त्रीपुंसोर्लक्षणान्वितः ॥ ३०
इक्ष्वाकोरभवद्वीरो विकुक्षिर्धर्मवित्तमः ॥ ३१
ज्येष्ठः पुत्रशतस्यासीद्दश पञ्च च तत्सुताः।
अभूज्ज्येष्ठः ककुत्स्थश्च ककुत्स्थात् तु सुयोधनः ॥३२
ततः पृथुर्मुनिश्रेष्ठा विश्वकः पार्थिवस्तथा।
विश्वकस्यार्द्रको धीमान् युवनाश्वस्तु तत्सुतः ॥ ३३
शावस्तिश्च महातेजा वंशकस्तु ततोऽभवत्।
निर्म्मिता येन शावस्ती गौड़देशे द्विजोत्तमाः ॥ ३४
वंशाच्च बृहदश्वोऽभूत् कुवलाश्वस्तु तत्सुतः।
धुन्धुमारत्वमापन्नो धुन्धुं हत्वा महाबलम् ॥ ३५
धुन्धुमारस्य तनयास्त्रयस्त्रैलोक्यविश्रुताः।
दृढ़ाश्वश्चैव चण्डाश्वः कपिलाश्वश्च ते स्मृताः ॥ ३६
दृढ़ाश्वस्य प्रमोदस्तु हर्य्यश्वस्तस्य वै सुतः।
हर्य्यश्वस्य निकुम्भस्तु संहताश्वस्तु तत्सुतः ॥ ३७
कृशाश्वोऽथ रणाश्वश्च संहताश्वात्मजावुभौ।
युवनाश्वो रणाश्वस्य मान्धाता तस्य वै सुतः ॥ ३८
मान्धातुः पुरुकुत्सोऽभूदम्बरीषश्च वीर्य्यवान्।
मुचुकुन्दश्च पुण्यात्मा त्रयस्त्रैलोक्यविश्रुताः ॥ ३९
अम्बरीषस्य दायादो युवनाश्वोऽपरः स्मृतः।
हरितो युवनाश्वस्य हरितास्तु यतः स्मृताः ॥ ४०
एते ह्यङ्गिरसः पक्षे क्षत्रोपेता द्विजातयः।
पुरुकुत्सस्य दायादस्त्रसद्दस्युर्महायशाः ॥ ४१
नर्म्मदायां समुत्पन्नः सम्भूतिस्तस्य चात्मजः।
विष्णुवृद्धः सुतस्तस्य विष्णुवृद्धा यतः स्मृताः ॥ ४२
एते ह्यङ्गिरसः पक्षे क्षत्रोपेताः समाश्रिताः।
सम्भूतिरपरं पुत्रमनरण्यमजीजनत् ॥ ४३
रावणेन हतो योऽसौ त्रैलोक्यविजये द्विजाः।
बृहदश्वोऽनरण्यस्य हर्य्यश्वस्तस्य चात्मजः ॥ ४४
हर्य्यश्वात् तु दृषद्वत्यां जज्ञे वसुमना नृपः।
तस्य पुत्रोऽभवद्राजा त्रिधन्वा भवभावितः ॥ ४५
प्रसादाद्ब्रह्मसूनोर्वै तण्डिनः प्राप्य शिष्यताम्।
अश्वमेधसहस्रस्य फलं प्राप्य तदाज्ञया ॥ ४६
गाणेश्वर्य्यमनुप्राप्तो भवभक्तः प्रतापवान्।
कथञ्चैवाश्वमेधं वै करोमीति विचिन्तयन् ॥ ४७
धनहीनश्च धर्म्मात्मा दृष्टवान् ब्रह्मणः सुतम्।
तण्डिसंज्ञं द्विजं तस्माल्लब्धवान् द्विजसत्तमाः ॥ ४८
नाम्नां सहस्रं रुद्रस्य ब्रह्मणा कथितं पुरा ॥ ४९
तेन नाम्नां सहस्रेण स्तुत्वा तण्डिमहेश्वरम्।
लब्धवान् गाणपत्यञ्च ब्रह्मयोनिर्द्विजोत्तमः ॥ ५०
ततस्तस्मान्नृपो लब्ध्वा तण्डिना कथितं पुरा।
नाम्नां सहस्रं जप्त्वा वै गाणपत्यमवाप्तवान् ॥ ५१

ऋषय ऊचुः।

नाम्नां सहस्रं रुद्रस्य तण्डिना ब्रह्मयोनिना।
कथितं सर्व्ववेदार्थसञ्चयं सूत सुव्रत।
नाम्नां सहस्रं विप्राणां वक्तुमर्हसि शोभनम् ॥ ५२

सूत उवाच।

सर्व्वभूतात्मभूतस्य हरस्यामिततेजसः।
अष्टोत्तरसहस्रन्तु नाम्नां शृणुत सुव्रताः ॥ ५३
यज्जप्त्वा तु मुनिश्रेष्ठा गाणपत्यमवाप्तवान्।
ओं स्थिरः स्थाणुः प्रभुर्भानुः प्रवरो वरदो वरः ॥५४
सर्व्वात्मा सर्व्वविख्यातः सर्व्वः सर्व्वकरो भवः।
जटी दण्डी शिखण्डी च सर्व्वगः सर्व्वभावनः ॥५५
हरिश्च हरिणाक्षश्च सर्व्वभूतहरः स्मृतः।
प्रवृत्तिश्च निवृत्तिश्च शान्तात्मा शाश्वतो ध्रुवः ॥ ५६

श्मशानवासी भगवान् खचरो गोचरोऽर्दनः।
अभिवाद्यो महाकर्म्मा तपस्वी भूतधारणः॥ ५७
उन्मत्तवेशः प्रच्छन्नः सर्व्वलोकः प्रजापतिः।
महारूपो महाकायः शवरूपो महायशाः॥ ५८
महात्मा सर्व्वभूतश्च विरूपो वामनो नरः।
लोकपालोऽन्तर्हितात्मा प्रसादोऽभयदो विभुः॥ ५९
पवित्रश्च महांश्चैव नियतो नियताश्रयः।
स्वयम्भूः सर्व्वकर्म्मा च आदिरादिकरो निधिः॥ ६०
सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः।
चन्द्रः सूर्य्यः शनिः केतुर्ग्रहो ग्रहपतिर्मतः॥ ६१
राजा राज्योदयः कर्त्ता मृगबाणार्पणो घनः।
महातपा दीर्घतपा अदृश्यो धनसाधकः॥ ६२
संवत्सरः कृतो मन्त्रः प्राणायामः परन्तपः।
योगी योगो महाबीजो महारेता महाबलः॥ ६३
सुवर्णरेताः सर्व्वज्ञः सुबीजो वृषवाहनः।
दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः॥ ६४
विश्वरूपः स्वयं श्रेष्ठो बलवीरो बलाग्रणीः।
गणकर्त्ता गणपतिर्दिग्वासाः काम्य एव च॥ ६५
मन्त्रवित् परमो मन्त्रः सर्व्वभावकरो हरः।
कमण्डलुधरो धन्वी बाणहस्तः कपालवान्॥ ६६
शरी शतघ्नी खड्गी च पट्टिशी चायुधी महान्।
अजश्च मृगरूपश्च तेजस्तेजस्करो विधिः॥ ६७
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा।
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च॥ ६८
शृगालरूपः सर्व्वार्थो मुण्डः सर्व्वशुभङ्करः।
सिंहशार्दूलरूपश्च गन्धकारी कपर्द्द्यपि॥ ६९
ऊर्द्ध्वरेतोर्द्ध्वलिङ्गी च ऊर्द्ध्वशायी नभस्तलः।
त्रिजटी चीरवासाश्च रुद्रः सेनापतिर्विभुः॥ ७०
अहोरात्रश्च नक्तश्च तिग्ममन्युः सुवर्च्चसः।
गजहा दैत्यहा कालो लोकधाता गुणाकरः॥ ७१
सिंह-शार्दूलरूपाणामार्द्रचर्म्माम्बरं धरः।
कालयोगी महानादः सर्व्वावासश्चतुष्पथः॥ ७२
निशाचरः प्रेतचारी सर्व्वदर्शी महेश्वरः।
बहुभूतो बहुधनः सर्व्वसारो मृतेश्वरः॥ ७३
नृत्यप्रियो नित्यनृत्यो नर्त्तनः सर्व्वसाधकः।
सकार्म्मुको महाबाहुर्महाघोरो महातपाः॥ ७४
महाशरो महापाशो नित्यो गिरिचरो मतः।

सहस्रहस्तो विजयो व्यवसायो ह्यनिन्दितः।
अमर्षणो मर्षणात्मा यज्ञहा कामनाशनः।
दक्षहा परिचारी च प्रहसो मध्यमस्तथा॥
तेजोऽपहारी बलवान् विदितोऽभ्युदितो बहुः।
गम्भीरघोषो योगात्मा यज्ञहा कामनाशनः॥
गम्भीररोषो गम्भीरो गम्भीरबलवाहनः।
न्यग्रोधरूपो न्यग्रोधो विश्वकर्म्मा च विश्वभुक्॥
तीक्ष्णोपायश्च हर्य्यश्वः सहायः कर्म्मकालवित्।
विष्णुः प्रसादितो यज्ञः समुद्रो बड़वामुखः॥
हुताशनसहायश्च प्रशान्तात्मा हुताशनः।
उग्रतेजा महातेजा जयो विजयकालवित्॥
ज्योतिषामयनं सिद्धिः सन्धिविग्रह एव च।
खड्गी शङ्खी जटी ज्वाली खचरो द्युचरो बली॥
वैणवी पणवी कालः कालकण्ठः कटङ्कटः।
नक्षत्रविग्रहो भावो निभावः सर्व्वतोमुखः॥ ८
विमोचनस्तु शरणो हिरण्यकवचोद्भवः।
मेखलाकृतिरूपश्च जलाचारः स्तुतस्तथा॥ ८
वीणी च पणवी ताली नाली कलिकटुस्तथा।
सर्व्वतूर्य्यनिनादी च सर्व्वव्याप्यपरिग्रहः॥ ८
व्यालरूपी विलावासी गुहावासी तरङ्गवित्।
वृक्षः श्रीमालकर्म्मा च सर्व्वबन्धविमोचनः॥ ८
बन्धनस्तु सुरेन्द्राणां युधि शत्रुविनाशनः।
सखा प्रहासो दुर्व्वापः सर्व्वसाधुनिषेवितः॥ ८
प्रस्कन्दोऽप्यविभावश्च तुल्यो यज्ञविभागवित्।
सर्व्ववासः सर्व्वचारी दुर्व्वासा वासवो मतः॥ ८
हैमो हेमकरो यज्ञः सर्व्वधारी धरोत्तमः।
आकाशो निर्व्विरूपश्च विवासा उरगः खगः॥ ८
भिक्षुश्च भिक्षुरूपी च रौद्ररूपः सुरूपवान्।
वसुरेता सुवर्च्चस्वी वसुवेगो महाबलः॥ ८९
मनोवेगो निशाचारः सर्व्वलोकशुभप्रदः।
सर्व्वावासी त्रयीवासी उपदेशकरोऽधरः॥ ९०
मुनिरात्मा मुनिर्लोकः सभाग्यश्च सहस्रभुक्।
पक्षी च पक्षरूपश्च अतिदीप्तो निशाकरः॥ ९१
समीरो दमनाकारो ह्यर्थो ह्यर्थकरोऽवशः।
वासुदेवश्च देवश्च वामदेवश्च वामनः॥ ९२
सिद्धियोगापहारी च सिद्धः सर्व्वार्थसाधकः।
अक्षुण्णः क्षुण्णरूपश्च वृषणो मृदुरव्ययः॥ ९३

महासेनो विशाखश्च षष्टिभागो गवां पतिः।
वज्रहस्तस्तु विष्कम्भी मूलस्तम्भन एव च ॥ ९४
ऋतुर्ऋतुकरस्तालो मधुर्मधुकरो वरः।
वानस्पत्यो वाजसनो नित्यमाश्रमपूजितः ॥ ९५
ब्रह्मचारी लोकचारी सर्व्वचारी सुचारवित्।
ईशान ईश्वरः कालो निशाचारी ह्यनेकदृक् ॥ ९६
निमित्तस्थो निमित्तञ्च नन्दिर्नन्दिकरो हरः।
नन्दीश्वरः सुनन्दी च नन्दनो विषमर्द्दनः ॥ ९७
भगहारी नियन्ता च कालो लोकपितामहः।
चतुर्म्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ॥ ९८
लिङ्गाध्यक्षः सुराध्यक्षः कालाध्यक्षो युगावहः।
वीजाध्यक्षो वीजकर्त्ता अध्यात्मानुगतो बलः ॥ ९९
इतिहासश्च कल्पश्च दमनो जगदीश्वरः।
दम्भो दम्भकरो दाता वंशो वंशकरः कलिः ॥१००
लोककर्त्ता पशुपतिर्महाकर्त्ता ह्यधोक्षजः।
अक्षरं परमं ब्रह्म बलवाञ्छक्र एव च ॥ १०१
नित्यो ह्यनीशः शुद्धात्मा शुद्धो मानो गतिर्हविः।
प्रासादस्तु बलो दर्पो दर्पणो हव्यमिन्द्रजित् ॥१०२
वेदकारः सूत्रकारो विद्वांश्च परमर्द्दनः।
महामेघनिवासी च महाघोरो वशीकरः ॥ १०३
अग्निज्वालो महाज्वालः परिधूम्रावृतो रविः।
धिषणः शङ्करो नित्यो वर्च्चस्वी धूम्रलोचनः ॥१०४
नीलस्तथाङ्गलुप्तश्च शोभनो नरविग्रहः।
स्वस्ति स्वस्तिस्वभावश्च भोगी भोगकरो लघुः ॥ १०५
उत्सङ्गश्च महाङ्गश्च महागर्भः प्रतापवान्।
कृष्णवर्णः सुवर्णश्च इन्द्रियः सर्व्ववर्णिकः ॥ १०६
महापादो महाहस्तो महाकायो महायशाः।
महामूर्द्धा महामात्रो महामित्रो नगालयः ॥ १०७
महास्कन्धो महाकर्णो महोष्ठश्च महाहनुः।
महानासो महाकण्ठो महाग्रीवः श्मशानवान्॥१०८
महाबलो महातेजा ह्यन्तरात्मा मृगालयः।
लम्बितोष्ठश्च निष्ठश्च महामायः पयोनिधिः ॥ १०९
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः।
महानखो महारोमा महाकेशो महाजटः ॥ ११०
असपत्नः प्रसादश्च प्रत्ययो गीतसाधकः।
प्रस्वेदनोऽस्वेदनश्च आदिकश्च महामुनिः ॥ १११
वृषको वृषकेतुश्च अनलो वायुवाहनः।
मण्डली मेरुवासश्च देववाहन एव च ॥ ११२
अथर्व्वशीर्षः सामास्य ऋक्सहस्रोर्ज्जितेक्षणः।
यजुःपादभुजो गुह्यः प्रकाशौजास्तथैव च ॥ ११३
अमोघार्थप्रसादश्च अन्तर्भाव्यः सुदर्शनः।
उपहारः प्रियः सर्व्वः कनकः काञ्चनस्थितः ॥ ११४
नाभिर्नन्दिकरो हर्म्यः पुष्करः स्थपतिः स्थितः।
सर्व्वशास्त्रो धनश्चाद्यो यज्ञो यज्वा समाहितः ११५
नगो नीलः कविः कालो मकरः कालपूजितः।
सगणो गणकारश्च भूतभावनसारथिः ॥ ११६
भस्मशायी भस्मगोप्ता भस्मभूततनुर्गणः।
आगमश्च विलोपश्च महात्मा सर्व्वपूजितः ॥ ११७
शुक्लः स्त्रीरूपसम्पन्नः शुचिर्भूतनिषेवितः।
आश्रमस्थः कपोतस्थो विश्वकर्म्मा पतिर्विराट् ॥११८
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चितः।
कपिलः कलशः स्थूल आयुधश्चैव रोमशः ॥ ११९
गन्धर्व्वो ह्यदितिस्तार्क्ष्यो ह्यविज्ञेयः सुशारदः।
परश्वधायुधो देवो ह्यर्थकारी सुबान्धवः ॥ १२०
तुम्बवीणो महाकोप ऊर्द्ध्वरेता जलेशयः।
उग्रो वंशकरो वंशो वंशवादी ह्यनिन्दितः ॥ १२१
सर्व्वाङ्गरूपी मायावी सुहृदो ह्यनिलो बलः।
बन्धनो बन्धकर्त्ता च सुबन्धनविमोचनः ॥ १२२
राक्षसघ्नोऽथ कामारिर्महादंष्ट्रो महायुधः।
लम्बितो लम्बितोष्ठश्च लम्बहस्तो वरप्रदः ॥ १२३
बाहुस्त्वनिन्दितः सर्व्वः शङ्करोऽथाप्यकोपनः।
अमरेशो महाघोरो विश्वदेवः सुरारिहा ॥ १२४
अहिर्बुध्नो निर्ऋतिश्च चेकितानो हली तथा।
अजैकपाच्च कापाली शङ्कुमारो महागिरिः ॥ १२५
धन्वन्तरिर्धूमकेतुः सूर्य्यो वैश्रवणस्तथा।
धाता विष्णुश्च शक्रश्च मित्रस्त्वष्टा धरो ध्रुवः ॥ १२६
प्रभासः पर्व्वतो वायुरर्य्यमा सविता रविः।
धृतिश्चैव विधाता च मान्धाता भूतभावनः ॥ १२७
नीरस्तीर्थश्च भीमश्च सर्व्वकर्म्मा गुणोद्वहः।
पद्मगर्भो महागर्भश्चन्द्रवक्त्रो नभोऽनघः ॥ १२८
बलवांश्चोपशान्तश्च पुराणः पुण्यकृत्तमः।
क्रूरकर्त्ता क्रूरवासी तनुरात्मा महौषधः ॥ १२९
सर्व्वाशयः सर्व्वचारी प्राणेशः प्राणिनां पतिः।
देवदेवः सुखोत्सिक्तः सदसत्सर्व्वरत्नवित् ॥ १३०

कैलासस्थो गुहावासी हिमवद्गिरिसंश्रयः ।
कुलहारी कुलाकर्त्ता बहुवित्तो बहुप्रजः ॥ १३१
प्राणेशो बन्धकीवृक्षो नकुलश्चाद्रिकस्तथा ।
ह्रस्वग्रीवो महाजानुरलोलश्च महौषधिः ॥ १३२
सिद्धान्तकारी सिद्धार्थश्छन्दो व्याकरणोद्भवः ।
सिंहनादः सिंहदंष्ट्रः सिंहास्यः सिंहवाहनः ॥ १३३
प्रभावात्मा जगत्काल. कालः कम्पी तरुस्तनुः ।
सारङ्गी भूतचक्राङ्कः केतुमाली सुवेधकः ॥ १३४
भूतालयो भूतपतिरहोरात्रो मलोऽमलः ।
वसुभृत् सर्व्वभूतात्मा निश्चलः सुविदुर्बुधः ॥ १३५
असुहृद् सर्व्वभूतानां निश्चलश्चलविद्बुधः ।
अमोघः संयमो हृष्टो भोजनः प्राणधारणः ॥ १३६
धृतिमान् मतिमांस्त्र्यक्षः सुकृतस्तु युधां पतिः ।
गोपालो गोपतिर्ग्रामो गोचर्म्मवसनो हरः ॥ १३७
हिरण्यबाहुश्च तथा गुहावासः प्रवेशनः ।
महामना महाकामो चित्तकामो जितेन्द्रियः ॥ १३८
गान्धारश्च सुरापश्च तापकर्म्मरतो हितः ।
महाभूतो भूतवृतो ह्यप्सरोगणसेवितः ॥ १३९
महाकेतुर्धरा धाता नैकतानरतः स्वरः ।
अवेदनीय आवेद्यः सर्व्वगश्च सुखावहः ॥ १४०
तारणश्चरणो धाता परिधा परिपूजितः ।
संयोगी वर्द्धनो वृद्धो गणिकोऽथ गणाधिपः ॥ १४१
नित्यो धाता सहायश्च देवासुरपतिः पतिः ।
युक्तश्च युक्तबाहुश्च सुदेवोऽपि सुपर्व्वणः ॥ १४२
आषाढश्च सुषाढश्च स्कन्धदो हरितो हरः ।
वपुरावर्त्तमानोऽन्यो वपुःश्रेष्ठो महावपुः ॥ १४३
शिरोविमर्शनः सर्व्व-लक्ष्यलक्षणभूषितः ।
अक्षयो रथगीतश्च सर्व्व-भोगी महाबलः ॥ १४४
साम्नायोऽथ महाम्नायस्तीर्थदेवो महायशाः ।
निर्ज्जीवो जीवनो मन्त्रो सुभगो बहुकर्क्कशः ॥ १४५
रत्नभूतोऽथ रत्नाङ्गो महार्णवनिपातवित् ।
मूलं विशालो ह्यमृतं व्यक्ताव्यक्तस्तपोनिधिः ॥१४६
आरोहणोऽधिरोहश्च शीलधारी महातपाः ।
महाकण्ठो महायोगी युगो युगकरो हरिः ॥१४७
युगरूपो महारूपो वहनो गहनो नगः ।
न्यायो निर्व्वापणोऽपादः पण्डितो ह्यचलोपमः ॥१४८
बहुमालो महामालः शिपिविष्टः सुलोचनः ।

विस्तारो लवणः कूपः कुसुमाङ्गः फलोदयः ॥
ऋषभो वृषभो भङ्गो मणिबिल्वजटाधरः ।
इन्दुर्विसर्गः सुमुखः शूरः सर्व्वायुधः सहः ॥ १५
निवेदनः सुधाजातः स्वर्गद्वारो महाधनुः ।
गिरावासो विसर्गश्च सर्व्वलक्षणलक्षवित् ॥ १५
गन्धमाली च भगवाननन्तः सर्व्वलक्षणः ।
सन्तानो बहुलो बाहुः सकलः सर्व्वपावनः ॥ १
करस्थाली कपाली च ऊर्द्ध्वसंहननो युवा ।
यन्त्रतन्त्रसुविख्यातो लोकः सर्व्वाश्रयो मृदुः ॥
मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्व्वण
वार्य्यक्षः ककुभो वज्री दीप्ततेजाः सहस्रपात् ॥
सहस्रमूर्द्धा देवेन्द्रः सर्व्वदेवमयो गुरुः ।
सहस्रबाहुः सर्व्वाङ्गः शरण्यः सर्व्वलोककृत् ॥
पवित्रं त्रिमधुमन्त्रः कनिष्ठः कृष्णपिङ्गलः ।
ब्रह्मदण्डविनिर्म्माता शतघ्नः शतपाशधृक् ॥ १५
कला काष्ठा लवो मात्रा मुहूर्त्तोऽहः क्षपा क्षण
विश्वक्षेत्रप्रदो वीजं लिङ्गमाद्यस्तु निर्म्मुखः ॥
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ।
स्वर्गद्वारं मोक्षद्वारं प्रजाद्वारं त्रिविष्टपः ॥ १५८
निर्व्वाणं ह्लादयश्चैव ब्रह्मलोकः परा गतिः ।
देवासुरविनिर्म्माता देवासुरपरायणः ॥ १५९
देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुरगणाश्रयः ॥ १६
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवाधिदेवो देवर्षिर्देवासुरवरप्रदः ॥ १६१
देवासुरेश्वरो विष्णुर्देवासुरमहेश्वरः ।
सर्व्वदेवमयोऽचिन्त्यो देवतात्मा स्वयम्भवः ॥ १६
उद्गतस्त्रिक्रमो वैद्यो वरदो वरजोऽम्बरः ।
इज्यो हस्ती तथा व्याघ्रो देवसिंहो महर्षभः ॥१६
विबुधाग्र्यः सुरः श्रेष्ठः स्वर्गदेवस्तथोत्तमः ।
संयुक्तः शोभनो वक्ता आशानां प्रभवोऽव्ययः ॥१६
गुरुः कान्तो निजः सर्गः पवित्रः सर्व्ववाहनः ।
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ॥ १६
अभिरामः सुशरणो निरामः सर्व्वसाधनः ।
ललाटाक्षो विश्वदेहो हरिणो ब्रह्मवर्चसः ॥१६६
स्थावराणां पतिश्चैव नियतेन्द्रियवर्त्तनः ।
सिद्धार्थः सर्व्वभूतार्थोऽचिन्त्यः सत्यः शुचिव्रतः ॥१६

व्रताधिपः परंब्रह्म मुक्तानां परमा गतिः ।
विमुक्तो मुक्तकेशश्च श्रीमान् श्रीवर्द्धनो जगत् ॥१६८
यथा प्रधानं भगवानिति भक्त्या स्तुतो मया ।
भक्तिमेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ॥ १६९
ततो ह्यनुज्ञां प्राप्यैवं स्तुतो भक्तिमतां गतिः ।
तस्माल्लब्ध्वा स्तवं शम्भोर्नृपस्त्रैलोक्यविश्रुतः ॥ १७०
अश्वमेधसहस्रस्य फलं प्राप्य महायशाः ।
गणाधिपत्यं सम्प्राप्तस्तण्डिनस्तेजसा प्रभोः ॥१७१
यः पठेच्छृणुयाद्वापि श्रावयेद्ब्राह्मणानपि ।
अश्वमेधसहस्रस्य फलं प्राप्नोति वै द्विजाः ॥ १७२
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।
शरणागतघाती च मित्रविश्वासघातकः ॥ १७३
मातृहा पितृहा चैव वीरहा भ्रूणहा तथा ।
संवत्सरं क्रमाज्जप्त्वा त्रिसन्ध्यं शङ्कराश्रमे ॥ १७४
देवमिष्ट्वा त्रिसन्ध्यञ्च सर्व्वपापैः प्रमुच्यते ॥ १७५

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे रुद्रसहस्रनामकथनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः ।

### सूत उवाच ।

त्रिधन्वा देवदेवस्य प्रसादात् तण्डिनस्तथा ।
अश्वमेधसहस्रस्य फलं प्राप्य प्रयत्नतः ॥ १
गाणपत्यं दृढं प्राप्तः सर्व्वदेवनमस्कृतः ।
आसीत् त्रिधन्वनश्चापि विद्वांस्त्रय्यारुणो नृपः ॥ २
तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः ।
तेन भार्या विदर्भस्य हृता हृत्वामितौजसम् ॥ ३
पाणिग्रहणमन्त्रेषु निष्ठामप्रापितेष्विह ।
तेनाधर्म्मेण संयुक्तं राजा त्रय्यारुणोऽत्यजत् ॥ ४
पितरं सोऽब्रवीत् त्यक्तः क्व गच्छामीति वै द्विजाः ।
पिता त्वेनमथोवाच श्वपाकैः सह वर्त्तय ॥ ५
इत्युक्तः स विचक्राम नगराद्वचनात् पितुः ।
स तु सत्यव्रतो धीमान् श्वपाकावसथान्तिके ॥ ६
पित्रा त्यक्तोऽवसद्वीरः पिता चास्य वनं ययौ ।
सर्व्वलोकेषु विख्यातस्त्रिशङ्कुरिति वीर्य्यवान् ॥ ७
वशिष्ठकोपात् पुण्यात्मा राजा सत्यव्रतः पुरा ।
विश्वामित्रो महातेजा वरं दत्त्वा त्रिशङ्कवे ॥ ८
राज्येऽभिषिच्य तं पित्र्ये याजयामास तं मुनिः ।
मिषतां देवतानाञ्च वशिष्ठस्य च कौशिकः ॥ ९
सशरीरं तदा तं वै दिवमारोपयद्विभुः ।
तस्य सत्यव्रता नाम भार्या कैकयवंशजा ॥ १०
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ।
हरिश्चन्द्रस्य च सुतो रोहितो नाम वीर्य्यवान् ॥ ११
हरितो रोहितस्याथ धुन्धुर्हारित उच्यते ।
विजयश्च सुतेजाश्च धुन्धुपुत्रौ बभूवतुः ॥ १२
जेता क्षत्रस्य सर्व्वत्र विजयस्तेन स स्मृतः ।
रुचकस्तस्य तनयो राजा परमधार्म्मिकः ॥ १३
रुचकस्य वृकः पुत्रस्तस्माद्बाहुश्च जज्ञिवान् ।
सगरस्तस्य पुत्रोऽभूद्राजा परमधार्म्मिकः ॥ १४
द्वे भार्य्ये सगरस्यापि प्रभा-भानुमती तथा ।
ताभ्यामाराधितः पूर्व्वमौर्व्वोऽग्निः पुत्रकाम्यया॥१५
और्व्वस्तुष्टस्तयोः प्रादाद्यथेष्टं वरमुत्तमम् ।
एका षष्टिसहस्राणि सुतमेकं परा तथा ॥ १६
अगृह्णाद्वंशकर्त्तारं प्रभाऽगृह्णात् सुतान् बहून् ।
एकं भानुमतिः पुत्रमगृह्णादसमञ्जसम् ॥ १७
ततः षष्टिसहस्राणि सुषुवे सा तु वै प्रभा ।
खनन्तः पृथिवीं दग्धा विष्णुहुङ्कारमार्गणैः ॥ १८
असमञ्जस्य तनयः सोंऽशुमान् नाम विश्रुतः ।
तस्य पुत्रो दिलीपस्तु दिलीपात् तु भगीरथः ॥१९
येन भागीरथी गङ्गा तपः कृत्वावतारिता ।
भगीरथसुतश्चापि श्रुतो नाम बभूव ह ॥ २०
नाभागस्तस्य दायादो भवभक्तः प्रतापवान् ।
अम्बरीषः सुतस्तस्य सिन्धुद्वीपस्ततोऽभवत् ॥ २१
नाभागिनाम्बरीषेण भुजाभ्यां परिपालिता ।
बभूव वसुधात्यर्थं तापत्रयविवर्ज्जिता ॥ २२
अयुतायुः सुतस्तस्य सिन्धुद्वीपस्य वीर्य्यवान् ।
पुत्रोऽयुतायुषो धीमानृतुपर्णो महायशाः ॥ २३
दिव्याक्षहृदयज्ञो वै राजा नलसखो बली ।
नलौ द्वाविव विख्यातौ पुराणेषु दृढव्रतौ ॥ २४
वीरसेनसुतश्चान्यो यश्चेक्ष्वाकुकुलोद्भवः ।
ऋतुपर्णस्य पुत्रोऽभूत् सार्व्वभौमः प्रजेश्वरः ॥ २५
सुदासस्तस्य तनयो राजा लिन्द्रसमोऽभवत् ।
सुदासस्य सुतः प्रोक्तः सौदासो नाम पार्थिवः ॥२६

ख्यातः कल्माषपादो वै नाम्ना मित्रसहश्च सः ।
वशिष्ठस्तु महातेजाः क्षेत्रे कल्माषपादके ॥ २७
अश्मकं जनयामास इक्ष्वाकुकुलवर्द्धनम् ।
अश्मकस्योत्तरायान्तु मूलकस्तु सुतोऽभवत् ॥ २८
स हि रामभयाद्राजा स्त्रीभिः परिवृतो वने ।
बिभर्त्ति त्राणमिच्छन् वै नारीकवचमुत्तमम् ॥ २९
मूलकस्यापि धर्म्मात्मा राजा शतरथः सुतः ।
तस्माच्छतरथाज्जज्ञे राजा ऐलविलो बली ॥ ३०
आसीत् ऐलविलिः श्रीमान् वृद्धशर्म्मा प्रतापवान् ।
पुत्रो विश्वसहस्तस्य पितृकन्या व्यजीजनत् ॥ ३१
दिलीपस्तस्य पुत्रोऽभूत् खट्वाङ्ग इति विश्रुतः ।
येन स्वर्गादिहागत्य मुहूर्त्तं प्राप्य जीवितम् ॥ ३२
त्रयोऽमयस्त्रयो लोका बुद्ध्या सत्येन वै जिताः ।
दीर्घबाहुः सुतस्तस्य रघुस्तस्मादजायत ॥ ३३
अजः पुत्रो रघोश्चापि तस्माज्जज्ञे च वीर्य्यवान् ।
राजा दशरथस्तस्माच्छ्रीमानिक्ष्वाकुवंशकृत् ॥ ३४
रामो दशरथाद्वीरो धर्म्मज्ञो लोकविश्रुतः ।
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ॥ ३५
तेषां श्रेष्ठो महातेजा रामः परमवीर्य्यवान् ।
रावणं समरे हत्वा यज्ञैरिष्ट्वा च धर्म्मवित् ॥ ३६
दशवर्षसहस्राणि रामो राज्यं चकार सः ।
रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः ॥ ३७
लवश्च सुमहाभागः सत्त्ववानभवत् सुधीः ।
अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः ॥ ३८
नलस्तु निषधाज्जातो नभस्तस्मादजायत ।
नभसः पुण्डरीकाख्यः क्षेमधन्वा ततः स्मृतः ॥ ३९
तस्य पुत्रोऽभवद्वीरो देवानीकः प्रतापवान् ।
अहीनरः सुतस्तस्य सहस्राश्वस्ततः परः ॥ ४०
शुभश्चन्द्रावलोकश्च तारापीड़स्ततोऽभवत् ।
तस्यात्मजश्चन्द्रगिरिर्भानुचन्द्रस्ततोऽभवत् ॥ ४१
श्रुतायुरभवत् तस्माद्बृहद्बल इति स्मृतः ।
भारतीयो महातेजा सौभद्रेण निपातितः ॥ ४२
एते इक्ष्वाकुदायादा राजानः प्रायशः स्मृताः ।
वंशे प्रधाना एतस्मिन् प्राधान्येन प्रकीर्त्तिताः ॥ ४३
सर्व्वे पाशुपतं ज्ञानमधीत्य परमेश्वरम् ।
समभ्यर्च्य यथाज्ञानमिष्ट्वा यज्ञैर्यथाविधि ॥ ४४
दिवं गता महात्मानः केचित्कृतात्मयोगिनः ।

नृगो ब्राह्मणशापेन कृकलासत्वमागतः ॥ ४
धृष्टश्च धृष्टकेतुश्च यमबालश्च वीर्य्यवान् ।
रणधृष्टश्च ते पुत्रास्त्रयः परमधार्म्मिकाः ॥ ४
आनर्त्तो नाम शर्यातिः सुकन्या नाम दारिका।
आनर्त्तस्याभवत् पुत्रो रोचमानः प्रतापवान् ॥
रोचमानस्य रेवोऽभूद्रेवाद्रैवत एव च ।
ककुद्मी चापरो ज्येष्ठ-पुत्रः पुत्रशतस्य तु ॥ ४
रेवती यस्य सा कन्या पत्नी रामस्य विश्रुता।
नरिष्यन्तस्य पुत्रोऽभूज्जितात्मा तु महाबली।
नाभागादम्बरीषस्तु विष्णुभक्तः प्रतापवान्।
ऋतस्तस्य सुतः श्रीमान् सर्व्वधर्म्मविदां वरः।
कृतस्तस्य सुधर्म्माऽभूत् पृषितो नाम विश्रुतः।
करूषस्य तु कारूषाः सर्व्वे प्रख्यातकीर्त्तयः ॥
पृषतो हिंसयित्वा गां गुरोः शाप सुकल्मषम्।
शापाच्छूद्रत्वमापन्नश्च्यवनस्येति विश्रुतः ॥ ५२
दिष्टपुत्रस्तु नाभागस्तस्मादपि भलन्दनः।
भलन्दनस्य विक्रान्तो राजासीदजवाहनः ॥ ५
एते समासतः प्रोक्ता मनुपुत्रा महाभुजाः।
इक्ष्वाकोः पुत्रपौत्राद्या ऐलस्याथ वदामि वः।

सूत उवाच ।

ऐलः पुरूरवा नाम रुद्रभक्तः प्रतापवान्।
चक्रे त्वकण्टकं राज्यं देशे पुण्यतमे द्विजाः ॥ ५
उत्तरे यमुनातीरे प्रयागे मुनिसेविते ।
प्रतिष्ठानाधिपः श्रीमान् प्रतिष्ठाने प्रतिष्ठितः ॥ ५
तस्य पुत्राः सप्त भवन् सर्व्वे विततेजसः ।
गन्धर्व्वलोकविदिता भवभक्ता महाबलाः ॥ ५६
आयुर्मायुरमायुश्च विश्वायुश्चैव वीर्य्यवान् ।
श्रुतायुश्च शतायुश्च दिव्याश्चैवोर्व्वशीसुताः ॥ ५८
आयुषस्तनया वीराः पञ्चैवासन् महौजसः ।
स्वर्भानुतनयायां ते प्रभायां जज्ञिरे नृपाः ॥ ५
नहुषः प्रथमस्तेषां धर्म्मज्ञो लोकविश्रुतः ।
नहुषस्य तु दायादाः षड़िन्द्रोपमतेजसः ॥ ६
उत्पन्नाः पितृकन्यायां विरजायां महौजसः ।
यतिर्ययातिः संयातिरायातिः पञ्चमोऽन्धकः ॥ ६
वियातिश्चेति षड़िमे सर्व्वे प्रख्यातकीर्त्तयः ।
यतिर्ज्येष्ठश्च तेषां वै ययातिस्तु ततोऽवरः ॥ ६
ज्येष्ठस्तु यतिर्मोक्षार्थी ब्रह्मभूतोऽभवत् प्रभुः ।

तेषां ययातिः पञ्चानां महाबलपराक्रमः ॥ ६३
देवयानीमुशनसः सुतां भार्य्यामवाप सः ।
शर्म्मिष्ठामासुरीञ्चैव तनयां वृषपर्व्वणः ॥ ६४
यदुञ्च तुर्व्वसुञ्चैव देवयानी व्यजायत ।
तावुभौ शुभकर्म्माणौ स्तुतौ विद्याविशारदौ ॥ ६५
द्रुह्युञ्चानुञ्च पूरुञ्च शर्म्मिष्ठा वाषपर्व्वणी ।
ययातये रथं तस्मै ददौ शुक्रः प्रतापवान् ॥ ६६
तोषितस्तेन विप्रेन्द्रः प्रीतः परमभास्वरम् ।
सुसङ्गं काञ्चनं दिव्यमक्षये च महेषुधी ॥ ६७
युक्तं मनोजवैरश्वैर्येन कन्यां समुद्वहत् ।
स तेन रथमुख्येन षण्मासैनाजयन्महीम् ॥ ६८
ययातिर्युधि दुर्द्धर्षो देव-दानव-मानुषैः ।
भवभक्तास्तु पुण्यात्मा धर्म्मनिष्ठः समञ्जसः ॥ ६९
यज्ञयाजी जितक्रोधः सर्व्वभूतानुकम्पनः ।
कौरवाणाञ्च सर्व्वेषां स भवद्रथ उत्तमः ॥ ७०
यावन्नरेन्द्रप्रवरः कौरवो जनमेजयः ।
पुरोर्वंशस्य राज्ञस्तु राज्ञः पारिक्षितस्य तु ॥ ७१
जगाम स रथो नाशं शापाद्गर्गस्य धीमतः ।
गर्गस्य हि सुतं बालं स राजा जनमेजयः ॥ ७२
अक्रूरं हिंसयामास ब्रह्महत्यामवाप सः ।
स लोहगन्धी राजर्षिः परिधावन्नितस्ततः ॥ ७३
पौरजानपदैस्त्यक्तो न लेभे शर्म्म कर्हिचित् ।
ततः स दुःखसन्तप्तो न लेभे संविदं क्वचित् ॥ ७४
जगाम शौनकम्हर्षिं शरण्यं व्यथितस्तदा ।
इन्द्रोतिर्नाम विख्यातो योऽसौ मुनिरुदारधीः ॥ ७५
याजयामास चेन्द्रोतिस्तं नृपं जनमेजयम् ।
अश्वमेधेन राजानं पावनार्थं द्विजोत्तमाः ॥ ७६
स लोहगन्धान्निर्म्मुक्त एनसा च महायशाः ।
यज्ञस्यावभृथे मध्ये यातो दिव्यो रथः शुभः ॥ ७७
तस्मादंशात् परिभ्रष्टो वसोश्चेदिपतेः पुनः ।
दत्तः शक्रेण तुष्टेन लेभे तस्माद्वृहद्रथः ॥ ७८
ततो हत्वा जरासन्धं भीमस्तं रथमुत्तमम् ।
प्रददौ वासुदेवाय प्रीत्या कौरवनन्दनः ॥ ७९
अभ्यषिञ्चत् पूरुं पुत्त्रं ययातिर्नाहुषः प्रभुः ।
कृतोपकारस्तेनैव पूरुणा द्विजसत्तमाः ॥ ८०
अभिषेक्तुकामञ्च नृपं पूरुं पुत्त्रं कनीयसम् ।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥ ८१
कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ।
ज्येष्ठं यदुमतिक्रम्य कनीयान् राज्यमर्हति ॥ ८२
एते सम्बोधयामस्त्वां धर्म्मञ्च अनुपालय ॥ ८३

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे षट्-
षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः ।

ययातिरुवाच ।

ब्राह्मणप्रमुखा वर्णाः सर्व्वे शृण्वन्तु मे वचः ।
ज्येष्ठं प्रति यथा राज्यं न देयं मे कथञ्चन ॥ १
मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।
प्रतिकूलमतिश्चैव न स पुत्त्रः सतां मतः ॥ २
मातापित्रोर्वचनकृत् सद्भिः पुत्त्रः प्रशस्यते ।
स पुत्त्रः पुत्त्रवद्यस्तु वर्त्तते मातृपितृषु ॥ ३
यदुनाहमवज्ञातस्तथा तुर्व्वसुनापि च ।
द्रुह्युणा चानुना चैवमप्यवज्ञा कृता भृशम् ॥ ४
पूरुणा च कृतं वाक्यं मानितश्च विशेषतः ।
कनीयान् मम दायादो जरा येन धृता मम ॥ ५
शुक्रेण मे समादिष्टा देवयान्याः कृते जरा ।
प्रार्थितेन पुनस्तेन जरा सञ्चारिणी कृता ॥ ६
शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ।
पुत्त्रो यस्त्वानुवर्त्तेत स ते राज्यधरस्त्विति ।
भवन्तोऽप्यनुजानन्तु पूरू राज्येऽभिषिच्यते ॥ ७

प्रकृतय ऊचुः ।

यः पुत्त्रो गुणसम्पन्नो मातापित्त्रोर्हितः सदा ।
सर्व्वमर्हति कल्याणं कनीयानपि स प्रभुः ॥ ८
अर्हः पूरुरिदं राज्यं यः सुतो वाक्यकृत् तव ।
वरदानेन शुक्रस्य न शक्यं कर्त्तुमन्यथा ॥ ९

सूत उवाच ।

एवं जानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा ।
अभिषिच्य ततो राज्ये पूरुं स सुतमात्मनः ॥ १०
दिशि दक्षिणपूर्व्वस्यां तुर्व्वसुं पुत्त्रमादिशत् ।
दक्षिणायामथो राजा यदुं ज्येष्ठं न्ययोजयत् ॥ ११
प्रतीच्यामुत्तरस्यान्तु द्रुह्युं चानुञ्च तावुभौ ।
सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम् ॥ १२
व्यजभजच्च त्रिधा राज्यं पुत्त्रेभ्यो नाहुषस्तदा ।

पुत्त्रसंक्रामितश्रीस्तु हर्षनिर्भरमानसः ॥ १३
प्रीतिमानभवद्राजा भारमावेश्य बन्धुषु ।
अत्र गाथा महाराज्ञा पुरा गीता ययातिना ॥१४
याभिः प्रत्याहरेत् कामान् सर्व्वतोऽङ्गानि कूर्म्मवत् ।
ताभिरेव नरः श्रीमान् नान्यथा कर्म्मकोटिकृत् ॥१५
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ १६
यत् पृथिव्यां व्रीहि-यवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत् सर्व्वमिति मत्वा शमं व्रजेत् ॥ १७
यदा न कुरुते भावं सर्व्वभूतेषु पापकम् ।
कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ १८
यदा परान्न बिभेति परे चास्मान्न बिभ्यति ।
यदा न निन्देन्न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ १९
या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः ।
योऽसौ प्राणान्तिको रोगस्तांत्तृष्णांत्यजतः सुखम् २०
जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः ।
चक्षुःश्रोत्रे च जीर्य्यते तृष्णैका निरुपद्रवा ॥ २१
जीर्य्यन्ति देहिनः सर्व्वे स्वभावादेव नान्यथा ।
जीविताशा धनाशा च जीर्य्यतोऽपि न जीर्य्यते ॥ २२
यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैतत् कलां नार्हति षोड़शीम् ॥२३
एवमुक्त्वा स राजर्षिः सदारः प्राविशद्वनम् ।
भृगुतुङ्गे तपस्तप्त्वा तत्रैव च महायशाः ॥ २४
साधयित्वा त्वनशनं सदारः स्वर्गमाप्तवान् ।
तस्य वंशास्तु पञ्चैते पुण्या देवर्षिसत्कृताः ॥ २५
यैर्व्याप्ता पृथिवी कृत्स्ना सूर्य्यस्येव मरीचिभिः ।
धनी प्रजावानायुष्मान् कीर्त्तिमांश्च भवेन्नरः ॥ २६
ययातिचरितं पुण्यं पठन् शृण्वंश्च बुद्धिमान् ।
सर्व्वपापविनिर्म्मुक्तः शिवलोके महीयते ॥ २७

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः ।

सूत उवाच ।
यदोर्वंशं प्रवक्ष्यामि ज्येष्ठस्योत्तमतेजसः ।
संक्षेपेणानुपूर्व्याच्च गदतो मे निबोधत ॥ १
यदोः पुत्त्रा बभूवुर्हि पञ्च देवसुतोपमाः ।
सहस्रजित् सुतो ज्येष्ठो क्रोष्टुर्नीलो जको लघुः ।
सहस्रजित्सुतस्तद्वच्छतजिन्नाम पार्थिवः ।
सुताः शतजितः ख्यातास्त्रयः परमकीर्त्तयः ॥ ३
हैहयश्च हयश्चैव राजा वेणुहयश्च यः ।
हैहयस्य तु दायादो धर्म्म इत्यभिविश्रुतः ॥ ४
तस्य पुत्त्रोऽभवद्विप्रा धर्म्मनेत्र इति श्रुतः ।
धर्म्मनेत्रस्य कीर्त्तिस्तु सञ्जयस्तस्य चात्मजः ॥ ५
सञ्जयस्य तु दायादो महिष्मान् नाम धार्म्मिकः ।
आसीन्महिष्मतः पुत्त्रो भद्रश्रेण्यः प्रतापवान् ॥ ६
भद्रश्रेण्यस्य दायादो दुर्द्दमो नाम पार्थिवः ।
दुर्द्दमस्य सुतो धीमान् धनको नाम विश्रुतः ॥ ७
धनकस्य तु दायादाश्चत्वारो लोकसम्मताः ।
कृतवीर्य्यः कृताग्निश्च कृतवर्म्मा तथैव च ॥ ८
कृतौजाश्च चतुर्थोऽभूत् कार्त्तवीर्य्यस्ततोऽर्ज्जुनः ।
जज्ञे बाहुसहस्रेण सप्तद्वीपेश्वरोत्तमः ॥ ९
तस्य रामस्तदा त्वासीन्मृत्युर्नारायणात्मकः ।
तस्य पुत्त्रशतान्यासीत् पञ्च तत्र महारथाः ॥ १०
कृतास्त्रा बलिनः शूरा धर्म्मात्मानो मनस्विनः ।
शूरश्च शूरसेनश्च धृष्टः कृष्णस्तथैव च ॥ ११
जयध्वजश्च राजासीदावन्तीनां विशां पतिः ।
जयध्वजस्य पुत्त्रोऽभूत् तालजङ्घो महाबलः ॥ १२
शतं पुत्त्रास्तु तस्येह तालजङ्घाः प्रकीर्त्तिताः ।
तेषां ज्येष्ठो महावीर्य्यो वीतिहोत्रोऽभवन्नृपः ॥ १३
वृषप्रभृतयश्चान्ये तत्सुताः पुण्यकर्म्मणः ।
वृषो वंशकरस्तेषां तस्य पुत्त्रोऽभवन्मधुः ॥ १४
मधोः पुत्त्रशतञ्चासीद्वृष्णिस्तस्य तु वंशभाक् ।
वृष्णेस्तु वृष्णयः सर्व्वे मधोर्वै माधवाः स्मृताः ।
यादवा यदुवंशेन निरुच्यन्ते तु हैहयाः ॥ १५
तेषां पञ्च गणा ह्येते हैहयानां महात्मनाम् ॥ १६
वीतिहोत्राश्च हर्य्याता भोजाश्चावन्तयस्तथा ।
शूरसेनास्तु विख्यातास्तालजङ्घास्तथैव च ॥ १७
शूरश्च शूरसेनश्च वृषः कृष्णस्तथैव च ।
जयध्वजः पञ्चमस्तु विख्याता हैहयोत्तमाः ॥ १८
शूरश्च शूरवीरश्च शूरसेनस्य चानघाः ।
शूरसेना इति ख्याता देशास्तेषां महात्मनाम् ॥ १९
वीतिहोत्रसुतश्चापि विश्रुतो नर्त्त इत्युत ।

दुर्जयः कृष्णपुत्रस्तु बभूवामित्रकर्षणः ॥ २०
क्रोष्टुश्च शृणु राजर्षेर्वंशमुत्तमपौरुषम्।
यस्यान्वये तु सम्भूतो विष्णुर्वृष्णिकुलोद्वहः ॥ २१
क्रोष्टोरेकोऽभवत् पुत्रो वृजिनीवान् महायशाः।
तस्य पुत्रोऽभवत् स्वाती कुशङ्कुस्तत्सुतोऽभवत् ॥ २२
अथ प्रसूतिमिच्छन् वै कुशङ्कुः सुमहाबलः।
महाक्रतुभिरीजेऽसौ विविधैराप्तदक्षिणैः ॥ २३
जज्ञे चित्ररथस्तस्य पुत्रः कर्म्मभिरन्वितः।
अथ चैत्ररथिर्वीरो यज्वा विपुलदक्षिणः ॥ २४
शशबिन्दुस्तु वै राजा अन्वयाद्व्रतमुत्तमम्।
चक्रवर्त्ती महासत्त्वो महावीर्य्यो बहुप्रजाः ॥ २५
शशबिन्दोस्तु पुत्राणां सहस्राणामभूच्छतम्।
शंसन्ति तस्य पुत्राणामनन्तकमनुत्तमम् ॥ २६
अनन्तकात् सुतो यज्ञो यज्ञस्य तनयो धृतिः।
उशनास्तस्य तनयः सम्प्राप्य तु महीमिमाम् ॥ २७
आजहाराश्वमेधानां शतमुत्तमधार्म्मिकः।
स्मृतश्चौशनसः पुत्रः सितेषुर्नाम पार्थिवः ॥ २८
मरुतस्तस्य तनयो राजर्षिर्वंशवर्द्धनः।
वीरः कम्बलबर्हिस्तु मरुतस्त्स्यात्मजः स्मृतः ॥ २९
पुत्रस्तु रुक्मकवचो विद्वान् कम्बलबर्हिषः।
निहत्य रुक्मकवचो वीरान् कवचिनो रणे ॥ ३०
धन्विनो निशितैर्बाणैरवाप श्रियमुत्तमाम्।
अश्वमेधे तु धर्म्मात्मा ऋत्विग्भ्यः पृथिवीं ददौ ॥ ३१
जज्ञे तु रुक्मकवचात् परावृत् परवीरहा।
जज्ञिरे पञ्च पुत्रास्तु महासत्त्वाः परावृतः ॥ ३२
रुक्मेषुः पृथुरुक्मश्च ज्यामघः परिघो हरिः।
परिघञ्च हरिञ्चैव विदेहेषु पिता न्यसत् ॥ ३३
रुक्मेषुरभवद्राजा पृथुरुक्मस्तदाश्रयात्।
तस्तु प्रव्राजितो राजा ज्यामघोऽवसदाश्रमे ॥ ३४
प्रशान्तः स वनस्थोऽपि ब्राह्मणैरेव बोधितः।
जगाम धनुरादाय देशमन्यं ध्वजी रथी ॥ ३५
नर्म्मदातीरमेकाकी केवलं भार्य्यया युतः।
ऋक्षवन्तं गिरिं गत्वा त्यक्तमन्यैरुवास सः ॥ ३६
ज्यामघस्याभवद्भार्य्या शैब्या शीलवती सती।
सा चैव तपसोग्रेण शैब्या वै सम्प्रसूयत ॥ ३७
सुतं विदर्भं सुभगा वयःपरिणता सती।
राजपुत्र्यसुतायान्तु विद्वांसौ क्रथकैशिकौ ॥ ३८
पुत्रौ विदर्भराजस्य शूरौ रणविशारदौ।
रोमपादस्तृतीयश्च बभ्रुस्तस्यात्मजः स्मृतः ॥ ३९
सुधृतिस्तनयस्तस्य विद्वान् परमधार्म्मिकः।
कौशिकस्तनयस्तस्मात् तस्माच्चैद्यान्वयः स्मृतः ॥ ४०
क्रथो विदर्भस्य सुतः कुन्तिस्तस्यात्मजोऽभवत्।
कुन्तेर्वृतस्ततो जज्ञे रणधृष्टः प्रतापवान् ॥ ४१
रणधृष्टस्य च सुतो निधृतिः परवीरहा।
दशार्हो नैधृतो नाम्ना महारिगणसूदनः ॥ ४२
दशार्हस्य सुतो व्याप्तो जीमूत इति तत्सुतः।
जीमूतपुत्रो विकृतिस्तस्य भीमरथः सुतः ॥ ४३
अथ भीमरथस्यासीत् पुत्रो नवरथः किल।
दानधर्म्मरतो नित्यं सत्यशीलपरायणः ॥ ४४
तस्य चासीद्दृढरथः शकुनिस्तस्य चात्मजः।
तस्मात् करम्भः सम्भूतो देवरातोऽभवत् ततः ॥ ४५
देवरातादभूद्राजा देवरातिर्महायशाः।
देवगर्भोपमो जज्ञे यो देवक्षत्रनामकः ॥ ४६
देवक्षत्रसुतः श्रीमान् मधुर्नाम महायशाः।
मधूनां वंशकृद्राजा मधोस्तु कुरुवंशकः ॥ ४७
कुरुवंशादनुस्तस्मात् पुरुत्वान् पुरुषोत्तमः।
अंशुर्जज्ञे च वैदर्भ्यां भद्रवत्यां पुरुत्वतः ॥ ४८
ऐक्ष्वाकीमवहच्चांशुः सत्त्वस्तस्मादजायत।
सत्त्वात् सर्व्वगुणोपेतः सात्वतः कुलवर्द्धनः ॥ ४९
ज्यामघस्य मया प्रोक्ता सृष्टिर्वै विस्तरेण वः।
यः पठेच्छृणुयाद्वापि निःसृष्टिं ज्यामघस्य तु ॥ ५०
प्रजीवत्येति वै स्वर्गं राज्यं सौख्यञ्च विन्दति ॥ ५१

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे वंशानुवर्णनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

## एकोनसप्ततितमोऽध्यायः।

### सूत उवाच।

सात्वतः सत्यसम्पन्नः प्रजज्ञे चतुरः सुतान्।
भजनं भ्राजमानञ्च दिव्यं देवावृधं नृपम् ॥ १
अन्धकञ्च महाभागं वृष्णिञ्च यदुनन्दनम्।
तेषां निसर्गांश्चतुरः शृणुध्वं विस्तरेण वै ॥ २
सृञ्जय्यां भजनाच्चैव भ्राजमानाद्विजज्ञिरे।
अयुतायुः शतायुश्च बलवान् हर्षकृत् स्मृतः ॥ ३

तेषां देवावृधो राजा चचार परमं तपः।
पुत्त्रः सर्व्वगुणोपेतो मम भूयादिति स्मरन् ॥ ४
तस्य बभ्रुरिति ख्यातः पुण्यश्लोको नृपोत्तमः।
अनुवंशपुराणज्ञा गायन्तीति परिश्रुतम् ॥ ५
गुणा देवावृधस्याथ कीर्त्तयन्तो महात्मनः।
यथैव शृणुमो दूरात् सम्पश्यामस्तथान्तिकात् ॥ ६
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः।
पुरुषाः पञ्चषष्टिस्तु षट्सहस्राणि चाष्ट च ॥ ७
येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि।
यज्वा दानमतिर्वीरो ब्रह्मण्यस्तु दृढव्रतः ॥ ८
कीर्त्तिमांश्च महातेजाः सात्वतानां महारथः।
तस्यान्ववाये सम्भूता भोजा वै देवतोपमाः ॥ ९
गान्धारी चैव माद्री च वृष्णिभार्य्ये बभूवतुः।
गान्धारी जनयामास सुमित्रं मित्रनन्दनम् ॥ १०
माद्री लेभे च तं पुत्त्रं ततः सा देवमीढुषम्।
अनमित्रं शिनिञ्चैव तावुभौ पुरुषोत्तमौ ॥ ११
अनमित्रसुतो निघ्नो निघ्नस्य द्वौ बभूवतुः।
प्रसेनश्च महाभागः सत्राजिच्च सुतावुभौ ॥ १२
तस्य सत्राजितः सूर्य्यः सखा प्राणसमोऽभवत्।
स्यमन्तको नाम मणिर्दत्तस्तस्मै विवस्वता ॥ १३
पृथिव्यां सर्व्वरत्नानामसौ राजाऽभवन्मणिः।
कदाचिन्मृगयां यातः प्रसेनेन सहैव सः ॥ १४
वधं प्राप्तोऽसहायश्च सिंहादेव सुदारुणात्।
अथ पुत्त्रः शिनेर्जज्ञे कनिष्ठाद्वृष्णिनन्दनात् ॥ १५
सत्यवाक् सत्यसम्पन्नः सत्यकस्तस्य चात्मजः।
सात्यकिर्युयुधानस्तु शिनेर्नप्ता प्रतापवान् ॥ १६
असङ्गो युयुधानस्य कुणिस्तस्य सुतोऽभवत्।
कुणेर्युगन्धरः पुत्त्रः शैनेया इति कीर्त्तिताः ॥ १७
माद्र्याः सुतस्य संजज्ञे सुतौ वार्ष्णियुधाजितः।
श्वफल्क इति विख्यातस्त्रैलोक्यहितकारकः ॥ १८
श्वफल्कश्च महाराजो धर्म्मात्मा यत्र वर्त्तते।
नास्ति व्याधिभयं तत्र नावृष्टिभयमप्युत ॥ १९
श्वफल्कः काशिराजस्य सुतां भार्य्यामवाप सः।
गान्दिनीं नाम काश्यो हि ददौ तस्मै स्वकन्यकाम् ॥ २०
सा मातुरुदरस्था वै बहून् वर्षगणान् किल।
वसन्ती न च संजज्ञे गर्भस्था तां पिताब्रवीत् ॥ २१
जायस्व शीघ्रं भद्रं ते किमर्थञ्चाभितिष्ठसि।
प्रोवाच चैनं गर्भस्था सा कन्या गान्दिनी तदा।
वर्षत्रयं प्रतिदिनं गामेकां ब्राह्मणाय तु।
यदि दद्यास्ततः कुक्षेर्निर्गमिष्याम्यहं पितः ॥ २३
तथेत्युवाच तस्या वै पिता काममपूरयत्।
दाता शूरश्च यज्वा च श्रुतवानतिथिप्रियः ॥ २४
तस्याः पुत्त्रः स्मृतोऽक्रूरः श्वफल्काद्भूरिदक्षिणः।
रत्ना कन्या च शैवश्य अक्रूरस्तामवाप्तवान् ॥ २५
अस्यामुत्पादयामास तनयांस्तान् निबोधत।
उपमन्युस्तथा माङ्गुरवृतस्तु जनमेजयः ॥ २६
गिरिरक्षस्तथोपेक्षः शत्रुघ्नो योऽरिमर्द्दनः।
धर्म्मभृद्दृष्टधर्म्मा च गोधनोऽथ वरस्तथा ॥ २७
आवाहप्रतिवाहौ च सुधारा च वराङ्गना।
अक्रूरस्योग्रसेन्यान्तु पुत्त्रौ द्वौ कुलनन्दनौ ॥ २८
देववाननुपदेवश्च जज्ञाते देवसम्मतौ।
सुमित्रस्य सुतौ जज्ञे चित्रकश्च महायशाः ॥ २९
चित्रकस्याभवन् पुत्त्राः विपृथुः पृथुरेव च।
अश्वग्रीवः सुबाहुश्च सुधासूककगवेक्षणौ ॥ ३०
अरिष्टनेमिरश्वश्च धर्म्मोऽधर्म्मभृदेव च।
सुभूमिर्बहुभूमिश्च श्रविष्ठा श्रवणे स्त्रियौ ॥ ३१
अन्धकात् काश्यदुहिता लेभे च चतुरः सुतान्।
कुकुरं भजमानञ्च शुचिं कम्बलबर्हिषम् ॥ ३२
कुकुरस्य सुतो वृष्णिर्वृष्णेः शूरस्ततोऽभवत्।
कपोतरोमातिबलस्तस्य पुत्त्रो विलोमकः ॥ ३३
तस्यासीत् तुम्बुरुसखो विद्वान् पुत्त्रो नलः किल।
ख्यायते स सुनाम्ना तु चन्दनानकदुन्दुभिः ॥ ३४
तस्मादप्यभिजित् पुत्त्र उत्पन्नोऽस्य पुनर्व्वसुः।
अश्वमेधं स पुत्त्रार्थमाजहार नरोत्तमः ॥ ३५
तस्य मध्येऽतिरात्रस्य सदोमध्यात् समुत्थितः।
ततस्तु विद्वान् सर्व्वज्ञो दाता यज्वा पुनर्व्वसुः ॥ ३६
तस्यापि पुत्त्रमिथुनं बभूवाभिजितः किल।
आहुकश्चाहुकी चैव ख्यातौ कीर्त्तिमतां वरौ ॥ ३७
आहुकात् काश्यदुहितुर्द्वौ पुत्त्रौ सम्बभूवतुः।
देवकश्चोग्रसेनश्च देवगर्भसमावुभौ ॥ ३८
देवकस्य सुता राज्ञो जज्ञिरे त्रिदशोपमाः।
देववाननुपदेवश्च सुदेवो देवरक्षितः ॥ ३९
तेषां स्वसारः सप्तासन् वसुदेवाय ता ददौ।
वृषदेवोपदेवा च तथान्या देवरक्षिता ॥ ४०

श्रीदेवा शान्तिदेवा च सहदेवा तथापरा।
देवकी चापि तासाञ्च वरिष्ठाभूत् सुमध्यमा॥ ४१
नवोग्रसेनस्य सुतास्तेषां कंसस्तु पूर्व्वजः।
तेषां पुत्त्राश्च पौत्त्राश्च शतशोऽथ सहस्रशः॥ ४२
देवकस्य सुता पत्नी वसुदेवस्य धीमतः।
बभूव वन्द्या पूज्या च देवैरपि पतिव्रता॥ ४३
रोहिणी च महाभागा पत्नी चानकदुन्दुभेः।
पौरवी बाह्लिकसुता सम्पूज्यासीत् सुरैरपि॥ ४४
असूत रोहिणी रामं बलश्रेष्ठं हलायुधम्।
आश्रितं कंसभीत्या च स्वात्मानं शान्ततेजसम्॥ ४५
जाते रामेऽथ निहते षड्गर्भे चातिदर्पिणि।
वसुदेवो हरिं धीमान् देवक्यामुदपादयत्॥ ४६
स एव परमात्मासौ देवदेवो जनार्द्दनः।
हलायुधश्च भगवाननन्तो रजतप्रभः॥ ४७
भृगुशापच्छलेनैव मानयन्मानुषीं तनुम्।
बभूव तस्यां देवक्यां वासुदेवो जनार्द्दनः॥ ४८
उमादेहसमुद्भूता योगनिद्रा च कौशिकी।
नियोगाद्देवदेवस्य यशोदातनया ह्यभूत्॥ ४९
सा चैव प्रकृतिः साक्षात् सर्व्वदेवनमस्कृता।
पुरुषो भगवान् कृष्णो धर्म्ममोक्षफलप्रदः॥ ५०
तां कन्यां जगृहे रक्षन् कंसात् स्वस्यात्मजं तदा।
चतुर्भुजं विशालाक्षं श्रीवत्सकृतलाञ्छनम्॥ ५१
शङ्ख-चक्र-गदापद्मं धारयन्तं जनार्द्दनम्।
यशोदायै प्रदत्त्वा तु वसुदेवश्च बुद्धिमान्॥ ५२
दत्त्वैनं नन्दगोपस्य रक्ष्यतामिति चाब्रवीत्।
रक्षकं जगतां विष्णुं स्वेच्छया धृतविग्रहम्॥ ५३
प्रसादाद्देवदेवस्य शिवस्यामिततेजसः।
रामेण सार्द्धं तं दत्त्वा वरदं परमेश्वरम्॥ ५४
भूभारनिग्रहार्थञ्च अवतीर्णं जगद्गुरुम्।
अतो वै सर्व्वकल्याणं यादवानां भविष्यति॥ ५५
अयं स गर्भो देवक्या यो नः क्लेशान् हरिष्यति।
उग्रसेनात्मजायाथ कंसायानकदुन्दुभिः॥ ५६
निवेदयामास तदा जातां कन्यां सुलक्षणाम्।
अस्यास्तवाष्टमो गर्भो देवक्याः कंस सुव्रत॥ ५७
मृत्युरेव न सन्देह इति वाणी पुरातनी।
ततस्तां हन्तुमारेभे कंसः सोल्लङ्घ्य चाम्बरम्॥ ५८
उवाचाष्टभुजा देवी मेघगम्भीरया गिरा।
रक्षस्व तत् स्वकं देहमायातो मृत्युरेव ते॥ ५९
रक्षमाणस्य देहस्य मायावी कंसरूपिणः।
किं कृतं दुष्कृतं मूर्ख जातः खलु तवान्तकृत्॥ ६०
देवक्याः स भयात् कंसो जघानैवाष्टमन्त्विति।
स्मरन्ति विहितो मृत्युर्देवक्यास्तनयोऽष्टमः॥ ६१
यस्तत्प्रतिकृतौ यत्नो भोजस्यासीद्वृथा हरेः।
प्रभावान्मुनिशार्दूलास्तया चैव जड़ीकृतः॥ ६२
कंसोऽपि निहतस्तेन कृष्णेनाक्लिष्टकर्म्मणा।
निहता बहवश्चान्ये देवब्राह्मणघातिनः॥ ६३
तस्य कृष्णस्य तनयाः प्रद्युम्नप्रमुखास्तथा।
बहवः परिसंख्याताः सर्व्वे युद्धविशारदाः॥ ६४
कृष्णपुत्त्राः समाख्याताः कृष्णेन सदृशाः सुताः।
पुत्त्रेष्वेतेषु सर्व्वेषु चारुदेष्णादयो हरेः॥ ६५
विशिष्टा बलवन्तश्च रौक्मिणेयारिसूदनाः।
षोड़श स्त्रीसहस्राणि शतमेकं तथाधिकम्॥ ६६
कृष्णस्य तासु सर्व्वासु प्रिया ज्येष्ठा च रुक्मिणी।
तया द्वादशवर्षाणि कृष्णेनाक्लिष्टकर्म्मणा॥ ६७
उषिता वायुभक्षेण पुत्त्रार्थं पूजितो हरः।
चारुदेष्णः सुचारुश्च चारुवेषो यशोधरः॥ ६८
चारुश्रवाश्चारुयशाः प्रद्युम्नः साम्ब एव च।
एते लब्धास्तु कृष्णेन शूलपाणिप्रसादतः॥ ६९
तान् दृष्ट्वा तनयान् वीरान् रौक्मिणेयांश्च रुक्मिणीम्।
जाम्बवत्यब्रवीत् कृष्णं भार्य्या कृष्णस्य धीमतः॥ ७०
मम त्वं पुण्डरीकाक्ष विशिष्टं गुणवत्तरम्।
सुरेशसम्मितं पुत्त्रं प्रयत्नो दातुमर्हसि॥ ७१
जाम्बवत्या वचः श्रुत्वा जगन्नाथस्ततो हरिः।
तपस्तप्तुं समारेभे तपोनिधिरनिन्दितः॥ ७२
सोऽथ नारायणः कृष्णः शङ्खचक्रगदाधरः।
व्याघ्रपादस्य च मुनेर्गत्वा चैवाश्रमोत्तमम्॥ ७३
ऋषिं दृष्ट्वा त्वङ्गिरसं प्रणिपत्य जनार्द्दनः।
दिव्यं पाशुपतं योगं लब्धवांस्तस्य चाज्ञया॥ ७४
प्रलुप्तश्मश्रुकेशश्च हुताक्तो मुञ्जमेखली।
दीक्षितो भगवान् कृष्णस्तताप च परन्तपः॥ ७५
ऊर्द्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठेष्वधिष्ठितः।
फलाम्बुनिलभोजी च ऋतुत्रयमधोक्षजः॥ ७६
तपसा तस्य सन्तुष्टो ददौ रुद्रो बहून् वरान्।
साम्बं जाम्बवतीपुत्त्रं कृष्णाय च महात्मने॥ ७७

तथा जाम्बवती चैव साम्बं भार्य्या हरेः सुतम् ।
प्रद्युम्नमतुलं लेभे लब्धादित्यं यथादितिः ॥ ७८
बाणस्य च तदा तेन च्छेदितं मुनिपुङ्गवाः ।
भुजानाञ्चैव साहस्रं शापाद्रुद्रस्य धीमतः ॥ ७९
अथ दैत्यवधं चक्रे हलायुधसहायवान् ।
तथा दुष्टक्षितीशानां लीलयैव रणाजिरे ॥ ८०
स हत्वा दैवसम्भूतं नरकं दैत्यपुङ्गवम् ।
ब्राह्मणस्योऽर्द्धचक्रस्य वरदानान्महात्मनः ॥ ८१
स्वोपभोग्यानि कन्यानां षोड़शातुलविक्रमः ।
शताधिकानि जग्राह सहस्राणि महाबलः ॥ ८२
शापव्याजेन विप्राणामुपसंहृतवान् कुलम् ।
संहृत्य तत्कुलञ्चैव प्रभासेऽतिष्ठदच्युतः ॥ ८३
तदा तस्यैव तु गतं वर्षाणामधिकं शतम् ।
कृष्णस्य द्वारकायां वै जराक्लेशापहारिणः ॥ ८४
विश्वामित्रस्य कण्वस्य नारदस्य च धीमतः ।
शापं पिण्डारकेऽरचद्वचो दुर्व्वाससस्तदा ॥ ८५
त्यक्त्वा च मानुषं रूपं जरकास्त्रच्छलेन तु ।
अनुगृह्य च कृष्णोऽपि लुब्धकं प्रययौ दिवम् ॥ ८६
अष्टावक्रस्य शापेन भार्य्याः कृष्णस्य धीमतः ।
चौरैश्चापहृताः सर्व्वास्तस्य मायाबलेन च ॥ ८७
बलभद्रोऽपि सन्त्यज्य नागो भूत्वा जगाम च ।
महिष्यस्तस्य कृष्णस्य रुक्मिणीप्रमुखाः शुभाः ॥ ८८
महाग्निं विविशुः सर्व्वाः कृष्णेनाक्लिष्टकर्म्मणा ।
रेवती च तथा देवी बलभद्रेण धीमता ॥ ८९
प्रविष्टा पावकं विप्राः सा च भर्त्तृपथं गता ।
प्रेतकार्य्यं हरेः कृत्वा पार्थः परमवीर्य्यवान् ॥ ९०
रामस्य च तथान्येषां वृष्णीनामपि सुव्रताः ।
कन्दमूलफलैस्तस्य बलिकार्य्यं चकार सः ॥ ९१
द्रव्याभावात् स्वयं पार्थो भ्रातृभिश्च दिवं गतः ।
एवं संक्षेपतः प्रोक्तः कृष्णस्याक्लिष्टकर्म्मणः ॥ ९२
प्रभावो विलयश्चैव स्वेच्छयैव महात्मनः ।
इत्येतत् सोमवंशानां नृपाणां चरितं द्विजाः ॥ ९३
यः पठेच्छृणुयाद्वापि ब्राह्मणान् श्रावयेदपि ।
स याति वैष्णवं लोकं नात्र कार्य्या विचारणा ॥ ९४

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सोमवंशानुकीर्त्तनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ।

ऋषय ऊचुः ।

आदिसर्गस्त्वया सूत सूचितो न प्रकाशितः ।
साम्प्रतं विस्तरेणैव वक्तुमर्हसि सुव्रत ॥ १

सूत उवाच ।

महेश्वरो महादेवः प्रकृतेः पुरुषस्य च ।
परत्वे संस्थितो देवः परमात्मा मुनीश्वराः ॥ २
अव्यक्ताच्चेश्वरात् तस्मादभवत् कारणं परम् ।
प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः ॥ ३
गन्ध-वर्ण-रसैर्हीनं शब्द-स्पर्श-विवर्ज्जितम् ।
अजरं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम् ॥ ४
जगद्योनिं महाभूतं परंब्रह्म सनातनम् ।
विग्रहः सर्व्वभूतानामीश्वराज्ञाप्रचोदितम् ॥ ५
अनाद्यन्तमजं सूक्ष्मं त्रिगुणं प्रभवाव्ययम् ।
अप्रकाशमविज्ञेयं ब्रह्माग्रे समवर्त्तत ॥ ६
अस्यात्मना सर्व्वमिदं व्याप्तन्त्वासीच्छिवेच्छया ।
गुणसाम्ये तदा तस्मिन्नविभागे तमोमये ॥ ७
सर्गकाले प्रधानस्य क्षेत्रज्ञाधिष्ठितस्य वै ।
गुणभावाद्व्यज्यमानो महान् प्रादुर्ब्बभूव ह ॥ ८
सूक्ष्मेण महता चाथ अव्यक्तेन समावृतम् ।
सत्त्वोद्रिक्तो महानग्रे सत्तामात्रप्रकाशकः ॥ ९
मनो महांस्तु विज्ञेयमेकं तत्कारणं स्मृतम् ।
समुत्पन्नं लिङ्गमात्रं क्षेत्रज्ञाधिष्ठितं हितम् ॥ १०
धर्म्मादीनि च रूपाणि लोकतत्त्वार्थहेतवः ।
महान् सृष्टिं विकुरुते चोद्यमानः सिसृक्षया ॥ ११
मनो महान् मतिर्ब्रह्म पूर्व्वुद्धिः ख्यातिरीश्वरः ।
प्रज्ञा चितिः स्मृतिः संविद्विश्वेशश्चेति स स्मृतः ॥ १२
मनुते सर्व्वभूतानां यस्माच्चेष्टाफलं ततः ।
सौक्ष्म्यात् तेन विभक्तन्तु येन तन्मन उच्यते ॥ १३
तत्त्वानामग्रजो यस्मान्महांश्च परिमाणतः ।
विशेषेभ्यो गुणेभ्योऽपि महानिति ततः स्मृतः ॥ १४
बिभर्त्ति मानं मनुते विभागं मन्यतेऽपि च ।
पुरुषो भोगसम्बन्धात्तेन चासौ मतिः स्मृतः ॥ १५
बृहत्त्वाद्बृंहणत्वाच्च भावानां सकलाश्रयात् ।
यस्माद्धारयते भावान् ब्रह्म तेन निरुच्यते ॥ १६
यः पूरयति यस्माच्च कृत्स्नान् देवाननुग्रहैः ।

नयते तत्त्वभावञ्च तेन पूरिति चोच्यते ॥ १७
बुध्यते पुरुषश्चात्र सर्व्वान् भावान् हितं तथा।
यस्माद्बोधयते चैव बुद्धिस्तेन निरुच्यते ॥ १८
ख्यातिः प्रत्युपभोगश्च यस्मात् संवर्त्तते ततः।
भोगस्य ज्ञाननिष्ठत्वात् तेन ख्यातिरिति स्मृतः ॥ १९
ख्यायते तद्गुणैर्वापि ज्ञानादिभिरनेकशः।
तस्माच्च महतः संज्ञा ख्यातिरित्यभिधीयते ॥ २०
साक्षात् सर्व्वं विजानाति महात्मा तेन चेश्वरः।
यस्माज्ज्ञानानुगश्चैव प्रज्ञा तेन स उच्यते ॥ २१
ज्ञानादीनि च रूपाणि बहुकर्म्मफलानि च।
चिनोति यस्माद्भोगार्थं तेनासौ चितिरुच्यते ॥ २२
वर्त्तमानव्यतीतानि तथैवानागतान्यपि।
स्मरते सर्व्वकार्य्याणि तेनासौ स्मृतिरुच्यते ॥ २३
कृत्स्नञ्च विन्दते ज्ञानं यस्मान्माहात्म्यमुत्तमम्।
तस्माद्विन्देर्विदेश्चैव संविदित्यभिधीयते ॥ २४
विद्यतेऽपि च सर्व्वत्र तस्मिन् सर्व्वञ्च विन्दति।
तस्मात् संविदिति प्रोक्तो महद्भिर्मुनिसत्तमाः ॥ २५
जानातेर्ज्ञानमित्याहुर्भगवान् ज्ञानसन्निधिः।
बन्धनादिपरीभावादीश्वरः प्रोच्यते बुधैः ॥ २६
पर्य्यायवाचकैः शब्दैस्तत्त्वमाद्यमनुत्तमम्।
व्याख्यातं तत्त्वभावज्ञैर्देवसद्भावचिन्तकैः ॥ २७
महान् सृष्टिं विकुरुते चोद्यमानः सिसृक्षया।
सङ्कल्पोऽध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम् ॥ २८
त्रिगुणाद्रजसोद्रिक्तादहङ्कारस्ततोऽभवत्।
महता च वृतः सर्गो भूतादिर्वाह्यतस्तु सः ॥ २९
तस्मादेव तमोद्रिक्तादहङ्कारादजायत।
भूततन्मात्रसर्गस्तु भूतादिस्तामसस्तु सः ॥ ३०
भूतादिस्तु विकुर्व्वाणः शब्दमात्रं ससर्ज्ज ह।
आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम् ॥ ३१
आकाशं शब्दमात्रन्तु स्पर्शमात्रं समावृणोत्।
वायुश्चापि विकुर्व्वाणो रूपमात्रं ससर्ज्ज ह ॥ ३२
ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते।
स्पर्शमात्रस्तु वै वायू रूपमात्रं समावृणोत् ॥ ३३
ज्योतिश्चापि विकुर्व्वाणं रसमात्रं ससर्ज्ज ह।
सम्भवन्ति ततो ह्यापस्ता वै सर्व्वरसात्मिकाः ॥ ३४
रसमात्रास्तु ता ह्यापो रूपमात्रोऽग्निरावृणोत्।
आपश्चापि विकुर्व्वत्यो गन्धमात्रं ससर्ज्जिरे ॥ ३५
सङ्घातो जायते तस्मात् तस्य गन्धो गुणो मतः।
तस्मिंस्तस्मिंश्च तन्मात्रं तेन तन्मात्रता स्मृता ॥ ३६
अविशेषवाचकत्वादविशेषास्ततस्तु ते।
प्रशान्तघोरमूढत्वादविशेषास्ततः पुनः ॥ ३७
भूततन्मात्रसर्गोऽयं विज्ञेयस्तु परस्परम्।
वैकारिकादहङ्कारात् सत्त्वोद्रिक्तात् तु सात्त्विकात् ॥ ३८
वैकारिकः स सर्गस्तु युगपत् सम्प्रवर्त्तते।
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्म्मेन्द्रियाणि च ॥ ३९
साधकानीन्द्रियाणि स्युर्देवा वैकारिका दश।
एकादशं मनस्तत्र स्वगुणेनोभयात्मकम् ॥ ४०
श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि तानि वै ॥ ४१
पादौ पायुरुपस्थश्च हस्तौ वाग्दशमी भवेत्।
गतिर्विसर्गो ह्यानन्दः शिल्पं वाक्यञ्च कर्म्म तत् ॥ ४२
आकाशं शब्दमात्रञ्च स्पर्शमात्रं समाविशत्।
द्विगुणास्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥ ४३
रूपं तथैव विशतः शब्दस्पर्शगुणावुभौ।
त्रिगुणास्तु ततस्त्वग्निः स शब्दस्पर्शरूपवान् ॥ ४४
सशब्दस्पर्शरूपञ्च रसमात्रं समाविशत्।
तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः ॥ ४५
शब्दस्पर्शञ्च रूपञ्च रसो वै गन्धमाविशत्।
सङ्गता गन्धमात्रेण आविशन्तो महीमिमाम् ॥ ४६
तस्मात् पञ्चगुणा भूमिः स्थूला भूतेषु शस्यते।
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥ ४७
परस्परानुप्रवेशाद्धारयन्ति परस्परम्।
भूमेरन्तस्त्विदं सर्व्वं लोकालोकाचलावृतम् ॥ ४८
विशेषाश्चेन्द्रियग्राह्या नियतत्वाच्च ते स्मृताः।
गुणं पूर्व्वस्य सर्गस्य प्राप्नुवन्त्युत्तरोत्तराः ॥ ४९
तेषां यावच्च तद्यच्च यच्च तावद्गुणं स्मृतम्।
उपलभ्याप्सु वै गन्धं केचिद्ब्रूयुरपां गुणम् ॥ ५०
पृथिव्यामेव तं विद्यादपां वायोश्च संश्रयात्।
एते सप्त महात्मानो ह्यन्योन्यस्य समाश्रयात् ॥ ५१
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च।
महादयो विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥ ५२
एककालसमुत्पन्नं जलबुद्बुदवच्च तत्।
विशेषेभ्योऽण्डमभवन्महत् तदुदकेशयम् ॥ ५३
अद्भिर्दशगुणाभिस्तु वाह्यतोऽण्डं समावृतम्।

आपो दशगुणेनैतास्तेजसा वाह्यतो वृताः ॥ ५४
तेजो दशगुणेनैव वायुना वाह्यतो वृतम्।
वायुर्दशगुणेनैव वाह्यतो नभसावृतः ॥ ५५
आकाशेनावृतो वायुः खन्तु भूतादिनावृतम्।
भूतादिर्महता चापि अव्यक्तेनावृतो महान् ॥ ५६
अर्व्वश्चाण्डकपालस्थो भवश्चाम्भसि सुव्रताः।
रुद्रोऽग्निमध्ये भगवानुग्रो वायौ पुनः स्मृतः ॥ ५७
भीमश्चावनिमध्यस्थो ह्यहङ्कारे महेश्वरः।
बुद्धौ च भगवानीशः सर्व्वतः परमेश्वरः ॥ ५८
एतैरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम्।
एता आवृत्य चान्योन्यमष्टौ प्रकृतयः स्थिताः ॥ ५९
प्रसर्गकाले स्थित्वा तु ग्रसन्त्येताः परस्परम् ॥ ६०
एवं परस्परोत्पन्ना धारयन्ति परस्परम्।
आधाराधेयभावेन विकारास्ते विकारिषु ॥ ६१
महेश्वरः परोऽव्यक्तादण्डमव्यक्तसम्भवम्।
अण्डाज्जज्ञे स एवेशः पुरुषोऽर्कसमप्रभः ॥ ६२
तस्मिन् कार्य्यस्य करणं संसिद्धं स्वेच्छयैव तु।
स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥ ६३
तस्य वामाङ्गजो विष्णुः सर्व्वदेवनमस्कृतः।
तस्या देव्या ह्यभूद्देव इच्छया परमेष्ठिनः ॥ ६४
दक्षिणाङ्गभवो ब्रह्मा सरस्वत्या जगद्गुरुः।
तस्मिन्नण्डे इमे लोका अन्तर्विश्वमिदं जगत् ॥ ६५
चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना।
लोकालोकद्वयं किञ्चिदण्डे ह्यस्मिन् समर्पितम् ॥ ६६
यत् तु सृष्टौ प्रसंख्यातं मया कालान्तरं द्विजाः।
एतत् कालान्तरं ज्ञेयमहर्वै पारमेश्वरम् ॥ ६७
रात्रिश्चैतावती ज्ञेया परमेशस्य कृत्स्नतः।
अहस्तस्य तु या सृष्टौ रात्रिश्च प्रलयः स्मृतः ॥ ६८
नाहस्तु विद्यते तस्य न रात्रिरिति धारयेत्।
उपचारस्तु क्रियते लोकानां हितकाम्यया ॥ ६९
इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्च च।
तस्मात् सर्व्वाणि भूतानि बुद्धिश्च सह दैवतैः ॥ ७०
अहस्तिष्ठन्ति सर्व्वाणि परमेशस्य धीमतः।
अहरन्ते प्रलीयन्ते राव्यन्ते विश्वसम्भवः ॥ ७१
स्वात्मन्यवस्थिते व्यक्ते विकारे प्रतिसंहृते।
साधर्म्येणावतिष्ठेते प्रधानपुरुषावुभौ ॥ ७२
तमःसत्त्वरजोपेतौ समत्वेन व्यवस्थितौ।
अनुपृक्तावभूतां तावोतप्रोतौ परस्परम् ॥ ७३
गुणसाम्ये लयो ज्ञेयो वैषम्ये सृष्टिरुच्यते।
तिले यथा भवेत् तैलं घृतं पयसि वा स्थितम् ॥
तथा तमसि सत्त्वे च रजस्यनुसृतं जगत्।
उपास्य रजनीं कृत्स्नां परां माहेश्वरीं तथा ॥
अहर्मुखे प्रवृत्तश्च परः प्रकृतिसम्भवः।
क्षोभयामास योगेन परेण परमेश्वरः ॥ ७६
प्रधानं पुरुषञ्चैव प्रविश्य स महेश्वरः।
महेश्वरात् त्रयो देवा जज्ञिरे जगदीश्वरात् ॥
शाश्वताः परमा गुह्याः सर्व्वात्मानः शरीरिणः।
एत एव त्रयो देवा एत एव त्रयो गुणाः ॥ ७८
एत एव त्रयो लोका एत एव त्रयोऽग्नयः।
परस्पराश्रिता ह्येते परस्परमनुव्रताः ॥ ७९
परस्परेण वर्त्तन्ते धारयन्ति परस्परम्।
अन्योन्यमिथुना ह्येते अन्योन्यमुपजीविनः ॥ ८०
क्षणं वियोगो न ह्येषां न त्यजन्ति परस्परम्।
ईश्वरस्तु परो देवो विष्णुश्च महतः परः ॥ ८१
ब्रह्मा च रजसा युक्तः सर्गादौ हि प्रवर्त्तते।
परः स पुरुषो ज्ञेयः प्रकृतिः सा परा स्मृता ॥ ८२

अधिष्ठिता सा हि महेश्वरेण
प्रवर्त्तते चोद्यमने समन्तात्।
अनुप्रवृत्तस्तु महांस्तदेनां
चिरस्थिरत्वाद्विषयं श्रितः स्वयम् ॥ ८३

प्रधानगुणवैषम्यात् सर्गकालः प्रवर्त्तते।
ईश्वराधिष्ठितात् पूर्व्वं तस्मात् सदसदात्मकात् ॥
संसिद्धः कार्य्यकरणे रुद्रश्चाग्रे ह्यवर्त्तत।
तेजसाप्रतिमो धीमानव्यक्तः सम्प्रकाशकः ॥ ८५
स वै शरीरी प्रथमः स वै पुरुष उच्यते।
ब्रह्मा च भगवांस्तस्माच्चतुर्व्वक्त्रः प्रजापतिः ॥ ८६
संसिद्धः कार्य्यकरणे तथा वै समवर्त्तत।
एक एव महादेवस्त्रिधैवं स व्यवस्थितः ॥ ८७
अप्रतीपेन ज्ञानेन ऐश्वर्य्येण समन्वितः।
धर्म्मेण चाप्रतीपेन वैराग्येण च तेऽन्विताः ॥ ८८
अव्यक्ताज्जायते तेषां मनसा यद्यदीप्सितम्।
वशीकृतत्वात् त्रैगुण्यं सापेक्षत्वात् स्वभावतः ॥ ८९
चतुर्मुखस्तु ब्रह्मत्वे कालत्वे चान्तकः स्मृतः।
सहस्रमूर्द्धा पुरुषस्तिस्रोऽवस्थाः स्वयम्भुवः ॥ ९०

ब्रह्मत्वे सृजते लोकान् कालत्वे संक्षिपत्यपि।
पुरुषत्वे ह्युदासीनस्तिस्रोऽवस्थाः प्रजापतेः॥ ९१
ब्रह्मा कमलगर्भाभो रुद्रः कालाग्निसन्निभः।
पुरुषः पुण्डरीकाक्षो रूपं तत्परमात्मनः॥ ९२
एकधा स द्विधा चैव त्रिधा च बहुधा पुनः।
महेश्वरः शरीराणि करोति विकरोति च॥ ९३
नानाकृति-क्रिया-रूप-नामवन्ति स्वलीलया।
महेश्वरः शरीराणि करोति विकरोति च॥ ९४
त्रिधा यद्वर्त्तते लोके तस्मात् त्रिगुण उच्यते।
चतुर्द्धा प्रविभक्तत्वाच्चतुर्व्यूहः प्रकीर्त्तितः॥ ९५
यदाप्नोति यदादत्ते यच्चात्ति विषयानयम्।
यच्चास्य सततं भावस्तस्मादात्मा निरुच्यते॥ ९६
ऋषिः सर्व्वगतत्वाच्च शरीरी सोऽस्य यत्प्रभुः।
स्वामित्वमस्य यत् सर्व्वं विष्णुः सर्व्वप्रवेशनात्॥ ९७
भगवान् भगवद्भावान्निर्म्मलत्वाच्छिवः स्मृतः।
परमः सम्प्रकृष्टत्वादवनादोमिति स्मृतः॥ ९८
सर्व्वज्ञः सर्व्वविज्ञानात् सर्व्वः सर्व्वमयो यतः।
त्रिधा विभज्य चात्मानं त्रैलोक्ये सम्प्रवर्त्तते॥ ९९
सृजते ग्रसते चैव रक्षते च त्रिभिः स्वयम्।
आदित्वादादिदेवोऽसौ अजातत्वादजः स्मृतः॥ १००
पाति यस्मात् प्रजाः सर्व्वाः प्रजापतिरिति स्मृतः।
देवेषु च महान् देवो महादेवस्ततः स्मृतः॥ १०१
सर्व्वगत्वाच्च देवानामवश्यत्वाच्च ईश्वरः।
बृहत्वाच्च स्मृतो ब्रह्मा भूतत्वाद्भूत उच्यते॥ १०२
क्षेत्रज्ञः क्षेत्रविज्ञानादेकत्वात् केवलः स्मृतः।
यस्मात् पुर्य्यां स शेते च तस्मात् पुरुष उच्यते॥ १०३
अनादित्वाच्च पूर्व्वत्वात् स्वयम्भूरिति संस्मृतः।
याज्यत्वादुच्यते यज्ञः कविर्विक्रान्तदर्शनात्॥ १०४
क्रमणः क्रमणीयत्वात् पालकश्चापि पालनात्।
आदित्यसंज्ञः कपिलो ह्यग्रजोऽग्निरिति स्मृतः॥१०५
हिरण्मयस्य गर्भोऽभूद्धिरन्यस्यापि गर्भजः।
तस्माद्धिरण्यगर्भत्वं पुराणेऽस्मिन् निरुच्यते॥ १०६
स्वयम्भुवोऽपि वृत्तस्य कालो विश्वात्मनस्तु यः।
न शक्यः परिसंख्यातुमपि वर्षशतैरपि॥ १०७
कालसंख्याविवृतस्य परार्द्धो ब्रह्मणः स्मृतः।
तावच्छेषोऽस्य कालोऽन्यस्तस्यान्ते प्रतिसृज्यते॥१०८
कोटिकोटिसहस्राणि अन्तर्भूतानि यानि वै।
समतीतानि कल्पानां तावच्छेषाः परे तु ये।
यस्त्वयं वर्त्तते कल्पो वाराहस्तं निबोधत॥ १०९
प्रथमः साम्प्रतस्तेषां कल्पोऽयं वर्त्तते द्विजाः।
यस्मिन् स्वायम्भुवाद्यास्तु मनवस्ते चतुर्द्दश॥ ११०
अतीता वर्त्तमानाश्च भविष्या ये च वै पुनः।
तैरियं पृथिवी सर्व्वा सप्तद्वीपा सपर्व्वता॥ १११
पूर्णं युगसहस्रं वै परिपाल्या महेश्वरैः।
प्रजाभिस्तपसा चैव तेषां शृणुत विस्तरम्॥ ११२
मन्वन्तरेण चैकेन सर्व्वाण्येवान्तराणि च।
कथितानि भविष्यन्ति कल्पः कल्पेन चैव हि॥ ११३
अतीतानि च कल्पानि सोदर्काणि सहान्वयैः।
अनागतेषु तद्वच्च तर्कः कार्य्यो विजानता॥ ११४
आपो ह्यग्रे समभवन् नष्टे च पृथिवीतले।
शान्ततारैकनीरेऽस्मिन् न प्राज्ञायत किञ्चन॥ ११५
एकार्णवे तदा तस्मिन् नष्टे स्थावरजङ्गमे।
तदा भवति वै ब्रह्मा सहस्राक्षः सहस्रपात्॥११६
सहस्रशीर्षा पुरुषो रुक्मवर्णस्त्वतीन्द्रियः।
ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा॥ ११७
सत्त्वोद्रेकात् प्रबुद्धस्तु शून्यं लोकमुदैक्षत।
इमञ्चोदाहरन्त्यत्र श्लोकं नारायणं प्रति॥ ११८
आपो नाराश्च सूनव इत्यपां नाम शुश्रुम।
आपूर्य्य ताभिरयनं कृतवानात्मनो यतः॥ ११९
अप्सु शेते यतस्तस्मात् ततो नारायणः स्मृतः।
चतुर्युगसहस्रस्य नैशं कालमुपास्यतः॥ १२०
शर्व्वर्य्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात्।
ब्रह्मा तु सलिले तस्मिन् वायुर्भूत्वा समाचरत्॥१२१
निशायामिव खद्योतः प्रावृट्काले ततस्तु सः।
ततस्तु सलिले तस्मिन् विज्ञायान्तर्गतां महीम्॥१२२
अनुमानादसंमूढो भूमेरुद्धरणं पुनः।
अकरोत् स तनूमन्यां कल्पादिषु यथा पुरा॥ १२३
ततो महात्मा भगवान् दिव्यरूपमचिन्तयत्।
सलिलेनाप्लुतां भूमिं दृष्ट्वा स तु समन्ततः॥ १२४
किन्तु रूपमहं कृत्वा उद्धरेयं महीमिमाम्।
जलक्रीडासुसदृशं वाराहं रूपमाविशत्॥ १२५
अधृष्यं सर्व्वभूतानां वाङ्मयं ब्रह्मसंज्ञितम्।
पृथिव्युद्धरणार्थाय प्रविवेश रसातलम्॥ १२६
अद्भिः सञ्छादितां भूमिं स तामाशु प्रजापतिः।

उपगम्योज्जहारैनामापश्चापि समाविशत् ॥ १२७
आमुद्रा वै समुद्रेषु नादेयाश्च नदीषु च ।
रसातलतले मग्नां रसातलपुटे गताम् ॥ १२८
प्रभुर्लोकहितार्थाय दंष्ट्रयाभ्युज्जहार गाम् ।
ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः ॥ १२९
मुमोच पूर्ववदसौ धारयित्वा धराधरः ।
तस्योपरि जलौघस्य महती नौरिव स्थिता ॥ १३०
ततमा ह्युरुदेहत्वान्न मही याति संप्लवम् ।
तत उत्क्षिप्य तां देवो जगतः स्थापनेच्छया ॥ १३१
पृथिव्याः प्रविभागाय मनश्चक्रेऽम्बुजेक्षणः ।
पृथिवीञ्च समां कृत्वा पृथिव्यां सोऽचिनोद्गिरीन्॥१३२
प्राक्सर्गे दह्यमाने तु तदा संवर्त्तकाग्निना ।
तेनाग्निना विशीर्णास्ते पर्व्वता भूरिविस्तराः ॥ १३३
शैत्यादेकार्णवे तस्मिन् वायुना तेन संहताः ।
निषिक्ता यत्र यत्रासंस्तत्र तत्राचलाऽभवत् ॥ १३४
तदाचलत्वादचलाः पर्व्वभिः पर्व्वताः स्मृताः ।
गिरयो हि निगीर्णत्वाच्छयानत्वाच्छिलोच्चयाः१३५
ततस्तेषु विकीर्णेषु कोटिशो हि गिरिष्वथ ।
विश्वकर्म्मा विभजते कल्पादिषु पुनः पुनः ॥ १३६
ससमुद्रामिमां पृथ्वीं सप्तद्वीपां सपर्व्वताम् ।
भूराद्यांश्चतुरो लोकान् पुनः सोऽथ व्यकल्पयत्१३७
लोकान् प्रकल्पयित्वाथ प्रजासर्गं ससर्ज्ज ह ।
ब्रह्मा स्वयम्भूर्भगवान् सिसृक्षुर्विविधाः प्रजाः ॥ १३८
ससर्ज्ज सृष्टिं तद्रूपां कल्पादिषु यथा पुरा ।
तस्याभिध्यायतः सर्गं तदा वै बुद्धिपूर्व्वकम् ॥ १३९
बुद्ध्याश्च समकाले वै प्रादुर्भूतस्तमोमयः ।
तमोमोहो महामोहस्तामिस्रश्चान्धसंज्ञितः ॥ १४०
अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः ।
पञ्चधावस्थितः सर्गो ध्यायतः सोऽभिमानिनः ॥१४१
संवृतस्तमसा चैव वीजाङ्कुरवदावृतः ।
वहिरन्तश्चाप्रकाशस्तब्धो निःसंज्ञ एव च ॥ १४२
यस्मात् तेषां वृता बुद्धिर्दुःखानि करणानि च ।
तस्मात् ते संवृतात्मानो नगा मुख्याः प्रकीर्त्तिताः॥१४३
मुख्यसर्गं तथा भूतं दृष्ट्वा ब्रह्मा ह्यसाधकम् ।
अप्रसन्नमनाः सोऽथ ततोऽन्यं सो ह्यमन्यत ॥ १४४
तस्याभिध्यायतश्चैव तिर्य्यक्स्रोता ह्यवर्त्तत ।
यस्मात्तिर्य्यक्प्रवृत्तः स तिर्य्यक्स्रोतास्ततः स्मृतः१४५

पश्वादयस्ते विख्याता उत्पथग्राहिणो द्विजाः ।
तस्याभिध्यायतोऽन्यं वै सात्त्विकः समवर्त्तत ॥
ऊर्द्ध्वस्रोतास्तृतीयस्तु स वै चोर्द्ध्वं व्यवस्थितः ।
यस्मात् प्रवर्त्तते चोर्द्ध्वमूर्द्ध्वस्रोतास्ततः स्मृतः ॥
ते सुखप्रीतिबहुला वहिरन्तश्च संवृताः ।
प्रकाशा वहिरन्तश्च ऊर्द्ध्वस्रोतोभवाः स्मृताः ॥
ते सत्त्वस्य च योगेन सृष्टाः सत्त्वोद्भवाः स्मृताः ।
ऊर्द्ध्वस्रोतास्तृतीयो वै देवसर्गस्तु स स्मृतः ॥
प्रकाशाद्बहिरन्तश्च ऊर्द्ध्वस्रोतोद्भवाः स्मृताः ।
ते ऊर्द्ध्वस्रोतसो ज्ञेयास्तुष्टात्मानो बुधैः स्मृताः ।
ऊर्द्ध्वस्रोतःसु सृष्टेषु देवेषु वरदः प्रभुः ।
प्रीतिमानभवद्ब्रह्मा ततोऽन्यं सोऽभ्यमन्यत ॥
ससर्ज्ज सर्गमन्यं हि साधकं प्रभुरीश्वरः ।
ततोऽभिध्यायतस्तस्य सत्याभिध्यायिनस्तदा ॥
प्रादुरासीत् तदाव्यक्तादर्वाक्स्रोतास्तु साधकः ।
यस्मादर्वाङ्व्यवर्त्तन्त ततोऽर्वाक्स्रोतसस्तु ते ॥
ते च प्रकाशबहुलास्तमःपृक्ता रजोऽधिकाः ।
तस्मात् ते दुःखबहुला भूयोभूयश्च कारिणः ॥
संवृता वहिरन्तश्च मनुष्याः साधकाश्च ते ।
लक्षणैस्तारकाद्यस्ते अष्टधा तु व्यवस्थिताः ॥
सिद्धात्मानो मनुष्यास्ते गन्धर्व्वसहधर्म्मिणः ।
इत्येष तैजसः सर्गो ह्यर्व्वाक्स्रोताः प्रकीर्त्तितः ।
पञ्चमोऽनुग्रहः सर्गश्चतुर्द्धा तु व्यवस्थितः ।
विपर्य्ययेण शक्त्या च सिद्ध्या तुष्ट्या तथैव च ॥
स्थावरेषु विपर्य्यासस्तिर्य्यग्योनिषु शक्तितः ।
सिद्धात्मानो मनुष्यास्तु ऋषिदेवेषु कृत्स्नशः ॥
इत्येष प्राकृतः सर्गो वैकृतो नवमः स्मृतः ।
भूतादिकानां भूतानां षष्ठः सर्गः स उच्यते ॥
निवृत्तं वर्त्तमानञ्च तेषां जानन्ति वै पुनः ।
भूतादिकानां भूतानां सप्तमः सर्ग एव च ॥
ते परिग्राहिणः सर्व्वे संविभागरताः पुनः ।
खादनाश्चाप्यशीलाश्च ज्ञेया भूतादिकाश्च ते ॥
विपर्य्ययेण भूतादिरशक्त्या च व्यवस्थितः ।
प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणः स्मृतः ॥
तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ।
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ॥
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्व्वकः ।

मुख्यसर्गश्चतुर्थश्च मुख्या वै स्थावराः स्मृताः ॥ १६४
ततोऽर्व्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः।
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च सः ॥ १६५
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः।
प्राकृतो वैकृतश्चैव कुमारो नवमः स्मृतः ॥ १६६
अबुद्धिपूर्व्विकाः सर्गाः प्राकृतास्तु त्रयः स्मृताः।
बुद्धिपूर्व्वं प्रवर्त्तन्ते षट् पुनर्ब्रह्मणस्तु ते ॥ १६७
विस्तरानुग्रहः सर्गः कीर्त्त्यमानो निबोधत।
चतुर्द्धावस्थितः सोऽथ सर्व्वभूतेषु कृत्स्नशः ॥ १६८
इत्येते प्राकृताश्चैव वैकृताश्च नव स्मृताः।
परस्परानुरक्ताश्च कारणैश्च बुधैः स्मृताः ॥ १६९
अग्रे ससर्ज्ज वै ब्रह्मा मानसानात्मनः समान्।
ऋभुः सनत्कुमारश्च द्वावेतावूर्द्ध्वरेतसौ ॥ १७०
पूर्व्वोत्पन्नौ पुरा तेभ्यः सर्व्वेषामपि पूर्व्वजौ।
व्यतीते लष्टमे कल्पे पुराणौ लोकसाक्षिणौ ॥१७१
तौ वाराहे तु भूर्लोके तेजः संक्षिप्य धिष्ठितौ।
तावुभौ मोक्षकर्म्माणावारोप्यात्मानमात्मनि ॥ १७२
प्रजां धर्म्मञ्च कामञ्च त्यक्त्वा वैराग्यमास्थितौ।
यथोत्पन्नस्तथैवेह कुमारः स इहोच्यते ॥ १७३
तस्मात् सनत्कुमारेति नामास्येह प्रकीर्त्तितम्।
सनन्दं सनकञ्चैव विद्वांसञ्च सनातनम् ॥ १७४
विज्ञानेन निवृत्तास्ते व्यवर्त्तन्त महौजसः।
सम्बुद्धाश्चैव नानात्वे अप्रवृत्ताश्च योगिनः ॥ १७५
असृष्ट्वैव प्रजासर्गं प्रतिसर्गं गताः पुनः।
ततस्तेषु व्यतीतेषु ततोऽन्यान् साधकान् सुतान् १७६
मानसानसृजद्ब्रह्मा पुनः स्थानाभिमानिनः।
आभूतसंप्लवावस्था यैरियं विधृता मही ॥ १७७
आपोऽग्निं पृथिवीं वायुमन्तरिक्षं दिवं तथा।
समुद्रांश्च नदीश्चैव तथा शैलवनस्पतीन् ॥ १७८
ओषधीनां तथात्मानो वल्लीनां वृक्षवीरुधाम्।
लवाः काष्ठाः कलाश्चैव मुहूर्त्ताः सन्धिरात्र्यहान्१७९
अर्द्धमासांश्च मासांश्च अयनाब्दयुगानि च।
स्थानाभिमानिनः सर्व्वे स्थानाख्याश्चैव ते स्मृताः॥१८०
देवानृषींश्च महतो गदतस्तान् निबोधत।
मरीचि-भृग्वङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ॥ १८१
दक्षमत्रिं वशिष्ठञ्च सोऽसृजन्मानसान् नव।
नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ॥ १८२
तेषां ब्रह्मात्मकानां वै सर्व्वेषां ब्रह्मवादिनाम्।
स्थानानि कल्पयामास पूर्व्ववत् पद्मसम्भवः ॥ १८३
ततोऽसृजच्च सङ्कल्पं धर्म्मञ्चैव सुखावहम्।
सोऽसृजद्व्यवसायात् तु धर्म्मं देवो महेश्वरः ॥१८४
सङ्कल्पञ्चैव सङ्कल्पात् सर्व्वलोकपितामहः।
मानसश्च रुचिर्नाम विजज्ञे ब्रह्मणः प्रभोः ॥ १८५
प्राणाद्ब्रह्माऽसृजद्दक्षं चक्षुर्भ्याञ्च मरीचिनम्।
भृगुस्तु हृदयाज्जज्ञे ऋषिः सलिलजन्मनः ॥ १८६
शिरसोऽङ्गिरसश्चैव श्रोत्रादत्रिं तथासृजत्।
पुलस्त्यञ्च तथोदानाद्व्यानाच्च पुलहं पुनः ॥ १८७
समानजो वशिष्ठश्च अपानान्निर्म्ममे क्रतुम्।
इत्येते ब्रह्मणः पुत्त्रा दिव्या एकादश स्मृताः ॥ १८८
धर्म्मादयः प्रथमजाः सर्व्वे ते ब्रह्मणः सुताः।
भृग्वादयस्तु ते सृष्टा नवैते ब्रह्मवादिनः ॥ १८९
गृहमेधिनः पुराणास्ते धर्म्मस्तैः सम्प्रवर्त्तितः।
तेषां द्वादश ते वंशा दिव्या देवगुणान्विताः ॥ १९०
क्रियावन्तः प्रजावन्तो महर्षिभिरलङ्कृताः।
ऋभुः सनत्कुमारश्च द्वावेतावुर्द्ध्वरेतसौ ॥ १९१
पूर्व्वोत्पन्नौ परं तेभ्यः सर्व्वेषामपि पूर्व्वजौ।
व्यतीते लष्टमे कल्पे पुराणौ लोकसाक्षिणौ ॥ १९२
विराजेतामुभौ लोके तेजः संक्षिप्य धिष्ठितौ।
तावुभौ योगकर्म्माणावारोप्यात्मानमात्मनि ॥ १९३
प्रजां धर्म्मञ्च कामञ्च त्यक्त्वा वैराग्यमास्थितौ।
यथोत्पन्नः स एवेह कुमारः स इहोच्यते ॥ १९४
तस्मात् सनत्कुमारेति नामास्येह प्रतिष्ठितम्।
ततोऽभिध्यायतस्तस्य जज्ञिरे मानसाः प्रजाः ॥१९५
तच्छरीरसमुत्पन्नैः कार्य्यैस्तैः कारणैः सह।
क्षेत्रज्ञाः समवर्त्तन्त गात्रेभ्यस्तस्य धीमतः ॥ १९६
ततो देवासुरपितृन् मानुषांश्च चतुष्टयम्।
सिसृक्षुरम्भांस्येतानि स्वमात्मानमयूयुजत् ॥ १९७
ततस्तु युञ्जतस्तस्य तमोमात्रसमुद्भवम्।
समभिध्यायतः सर्गं प्रयत्नेन प्रजापतेः ॥ १९८
ततोऽस्य जघनात् पूर्व्वमसुरा जज्ञिरे सुताः।
असुः प्राणः स्मृतो विप्रास्तज्जन्मानस्ततोऽसुराः॥१९९
यया सृष्टाः सुराः सर्व्वे तां तनुं स व्यपोहत।
सापविद्धा तनुस्तेन सद्यो रात्रिरजायत ॥ २००
सा तमोबहुला यस्मात् ततो रात्रिर्नियामिका।

आवृतास्तमसा रात्रौ प्रजास्तस्मात् स्वपन्त्युत ॥२०१
सृष्ट्वा सुरांस्ततः सो वै तनुमन्यामगृह्णत ।
अव्यक्तां सत्त्वबहुलां ततस्तां सोऽभ्यपूजयत् ॥ २०२
ततस्तां युञ्जतस्तस्य प्रियमासीत् प्रजापतेः ।
ततो मुखात् समुत्पन्ना दीव्यतस्तस्य देवताः ॥२०३
यतोऽस्य दीव्यतो जातास्तेन देवाः प्रकीर्त्तिताः ।
धातुर्दिविति यः प्रोक्तः क्रीडायां स विभाव्यते॥२०४
यस्मात् तस्य तु दीव्यन्तो जज्ञिरे तेन देवताः ।
देवान् सृष्ट्वाथ देवेशस्तनुमन्यामपद्यत ॥ २०५
उत्सृष्टा सा तनुस्तेन सद्योऽहः समजायत ।
तस्मादहो धर्म्मयुक्तं देवताः समुपासते ॥ २०६
सत्त्वमात्रात्मिकामेव ततोऽन्यां सोऽभ्यमन्यत ।
पितृवन्मन्यमानस्य पुत्त्रांस्तान् ध्यायतः प्रभोः ॥२०७
पितरो ह्युपपक्षाभ्यां रात्र्यह्नोरन्तरेऽभवत् ।
तस्मात् ते पितरो देवाः पितृत्वं तेन तेषु तत् ॥ २०८
यया सृष्टास्तु पितरस्तनुं तां स व्यपोहत ।
सापविद्धा तनुस्तेन सद्यः सन्ध्या व्यजायत ॥ २०९
यस्मादहर्देवतानां रात्रिर्या साऽसुरी स्मृता ।
तयोर्मध्ये तु पैत्रीया तनुः सा तु गरीयसी ॥ २१०
तस्माद्देवासुराः सर्व्वे ऋषयो मानवास्तथा ।
उपासन्ते मुदा युक्ता रात्र्यह्नोर्मध्यमां तनुम् ॥ २११
ततो ह्यन्यां पुनर्ब्रह्मा तनुं वै समगृह्णत ।
रजोमात्रात्मिकायान्तु मनसा सोऽसृजत् प्रभुः ॥२१२
रजःप्रियांस्ततः सोऽथ मानसानसृजत् सुतान् ।
मनस्विनस्ततस्तस्य मानवा जज्ञिरे सुताः ॥ २१३
सृष्ट्वा पुनः प्रजाश्चापि स्वां तनुं तामपोहत ।
सापविद्धा तनुस्तेन ज्योत्स्ना सद्यस्त्वजायत ॥ २१४
यस्माद्भवन्ति संहृष्टा ज्योत्स्नाया उद्भवे प्रजाः ।
इत्येतास्तनवस्तेन ह्यपविद्धा महात्मना ॥ २१५
सद्योरात्र्यहनी चैव सन्ध्या ज्योत्स्ना च जज्ञिरे ।
ज्योत्स्ना सन्ध्या अहश्चैव सत्त्वमात्रात्मकं त्रयम् ॥२१६
तमोमात्रात्मिका रात्रिः सा वै तस्मान्निशात्मिका ।
तस्माद्देवा दिवातन्वा तुष्ट्या सृष्टा मुखात् तु वै॥२१७
यस्मात् तेषां दिवा जन्म बलिनस्तेन वै दिवा ।
तन्वा यया सुरान् रात्रौ जघनादसृजत् प्रभुः ॥२१८
प्राणेभ्यो निशिजन्मानो बलिनो निशि तेन ते ।
एतान्येव भविष्याणां देवानामसुरैः सह ॥ २१९
पितृणां मानवानाञ्च अतीतानागतेषु वै ।
मन्वन्तरेषु सर्व्वेषु निमित्तानि भवन्ति हि ॥
ज्योत्स्ना रात्र्यहनी सन्ध्या चत्वार्यम्भांसि तानि
भान्ति यस्मात्ततोऽम्भांसि शब्दोऽयं सुमनीषिणि
भातिर्दीप्तौ निगदितः पुनश्चाथ प्रजापतिः ।
सोऽम्भांस्येतानि सृष्ट्वा तु देव-मानुष-दानवान्
पितॄंश्चैवासृजत् तन्वा आत्मनो विविधान् पुन
तामुत्सृज्य तनुं ज्योत्स्नां ततोऽन्यां प्राप्य स प्र
मूर्त्तिं तमोरजःप्रायां पुनरेवाभ्यपूजयत् ।
अन्धकारे क्षुधाविष्टांस्ततोऽन्यान् सोऽसृजत् प्र
तेन सृष्टाः क्षुधात्मानो अम्भांस्यादातुमुद्यताः ।
अम्भांस्येतानि रक्षाम उक्तवन्तस्तु तेषु ये ॥ २
राक्षसा नाम ते यस्मात् क्षुधाविष्टा निशाचराः
येऽब्रुवन् यक्षमोऽम्भांसि तेषां हृष्टाः परस्पर
तेन ते कर्म्मणा यक्षा गुह्यका गूढकर्म्मणा ।
रक्षेति पालने चापि धातुरेष विभाष्यते ॥ २२
एवञ्च यक्षतिर्धातुर्भक्षणे स निरुच्यते ।
तं दृष्ट्वा ह्यप्रियेणास्य केशाः शीर्णास्तु धीमतः
ते शीर्णाश्चोत्थिता ह्यूर्द्ध्वं ते चैवारुरुहुः प्रभुम् ।
हीनास्तच्छिरसो वाला यस्माच्चैवावसर्पिणः ।
व्यालात्मानः स्मृता वाला हीनत्वादहयः स्मृता
पतत्वात् पन्नगाश्चैव सर्पाश्चैवावसर्पणात् ॥ २२
तस्य क्रोधोद्भवो योऽसावग्निगर्भः सुदारुण
स तु सर्पान् सहोत्पन्नानाविवेश विषात्मकः ॥ २२
सर्पान् सृष्ट्वा ततः क्रुद्धः क्रोधात्मानो विनिर्ममे
वर्णेन कपिशेनोग्रास्ते भूताः पिशिताशनाः ॥ २
भूतत्वात् ते स्मृता भूताः पिशाचाः पिशिताशनाः
प्रसन्नं गायतस्तस्य गन्धर्व्वा जज्ञिरे यदा ॥ २२
धयतीत्येष वै धातुः पानत्वे परिपठ्यते ।
धयन्तो जज्ञिरे वाचं गन्धर्व्वास्तेन ते स्मृताः ॥ २२
अष्टस्वेतासु सृष्टासु देवयोनिषु स प्रभुः ।
ततः स्वच्छन्दतोऽन्यानि वयांसि वयसासृजत् ॥ २
स्वच्छन्दतः स्वच्छन्दांसि वयसा च वयांसि च ।
पशून् सृष्ट्वा स देवेशोऽसृजत् पक्षिगणानपि ॥ २२
मुखतोऽजाः ससर्जाथ वक्षसश्चावयोऽसृजत् ।
गाश्चैवाथोदराद्ब्रह्मा पार्श्वाभ्याञ्च विनिर्ममे ॥ २२
पद्भ्याञ्चाश्वान् समातङ्गान् रासभान् गवयान्

उच्चानच्चतरांश्चैव तथान्यांश्चैव जातयः ॥ २३८
ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे।
एवं पश्वोषधीः सृष्ट्वायूयुजत् सोऽध्वरे प्रभुः ॥२३९
गौरजः पुरुषो मेषो ह्यश्वोऽश्वतर-गर्दभौ।
एतान् ग्राम्यान् पशूनाहुरारण्यांश्च वै निबोधत२४०
श्वापदो द्विखुरो हस्ती वानराः पक्षिपञ्चमाः।
औदकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः ॥ २४१
महिषा गवयाश्चाश्च प्लवङ्गाः शरभा वृकाः।
सिंहस्तु सप्तमस्तेषामारण्याः पशवः स्मृताः ॥ २४२
गायत्रञ्च ऋचश्चैव त्रिवृत् सामरथन्तरम्।
अग्निष्टोमञ्च यज्ञानां निर्म्ममे प्रथमान्मुखात् ॥२४३
यजूंषि त्रैष्टुभं छन्द-स्तोमं पञ्चदशं तथा।
वृहत्साम तथोक्थञ्च दक्षिणादसृजन्मुखात् ॥ २४४
सामानि जगतीच्छन्द-स्तोमं सप्तदशं तथा।
वैरूपमतिरात्रञ्च पश्चिमादसृजन्मुखात् ॥ २४५
एकविंशमथर्वाणमाप्तोऽर्य्यामाणमेव च।
अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् ॥ २४६
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च।
तेजांसि च ससर्ज्जादौ कल्पस्य भगवान् प्रभुः ॥२४७
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे।
ब्रह्मणस्तु प्रजासर्गं सृजतो हि प्रजापतेः ॥ २४८
सृष्ट्वा चतुष्टयं पूर्व्वं देवासुरनरान् पितॄन्।
ततोऽसृजत् सभूतानि स्थावराणि चराणि च ॥२४९
यक्षान् पिशाचान् गन्धर्व्वांस्तथैवाप्सरसां गणान्।
नर-किन्नर-रक्षांसि वयः-पशु-मृगोरगान् ॥ २५०
अव्ययञ्च व्ययञ्चापि यदिदं स्थाणुजङ्गमम्।
तेषां वै यानि कर्म्माणि प्राक्सृष्ट्यां प्रतिपेदिरे॥२५१
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः।
हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मे ऋतानृते ॥ २५२
तद्भाविताः प्रपद्यन्ते तस्मात् तत् तस्य रोचते।
महाभूतेषु सृष्टेषु इन्द्रियार्थेषु मूर्त्तिषु ॥ २५३
विनियोगञ्च भूतानां धातैव व्यदधात् स्वयम्।
केचित् पुरुषकारन्तु प्राहुः कर्म्मसु मानवाः ॥२५४
दैवमित्यपरे विप्राः स्वभावं भूतचिन्तकाः।
पौरुषं कर्म्म दैवञ्च फलवृत्ति स्वभावतः ॥ २५५
न चैकं न पृथग्भावमधिकं न ततो विदुः।
एतदेवञ्च नैकञ्च नामभेदेन नाम्यसे ॥ २५६
कर्म्मस्था विषमं ब्रूयुः सत्त्वस्थाः समदर्शनाः।
नामरूपञ्च भूतानां कृतानाञ्च प्रपञ्चनम् ॥ २५७
वेदशब्देभ्य एवादौ निर्म्ममे स महेश्वरः।
ऋषीणां नामधेयानि याश्च वेदेषु वृत्तयः ॥ २५८
शर्व्वर्य्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः।
एवंविधाः सृष्टयस्तु ब्रह्मणोऽव्यक्तजन्मनः ॥ २५९
शर्व्वर्य्यन्ते प्रदृश्यन्ते सिद्धिमाश्रित्य मानसीम्।
एवम्भूतानि सृष्टानि स्थावराणि चराणि च ॥ २६०
यदास्य ताः प्रजाः सृष्टा न व्यवर्द्धन्त सत्तमाः।
तमोमात्रावृतो ब्रह्मा तदा शोकेन दुःखितः ॥ २६१
ततः स विदधे बुद्धिमर्थनिश्चयगामिनीम्।
अथात्मनि समद्राक्षीत् तमोमात्रां नियामिकाम्२६२
रजः सत्त्वं परित्यज्य वर्त्तमानां स्वधर्म्मतः।
ततः स तेन दुःखेन दुःखं चक्रे जगत्पतिः ॥ २६३
तमश्च व्यनुदत् पश्चाद्रजः सत्त्वं तमावृणोत्।
तत् तमः प्रतिनुन्नं वै मिथुनं समजायत ॥ २६४
अधर्म्मस्तमसो जज्ञे हिंसा शोकादजायत।
ततस्तस्मिन् समुद्भूते मिथुने दारुणात्मके ॥ २६५
गतासुर्भगवानासीत् प्रीतिश्चैनमशिश्रियत्।
स्वां तनुं स ततो ब्रह्मा तामपोहत भास्वराम् ॥२६६
द्विधा कृत्वा स्वकं देहमर्द्धेन पुरुषोऽभवत्।
अर्द्धेन नारी सा तस्य शतरूपा व्यजायत ॥ २६७
प्रकृतिं भूतधात्रीं तां कामाद्वै सृष्टवान् प्रभुः।
सा दिवं पृथिवीञ्चैव महिम्ना व्याप्य धिष्ठिता ॥२६८
ब्रह्मणः सा तनुः पूर्व्वा दिवमावृत्य तिष्ठति।
या त्वर्द्धात् सृजतो नारी शतरूपा व्यजायत ॥२६९
सा देवी नियुतं तप्त्वा तपः परमदुश्चरम्।
भर्त्तारं दीप्तयशसं पुरुषं प्रत्यपद्यत ॥ २७०
स वै स्वायम्भुवः पूर्व्वं पुरुषो मनुरुच्यते।
तस्यैव सप्ततियुगं मन्वन्तरमिहोच्यते ॥ २७१
लेभे स पुरुषः पत्नीं शतरूपामयोनिजाम्।
तया सार्द्धं स रमते तस्मात् सा रतिरुच्यते ॥ २७२
प्रथमः सम्प्रयोगात्मा कल्पादौ समपद्यत।
विराजमसृजद्ब्रह्मा सोऽभवत् पुरुषो विराट् ॥ २७३
सम्राट् च शतरूपा वै वैराजः स मनुः स्मृतः।
स वैराजः प्रजासर्गं ससर्ज्ज पुरुषो मनुः ॥ २७४
वैराजात् पुरुषाद्वीराच्छतरूपा व्यजायत।

प्रियव्रतोत्तानपादौ पुत्त्रौ द्वौ लोकसम्मतौ ॥ २७५
कन्ये द्वे च महाभागे याभ्यां जाता इमाः प्रजाः ।
देवी नाम तथाकूतिः प्रसूतिश्चैव ते उभे ॥ २७६
स्वायम्भुवः प्रसूतिन्तु दक्षाय प्रददौ प्रभुः ।
प्राणो दक्ष इति ज्ञेयः सङ्कल्पो मनुरुच्यते ॥ २७७
रुचेः प्रजापतेः सोऽथ आकूतिं प्रत्यपादयत् ।
आकूत्यां मिथुनं जज्ञे मानसस्य रुचेः शुभम् ॥ २७८
यज्ञश्च दक्षिणा चैव यमलौ सम्बभूवतुः ।
यज्ञस्य दक्षिणायान्तु पुत्त्रा द्वादश जज्ञिरे ॥ २७९
यामा इति समाख्याता देवाः स्वायम्भुवेऽन्तरे ।
एतस्य पुत्त्रा यज्ञस्य तस्माद्यामाश्च ते स्मृताः ॥२८०
अजितश्चैव शुक्रश्च गणौ द्वौ ब्रह्मणा कृतौ ।
यामाः पूर्व्वं प्रजाता ये तेऽभवंस्तु दिवौकसः ॥ २८१
स्वायम्भुवसुतायान्तु प्रसूत्यां लोकमातरः ।
तस्यां कन्याश्चतुर्व्विंशद्दक्षस्त्वजनयत् प्रभुः ॥ २८२
सर्व्वास्ताश्च महाभागाः सर्व्वाः कमललोचनाः ।
भोगवत्यश्च ताः सर्व्वाः सर्व्वास्ता योगमातरः ॥२८३
सर्व्वाश्च ब्रह्मवादिन्यः सर्व्वा विश्वस्य मातरः ।
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ॥२८४
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदश ।
पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ॥ २८५
दाराण्येतानि वै तस्य विहितानि स्वयम्भुवा ।
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ॥ २८६
सती ख्यात्यथ सम्भूतिः स्मृतिः प्रीतिः क्षमा तथा ।
सन्ततिश्चानुसूया च ऊर्ज्जा स्वाहा स्वधा तथा ॥२८७
तास्तथा प्रत्यपद्यन्त पुनरन्ये महर्षयः ।
रुद्रो भृगुर्मरीचिश्च अङ्गिराः पुलहः क्रतुः ॥ २८८
पुलस्त्योऽत्रिर्वशिष्ठश्च पितरोऽग्निस्तथैव च ।
सतीं भवाय प्रायच्छत् ख्यातिञ्च भृगवे ततः ॥ २८९
मरीचये च सम्भूतिं स्मृतिमङ्गिरसे ददौ ।
प्रीतिञ्चैव पुलस्त्याय क्षमां वै पुलहाय च ॥ २९०
क्रतवे सन्ततिं नाम अनुसूयां तथाऽत्रये ।
ऊर्ज्जां ददौ वशिष्ठाय स्वाहामप्यग्नये ददौ ॥ २९१
स्वधाञ्चैव पितृभ्यस्तु तास्वपत्यानि बोधत ।
एताः सर्व्वा महाभागाः प्रजास्वनुस्थिताः स्थिताः ॥२९२
मन्वन्तरेषु सर्व्वेषु यावदाभूतसंप्लवम् ।
श्रद्धा कामं विजज्ञे वै दर्पो लक्ष्मीसुतः स्मृतः ॥२९३

धृत्यास्तु नियमः पुत्त्रस्तुष्ट्याः सन्तोष एव च ।
पुष्ट्या लोभः सुतश्चापि मेधापुत्त्रः श्रुतस्तथा ॥
क्रियायामभवत् पुत्त्रो दण्डः समय एव च ।
बुद्ध्यां बोधः सुतस्तद्वत् प्रमादोऽप्युपजायत ॥
लज्जायां विनयः पुत्त्रो व्यवसायो वसोः सुतः ।
क्षेमः शान्तिसुतश्चापि सुखं सिद्धेव्यजायत ॥
यशः कीर्त्तिसुतश्चापि इत्येते धर्म्मसूनवः ।
कामस्य हर्षः पुत्त्रो वै देव्यां प्रीत्यां व्यजायत ॥
इत्येष वै सुतोदर्कः सर्गो धर्म्मस्य कीर्त्तितः ।
जज्ञे हिंसा त्वधर्म्माद्वै निकृतिञ्चानृतं सुतम् ॥
निकृत्यान्तु द्वयं जज्ञे भयं नरक एव च ।
माया च वेदना चापि मिथुनद्वयमेतयोः ॥ २९
भूयो जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् ।
वेदनायाः सुतश्चापि दुःखं जज्ञे च रौरवः ॥
मृत्यो-र्व्याधि-जरा-शोक-क्रोधासूयाश्च जज्ञिरे
दुःखोत्तराः सुता ह्येते सर्व्वे चाधर्म्मलक्षणाः ॥
नैषां भार्य्यास्तु पुत्त्राश्च सर्व्वे ह्येतेऽपरिग्रहाः ।
इत्येष तामसः सर्गो जज्ञे धर्म्मनियामकः ॥
प्रजाः सृजेति व्यादिष्टो ब्रह्मणा नीललोहितः
सोऽभिध्याय सतीं भार्य्यां निर्म्ममे ह्यात्मसम्भवा
नाधिकान् न च हीनांस्तान् मानसानात्मनः स
सहस्रं हि सहस्राणां सोऽसृजत् कृत्तिवाससः ।
तुल्यानेवात्मनः सर्व्वान् रूप-तेजो-बल-श्रुतैः ।
पिङ्गलान् सनिषङ्गांश्च सकपर्द्दान् सलोहितान्
विशिष्टान् हरिकेशांश्च दृष्टिघ्नांश्च कपालिनः ।
महारूपान् विरूपांश्च विश्वरूपान् स्वरूपिणः
रथिनश्चर्म्मिणश्चैव वर्म्मिणश्च वरूथिनः ।
सहस्रशतबाहूंश्च दिव्यान् भौमान्तरीक्षगान् ॥
स्थूलशीर्षानष्टदंष्ट्रान् द्विजिह्वांस्त्रिलोचनान्
अन्नादान् पिशिताशांश्च आज्यपान् सोमपान्
मीढ़ुषोऽतिकपालांश्च शितिकण्ठोर्द्ध्वरेतसः ।
हव्यादान् श्रुतधर्म्मांश्च धर्म्मिणो ह्यथ वर्द्धिणः ।
आसीनान् धावतश्चैव पञ्चभूतान् सहस्रशः ।
अध्यापिनोऽध्यायिनश्च जपतो युञ्जतस्तथा ॥
धूमवन्तो ज्वलन्तश्च नदीमन्तोऽतिदीप्तिनः ।
वृद्धान् बुद्धिमतश्चैव ब्रह्मिष्ठान् शुभदर्शनान् ॥
नीलग्रीवान् सहस्राक्षान् सर्व्वांश्चाथ क्षमाकरान्

अदृश्यान् सर्व्वभूतानां महायोगान् महौजसः॥३१२
भ्रमन्तोऽभिद्रवन्तश्च प्लवन्तश्च सहस्रशः।
अयातयामानसृजद्रुद्रानेतान् सुरोत्तमान्॥३१३
ब्रह्मा दृष्ट्वाब्रवीदेनं मा स्राक्षीरीदृशीः प्रजाः।
स्रष्टव्या नात्मनस्तुल्याः प्रजा देव नमोऽस्तु ते॥३१४
अन्याः सृज त्वं भद्रं ते प्रजा वै मृत्युसंयुताः।
नारप्स्यन्ते हि कर्म्माणि प्रजा विगतमृत्यवः॥३१५
एवमुक्तोऽब्रवीदेनं नाहं मृत्युजरान्विताः।
प्रजाः स्रक्ष्यामि भद्रं ते स्थितोऽहं त्वं सृज प्रजाः॥३१६
एते ये वै मया सृष्टा विरूपा नीललोहिताः।
सहस्राणां सहस्रन्तु आत्मनो निःसृताः प्रजाः॥३१७
एते देवा भविष्यन्ति रुद्रा नाम महाबलाः।
पृथिव्यामन्तरीक्षे च दिक्षु चैव परिश्रिताः॥३१८
शतरुद्राः समात्मानो भविष्यन्तीति याज्ञिकाः।
यज्ञभाजो भविष्यन्ति सर्व्वदेवगणैः सह॥३१९
मन्वन्तरेषु ये देवा भविष्यन्तीह भेदतः।
सार्द्धं तैरीज्यमानास्ते स्थास्यन्तीहायुगक्षयात्॥३२०
एवमुक्तस्तदा ब्रह्मा महादेवेन धीमता।
प्रत्युवाच नमस्कृत्य हृष्यमाणः प्रजापतिः॥३२१
एवं भवतु भद्रं ते यथा ते व्याहृतं विभो।
ब्रह्मणा समनुज्ञाते तथा सर्व्वमभूत् किल॥३२२
ततःप्रभृति देवेशो न चासूयत वै प्रजाः।
ऊर्द्धरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम्॥३२३
यस्मादुक्तः स्थितोऽस्मीति तस्मात् स्थाणुरिति स्मृतः।
एष देवो महादेवः पुरुषोऽर्कसमद्युतिः॥३२४
अर्द्धनारीनरवपुस्तेजसा ज्वलनोपमः।
स्वेच्छयासौ द्विधाभूतः पृथक् स्त्री पुरुषः पृथक्॥३२५
स एवैकादशार्द्धेन स्थितोऽसौ परमेश्वरः।
तत्र या सा महाभागा शङ्करस्यार्द्धकायिनी॥३२६
प्रागुक्ता तु महादेवी स्त्री सैवेह सती ह्यभूत्।
हिताय जगतां देवी दक्षेणाराधिता पुरा॥३२७
कार्य्यार्थं दक्षिणं तस्याः शुक्लं वामं तथासितम्।
आत्मानं विभजस्वेति प्रोक्ता देवेन शम्भुना॥३२८
सा तथोक्ता द्विधाभूता शुक्ला कृष्णा च वै द्विजाः।
तस्या नामानि वक्ष्यामि शृणुध्वन्तु च समाहिताः॥३२९
स्वाहा स्वधा महाविद्या मेधा लक्ष्मीः सरस्वती।
सती दाक्षायणी विद्या इच्छाशक्तिः क्रियात्मिका॥३३०
अपर्णा चैकपर्णा च तथा चैवैकपाटला।
उमा हैमवती चैव कल्याणी चैकमातृका॥३३१
ख्यातिः प्रज्ञा महाभागा लोके गौरीति विश्रुता।
गणाम्बिका महादेवी नन्दिनी जातवेदसी॥३३२
एकरूपमथैतस्याः पृथग्देहविभावनात्।
सावित्री वरदा पुण्या पावनी लोकविश्रुता॥३३३
आज्ञा आवेशनी कृष्णा तामसी सात्त्विकी शिवा।
प्रकृतिर्विकृता रौद्री दुर्गा भद्रा प्रमाथिनी॥३३४
कालरात्रिर्महामाया रेवती भूतनायिका।
द्वापरान्तविभागे च नामानीमानि सुव्रताः॥३३५
गौतमी कौशिकी चार्य्या चण्डी कात्यायनी सती।
कुमारी यादवी देवी वरदा कृष्णपिङ्गला॥३३६
बर्हिर्ध्वजा शूलधरा परमा ब्रह्मचारिणी।
महेन्द्रोपेन्द्रभगिनी दृषद्वत्येकशूलधृक्॥३३७
अपराजिता बहुभुजा प्रगल्भा सिंहवाहिनी।
शुम्भादिदैत्यहन्त्री च महामहिषमर्द्दिनी॥३३८
अमोघा विन्ध्यनिलया विक्रान्ता गणनायिका।
देव्या नामविकाराणि इत्येतानि यथाक्रमम्॥३३९
भद्रकाल्या मयोक्तानि सम्यक्फलप्रदानि च।
ये पठन्ति नरास्तेषां विद्यते न च पातकम्॥३४०
अरण्ये पर्व्वते वापि पुरे वाप्यथवा गृहे।
रक्षामेतां प्रयुञ्जीत जले वाथ स्थलेऽपि वा॥३४१
व्याघ्र-कुम्भीन-चौरेभ्यो भयस्थाने विशेषतः।
आपत्स्वपि च सर्व्वासु देव्या नामानि कीर्त्तयेत्॥३४२
आर्य्यकग्रहभूतैश्च पूतनामातृभिस्तथा।
अभ्यर्द्दितानां बालानां रक्षामेतां प्रयोजयेत्॥३४३
महादेवीकुले द्वे तु प्रज्ञा श्रीश्च प्रकीर्त्तिते।
आभ्यां देवीसहस्राणि यैर्व्याप्तमखिलं जगत्॥३४४
अनया देवदेवोऽसौ सत्या रुद्रो महेश्वरः।
आतिष्ठत् सर्व्वलोकानां हिताय परमेश्वरः॥३४५
रुद्रः पशुपतिश्चासीत् पुरा दग्धं पुरत्रयम्।
देवाश्च पशवः सर्व्वे बभूवुस्तस्य तेजसा॥३४६
यः पठेच्छृणुयाद्वापि आदिसर्गक्रमं शुभम्।
स याति ब्रह्मणो लोकं श्रावयेद्वा द्विजोत्तमान्॥३४७
इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सृष्टिविस्तारो नाम सप्ततितमोऽध्यायः॥७०॥

## एकसप्ततितमोऽध्यायः।

ऋषय ऊचुः।

समासाद्विस्तराच्चैव सर्गः प्रोक्तस्त्वया शुभः।
कथं पशुपतिश्चासीत् पुरं दग्धुं महेश्वरः॥ १
कथञ्च पशवश्चासन् देवाः सब्रह्मकाः प्रभो।
मयस्य तपसा पूर्व्वं सुदुर्गं निर्म्मितं पुरम्॥ २
हैमञ्च राजतं दिव्यमयोमयमनुत्तमम्।
सुदुर्गं देवदेवेन दग्धमित्येव नः श्रुतम्॥ ३
कथं ददाह भगवान् भगनेत्रनिपातनः।
एकेनेषुनिपातेन दिव्येनापि तदा कथम्॥ ४
विष्णुनोत्पादितैर्भूतैर्न दग्धं तत् पुरत्रयम्।
पुरस्य सम्भवः सर्व्वो वरलाभः पुरा श्रुतः।
इदानीं दहनं सर्व्वं वक्तुमर्हसि सुव्रतः॥ ५
तेषां तद्वचनं श्रुत्वा सूतः पौराणिकोत्तमः।
यथा श्रुतं तथा प्राह व्यासाद्विश्वार्थसूचकात्॥ ६

सूत उवाच।

त्रैलोक्यस्यास्य शापाद्धि मनोवाक्कायसम्भवात्।
निहते तारके दैत्ये तारपुत्रे सबान्धवे॥ ७
स्कन्देन वा प्रयत्नेन तस्य पुत्रा महाबलाः।
विद्युन्माली तारकाक्षः कमलाक्षश्च वीर्य्यवान्॥ ८
तपस्तेपुर्महात्मानो महाबलपराक्रमाः।
तप उग्रं समास्थाय नियमे परमे स्थिताः॥ ९
तपसा कर्षयामासुर्देहान् स्वान् दानवोत्तमाः।
तेषां पितामहः प्रीतो वरदः प्रददौ वरम्॥ १०
अवध्यत्वञ्च सर्व्वेषां सर्व्वभूतेषु सर्व्वदा।
सहिता वरयामासुः सर्व्वलोकपितामहम्॥ ११
तानब्रवीत् तदा देवो लोकानां प्रभुरव्ययः॥ १२
नास्ति सर्व्वामरत्वं वै निवर्त्तध्वमतोऽसुराः।
अन्यं वरं वृणीध्वं वै यादृशं सम्प्ररोचते॥ १३
ततस्ते सहिता दैत्याः सम्प्रधार्य्य परस्परम्।
ब्रह्माणमब्रुवन् दैत्याः प्रणिपत्य जगद्गुरुम्॥ १४

दैत्या ऊचुः।

वयं पुराणि त्रीण्येव समास्थाय महीमिमाम्।
विचरिष्याम लोकेऽस्मिन् त्वत्प्रसादाज्जगद्गुरो॥ १५
तथा वर्षसहस्रेषु समेयाम परस्परम्।
एकीभावं गमिष्यन्ति पुराण्येतानि चानघ॥ १६
समागतानि चैतानि यो हन्याद्भगवंस्तदा।
एकेनैवेषुणा देव स नो मृत्युर्भविष्यति॥ १७
एवमस्त्विति तान् देवः प्रत्युक्त्वा प्राविशद्दिवम्।
ततो मयः स्वतपसा चक्रे वीरः पुराण्यथ॥ १८
काञ्चनं दिवि तत्रासीदन्तरीक्षे च राजतम्।
आयसञ्चाभवद्भूमौ पुरं तेषां महात्मनाम्॥ १९
एकैकं योजनशतं विस्तारायामतः समम्।
काञ्चनं तारकाक्षस्य कमलाक्षस्य राजतम्॥ २०
विद्युन्मालेश्चायसं वै त्रिविधं दुर्गमुत्तमम्।
मयश्च बलवांस्तत्र दैत्यदानवपूजितः॥ २१
हैरण्ये राजते चैव कृष्णायसमये तथा।
आलयञ्चात्मनः कृत्वा तत्रास्ते बलवांस्तदा॥ २२
एवं बभूवुर्दैत्यानामतिदुर्गाणि सुव्रताः।
पुराणि त्रीणि विप्रेन्द्रास्त्रैलोक्यमिव चापरम्॥ २३
पुरत्रये तदा जाते सर्व्वे दैत्या जगत्त्रये।
पुरत्रयं प्रविश्यैव बभूवुस्ते बलाधिकाः॥ २४
कल्पद्रुमसमाकीर्णं गजवाजिसमाकुलम्।
नानाप्रासादसङ्कीर्णं मणिजालैः समावृतम्॥ २५
सूर्य्यमण्डलसङ्काशैर्विमानैर्विश्वतोमुखैः।
पद्मरागमयैः शुभ्रैः शोभितं चन्द्रसन्निभैः॥ २६
प्रासादैर्गोपुरैर्दिव्यैः कैलासशिखरोपमैः।
शोभितं त्रिपुरं तेषां पृथक् पृथगनुत्तमैः॥ २७
दिव्यस्त्रीभिः सुसम्पूर्णं गन्धर्व्वैः सिद्धचारणैः।
रुद्रालयैः प्रतिगृहं साग्निहोत्रैर्द्विजोत्तमाः॥ २८
वापी-कूप-तड़ागैश्च दीर्घिकाभिस्तु सर्व्वतः।
मत्तमातङ्गयूथैश्च तुरङ्गैश्च सुशोभनैः॥ २९
रथैश्च विविधाकारैर्विचित्रैर्विश्वतोमुखैः।
सभाप्रपादिभिश्चैव क्रीड़ास्थानैः पृथक् पृथक्॥ ३०
वेदाध्ययनशालाभिर्विविधाभिः समन्ततः।
अधृष्यं मनसाप्यन्यैर्मयस्यैव च मायया॥ ३१
पतिव्रताभिः सर्व्वत्र सेवितं मुनिपुङ्गवाः।
कृत्वापि सुमहत् पापमपापैः शङ्करार्चनात्॥ ३२
दैत्येश्वरैर्महाभागैः सदारैः ससुतैर्द्विजाः।
श्रौतस्मार्त्तार्थधर्म्मज्ञैस्तद्धर्म्मनिरतैः सदा॥ ३३
महादेवेतरं त्यक्त्वा देवं तस्यार्च्चने स्थितैः।
व्यूढोरस्कैर्वृषस्कन्धैः सर्व्वायुधधरैः सदा॥ ३४
सर्व्वदा क्षुभितैश्चैव दावाग्निसदृशेक्षणैः।

अश्वान्तैः कुपितैश्चैव कुब्जैर्वामनकैस्तथा ॥ ३५
नीलोत्पलदलप्रख्यैर्नीलकुञ्चितमूर्द्धजैः ।
नीलाद्रिमेरुसङ्काशैर्नीरदोपमनिस्वनैः ।
मयेन रचितैः सर्व्वैः शिक्षितैर्युद्धलालसैः ॥ ३६

अथ समररतैः सदा समन्ता-
च्छिवपदपूजनया सुलब्धवीर्य्यैः ।
रविमरुदमरेन्द्रसन्निकाशैः
सुरमथनैः सुदृढैः सुसेवितं तत् ॥ ३७

सेन्द्रा देवा द्विजश्रेष्ठा द्रुमा दावाग्निना यथा ।
पुरत्रयाग्निना दग्धा ह्यभवन् दैत्यवैभवात् ॥ ३८
अथैवं ते तदा दग्धा देवा देवेश्वरं हरिम् ।
अभिवन्द्य तदा प्राहुस्तमप्रतिमवर्च्चसम् ॥ ३९
सोऽपि नारायणः श्रीमान् चिन्तयामास चेतसा ।
किं कार्य्यं देवकार्य्येषु भगवानिति स प्रभुः ॥ ४०
तदा सस्मार वै यज्ञं यज्ञमूर्त्तिर्जनार्द्दनः ।
यज्वा यज्ञभुगीशानो यज्वनां फलदः प्रभुः ॥ ४१
ततो यज्ञः स्मृतस्तेन देवकार्य्यार्थसिद्धये ।
देवं ते पुरुषञ्चैव प्रणेमुस्तुष्टुवुस्तदा ॥ ४२
भगवानपि तं दृष्ट्वा यज्ञं प्राह सनातनम् ।
सनातनस्तदा सेन्द्रान् देवानालोक्य चाच्युतः ॥ ४३

श्रीविष्णुरुवाच ।

अनेनोपसदा देवा यजध्वं परमेश्वरम् ।
पुरत्रयविनाशाय जगत्त्रयविभूतये ॥ ४४

सूत उवाच ।

अथ तस्य वचः श्रुत्वा देवदेवस्य धीमतः ।
सिंहनादं महत् कृत्वा यज्ञेशं तुष्टुवुः सुराः ॥ ४५
ततः सञ्चिन्त्य भगवान् स्वयमेव जनार्द्दनः ।
पुनः प्राह स सर्व्वांस्तांस्त्रिदशांस्त्रिदशेश्वरः ॥ ४६
हत्वा दग्ध्वा च भूतानि भुक्त्वा चान्यायतोऽपि वा ।
यजेद्यदि महादेवमपापो नात्र संशयः ॥ ४७
अपापा नैव हन्तव्याः पापा एव न संशयः ।
हन्तव्याः सर्व्वयत्नेन कथं वध्याः सुरोत्तमाः ॥ ४८
असुरा दुर्म्मदाः पापा अपि दैवैर्महाबलैः ।
तस्मान्न वध्या रुद्रस्य प्रभावात् परमेष्ठिनः ॥ ४९
कोऽहं ब्रह्माथवा देवा दैत्या देवारिसूदनाः ।
मुनयश्च महात्मानः प्रसादेन विना प्रभोः ॥ ५०
यः सप्तविंशको नित्यः परात्परतरः प्रभुः ।
विश्वामरेश्वरो वन्द्यो विश्वाधारो महेश्वरः ॥ ५१
स एव सर्व्वदेवेशः सर्व्वेषामपि शङ्करः ।
लीलया देवदैत्येन्द्र-विभागमकरोद्धरः ॥ ५२
तस्यांशमेकं सम्पूज्य देवा देवत्वमागताः ।
ब्रह्मा ब्रह्मत्वमापन्नो ह्यहं विष्णुत्वमेव च ॥ ५३
तमपूज्य जगत्यस्मिन् कः पुमान् सिद्धिमिच्छति ।
तस्मात् तेनैव हन्तव्या लिङ्गार्च्चनविधेर्बलात् ॥ ५४
धर्म्मनिष्ठाश्च ते सर्व्वे श्रौतस्मार्त्तविधौ स्थिताः ।
तथापि यजमानेन रौद्रेणोपसदा प्रभुम् ।
रुद्रमिष्ट्वा यथान्यायं जेष्यामो दैत्यसत्तमान् ॥ ५५

सतारकाक्षेण मयेन गुप्तं
स्वस्थञ्च गुप्तं स्फटिकाभमेकम् ।
को नाम हन्तुं त्रिपुरं समर्थो
मुक्त्वा त्रिनेत्रं भगवन्तमेकम् ॥ ५६

सूत उवाच ।

एवमुक्त्वा हरिश्चेष्ट्वा यज्ञेनोपसदा प्रभुम् ।
उपविष्टो ददर्शाथ भूतसङ्घान् सहस्रशः ॥ ५७
शूल-शक्ति-गदाहस्तान् टङ्कोपलशिलायुधान् ।
नानाप्रहरणोपेतान् नानावेशधरांस्तदा ॥ ५८
कालाग्निरुद्रसङ्काशान् कालरुद्रोपमांस्तदा ।
प्राह देवो हरिः साक्षात् प्रणिपत्य स्थितान् प्रभुः ॥ ५९

विष्णुरुवाच ।

दग्ध्वा भित्त्वा च भुक्त्वा च गत्वा दैत्यपुरत्रयम् ।
पुनर्यथागतं वीरा गन्तुमर्हथ भूतये ॥ ६०
ततः प्रणम्य देवेशं भूतसङ्घाः पुरत्रयम् ।
प्रविश्य नष्टास्ते सर्व्वे शलभा इव पावकम् ॥ ६१
ततस्तु नष्टास्ते सर्व्वे भूता देवेश्वराज्ञया ।
ननृतुर्मुमुदुश्चैव जगुर्दैत्याः सहस्रशः ।
तुष्टुवुर्देवदेवेशं परमात्मानमीश्वरम् ॥ ६२
ततः पराजिता देवा ध्वस्तवीर्य्याः क्षणेन तु ।
सेन्द्राः सङ्गम्य देवेशमुपेन्द्रं धिष्ठिता भयात् ॥ ६३
तान् दृष्ट्वा चिन्तयामास भगवान् पुरुषोत्तमः ।
किं कृत्यमिति सन्तप्तः सन्तप्तान् सेन्द्रकान् क्षणम् ॥ ६४
कथन्तु तेषां दैत्यानां बलं हत्वा प्रयत्नतः ।
देवकार्य्यं करिष्यामि प्रसादात् परमेष्ठिनः ॥ ६५
पापं विचारतो नास्ति धर्म्मिष्ठानां न संशयः ।
तस्माद्दैत्या न वध्यास्ते भूतैश्चोपसदोद्भवैः ॥ ६६

शापं ददति धर्म्मेण धर्म्मे सर्व्वं प्रतिष्ठितम्।
धर्म्मादैश्वर्य्यमित्येषा श्रुतिरेषा सनातनी ॥ ६७
दैत्याश्चैते हि धर्म्मिष्ठाः सर्व्वे त्रिपुरवासिनः।
तस्मादवध्यतां प्राप्ता नान्यथा द्विजपुङ्गवाः ॥ ६८
कृत्वापि सुमहत् पापं रुद्रमभ्यर्च्चयन्ति ये।
मुच्यन्ते पातकैः सर्व्वैः पद्मपत्रमिवाम्भसा ॥ ६९
पूजया भोगसम्पत्तिरवश्यं जायते द्विजाः।
तस्मात् ते भोगिनो दैत्या लिङ्गार्च्चनपरायणाः ॥ ७०
तस्मात् कृत्वा धर्म्मविघ्नमहं देवाः स्वमायया।
दैत्यानां देवकार्य्यार्थं जेष्येऽहं त्रिपुरं क्षणात् ॥ ७१

सूत उवाच।

विचार्य्यैवं ततस्तेषां भगवान् पुरुषोत्तमः।
कर्त्तुं व्यवसितस्त्वभूद्धर्म्मविघ्नं सुरारिणाम् ॥ ७२
असृजच्च महातेजाः पुरुषञ्चात्मसम्भवम्।
मायी मायामयं तेषां धर्म्मविघ्नार्थमच्युतः ॥ ७३
शास्त्रञ्च शास्ता सर्व्वेषामकरोत् कामरूपधृक्।
सर्व्वसम्मोहनं मायी दृष्टप्रत्ययसंयुतम् ॥ ७४
एतत् स्वाङ्गभवायैव पुरुषायोपदिश्य तु।
मायी मायामयं शास्त्रं ग्रन्थषोड़शलक्षकम् ॥ ७५
श्रौतस्मार्त्तविरुद्धञ्च वर्णाश्रमविवर्ज्जितम्।
इहैव स्वर्गनरकं प्रत्ययं नान्यथा पुनः ॥ ७६
तच्छास्त्रमुपदिश्यैव पुरुषायाच्युतः स्वयम्।
पुरत्रयविनाशाय प्राहैनं पुरुषं हरिः ॥ ७७
गन्तुमर्हसि नाशाय भो तूर्णं पुरवासिनाम्।
धर्म्मास्तथा प्रणश्यन्तु श्रौतस्मार्त्ता न संशयः ॥ ७८
ततः प्रणम्य तं मायी मायाशास्त्रविशारदः।
प्रविश्य तत् पुरं तूर्णं मुनिर्मायां तदाकरोत् ॥ ७९
मायया तस्य ते दैत्याः पुरत्रयनिवासिनः।
श्रौतं स्मार्त्तञ्च सन्त्यज्य तस्य शिष्यास्तदाभवन् ॥ ८०
तत्यजुश्च महादेवं शङ्करं परमेश्वरम् ॥ ८१
नारदोऽपि तदा मायी नियोगान्मायिनः प्रभोः।
प्रविश्य तत् पुरं तेन मायिना सह दीक्षितः ॥ ८२
मुनिः शिष्यैः प्रशिष्यैश्च संवृतः सर्व्वतः स्वयम्।
स्त्रीधर्म्मञ्चाकरोत् स्त्रीणां दुश्चारफलसिद्धिदम् ॥ ८३
चक्रुस्ताः सर्व्वदा लब्धा सद्य एव फलं स्त्रियः।
जनासक्ता बभूवुस्ता विनिन्द्य पतिदेवताः ॥ ८४
अद्यापि गौरवात् तस्य नारदस्य कलौ मुनेः।
नार्य्यश्चरन्ति सन्त्यज्य भर्त्तॄन् स्वैरं वृथाधमाः ॥ ८५
स्त्रीणां माता पिता बन्धुः सखा मित्रञ्च बान्धवः।
भर्त्ता एव न सन्देहस्तथाप्यासन्हमायया ॥ ८६
कृत्वापि सुमहत् पापं या भर्त्तुः प्रेमसंयुता।
प्राप्नुयात् परमं स्वर्गं नरकञ्च विपर्य्ययात् ॥ ८७
पुरैका मुनिशार्दूलाः सर्व्वधर्म्मान् सदा पतिम्।
सन्त्यज्यापूजयन् साध्व्यो देवानन्यान् जगद्गुरून्।
ताः स्वर्गलोकमासाद्य मोदन्ते विगतज्वराः।
नरकञ्च जगामान्या तस्माद्भर्त्ता परा गतिः ॥ ८८
तथापि भर्त्तांस्त्यन् स्वान्यक्ता बभूवुः स्वैरवृत्तयः।
मायया देवदेवस्य विष्णोस्तस्याज्ञया प्रभोः ॥ ८९
अलक्ष्मीश्च स्वयं तस्य नियोगात् त्रिपुरं गता।
या लक्ष्मीस्तपसा तेषां लब्धा देवेश्वरादजात् ॥ ९०
बहिर्गता परित्यज्य नियोगाद्ब्रह्मणः प्रभोः।
बुद्धिमोहं तथाभूतं विष्णुमायाविनिर्म्मितम् ॥ ९१
तेषां दत्त्वा क्षणं देवस्तासां मायी च नारदः।
सुखासीनौ ह्यसम्भ्रान्तौ धर्म्मविघ्नार्थमव्ययौ ॥ ९२
एवं नष्टे तदा धर्म्मे श्रौतस्मार्त्ते सुशोभने।
पाषण्डे स्थापिते तेन विष्णुना विश्वयोनिना ॥ ९३
त्यक्ते महेश्वरे दैत्यैस्त्यक्ते लिङ्गार्च्चने तथा।
स्त्रीधर्म्मे निखिले नष्टे दुराचारे व्यवस्थिते ॥ ९४
कृतार्थ इव देवेभ्यो देवैः सार्द्धमुमापतिम्।
तपसा प्राप्य सर्व्वज्ञं तुष्टाव पुरुषोत्तमः ॥ ९५

श्रीभगवानुवाच।

महेश्वराय देवाय नमस्ते परमात्मने।
नारायणाय शर्व्वाय ब्रह्मणे ब्रह्मरूपिणे।
शाश्वताय ह्यनन्ताय अव्यक्ताय च ते नमः ॥ ९६

सूत उवाच।

एवं स्तुत्वा महादेवं दण्डवत् प्रणिपत्य च।
जजाप रुद्रं भगवान् कोटिवारं जले स्थितः ॥ ९७
देवाश्च सर्व्वे ते देवं तुष्टुवुः परमेश्वरम्।
सेन्द्राःससाध्याः सयमाः सरुद्राः समरुद्गणाः ॥ ९८

देवा ऊचुः।

नमः सर्व्वात्मने तुभ्यं शङ्करायार्त्तिहारिणे।
रुद्राय नीलरुद्राय कद्रुद्राय प्रचेतसे ॥ १००
गतिर्नः सर्व्वदास्माभिर्वन्द्यो देवारिमर्द्दनः।
[illegible] अनन्तश्चाक्षयः प्रभुः ॥ १०१

प्रकृतिः पुरुषः साक्षात् स्रष्टा हर्त्ता जगद्गुरो।
त्राता नेता जगत्यस्मिन् द्विजानां द्विजवत्सल ॥ १०२
वरदो वाङ्मयो वाच्यो वाच्यवाचकवर्ज्जितः।
याच्यो मुक्त्यर्थमीशानो योगिभिर्योगविभ्रमैः ॥१०३
हृत्पुण्डरीकसुषिरे योगिनां संस्थितः सदा।
वदन्ति सूरयः सन्तं परं ब्रह्मस्वरूपिणम् ॥ १०४
भवन्तं तत्त्वमित्यार्य्यास्तेजोराशिं परात्परम्।
परमात्मानमित्याहुरस्मिन् जगति तद्विभो ॥ १०५
दृष्टं श्रुतं स्थितं सर्व्वं जायमानं जगद्गुरो।
अणोरल्पतरं प्राहुर्महतोऽपि महत्तरम् ॥ १०६
सर्व्वतःपाणिपादं त्वां सर्व्वतोऽक्षि-शिरो-मुखम्।
सर्व्वतःश्रुतिमल्लोके सर्व्वमावृत्य तिष्ठसि ॥ १०७
महादेवमनिर्द्देश्यं सर्व्वज्ञं त्वामनामयम्।
विश्वरूपं विरूपाक्षं सदाशिवमनामयम् ॥ १०८
कोटिभास्करसङ्काशं कोटिशीतांशुसन्निभम्।
कोटिकालाग्निसङ्काशं षड्विंशकमनीश्वरम् ॥ १०९
प्रवर्त्तकं जगत्यस्मिन् प्रकृतेः प्रपितामहम्।
वदन्ति वरदं देवं सर्व्वावासं स्वयम्भुवम् ॥ ११०
श्रुतयः श्रुतिसारं त्वां श्रुतिसारविदो जनाः ॥ १११
अदृष्टमस्माभिरनेकमूर्त्ते
विना कृतं यद्भवताथ लोके।
त्वमेव दैत्यान् सुरभूतसङ्घान्
देवान् नरान् स्थावरजङ्गमांश्च ॥ ११२
पाहि नान्या गतिः शम्भो विनिहत्यासुरोत्तमान्।
मायया मोहिताः सर्व्वे भवतः परमेश्वर ॥ ११३
यथा तरङ्गा लहरीसमूहा
युध्यन्ति चान्योऽन्यमपां निधौ च।
जलाश्रया देव जड़ीकृताश्च
सुरासुरास्तद्वदजस्य सर्व्वम् ॥ ११४
सूत उवाच।
य इदं प्रातरुत्थाय शुचिर्भूत्वा जपेन्नरः।
शृणुयाद्वा स्तवं पुण्यं सर्व्वकाममवाप्नुयात् ॥ ११५
स्तुतस्त्वेवं सुरैर्विष्णोर्जपेन च अहेश्वरः।
सोमः सोमामथालिङ्ग्य नन्दिदत्तकरः स्मयन् ॥ ११६
प्राह गम्भीरया वाचा देवानालोक्य शङ्करः।
ज्ञातं मयेदमधुना देवकार्य्यं सुरेश्वराः ॥ ११७
विष्णोर्मायाबलञ्चैव नारदस्य च धीमतः।
तेषामधर्म्मनिष्ठानां दैत्यानां देवसत्तमाः।
पुरत्रयविनाशञ्च करिष्येऽहं सुरोत्तमाः ॥ ११८
सूत उवाच।
अथ सब्रह्मका देवाः सेन्द्रोपेन्द्राः समागताः।
श्रुत्वा प्रभोस्तदा वाक्यं प्रणेमुस्तुष्टुवुश्च ते ॥ ११९
अथैतदन्तरे देवी देवमालोक्य विस्मिता।
लीलाम्बुजेन चाहत्य कलमाह वृषध्वजम् ॥ १२०
देव्युवाच।
क्रीड़मानं विभो पश्य षण्मुखं रविसन्निभम्।
पुत्रं पुत्रवतां श्रेष्ठ भूषितं भूषणैः शुभैः ॥ १२१
मुकुटैः कटकैश्चैव कुण्डलैर्वलयैः शुभैः।
नूपुरैश्छन्नवारैश्च तथाह्युदरबन्धनैः ॥ १२२
किङ्किणीभिरनेकाभिर्हैमैरश्वत्थपत्रकैः।
कल्पकद्रुमजैः पुष्पैः शोभितैरलकैः शुभैः ॥ १२३
हारैर्व्वारिजरागादि-मणिचित्रैस्तथाङ्गदैः।
मुक्ताफलमयैर्हारैः पूर्णचन्द्रसमप्रभैः ॥ १२४
तिलकैश्च महादेव पश्य पुत्रं सुशोभनम्।
अञ्जितं कुङ्कुमाद्यैश्च वृत्तं (क)भसितनिर्म्मितम् ॥ १२५
वक्त्रवृन्दञ्च पश्येश वृन्दं कामलकं यथा।
नेत्राणि च विभो पश्य शुभानि त्वं शुभानि च ॥ १२६
अञ्जनानि विचित्राणि मङ्गलार्थञ्च मातृभिः।
गङ्गादिभिः कृत्तिकाद्यैः स्वाहया च विशेषतः ॥१२७
इत्येवं लोकमातुश्च वाग्भिः सम्बोधितः शिवः।
न ययौ तृप्तिमीशानः पिबन् स्कन्दाननामृतम् ॥१२८
न सस्मार च तान् देवान् दैत्यशस्त्रनिपीड़ितान्।
स्कन्दमालिङ्ग्य चाघ्राय नृत्य पुत्रेत्युवाच ह ॥ १२९
सोऽपि लीलालसो बालो ननर्त्तार्त्तिहरः प्रभुः।
सहैव ननृतुश्चान्ये सह तेन गणेश्वराः ॥ १३०
त्रैलोक्यमखिलं तत्र ननर्त्तेशाज्ञया क्षणम्।
नागाश्च ननृतुः सर्व्वे देवाः सेन्द्रपुरोगमाः ॥ १३१
तुष्टुवुर्गणपाः स्कन्दं मुमोदाम्बा च मातरः।
ससृजुः पुष्पवर्षाणि जगुर्गन्धर्व्वकिन्नराः ॥ १३२
नृत्यामृतं तदा पीत्वा पार्व्वतीपरमेश्वरौ।
अवापतुस्तदा तृप्तिं नन्दिना च गणेश्वराः ॥ १३३
ततः स नन्दी सह षण्मुखेन
तथा च सार्द्धं गिरिराजपुत्र्या।

(क) भालस्थ वर्तुलतिलकमित्यर्थः।

विवेश दिव्यं भवनं भवोऽपि
यथाम्बुदोऽन्याम्बुदमम्बुदाभः ॥ १३४
द्वारस्य पार्श्वे ते तस्थुर्देवा देवस्य धीमतः।
तुष्टुवुश्च महादेवं किञ्चिदुद्विग्नचेतसः ॥ १३५
किन्तु किन्त्विति चान्योन्यं प्रेक्ष्य चेतत् समाकुलाः।
पापा वयमिति ह्यन्ये अभाग्याश्चेति चापरे ॥ १३६
भाग्यवन्तश्च दैत्येन्द्रा इति चान्ये सुरेश्वराः।
पूजाफलमिदं तेषामित्यन्येनेति चापरे ॥ १३७
एतस्मिन्नन्तरे तेषां श्रुत्वा शब्दाननेकशः।
कुम्भोदरो महातेजा दण्डेनाताड़यत् सुरान् ॥१३८
दुद्रुवुस्ते भयाविष्टा देवा हाहेतिवादिनः।
अपतन् मुनयश्चान्ये देवाश्च धरणीतले ॥ १३९
अहो विधेर्बलञ्चेति मुनयः कश्यपादयः।
दृष्ट्वापि देवदेवेशं देवानाञ्चासुरद्विषाम् ॥ १४०
अभाग्यान्न समाप्तन्तु कार्य्यमित्यपरे द्विजाः।
प्रोचुर्नमः शिवायेति पूज्य चाल्पतरं हृदि ॥ १४१
ततः कपर्द्दी नन्दीशो महादेवप्रियो मुनिः।
शूली माली तथा हाली कुण्डली वलयी गदी।
वृषमारुह्य सश्वेतं ययौ तस्याज्ञया तदा ॥ १४२
ततो वै नन्दिनं दृष्ट्वा गणः कुम्भोदरोऽपि सः।
प्रणम्य नन्दिनं मूर्द्ध्ना सह तेन त्वरन् ययौ ॥ १४३
नन्दी भाति महातेजा वृषपृष्ठे वृषध्वजः।
सगणो गणसेनानीर्मेरुपृष्ठे यथा भवः ॥ १४४
दशयोजनविस्तीर्णं मुक्ताजालैरलङ्कृतम्।
सितातपत्रं शैलादेराकाशमिव भाति तत् ॥ १४५
तत्रान्तर्बद्धमाला सा मुक्ताफलमयी शुभा।
गङ्गाकाशान्निपतिता भाति मूर्द्ध्नि विभोर्यथा ॥ १४६
अथ दृष्ट्वा गणाध्यक्षं देवदुन्दुभयः शुभाः।
नियोगाद्दक्षिणः सर्व्वे विनेदुर्मुनिपुङ्गवाः ॥ १४७
तुष्टुवुश्च गणेशानं वाग्भिरिष्टप्रदं शुभम्।
यथा देवा भवं दृष्ट्वा प्रीतिकण्टकितत्वचः ॥ १४८
नियोगाद्दक्षिणो मूर्द्ध्नि पुष्पवर्षश्च खेचराः।
ववृषुश्च सुगन्धाढ्यं नन्दिनो गगनोद्दितम् ॥ १४९
वृष्ट्या तुष्टस्तदा रेजे तुष्ट्या पुष्ट्या यथार्थया।
नन्दी भवश्चान्द्रया तु स्नातया गन्धवारिणा ॥ १५०
पुष्पैर्नानाविधैस्तत्र भाति पृष्ठं वृषस्य तत्।
सङ्कीर्णन्तु दिवः पृष्ठं नक्षत्रैरिव सुव्रताः ॥ १५१
कुसुमैः संवृतो नन्दी वृषपृष्ठे रराज सः।
दिवः पृष्ठे यथा चन्द्रो नक्षत्रैरिव सुव्रताः ॥
तं दृष्ट्वा नन्दिनं देवाः सेन्द्रोपेन्द्रास्तथाविधाः।
तुष्टुवुर्गणपेशानं देवदेवमिवापरम् ॥ १५३

देवा ऊचुः।

नमस्ते रुद्रभक्ताय रुद्रजाप्यरताय च।
रुद्रभक्तार्त्तिनाशाय रौद्रकर्म्मरताय ते ॥ १५४
कुष्माण्डगणनाथाय योगिनां पतये नमः।
सर्व्वदाय शरण्याय सर्व्वज्ञायार्त्तिहारिणे ॥
वेदानां पतये चैव वेदवेद्याय ते नमः।
वज्रिणे वज्रदंष्ट्राय वज्रिवज्रनिवारिणे ॥ १५६
वज्रालङ्कृतदेहाय वज्रिणाराधिताय ते।
रक्ताय रक्तनेत्राय रक्ताम्बरधराय ते ॥ १५७
रक्तानां भवपादाब्जे रुद्रलोकप्रदायिने।
नमः सेनाधिपतये रुद्राणां पतये नमः ॥ १५८
भूतानां भुवनेशानां पतये पापहारिणे।
रुद्राय रुद्रपतये रौद्रपापहराय ते ॥ १५९
नमः शिवाय सौम्याय रुद्रभक्ताय ते नमः ॥

सूत उवाच।

ततः प्रीतो गणाध्यक्षः प्राह देवांश्छलादजः।
रथञ्च सारथिं शम्भोः कार्म्मुकं शरमुत्तमम्।
कर्त्तुमर्हथ यत्नेन नष्टं मत्वा पुरत्रयम् ॥ १६१
अथ ते ब्रह्मणा सार्द्धं तथा वै विश्वकर्म्मणा।
रथं चक्रुः सुसंरब्धा देवदेवस्य धीमतः ॥ १६२

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे पुरदाहे नन्दिकेश्वरवाक्यं नामैकसप्ततितमोऽध्यायः ॥७१॥

---

## द्विसप्ततितमोऽध्यायः।

सूत उवाच।

अथ रुद्रस्य देवस्य निर्म्मितो विश्वकर्म्मणा।
सर्व्वलोकमयो दिव्यो रथो यत्नेन सादरम् ॥ १
सर्व्वभूतमयश्चैव सर्व्वदेवनमस्कृतः।
सर्व्वदेवमयश्चैव सौवर्णः सर्व्वसम्मतः ॥ २
रथाङ्गं दक्षिणं सूर्य्यो वामाङ्गं सोम एव च।
दक्षिणं द्वादशारं हि षोड़शारं तथोत्तरम् ॥ ३

अरेषु तेषु विप्रेन्द्राश्चादित्या द्वादशैव तु ।
अग्निः षोड़शारेषु कला वामस्य सुव्रताः ॥ ४
ऋचाणि च तदा तस्य वामस्यैव तु भूषणम् ।
नेम्यः षड़्तवश्चैव तयोर्वै विप्रपुङ्गवाः ॥ ५
पुष्करञ्चान्तरीक्षं वै रथनीड़श्च मन्दरः ।
अस्ताद्रिरुदयाद्रिश्च उभौ तौ कूवरौ स्मृतौ ॥ ६
अधिष्ठानं महामेरुराश्रयाः केसराचलाः ।
वेगः संवत्सरस्तस्य अयने चक्रसङ्गमौ ॥ ७
मुहूर्त्ता वन्धुरास्तस्य शम्याश्चैव कलाः स्मृताः ।
तस्य काष्ठाः स्मृता घोणा चाक्षदण्डाः क्षणाश्च वै ॥ ८
निमेषाश्चानुकर्षाश्च ईषा चास्य लवाः स्मृताः ।
द्यौर्वरूथं रथस्यास्य स्वर्गमोक्षावुभौ ध्वजौ ॥ ९
धर्म्मो विरागो दण्डोऽस्य यज्ञा दण्डाश्रयाः स्मृताः
दक्षिणाः सन्धयस्तस्य लोहाः पञ्चाशदग्नयः ॥ १०
युगान्तकोटी तौ तस्य धर्म्मकामावुभौ स्मृतौ ।
ईषादण्डस्तथा व्यक्तं बुद्धिस्तस्यैव नड्वलः ॥ ११
कोणस्तथा ह्यहङ्कारो भूतानि च बलं स्मृतम् ।
इन्द्रियाणि च तस्यैव भूषणानि समन्ततः ॥ १२
श्रद्धा च गतिरस्यैव वेदास्तस्य हयाः स्मृताः ।
पदानि भूषणान्येव षड़ङ्गान्युपभूषणम् ॥ १३
पुराण-न्याय-मीमांसा-धर्म्मशास्त्राणि सुव्रताः ।
बालाश्रयाः पटाश्चैव सर्व्वलक्षणसंयुताः ॥ १४
मन्त्रा घण्टाः स्मृतास्तेषां वर्णाः पादास्तथाश्रमाः ।
अवच्छेदो ह्यनन्तस्तु सहस्रफणभूषितः ॥ १५
दिशः पादा रथस्यास्य तथा चोपदिशश्च ह ।
पुष्कराद्याः पताकाश्च सौवर्णा रत्नभूषिताः ॥ १६
समुद्रास्तस्य चत्वारो रथकम्बलिकाः स्मृताः ।
गङ्गाद्याः सरितः श्रेष्ठाः सर्व्वाभरणभूषिताः ॥ १७
चामरासक्तहस्ताग्राः सर्व्वाः स्त्रीरूपशोभिताः ।
तत्र तत्र कृतस्थानाः शोभयाञ्चक्रिरे रथम् ॥ १८
आवहाद्यास्तथा सप्त-सोपानं हैमसुत्तमम् ।
सारथिर्भगवान् ब्रह्मा देवोऽभीषुधरः स्मृतः ॥ १९
प्रतोदो ब्रह्मणस्तस्य प्रणवो ब्रह्मदेवतम् ।
लोकालोकाचलस्तस्य ससोपानः समन्ततः ॥ २०
विषमश्च तदा वाह्यो मानसाद्रिः सुशोभनः ।
पाशाः समन्ततस्तस्य सर्व्वे एवाचलाः स्मृताः ॥ २१
तलाः कपोताः कापोताः सर्व्वे तलनिवासिनः ।
मेरुरेव महाच्छत्रं मन्दरः पार्श्वडिण्डिमः ॥ २२
शैलेन्द्रः कार्म्मुकञ्चैव ज्या भुजङ्गाधिपः स्वयम् ।
कालरात्र्या तथैवेह तथेन्द्रधनुषा पुनः ॥ २३
घण्टा सरस्वती देवी धनुषः श्रुतिरूपिणी ।
इषुर्विष्णुर्महातेजाः शल्यं सोमः शरस्य च ॥ २४
कालाग्निस्तच्छरस्यैव साक्षात् तीक्ष्णः सुदारुणः ।
अनीकं विषसम्भूतं वायवो वाजकाः स्मृताः ॥ २५
एवं कृत्वा रथं दिव्यं कार्म्मुकञ्च शरं तथा ।
सारथिं जगताञ्चैव ब्रह्माणं प्रभुमीश्वरम् ॥ २६
आरुरोह रथं दिव्यं रणमण्डनदुम्भवः ।
सर्व्वदेवगणैर्युक्तं कम्पयन्निव रोदसी ॥ २७
ऋषिभिस्तूयमानश्च वन्द्यमानश्च वन्दिभिः ।
उपनृत्तश्चाप्सरसां गणैर्नृत्यविशारदैः ॥ २८
सुशोभमानो वरदः समेच्चैव च सारथिम् ।
तस्मिन्नारोहति रथं कल्पितं लोकसम्भृतम् ॥ २९
शिरोभिः पतिता भूमिं तुरगा वेदसम्भवाः ।
अथाधस्ताद्रथस्यास्य भगवान् धरणीधरः ॥ ३०
वृषेन्द्ररूपी चोत्थाप्य स्थापयामास वै क्षणम् ।
क्षणान्तरे वृषेन्द्रोऽपि जानुभ्यामगमद्धराम् ॥ ३१
अभीषुहस्तो भगवानुद्यम्य च हयान् विभुः ।
स्थापयामास देवस्य वचनाद्वै रथं शुभम् ॥ ३२
ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ।
पुराण्युद्दिश्य खस्थानि दानवानां तरस्विनाम् ॥ ३३
अथाह भगवान् रुद्रो देवानालोक्य शङ्करः ।
पशूनामाधिपत्यं मे दत्तं हन्मि ततोऽसुरान् ॥ ३४
पृथक् पशुत्वं देवानां तथान्येषां सुरोत्तमाः ।
कल्पयित्वैव वध्यास्ते नान्यथा नव सत्तमाः ॥ ३५
इति श्रुत्वा वचः सर्व्वे देवदेवस्य धीमतः ।
विषादमगमन् सर्व्वे पशुत्वं प्रति शङ्किताः ॥ ३६
तेषां भावं ततो ज्ञात्वा देवस्तानिदमब्रवीत् ।
मा वोऽस्तु पशुभावेऽस्मिन् भयं विबुधसत्तमाः ॥ ३७
श्रूयतां पशुभावस्य विमोक्षः क्रियताञ्च सः ।
यो वै पाशुपतं दिव्यं चरिष्यति स मोक्ष्यति ॥ ३८
पशुत्वादिति सत्यञ्च प्रतिज्ञातं समाहिताः ।
ये चाप्यन्ये चरिष्यन्ति व्रतं पाशुपतं मम ॥ ३९
मोक्ष्यन्ति ते न सन्देहः पशुत्वात् सुरसत्तमाः ।
नैष्ठिकं द्वादशाब्दं वा तदर्द्धं वर्षकत्रयम् ॥ ४०

शुश्रूषां कारयेद्यस्तु स पशुत्वाद्विमुच्यते।
तस्मात् परमिदं दिव्यं चरिष्यथ सुरोत्तमाः॥ ४१
तथेति चाब्रुवन् देवाः शिवे लोकनमस्कृते।
तस्माद्वै पशवः सर्व्वे देवासुरनराः प्रभोः॥ ४२
रुद्रः पशुपतिश्चैव पशुपाशविमोचकः।
यः पशुस्तत् पशुत्वञ्च व्रतेनानेन सन्त्यजेत्॥ ४३
तत् कृत्वा न च पापीयानिति शास्त्रस्य निश्चयः॥ ४४
ततो विनायकः साक्षाद्बालो बालपराक्रमः।
अपूजितस्तदा देवैः प्राह देवान् निवारयन्॥ ४५

विनायक उवाच।

माम्पूज्य जगत्यस्मिन् भक्ष्यभोज्यादिभिः शुभैः।
कः पुमान् सिद्धिमाप्नोति देवो वा दानवोऽपि वा॥४६
ततस्तस्मिन् क्षणादेव देवकार्य्ये सुरेश्वराः।
विघ्नं करिष्ये देवेशः कथं कर्त्तुं समुद्यताः॥ ४७
ततः सेन्द्राः सुराः सर्व्वे भीताः सम्पूज्य तं प्रभुम्।
भक्ष्यभोज्यादिभिश्चैव उण्डेरैश्चैव मोदकैः।
अब्रुवंस्ते गणेशानं निर्व्विघ्नश्चास्तु नः सदा॥ ४८

भवोऽप्यनेकैः कुसुमैर्गणेशं
भक्ष्यैश्च भोज्यैः सुरसैः सुगन्धैः।
आलिङ्ग्य चाघ्राय सुतं तदानी-
मपूजयत् सर्व्वसुरेन्द्रमुख्यः॥ ४९
सम्पूज्य पूज्यं सह देवसङ्घै-
र्विनायकं नायकमीश्वराणाम्।
गणेश्वरैरेव नगेन्द्रधन्वा
पुरत्रयं दग्धुमसौ जगाम॥ ५०
तं देवदेवं सुरसिद्धसङ्घा
महेश्वरं भूतगणाश्च सर्व्वे
गणेश्वरा नन्दिमुखास्तदानीं
स्ववाहनैरन्वयुरीशमीशाः॥ ५१
अग्रे सुराणाञ्च गणेश्वराणां
तदाथ नन्दी गिरिराजकल्पम्।
विमानमारुह्य पुरं प्रहर्त्तुं
जगाम रुद्रं भगवानिवेशः॥ ५२
यान्तं तदानीन्तु शिलादपुत्र-
मारुह्य नागेन्द्रवृषाश्ववर्य्यान्।
देवास्तदानीं गणपाश्च सर्व्वे
गणा ययुः स्वायुधचिह्नहस्ताः॥ ५३

खगेन्द्रमारुह्य नगेन्द्रकल्पं
खगध्वजो वामत एव शम्भोः।
जगाम तूर्णं जगतां हिताय
पुरत्रयं दग्धुमलुप्तशक्तिः॥ ५४
तं सर्व्वदेवाः सुरलोकनाथं
समन्ततश्चान्वयुरप्रमेयम्।
सुरासुरेशं शितशक्ति-टङ्क-
गदा-त्रिशूलासिवरायुधैश्च॥ ५५
रराज मध्ये भगवान् सुराणां
विवाहनो वारिजपत्रवर्णः।
यथा सुमेरोः शिखराधिरूढः
सहस्ररश्मिर्भगवान् सुतीक्ष्णः॥ ५६
सहस्रनेत्रः प्रथमः सुराणां
गजेन्द्रमारुह्य च दक्षिणेऽस्य।
जगाम रुद्रस्य पुरं निहन्तुं
यथोरगांस्तत्र तु वैनतेयः॥ ५७
तं सिद्ध-गन्धर्व्व-सुरेन्द्रवीराः
सुरेन्द्रवृन्दाधिपमिन्द्रमीशम्।
समन्ततस्तुष्टुवुरिष्टदं ते
जयेति शक्रं वरपुष्पवृष्ट्या॥ ५८
तदा त्वहल्योपपतिं सुरेशं
जगत्पतिं देवपतिं दिविष्ठाः।
प्रणेमुरालोक्य सहस्रनेत्रं
सलीलमम्बातनयं यथेन्द्रम्॥ ५९
यम-पावक-वित्तेशा वायुर्निर्ऋतिरेव च।
अपाम्पतिस्तथेशानो भवञ्चानु समागताः॥ ६०
वीरभद्रो रणे भद्रो नैर्ऋत्यां वै रथस्य तु।
वृषभेन्द्रं समारुह्य रोमजैश्च समावृतः॥ ६१
सेवां चक्रे पुरं हन्तुं देवदेवं त्रियम्बकम्।
महाकालो महातेजा महादेव इवापरः॥ ६२
वायव्यां स गणैः सार्द्धं सेवां चक्रे रथस्य तु॥ ६३
षण्मुखोऽपि सह सिद्धचारणैः
सेनया च गिरिरुच्चसन्निभः।
देवनाथगणवृन्दसंवृतो
वारणेन च तथाग्निसम्भवः॥ ६४
विघ्नं गणेशोऽप्यसुरेश्वराणां
कृत्वा सुराणां भगवानविघ्नम्।

विघ्नेश्वरो विघ्नगणैश्च सार्द्धं
तं देवमीशानपदं जगाम ॥ ६५
काली तदा कालनिशाप्रकाशं
शूलं कपालाभरणा करेण।
प्रकम्पयन्ती च तदाऽसुरेन्द्रान्
महासुरासृङ्मधुपानमत्ता ॥ ६६
मत्तेभगन्त्री मदलोलनेत्रा
मत्तैः पिशाचैश्च गणैश्च मत्तैः।
मत्तेभचर्म्माम्बरवेष्टिताङ्गी
ययौ पुरस्ताच्च गणेश्वरस्य ॥ ६७
तां सिद्ध-गन्धर्व्व-पिशाच-यक्ष-
विद्याधराहीन्द्र-सुरेन्द्रमुख्याः।
प्रणेमुरुच्चैरभितुष्टुवुश्च
जयेति देवीं हिमशैलपुत्त्रीम् ॥ ६८
मातरः सुरवरारिसूदनाः
सादरं सुरगणैः सुपूजिताः।
मातरं ययुरथ स्ववाहनैः
स्वैर्गणैर्ध्वजधरैः समन्ततः ॥ ६९
दुर्गारूढमृगाधिपा दुरतिगा दोर्द्दण्डवृन्दैः शिवा
बिभ्राणाङ्कुश-शूल-पाश-परशुं चक्रासिशङ्खायुधम्।
प्रौढादित्यसहस्रवह्निसदृशैर्नेत्रैर्दहन्ती पथं
बाला बालपराक्रमा भगवती दैत्यान् प्रहर्त्तुं ययौ ७०
तं देवमीशं त्रिपुरं निहन्तुं
तदा तु देवेन्द्ररविप्रकाशाः।
गजैर्हयैः सिंहवरै रथैश्च
वृषैश्च युक्ते गणराजमुख्याः ॥ ७१
हलैश्च फालैर्मुषलैर्भुशुण्डै-
र्गिरीन्द्रकूटैर्गिरिसन्निभास्ते।
ययुः पुरस्ताद्धि महेश्वरस्य
सुरेश्वरा भूतगणेश्वराश्च ॥ ७२
तथेन्द्र-पद्मोद्भव-विष्णुमुख्याः
सुरा गणेशाश्च गणेशमीशम्।
जयेति वाग्भिर्भगवन्तमूचुः
किरीटदत्ताञ्जलयः समन्तात् ॥ ७३
ननृतुर्मुनयः सर्व्वे दण्डहस्ता जटाधराः।
ववृषुः पुष्पवर्षाणि खेचराः सिद्धचारणाः।
पुरत्रयञ्च विप्रेन्द्राः प्राणदन् सर्व्वतस्तथा ॥ ७४

गणेश्वरैर्देवगणैश्च भृङ्गी
समावृतः सर्व्वगणेन्द्रवर्य्यः।
जगाम योगी त्रिपुरं निहन्तुं
विमानमारुह्य यथा महेन्द्रः ॥ ७५
केशो विगतवासाश्च महाकेशो महाज्वरः।
सोमवल्लीसवर्णश्च सोमपः सेनकस्तथा ॥ ७६
सोमधृक् सूर्य्यवाचश्च सूर्य्यप्रेषणकस्तथा।
सूर्य्याक्षः सूरिनामा च सुरः सुन्दर एव च ॥ ७७
प्रकुन्दः ककुदन्तश्च कम्पनश्च प्रकम्पनः।
इन्द्रश्चेन्द्रजयश्चैव महाभीर्भीमकस्तथा ॥ ७८
शताक्षश्चैव पञ्चाक्षः सहस्राक्षो महोदरः।
यमजिह्वः शताक्षश्च कुण्ठनः कण्ठपूजनः ॥ ७९
द्विशिखस्त्रिशिखश्चैव तथा पञ्चशिखो द्विजाः।
मुण्डोऽर्द्धमुण्डो दीर्घश्च पिशाचास्यः पिनाकधृक् ॥ ८०
पिप्पलायतनश्चैव तथा ह्यङ्गारकाशनः।
शिथिलः शिथिलास्यश्च अक्षपादो ह्यजः कुजः ॥ ८१
अजवक्त्रो हयवक्त्रो गजवक्त्रोऽर्द्धवक्त्रकः।
इत्याद्याः परिवार्य्येशं लक्षलक्षगणर्व्विताः ॥ ८२
वृन्दशस्तं समावृत्य जग्मुः सोमं गणेर्वृताः।
सहस्राणां सहस्राणि रुद्राणामूर्द्ध्वरेतसाम् ॥ ८३
समावृत्य महादेवं देवदेवं महेश्वरम्।
दग्धुं पुरत्रयं जग्मुः कोटिकोटिगणैर्वृताः ॥ ८४
त्रयस्त्रिंशत्सुराश्चैव त्रयश्च त्रिशतास्तथा।
त्रयश्च त्रिसहस्राणि जग्मुर्देवाः समन्ततः ॥ ८५
मातरः सर्व्वलोकानां गणानाञ्चैव मातरः।
भूतानां मातरश्चैव जग्मुर्देवस्य पृष्ठतः ॥ ८६
भाति मध्ये गणानाञ्च रथमध्ये गणेश्वरः।
नभस्यमलनक्षत्रे तारामध्य इवोडुराट् ॥ ८७
रराज देवी देवस्य गिरिजा पार्श्वसंस्थिता।
तदा प्रभावती गौरी भवस्येव जगन्मयी ॥ ८८
शुभावती तदा देवी पार्श्वसंस्था विभाति सा।
चामरासक्तहस्ताग्रा सा हेमाम्बुजवर्णिका ॥ ८९
अथ विभाति विभोर्विशदं वपु-
र्भसितभासितमम्बिकया तया।
सितमिवाभ्रमहोसह विद्युता
नभसि देवपतेः परमेष्ठिनः ॥ ९०
भातीन्द्रधनुषाकाशं मेरुणा च यथा जगत्।

हिरण्यधनुषा सौम्यं वपुः शम्भो शशिद्युति ॥ ९१
सितातपत्रं रत्नांशु-मिश्रितं परमेष्ठिनः ।
यथोदये शशाङ्कस्य भात्यखण्डं हि मण्डलम् ॥ ९२
सुदुकूला शिवे रक्ता लम्बिता भाति मालिका ।
आक्रान्ता रत्नजाकाशात् पतन्तीव सरिद्वरा ॥ ९३

अथ महेन्द्र-विरिञ्चि-विभावसु-
प्रभृतिभिर्नतपादसरोरुहः ।
सह तदा च जगाम तयाम्बया
सकललोकहिताय पुरत्रयम् ॥ ९४
दग्धुं समर्थो मनसा क्षणेन
चराचरं सर्व्वमिदं त्रिशूली ।
किमत्र दग्धुं त्रिपुरं पिनाकी
स्वयं गतश्चात्र गणैश्च सार्द्धम् ॥ ९५
अथेन किञ्चित्प्रवरेण तस्य
गणैश्च किं देवगणैश्च शम्भोः ।
पुरत्रयं दग्धुमलुप्तशक्तेः
किमेतदित्याह सुरेन्द्रमुख्याः ॥ ९६
मन्याम नूनं भगवान् पिनाकी
लीलार्थमेतत् सकलं प्रवर्त्तुम् ।
व्यवस्थितश्चेति तथान्यथा चे-
दाडम्बरेणास्य फलं किमन्यत् ॥ ९७
पुरत्रयस्यास्य समीपवर्त्ती
सुरेश्वरैर्नन्दिमुखैश्च नन्दी ।
गणैर्गणेशस्तु रराज देव्या
जगद्रथो मेरुरिवाष्टशृङ्गैः ॥ ९८
अथ निरीक्ष्य सुरेश्वरमीश्वरं
सगणमद्रिसुतासहितं तदा ।
त्रिपुररङ्गतलोपरि संस्थितः
सुरगणोऽनुजगाम स्वयं तथा ॥ ९९
जगत्त्रयं सर्व्वमिवापरं तत्
पुरत्रयं तत्र विभाति सम्यक् ।
नरेश्वरैस्तैश्च गणैश्च देवैः
सुरेतरैश्च त्रिविधैर्मुनीन्द्राः ॥ १००

अथ सज्यं धनुः कृत्वा शर्व्वः सन्धाय तं शरम् ।
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ॥ १०१
तस्मिन् स्थिते महादेवे रुद्रे विततकार्म्मुके ।
पुराणि तेन कालेन जग्मुरेकत्वमाशु वै ॥ १०२
एकीभावं गते चैव त्रिपुरे समुपागते ।
बभूव तुमुलो हर्षो देवतानां महात्मनाम् ॥ १०३
ततो देवगणाः सर्व्वे सिद्धाश्च परमर्षयः ।
जयेति वाचो मुमुचुः संस्तुवन्तोऽष्टमूर्त्तिकम् ॥ १०४
अथाह भगवान् ब्रह्मा भगनेत्रनिपातनम् ।
पुष्ययोगेऽपि सम्प्राप्ते लीलावशमुमापतिम् ॥ १०५
स्थाने तव महादेव चेष्टेयं परमेश्वर ।
पूर्व्वदेवाश्च देवाश्च समास्तव यतः प्रभो ॥ १०६
तथापि देवा धर्म्मिष्ठाः पूर्व्वदेवाश्च पापिनः ।
यतस्तस्माज्जगन्नाथ लीलां त्यक्तुमिहार्हसि ॥ १०७
किं रथेन ध्वजेनेश तव दग्धुं पुरत्रयम् ।
द्रुहिणा भूतसङ्घैश्च विष्णुना च मया प्रभो ॥ १०८
पुष्ययोगे त्वनुप्राप्ते पुरं दग्धुमिहार्हसि ॥ १०९
यावन्न यान्ति देवेश वियोगं तावदेव तु ।
दग्धुमर्हसि शीघ्रं त्वं त्रीण्येतानि पुराणि वै ॥ ११०
अथ देवो महादेवः सर्व्वज्ञस्तदवेक्षत ।
पुरत्रयं विरूपाक्षस्तत् क्षणाद्भस्म वै कृतम् ॥ १११
सोमश्च भगवान् विष्णुः कालाग्निर्वायुरेव च ।
शरे व्यवस्थिताः सर्व्वे देवमूचुः प्रणम्य तम् ॥ ११२
दग्धमप्यथ देवेश वीक्षणेन पुरत्रयम् ।
अस्मद्धितार्थं देवेश शरं मोक्तुमिहार्हसि ॥ ११३
अथ संमृज्य धनुषो ज्यां हसन् त्रिपुरार्द्दनः ।
मुमोच बाणं विप्रेन्द्रा व्याकृष्याकर्णमीश्वरः ॥ ११४
तत्क्षणात् त्रिपुरं दग्ध्वा त्रिपुरान्तकरः शरः ।
देवदेवं समासाद्य नमस्कृत्य व्यवस्थितः ॥ ११५
रेजे पुरत्रयं दग्धं दैत्यकोटिशतैर्वृतम् ।
द्रुहिणा तेन कल्पान्ते रुद्रेणेव जगत्त्रयम् ॥ ११६
ये पूजयन्ति तत्रापि दैत्या रुद्रं सबान्धवाः ।
गाणपत्यं तदा शम्भोर्ययुः पूजाविधेर्बलात् ॥ ११७
न किञ्चिदब्रुवन् देवाः सेन्द्रोपेन्द्रा गणेश्वराः ।
भयाद्देवं निरीक्ष्यैव देवीं हिमवतः सुताम् ॥ ११८
दृष्ट्वा भीतं तदानीकं देवानां देवपुङ्गवः ।
किन्त्वित्याह तदा देवान् प्रणेमुस्तं समन्ततः ॥ ११९

ववन्दिरे नन्दिनमिन्दुभूषणं
ववन्दिरे पर्व्वतराजसम्भवाम् ।
ववन्दिरे चाद्रिसुतासुतं प्रभुं
ववन्दिरे देवगणा महेश्वरम् ॥ १२०

तुष्टाव हृदये ब्रह्मा देवैः सह समाहितः।
विष्णुना च भवं देवं त्रिपुरारातिमीश्वरम्॥ १२१
पितामह उवाच।
प्रसीद देवदेवेश प्रसीद परमेश्वर।
प्रसीद जगतां नाथ प्रसीदानन्ददाव्यय॥ १२२
पञ्चास्यरुद्ररुद्राय पञ्चाशत्कोटिमूर्त्तये।
आत्मत्रयोपविष्टाय विद्यातत्त्वाय ते नमः॥ १२३
शिवाय शिवतत्त्वाय अघोराय नमो नमः।
अघोराष्टकतत्त्वाय द्वादशात्मस्वरूपिणे॥ १२४
विद्युत्कोटिप्रतीकाशमष्टकाशं सुशोभनम्।
रूपमास्थाय लोकेऽस्मिन् संस्थिताय शिवात्मने॥ १२५
अग्निवर्णाय रौद्राय अम्बिकार्द्धशरीरिणे।
धवलश्यामरक्तानां मुक्तिदायामराय च॥ १२६
ज्येष्ठाय रुद्ररूपाय सोमाय वरदाय च।
त्रिलोकाय त्रिदेवाय वषट्काराय वै नमः॥ १२७
मध्ये गगनरूपाय गगनस्थाय ते नमः।
अष्टक्षेत्राष्टरूपाय अष्टतत्त्वाय ते नमः॥ १२८
चतुर्द्धा च चतुर्द्धा च चतुर्द्धासंस्थिताय च।
पञ्चधा पञ्चधा चैव पञ्चमन्त्रशरीरिणे॥ १२९
चतुःषष्टिप्रकाराय अकाराय नमो नमः।
द्वात्रिंशत्तत्त्वरूपाय उकाराय नमो नमः॥ १३०
षोड़शात्मस्वरूपाय मकाराय नमो नमः।
अष्टधात्मस्वरूपाय अर्द्धमात्रात्मने नमः॥ १३१
ओङ्काराय नमस्तुभ्यं चतुर्द्धासंस्थिताय च।
गगनेशाय देवाय स्वर्गेशाय नमो नमः॥ १३२
सप्तलोकाय पाताल-नरकेशाय वै नमः।
अष्टक्षेत्राष्टरूपाय परात्परतराय च॥ १३३
सहस्रशिरसे तुभ्यं सहस्राय च ते नमः।
सहस्रपादयुक्ताय शर्व्वाय परमेष्ठिने॥ १३४
नवात्मतत्त्वरूपाय नवाष्टात्मात्मशक्तये।
पुनरष्टप्रकाशाय तथाष्टाष्टकमूर्त्तये॥ १३५
चतुःषष्ट्यात्मतत्त्वाय पुनरष्टविधाय ते।
गुणाष्टकवृतायैव गुणिने निर्गुणाय ते॥ १३६
मूलस्थाय नमस्तुभ्यं शाश्वतस्थानवासिने।
नाभिमण्डलसंस्थाय हृदि निस्वनकारिणे॥ १३७
कन्धरे च स्थितायैव तालुरन्ध्रस्थिताय च।
भ्रूमध्ये संस्थितायैव नादमध्ये स्थिताय च॥ १३८
चन्द्रबिम्बस्थितायैव शिवाय शिवरूपिणे।
वह्निसोमार्करूपाय षट्त्रिंशच्छक्तिरूपिणे॥ १३९
त्रिधा संवृत्य लोकान् वै प्रसुप्तभुजगात्मने।
त्रिप्रकारं स्थितायैव त्रेताग्निमयरूपिणे॥ १४०
सदाशिवाय शान्ताय महेशाय पिनाकिने।
सर्व्वज्ञाय शरण्याय सद्योजाताय वै नमः॥ १४१
अघोराय नमस्तुभ्यं वामदेवाय ते नमः।
तत्पुरुषाय नमोऽस्तु ईशानाय नमो नमः॥ १४२
नमस्त्रिंशत्प्रकाशाय शान्तातीताय वै नमः।
अनन्तेशाय सूक्ष्माय उत्तमाय नमोऽस्तु ते॥ १४३
एकाक्षाय नमस्तुभ्यमेकरुद्राय ते नमः।
नमस्त्रिमूर्त्तये तुभ्यं श्रीकण्ठाय शिखण्डिने॥ १४४
अनन्तासनसंस्थाय अनन्तायान्तकारिणे।
विमलाय विशालाय विमलाङ्गाय ते नमः॥ १४५
विमलासनसंस्थाय विमलार्थार्थरूपिणे।
योगपीठान्तरस्थाय योगिने योगदायिने॥ १४६
योगिनां हृदि संस्थाय सदा नीवारशूकवत्।
प्रत्याहाराय ते नित्यं प्रत्याहाररताय ते॥ १४७
प्रत्याहाररतानाञ्च प्रतिस्थानस्थिताय च।
धारणाय नमस्तुभ्यं धारणाभिरताय ते॥ १४८
धारणाभ्यासयुक्तानां पुरस्तात् संस्थिताय च।
ध्यानाय ध्यानरूपाय ध्यानगम्याय ते नमः॥ १४९
ध्येयाय ध्येयगम्याय ध्येयध्यानाय ते नमः।
ध्येयानामपि ध्येयाय नमो ध्येयतमाय ते॥ १५०
समाधानाभिगम्याय समाधानाय ते नमः।
समाधानरतानान्तु निर्व्विकल्पार्थरूपिणे॥ १५१
दग्ध्वोद्धृतं सर्व्वमिदं त्वयाद्य
जगत्त्रयं रुद्र पुरत्रयं हि।
कः स्तोतुमिच्छेत् कथमीदृशं त्वां
स्तोष्ये हि तुष्टाय शिवाय तुभ्यम्॥ १५२
भक्त्या च तुष्ट्याद्भुतदर्शनाच्च
मर्त्त्या अमर्त्त्या अपि देवदेव।
एते गणाः सिद्धगणैः प्रणामं
कुर्व्वन्ति देवेश गणेश तुभ्यम्॥ १५३
निरीक्षणादेव विभोऽसि दग्धुं
पुरत्रयञ्चैव जगत्त्रयञ्च।
लीलालसेनाम्बिकया क्षणेन

दग्धं किलैषुश्च तदाथ मुक्तः ॥ १५४
कृतो रथश्चेषुवरश्च शुभ्रं
शरासनं ते त्रिपुरक्षयाय।
अनेकयत्नैश्च मयाथ तुभ्यं
फलं न दृष्टं सुरसिद्धसङ्घैः ॥ १५५
रथी रथी देववरो हरिश्च
रुद्रः स्वयं शक्र-पितामहौ च।
त्वमेव सर्व्वं भगवन् कथन्तु
स्तोष्ये ह्यतोष्यं प्रणिपत्य मूर्ध्ना ॥ १५६
अनन्तपादस्त्वमनन्तबाहु-
रनन्तमूर्द्धान्तकरः शिवश्च।
अनन्तमूर्त्तिः कथमीदृशं त्वां
स्तोष्ये ह्यतोष्यं कथमीदृशं त्वाम् ॥ १५७
नमो नमः सर्व्वविदे शिवाय
रुद्राय शर्व्वाय भवाय तुभ्यम्।
स्थूलाय सूक्ष्माय सुसूक्ष्मसूक्ष्म-
सूक्ष्माय सूक्ष्मार्थविदे विधात्रे ॥ १५८
स्रष्ट्रे नमः सर्व्वसुरासुराणां
भर्त्त्रे च हर्त्त्रे जगतां विधात्रे।
नेत्रे सुराणामसुरेश्वराणां
दात्रे प्रशास्त्रे मम सर्व्वशास्त्रे ॥ १५९
वेदान्तवेद्याय सुनिर्म्मलाय
वेदार्थविद्भिः सततं स्तुताय।
वेदात्मरूपाय भवाय तुभ्य-
मन्ताय मध्याय सुमध्यमाय ॥ १६०
आद्यन्तशून्याय च संस्थिताय
तथा त्वशून्याय च लिङ्गिने च।
अलिङ्गिने लिङ्गमयाय तुभ्यं
लिङ्गाय वेदादिमयाय साक्षात् ॥ १६१
रुद्राय ते मूर्द्धनिकृन्तनाय
ममादिदेवस्य च यज्ञमूर्त्तेः।
विश्वान्तभङ्गं मम कर्त्तुमीश
दृष्ट्वैव भूमौ करजाग्रकोट्या ॥ १६२
अहो विचित्रं तव देवदेव
विचेष्टितं सर्व्वसुरासुरेश।
देहीव देवैः सह देवकार्य्यं
करिष्यसे निर्गुणरूपतत्त्व ॥ १६३
एकं स्थूलं सूक्ष्ममेकं सुसूक्ष्मं
मूर्त्तामूर्त्तं मूर्त्तमेकं ह्यमूर्त्तम्।
एकं दृष्टं वाङ्मयञ्चैकमीशं
ध्येयञ्चैकं तत्त्वमत्राद्भुतं ते ॥ १६४
स्वप्ने दृष्टं यत्पदार्थं ह्यलक्ष्यं
दृष्टं नूनं भाति मन्ये न चापि।
मूर्त्तिर्नो वै देवमीशान देवै-
र्लक्ष्या यत्नैरप्यलक्ष्यं कथन्तु ॥ १६५
दिव्यः क्व देवेश भवत्प्रभावो
वयं क्व भक्तिः क्व च ते स्तुतिश्च।
तथापि भक्त्या विलपन्तमीश
पितामहं मां भगवन् क्षमस्व ॥ १६६

सूत उवाच।

य इमं शृणुयाद्द्विजोत्तमा
भुवि देवं प्रणिपत्य वा पठेत्।
स च मुच्यति पापबन्धनं
भवभक्त्या पुरशासितुः स्तवम् ॥ १६७
श्रुत्वा च भक्त्या चतुराननेन
स्तुतो हसन् शैलसुतां निरीक्ष्य।
स्तवं तदा प्राह महानुभावं
महाभुजो मन्दरशृङ्गवासी ॥ १६८

शिव उवाच।

स्तवेनानेन तुष्टोऽस्मि तव भक्त्या च पद्मज।
वरान् वरय भद्रं ते देवानाञ्च यथेप्सितान् ॥ १

सूत उवाच।

ततः प्रणम्य देवेशं भगवान् पद्मसम्भवः।
कृताञ्जलिपुटो भूत्वा प्राहेदं प्रीतमानसः ॥ १

पितामह उवाच।

भगवन् देवदेवेश त्रिपुरान्तक शङ्कर।
त्वयि भक्तिं परां मेऽद्य प्रसीद परमेश्वर ॥ १७
देवानाञ्चैव सर्व्वेषां त्वयि सर्व्वार्थदेश्वर।
प्रसीद भक्तियोगेन सारथ्येन च सर्व्वदा ॥ १७
जनार्द्दनोऽपि भगवान् नमस्कृत्य महेश्वरम्।
कृताञ्जलिपुटो भूत्वा प्राह साम्बं त्रियम्बकम्।
वाहनत्वं तवेशान नित्यमोहे प्रसीद मे।
त्वयि भक्तिञ्च देवेश देवदेव नमोऽस्तु ते ॥ १७
सामर्थ्यञ्च सदा मह्यं भवन्तं वोढुमीश्वरम्।

सर्व्वेश त्वञ्च वरद सर्व्वग त्वञ्च शङ्कर ॥ १७५
सूत उवाच।
तयोः श्रुत्वा महादेवो विज्ञप्तिं परमेश्वरः।
सारथ्ये वाहनले च कल्पयामास वै भवः ॥ १७६
दत्त्वा तस्मै ब्रह्मणे विष्णवे च
दग्ध्वा दैत्यान् देवदेवो महात्मा।
सार्द्धं देव्या नन्दिना भूतसङ्घै-
रन्तर्द्धानं कारयामास सर्व्वः ॥ १७७
ततस्तदा महेश्वरे गते रथात्गणैः सह।
सुरेश्वराः सुविस्मिता भवं प्रणम्य पार्व्वतीम् ॥१७८
ययुश्च दुःखवर्ज्जिताः स्ववाहनैर्दिवं ततः।
सुरेश्वरा मुनीश्वरा गणेश्वराश्च भास्कराः ॥ १७९
त्रिपुरारेरिमं पुण्यं निर्म्मितं ब्रह्मणा पुरा।
यः पठेत् श्राद्धकाले वा दैवे कर्म्मणि च द्विजाः॥१८०
श्रावयेद्वा द्विजान् भक्त्या ब्रह्मलोकं स गच्छति।
मानसैर्वाचिकैः पापैस्तथा वै कायिकैः पुनः ॥ १८१
स्थूलैः सूक्ष्मैः सुसूक्ष्मैश्च महापातकसम्भवैः।
पातकैश्च द्विजश्रेष्ठा उपपातकसम्भवैः ॥ १८२
पापैश्च मुच्यते जन्तुः श्रुत्वाध्यायमिमं शुभम्।
शत्रवो नाशमायान्ति संग्रामे विजयी भवेत् ॥ १८३
सर्व्वरोगैर्न वाध्येत आपदो न स्पृशन्ति तम्।
धनमायुर्यशो विद्यां प्रभावमतुलं लभेत् ॥ १८४

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे त्रिपुरदाहो नाम द्विसप्ततितमोऽध्यायः ॥७२॥

---

## त्रिसप्ततितमोऽध्यायः।

सूत उवाच।
गते महेश्वरे देवे दग्ध्वा च त्रिपुरं क्षणात्।
सदस्याह सुरेन्द्राणां भगवान् पद्मसम्भवः ॥ १
पितामह उवाच।
सन्त्यज्य देवदेवेशं लिङ्गमूर्त्तिं महेश्वरम्।
तारपौत्रो महातेजा तारकस्य सुतो बली ॥ २
तारकाक्षोऽपि दितिजः कमलाक्षश्च वीर्य्यवान्।
विद्युन्माली च दैत्येशः अन्ये चापि सबान्धवाः ॥३
त्यक्त्वा देवं महादेवं मायया च हरेः प्रभोः।
सर्व्वे विनष्टाः प्रध्वस्ताः स्वपुरैः पुरसम्भवैः ॥ ४
तस्मात् सदा पूजनीयो लिङ्गमूर्त्तिः सदाशिवः।
यावत् पूजा सुरेशानां तावदेव स्थितिर्यतः ॥ ५
पूजनीयः शिवो नित्यं श्रद्धया देवपुङ्गवैः।
सर्व्वलिङ्गमयो लोकः सर्व्वं लिङ्गे प्रतिष्ठितम् ॥ ६
तस्मात् सम्पूजयेल्लिङ्गं य इच्छेत् सिद्धिमात्मनः।
सर्व्वे लिङ्गार्च्चनादेव देवा दैत्याश्च दानवाः ॥ ७
यक्षा विद्याधराः सिद्धा राक्षसाः पिशिताशनाः।
पितरो मुनयश्चापि पिशाचाः किन्नरादयः ॥ ८
अर्च्चयित्वा लिङ्गमूर्त्तिं संसिद्धा नात्र संशयः।
तस्माल्लिङ्गं यजेन्नित्यं येन केनापि वा सुराः ॥ ९
पशवश्च वयं तस्य देवदेवस्य धीमतः।
पशुत्वञ्च परित्यज्य कृत्वा पाशुपतं ततः ॥ १०
पूजनीयो महादेवो लिङ्गमूर्त्तिः सनातनः।
विशोध्य चैव भूतानि पञ्चभिः प्रणवैः समम् ॥ ११
प्राणायामैः समायुक्तैः पञ्चभिः सुरपुङ्गवाः।
चतुर्भिः प्रणवैश्चैव प्राणायामपरायणैः ॥ १२
त्रिभिश्च प्रणवैर्द्देवाः प्राणायामैस्तथाविधः।
द्विधा न्यस्य तथोङ्कारं प्राणायामपरायणः ॥ १३
ततश्चोङ्कारमुच्चार्य्य प्राणापानौ नियम्य च।
स्नानामृतेन सर्व्वाङ्गाण्याप्लाव्य प्रणवेन च ॥ १४
गुणत्रयं चतुर्व्वाक्यमहङ्कारञ्च सुव्रताः।
तन्मात्राणि च भूतानि तथा बुद्धीन्द्रियाणि च ॥१५
कर्म्मेन्द्रियाणि संशोध्य पुरुषं युगलं तथा।
चिदात्मानं तनुं कृत्वा चाग्निरित्यादिना स्पृशेत् ॥ १६
वायुर्भस्मेति च व्योम तथाम्भः पृथिवी तथा।
त्रियायुषं त्रिसन्ध्यञ्च धूलयेद्भसितेन यः ॥ १७
स योगी सर्व्वतत्त्वज्ञो व्रतं पाशुपतन्त्विदम्।
भवेन पाशमोक्षार्थं कथितं देवसत्तमाः ॥ १८
एवं पाशुपतं कृत्वा सम्पूज्य परमेश्वरम्।
लिङ्गे पुरा मया दृष्टे विष्णुना च महात्मना ॥ १९
पशवो नैव जायन्ते वर्षमात्रेण देवताः।
अस्माभिः सर्व्वकार्य्याणां देवमभ्यर्च्य यत्नतः ॥ २०
वाह्ये चाभ्यन्तरे चैव मन्ये कर्त्तव्यमीश्वरम्।
प्रतिज्ञा मम विष्णोश्च द्विव्यैषा सुरसत्तमाः ॥ २१
मुनीनाञ्च न सन्देहस्तस्मात् सम्पूजयेच्छिवम्।
सा हानिस्तन्महच्छिद्रं स मोहः सा च मूकता ॥२२
यत् क्षणं वा मुहूर्त्तं वा शिवमेकं न चिन्तयेत्।

भवभक्तिपरा ये च भवप्रणतचेतसः ॥ २३
भवसंस्मरणोद्युक्ता न ते दुःखस्य भाजनम्।
भवनानि मनोज्ञानि दिव्यमाभरणं स्त्रियः ॥ २४
धनं वा तुष्टिपर्य्यन्तं शिवपूजाविधेः फलम्।
ये वाञ्छन्ति महाभोगान् राज्यञ्च त्रिदशालये ॥ २५
तेऽर्च्चयन्तु सदा कालं लिङ्गमूर्त्तिं महेश्वरम्।
हत्वा भित्त्वा च भूतानि दग्ध्वा सर्व्वमिदं जगत् ॥ २६
यजेदेकं विरूपाक्षं न पापैः स प्रलिप्यते।
शैलं लिङ्गं मदीयं हि सर्व्वदेवनमस्कृतम् ॥ २७
इत्युक्त्वा पूर्व्वमभ्यर्च्च्य रुद्रं त्रिभुवनेश्वरम्।
तुष्टाव वाग्भिरिष्टाभिर्देवदेवं त्रियम्बकम् ॥ २८
तदाप्रभृति शक्राद्याः पूजयामासुरीश्वरम्।
साक्षात् पाशुपतं कृत्वा भस्मोद्धूलितविग्रहाः ॥ २९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

## चतुःसप्ततितमोऽध्यायः।

सूत उवाच।

लिङ्गानि कल्पयित्वैवं स्वाधिकारानुरूपतः।
विश्वकर्म्मा ददौ तेषां नियोगाद्ब्रह्मणः प्रभोः ॥ १
इन्द्रनीलमयं लिङ्गं विष्णुना पूजितं सदा।
पद्मरागमयं शक्रो हैमं विश्रवसः सुतः ॥ २
विश्वेदेवास्तथा रौप्यं वसवः कान्तिकं शुभम्।
आरकूटमयं वायुरश्विनौ पार्थिवं सदा ॥ ३
स्फाटिकं वरुणो राजा आदित्यास्ताम्रनिर्म्मितम्।
मौक्तिकं सोमराड्धीमांस्तथा लिङ्गमनुत्तमम् ॥ ४
अनन्ताद्या महानागाः प्रवालकमयं शुभम्।
दैत्या ह्ययोमयं लिङ्गं राक्षसाश्च महात्मनः ॥ ५
त्रैलोहिकं गुह्यकाश्च सर्व्वलोहमयं गणाः।
चामुण्डा सैकतं साक्षान्मातरश्च द्विजोत्तमाः ॥ ६
दारुजं निरृतिर्भक्त्या यमो मारकतं शुभम्।
नीलाद्याश्च तथा रुद्राः शुद्धं भस्ममयं शुभम् ॥ ७
लक्ष्मीवृक्षमयं लक्ष्मीर्गुहो वै गोमयात्मकम्।
मुनयो मुनिशार्दूलाः कुशाग्रमयमुत्तमम् ॥ ८
वामाद्याः पुष्पलिङ्गन्तु गन्धलिङ्गं मनोन्मनी।
सरस्वती च रत्नेन कृतं रुद्रस्य वाग्भवा ॥ ९
दुर्गा हैमं महादेवं सवेदिकमनुत्तमम्।
उग्रा पिष्टमयं सर्व्वं मन्त्रा ह्याज्यमयं शुभम् ॥ १०
वेदाः सर्व्वे दधिमयं पिशाचाः सीसनिर्म्मितम्।
लेभिरे च यथायोग्यं प्रसादाद्ब्रह्मणः पदम् ॥ ११
बहुनात्र किमुक्तेन चराचरमिदं जगत्।
शिवलिङ्गं समभ्यर्च्च्य स्थितमत्र न संशयः ॥ १२
षड्विधं लिङ्गमित्याहुर्द्रव्याणाञ्च प्रभेदतः।
तेषां भेदाश्चतुर्युक्तचत्वारिंशदिति स्मृताः ॥ १३
शैलजं प्रथमं प्रोक्तं तद्धि साक्षाच्चतुर्व्विधम्।
द्वितीयं रत्नजं तच्च सप्तधा मुनिसत्तमाः ॥ १४
तृतीयं धातुजं लिङ्गमष्टधा परमेष्ठिनः।
तुरीयं दारुजं लिङ्गं तत् तु षोड़शधोच्यते ॥ १५
मृण्मयं पञ्चमं लिङ्गं द्विधा भिन्नं द्विजोत्तमाः।
षष्ठन्तु क्षणिकं लिङ्गं सप्तधा परिकीर्त्तितम् ॥ १६
श्रीप्रदं रत्नजं लिङ्गं शैलजं सर्व्वसिद्धिदम्।
धातुजं धनदं साक्षाद्दारुजं भोगसिद्धिदम् ॥ १७
मृण्मयञ्चैव विप्रेन्द्राः सर्व्वसिद्धिकरं शुभम्।
शैलजञ्चोत्तमं प्रोक्तं मध्यमञ्चैव धातुजम् ॥ १८
बहुधा लिङ्गभेदाश्च नव चैव समासतः।
मूले ब्रह्मा तथा मध्ये विष्णुस्त्रिभुवनेश्वरः ॥ १९
रुद्रोपरि महादेवः प्रणवाख्यः सदाशिवः।
लिङ्गवेदी महादेवी त्रिगुणा त्रिमयाम्बिका ॥ २०
तया च पूजयेद्यस्तु देवी देवश्च पूजितौ।
शैलजं रत्नजं वापि धातुजं वापि दारुजम् ॥ २१
मृण्मयं क्षणिकं वापि भक्त्या स्थाप्यं फलं शुभम्।
सुरेन्द्राम्भोजगर्भाग्नि-यमाम्बुपधनेश्वरैः ॥ २२
सिद्धविद्याधराहीन्द्रैर्यक्षदानवकिन्नरैः।
स्तूयमानः सुपुण्यात्मा देवदुन्दुभिनिस्वनैः ॥ २३
भूर्भुवःस्वर्महर्लोकान् क्रमाद्वै जनतः परम्।
तपः सत्यं पराक्रम्य भासयन् स्वेन तेजसा ॥ २४
लिङ्गस्थापनसन्मार्ग-निहितस्वायतासिना।
आशु ब्रह्माण्डमुद्भिद्य निर्गच्छेन्निविशङ्कया ॥ २५
शैलजं रत्नजं वापि धातुजं वापि दारुजम्।
मृण्मयं क्षणिकं त्यक्त्वा स्थापयेत् सकलं वपुः ॥ २६
विधिना चैव कृत्वा तु स्कन्दोमासहितं शुभम्।
कुन्दगोक्षीरसङ्काशं लिङ्गं यः स्थापयेन्नरः ॥ २७
दृणां तनं समास्थाय स्थितो रुद्रो न संशयः।

दर्शनात् स्पर्शनात् तस्य लभन्ते निर्वृतिं नराः ॥ २८
तस्य पुण्यं मया वक्तुं सम्यग्युगशतैरपि।
शक्यते नैव विप्रेन्द्रास्तस्मादेवं स्थापयेत् तथा ॥ २९
सर्व्वेषामेव मर्त्यानां विभोर्दिव्यं वपुः शुभम्।
सकलं भावनायोग्यं योगिनामेव निष्कलम् ॥ ३०

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

## पञ्चसप्ततितमोऽध्यायः।

ऋषय ऊचुः।

निष्कलो निर्म्मलो नित्यः सकलत्वं कथं गतः।
वक्तुमर्हसि चास्माकं यथापूर्व्वं यथाश्रुतम् ॥ १

सूत उवाच।

परमार्थविदः केचिदूचुः प्रणवरूपिणम्।
विज्ञानमिति विप्रेन्द्राः श्रुत्वा श्रुतिशिरस्यजम् ॥ २
शब्दादिविषयं ज्ञानं ज्ञानमित्यभिधीयते।
तज्ज्ञानं भ्रान्तिरहितमित्यन्ये नेति चापरे ॥ ३
यज्ज्ञानं निर्म्मलं शुद्धं निर्विकल्पं निराश्रयम्।
गुरुप्रकाशकं ज्ञानमित्यन्ये मुनयो द्विजाः ॥ ४
ज्ञानेनैव भवेन्मुक्तिः प्रसादो ज्ञानसिद्धये।
उभाभ्यां मुच्यते योगी तत्रानन्दमयो भवेत् ॥ ५
वदन्ति मुनयः केचित् कर्म्मणा तस्य सङ्गतिम्।
कल्पनाकल्पितं रूपं संहृत्य स्वेच्छयैव हि ॥ ६
द्यौर्मूर्द्धा तु विभोस्तस्य खं नाभिः परमेष्ठिनः।
सोमसूर्य्याग्नयो नेत्रं दिशः श्रोत्रं महात्मनः ॥ ७
चरणौ चैव पातालं समुद्रस्तस्य चाम्बरम्।
देवास्तस्य भुजाः सर्व्वे नक्षत्राणि च भूषणम् ॥ ८
प्रकृतिस्तस्य पत्नी च पुरुषो लिङ्गमुच्यते।
वक्त्राद्वै ब्राह्मणाः सर्व्वे ब्रह्मा च भगवान् प्रभुः ॥ ९
इन्द्रोपेन्द्रौ भुजाभ्यान्तु क्षत्रियाश्च महात्मनः।
वक्षाश्चोरुप्रदेशात् तु शूद्राः पादात् पिनाकिनः ॥१०
पुष्करावर्त्तकाद्यास्तु केशास्तस्य प्रकीर्त्तिताः।
वायवो घ्राणजास्तस्य गतिः श्रौतं स्मृतिस्तथा ॥११
अथानेनैव कर्म्मात्मा प्रकृतेस्तु प्रवर्त्तकः।
पुंसान्तु पुरुषः श्रीमान् ज्ञानगम्यो न चान्यथा ॥१२
कर्म्मयज्ञसहस्रेभ्यस्तपोयज्ञो विशिष्यते।
तपोयज्ञसहस्रेभ्यो जपयज्ञो विशिष्यते ॥ १३
जपयज्ञसहस्रेभ्यो ध्यानयज्ञो विशिष्यते।
ध्यानयज्ञात्परो नास्ति ध्यानं ज्ञानस्य साधनम् ॥१४
यदा समरसे निष्ठो योगी ध्यानेन पश्यति।
ध्यानयज्ञरतस्यास्य तदा सन्निहितः शिवः ॥ १५
नास्ति विज्ञानिनां शौचं प्रायश्चित्तादिचोदना।
विशुद्धा विद्यया सर्व्वे ब्रह्मविद्याविदो जनाः ॥ १६
नास्ति क्रिया च लोकेषु सुखं दुःखं विचारतः।
धर्म्माधर्म्मौ जपो होमो ध्यानिनां सन्निधिः सदा ॥१७
परानन्दात्मकं लिङ्गं विशुद्धं शिवमक्षरम्।
निष्कलं सर्व्वगं ज्ञेयं योगिनां हृदि संस्थितम् ॥१८
लिङ्गन्तु द्विविधं प्राहुर्बाह्यमाभ्यन्तरं द्विजाः।
बाह्यं स्थूलं मुनिश्रेष्ठाः सूक्ष्ममाभ्यन्तरं द्विजाः ॥ १९
कर्म्मयज्ञरताः स्थूलाः स्थूललिङ्गार्चने रताः।
असतां भावनार्थाय नान्यथा स्थूलविग्रहः ॥ २०
आध्यात्मिकञ्च यल्लिङ्गं प्रत्यक्षं यस्य नो भवेत्।
असौ मूढो बहिः सर्व्वं कल्पयित्वैव नान्यथा ॥ २१
ज्ञानिनां सूक्ष्मममलं भवेत् प्रत्यक्षमव्ययम्।
यथा स्थूलमयुक्तानां मृत्काष्ठाद्यैः प्रकल्पितम् ॥ २२
अर्थो विचारतो नास्तीत्यन्ये तत्त्वार्थवेदिनः।
निष्कलः सकलश्चेति सर्व्वं शिवमयं ततः ॥ २३
व्योमैकमपि दृष्टं हि शरावं प्रति सुव्रताः।
पृथक्त्वञ्चापृथक्त्वञ्च शङ्करस्येति चापरे ॥ २४
प्रत्ययार्थं हि जगतामेकस्थोऽपि दिवाकरः।
एकोऽपि बहुधा दृष्टो जलाधारेषु सुव्रताः ॥ २५
जन्तवो दिवि भूमौ च सर्व्वे वै पाञ्चभौतिकाः।
तथापि बहुला दृष्टा जातिव्यक्तिविभेदतः ॥ २६
दृश्यते श्रूयते यद्यत् तत्तद्विद्धि शिवात्मकम्।
भेदो जनानां लोकेऽस्मिन् प्रतिभासो विचारतः ॥२७
स्वप्ने च विपुलान् भोगान् भुक्त्वा मर्त्यः सुखी भवेत्।
दुःखी च भोगं दुःखञ्च नानुभूतं विचारतः ॥ २८
एवमाहुस्तथान्ये च सर्व्वे वेदार्थतत्त्वगाः।
हृदि संसारिणां साक्षात् सकलः परमेश्वरः ॥ २९
योगिनां निष्कलो देवो ज्ञानिनाञ्च जगन्मयः।
त्रिविधं परमेशस्य वपुर्लोके प्रशस्यते ॥ ३०
निष्कलं प्रथमञ्चैकं ततः सकलनिष्कलम्।
तृतीयं सकलञ्चैव नान्यथेति द्विजोत्तमाः ॥ ३१

अर्च्चयन्ति मुहुः केचित् सदा सकलनिष्कलम् ।
सर्व्वज्ञं हृदये केचिच्छिवलिङ्गे विभावसौ ॥ ३२
सकलं मुनयः केचित् सदा संसारवर्त्तिनः ।
एवमभ्यर्च्चयन्त्येव सदाराः ससुता नराः ॥ ३३
यथा शिवस्तथा देवी यथा देवी तथा शिवः ।
तस्मादभेदबुद्ध्यैव सप्तविंशत्प्रभेदतः ॥ ३४
यजन्ति देहे वाह्ये च चतुष्कोणे षडस्रके ।
दशारे द्वादशारे च षोड़शारे त्रिरस्रके ॥ ३५
स स्वेच्छया शिवः साक्षाद्देव्या सार्द्धं स्थितः प्रभुः ।
सन्तारणार्थञ्च शिवः सदसद्व्यक्तिवर्ज्जितः ॥ ३६

तमेकमाहुर्द्विगुणञ्च केचित्
केचित् तमाहुस्त्रिगुणात्मकञ्च ।
जचुस्तथा तञ्च शिवं तथान्ये
संसारिणं वेदविदो वदन्ति ॥ ३७
भक्त्या च योगेन शुभेन युक्ता
विप्राः सदा धर्म्मरता विशिष्टाः ।
यजन्ति योगेशमशेषमूर्त्तिं
षड़स्रमध्ये भगवन्तमेव ॥ ३८
ये तत्र पश्यन्ति शिवं त्रिरस्रे
त्रितत्त्वमध्ये त्रिगुणं त्रियक्षम् ।
ते यान्ति चैनं न च योगिनोऽन्ये
तया च देव्या पुरुषं पुराणम् ॥ ३९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
शिवाद्वैतकथनं नाम पञ्चसप्तति-
तमोऽध्यायः ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्यायः ।

सूत उवाच ।

अतः परं प्रवक्ष्यामि स्वेच्छाविग्रहसम्भवम् ।
प्रतिष्ठायाः फलं सर्व्वं सर्व्वलोकहिताय व ॥ १
स्कन्दोमासहितं देवमासीनं परमासने ।
कृत्वा भक्त्या प्रतिष्ठाप्य सर्व्वान् कामानवाप्नुयात् ॥ २
स्कन्दोमासहितं देवं सम्पूज्य विधिना सकृत् ।
यत् फलं लभते मर्त्यस्तद्वदामि यथाश्रुतम् ॥ ३
सूर्य्यकोटिप्रतीकाशैर्विमानैः सार्व्वकामिकैः ।
रुद्रकन्यासमाकीर्णैर्गेयनाद्यसमन्वितैः ॥ ४

शिववत् क्रीड़ते योगी यावदाभूतसंप्लवम् ।
तत्र भुक्त्वा महाभोगान् विमानैः सार्व्वकामिकैः ।
औमं कौमारमैशानं वैष्णवं ब्राह्ममेव च ।
प्राजापत्यं महातेजा जनलोकं महस्तथा ॥ ६
ऐन्द्रमासाद्य चेन्द्रत्वं कृत्वा वर्षायुतं पुनः ।
भुक्त्वा चैव भुवर्लोके भोगान् दिव्यान् सुशोभनान्
मेरुमासाद्य देवानां भवनेषु प्रमोदते ।
एकपादं चतुर्ब्बाहुं त्रिनेत्रं शूलसंयुतम् ॥ ८
सृष्ट्वा स्थितं हरिं वामे दक्षिणे चतुराननम् ।
अष्टाविंशतिरुद्राणां कोटीः सर्व्वाङ्गसुप्रभम् ॥ ९
पञ्चविंशतिकं साक्षात् पुरुषं हृदयात् तथा ।
प्रकृतिं वामतश्चैव बुद्धिं वै बुद्धिदेशतः ॥ १०
अहङ्कारमहङ्कारात् तन्मात्राणि तु तत्र वै ।
इन्द्रियाणीन्द्रियादेव लीलया परमेश्वरम् ॥ ११
पृथिवीं पादमूलात् तु गुह्यदेशाज्जलं तथा ।
नाभिदेशात् तथा वह्निं हृदयाद्भास्करं तथा ॥
कण्ठात् सोमं तथात्मानं भ्रूमध्यान्मस्तकाद्दिवम् ।
सृष्ट्वैवं संस्थितं साक्षाज्जगत् सर्व्वं चराचरम् ॥ १३
सर्व्वज्ञं सर्व्वगं देवं कृत्वा विद्याविधानतः ।
प्रतिष्ठाप्य यथान्यायं शिवसायुज्यमाप्नुयात् ॥ १४
त्रिपादं सप्तहस्तञ्च चतुःशृङ्गं द्विशीर्षकम् ।
कृत्वा यज्ञेशमीशानं विष्णुलोके महीयते ॥ १५
तत्र भुक्त्वा महाभोगान् कल्पलक्षं सुखी नरः ।
क्रमादागत्य लोकेऽस्मिन् सर्व्वयज्ञान्तगो भवेत् ॥ १६
वृषारूढ़न्तु यः कुर्य्यात् सोमं सोमार्द्धभूषणम् ।
हयमेधायुतं कृत्वा यत् पुण्यं तदवाप्य सः ॥ १७
काञ्चनेन विमानेन किङ्किणीजालमालिना ।
गत्वा शिवपुरं दिव्यं तत्रैव स विमुच्यते ॥ १८
नन्दिना सहितं देवं साम्बं सर्व्वगणैर्वृतम् ।
कृत्वा यत् फलमाप्नोति वक्ष्ये तद्वै यथाश्रुतम् ॥ १९
सूर्य्यमण्डलसङ्काशैर्विमानैर्वृषसंयुतैः ।
अप्सरोगणसङ्कीर्णैर्देवदानवदुर्लभैः ॥ २०
नृत्यद्भिरप्सरःसङ्घैः सर्व्वतः सर्व्वशोभितैः ।
गत्वा शिवपुरं दिव्यं गाणपत्यमवाप्नुयात् ॥ २१
नृत्यन्तं देवदेवेशं शैलजासहितं प्रभुम् ।
सहस्रबाहुं सर्व्वज्ञं चतुर्ब्बाहुमथापि वा ॥ २२
भृग्वाद्यैर्भूतसङ्घैश्च संवृतं परमेश्वरम् ।

श्वेतजावहितं साक्षाद्वृषभध्वजमीश्वरम् ॥ २३
ब्रह्मेन्द्रविष्णुसोमाद्यैः सदा सर्व्वैर्नमस्कृतम्।
मातृभिर्मुनिभिश्चैव संवृतं परमेश्वरम् ॥ २४
कृत्वा भक्त्या प्रतिष्ठाप्य यत् फलं तद्वदाम्यहम्।
सर्व्वयज्ञतपोदान-तीर्थदेवेषु यत् फलम् ॥ २५
तत् फलं कोटिगुणितं लब्धा याति शिवं पदम्।
तत्र भुक्त्वा महाभोगान् यावदाभूतसंप्लवम् ॥ २६
सृष्ट्यन्तरे पुनः प्राप्ते मानवं पदमाप्नुयात्।
नग्नं चतुर्भुजं श्वेतं त्रिनेत्रं सर्पमेखलम् ॥ २७
कपालहस्तं देवेशं कृष्णाकुञ्चितमूर्द्धजम्।
कृत्वा भक्त्या प्रतिष्ठाप्य शिवसायुज्यमाप्नुयात् ॥ २८
इभेन्द्रदारकं देवं साम्बं सिद्धार्थदं प्रभुम्।
सुधूम्रवर्णं रक्ताक्षं त्रिनेत्रं चन्द्रभूषणम् ॥ २९
काकपक्षधरं मूर्द्ध्ना नागटङ्कधरं हरम्।
सिंहाजिनोत्तरीयञ्च मृगचर्म्माम्बरं प्रभुम् ॥ ३०
तीक्ष्णदंष्ट्रं गदाहस्तं कपालोद्यतपाणिनम्।
हुंफट्कारे महाशब्द-शब्दिताखिलदिङ्मुखम् ॥ ३१
पुण्डरीकाजिनं दोर्भ्यां बिभ्रतं कम्बुकं तथा।
हसन्तञ्च नदन्तञ्च पिबन्तं कृष्णसागरम् ॥ ३२
नृत्यन्तं भूतसङ्घैश्च गणसङ्घैरलङ्कृतम्।
कृत्वा भक्त्या प्रतिष्ठाप्य यथाविभवविस्तरम् ॥ ३३
सर्व्वविघ्नानतिक्रम्य शिवलोके महीयते।
तत्र भुक्त्वा महाभोगान् यावदाभूतसंप्लवम् ॥ ३४
ज्ञानं विचारतो लब्धा रुद्रेभ्यस्तत्र मुच्यते।
अर्द्धनारीश्वरं देवं चतुर्भुजमनुत्तमम् ॥ ३५
वरदाभयहस्तञ्च शूलपद्मधरं प्रभुम्।
स्त्रीपुम्भावेण संस्थानं सर्व्वाभरणभूषितम् ॥ ३६
कृत्वा भक्त्या प्रतिष्ठाप्य शिवलोके महीयते।
तत्र भुक्त्वा महाभोगानणिमादिगुणैर्युतः ॥ ३७
आचन्द्रतारकं ज्ञानं ततो लब्धा विमुच्यते।
यः कुर्य्याद्देवदेवेशं सर्व्वज्ञं लकुलीश्वरम् ॥ ३८
वृतं शिष्यप्रशिष्यैश्च व्याख्यानोद्यतपाणिनम्।
कृत्वा भक्त्या प्रतिष्ठाप्य शिवलोकं स गच्छति ॥ ३९
भुक्त्वा तु विपुलांस्तत्र भोगान् युगशतं नरः।
ज्ञानयोगं समासाद्य तत्रैव च विमुच्यते ॥ ४०
पूर्व्वदेवामराणाञ्च यत् स्थानं सकलेप्सितम्।
कृतमुद्रस्य देवस्य चिताभस्मानुलेपिनः ॥ ४१
त्रिपुण्ड्रधारिणस्तेषां शिरोमालाधरस्य च।
ब्रह्मणः केशकेनैकसुपवीतञ्च बिभ्रतः ॥ ४२
बिभ्रती वामहस्तेन कपालं ब्रह्मणो वरम्।
विष्णोः कलेवरञ्चैव बिभ्रतः परमेष्ठिनः ॥ ४३
कृत्वा भक्त्या प्रतिष्ठाप्य मुच्यते भवसागरात्।
ओँ नमो नीलकण्ठाय इति पुण्याक्षराष्टकम् ॥ ४४
मन्त्रमाह सकृद्वा यः पातकैः स विमुच्यते।
मन्त्रेणानेन गन्धाद्यैर्भक्त्या वित्तानुसारतः ॥ ४५
सम्पूज्य देवदेवेशं शिवलोके महीयते।
जालन्धरान्तकं देवं सुदर्शनधरं प्रभुम् ॥ ४६
कृत्वा भक्त्या प्रतिष्ठाप्य द्विधाभूतं जलन्धरम्।
प्रयाति शिवसायुज्यं नात्र कार्य्या विचारणा ॥ ४७
सुदर्शनप्रदं देवं साक्षात् पूर्व्वोक्तलक्षणम्।
अर्च्चमानेन देवेन चार्च्चितं नेत्रपूजया ॥ ४८
कृत्वा भक्त्या प्रतिष्ठाप्य शिवलोके महीयते।
तिष्ठतोऽथ निकुम्भस्य पृष्ठतश्चरणाम्बुजम् ॥ ४९
वामेतरं सुविन्यस्य वामे चालिङ्ग्य चाद्रिजाम्।
शूलाग्रे कूर्परं स्थाप्य किङ्किणीकृतपन्नगम् ॥ ५०
सम्प्रेक्ष्य चान्धकं पार्श्वे कृताञ्जलिपुटं स्थितम्।
रूपं कृत्वा अथान्यायं शिवसायुज्यमाप्नुयात् ॥ ५१
यः कुर्य्याद्देवदेवेशं त्रिपुरान्तकमीश्वरम्।
धनुर्व्वाणसमायुक्तं सोमं सोमार्द्धभूषणम् ॥ ५२
रथे सुसंस्थितं देवं चतुराननसारथिम्।
तदाकारतया सोऽपि गत्वा शिवपुरं सुखी ॥ ५३
क्रीडते नात्र सन्देहो द्वितीय इव शङ्करः।
तत्र भुक्त्वा महाभोगान् यावदिच्छा द्विजोत्तमाः ॥ ५४
ज्ञानं विचारितं लब्धा तत्रैव स विमुच्यते।
गङ्गाधरं सुखासीनं चन्द्रशेखरमेव च ॥ ५५
गङ्गया सहितञ्चैव वामोत्सङ्गेऽम्बिकान्वितम्।
विनायकं तथा स्कन्दं ज्येष्ठं दुर्गां सुशोभनाम् ॥ ५६
भास्करञ्च तथा सोमं ब्रह्माणीञ्च महेश्वरीम्।
कौमारीं वैष्णवीं देवीं वाराहीं वरदां तथा ॥ ५७
इन्द्राणीञ्चैव चामुण्डां वीरभद्रसमन्विताम्।
विघ्नेशेन च यो धीमान् शिवसायुज्यमाप्नुयात् ॥ ५८
लिङ्गमूर्त्तिं महाज्वाला-मालासंवृतमव्ययम्।
लिङ्गस्य मध्ये वै कृत्वा चन्द्रशेखरमीश्वरम् ॥ ५९
व्योम्नि कुर्य्यात् तथा लिङ्गं ब्रह्माणं हंसरूपिणम्।

विष्णुं वराहरूपेण लिङ्गस्याधस्त्वधोमुखम् ॥ ६०
ब्रह्माणं दक्षिणे तस्य कृताञ्जलिपुटं स्थितम्।
मध्ये लिङ्गं महाघोरं महाम्भसि च संस्थितम्।
कृत्वा भक्त्या प्रतिष्ठाप्य शिवसायुज्यमाप्नुयात् ॥ ६१
त्रैलोक्यसंरक्षकं देवं तथा पाशुपतं प्रभुम्।
कृत्वा भक्त्या यथान्यायं शिवलोके महीयते ॥ ६२

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे शिवमूर्त्ति-
प्रतिष्ठाफलकथनं नाम षट्सप्तति-
तमोऽध्यायः ॥ ७६ ॥

---

## सप्तसप्ततितमोऽध्यायः।

ऋषय ऊचुः।

लिङ्गप्रतिष्ठापुण्यञ्च लिङ्गस्थापनमेव च।
लिङ्गानाञ्चैव भेदाश्च श्रुतं तव मुखादिह ॥ १
मृदादिरत्नपर्य्यन्तैर्द्रव्यैः कृत्वा शिवालयम्।
यत् फलं लभते मर्त्त्यस्तत् फलं वक्तुमर्हसि ॥ २

सूत उवाच।

यस्य भक्तोऽपि लोकेऽस्मिन् पुत्रदारगृहादिभिः।
बाध्यते ज्ञानयुक्तश्चेन्न च तस्य गृहैस्तु किम् ॥ ३
तथापि भक्ताः परमेश्वरस्य
कृत्वेष्टलोष्टैरपि रुद्रलोकम्।
प्रयान्ति दिव्यं हि विमानवर्य्यैः
सुरेन्द्रपद्मोद्भववन्दितस्य ॥ ४
बाल्यात् तु लोष्टेन शिवञ्च कृत्वा
मृदापि वा पांशुभिरादिदेवम्।
गृहञ्च तादृग्विधमस्य शम्भोः
सम्पूज्य रुद्रत्वमवाप्नुवन्ति ॥ ५
तस्मात् सर्व्वप्रयत्नेन भक्त्या भक्तैः शिवालयम्।
कर्त्तव्यं सर्व्वयत्नेन धर्म्मकामार्थसिद्धये ॥ ६
केसरं नागरं वापि द्राविड़ं वा तथा परम्।
कृत्वा रुद्रालयं भक्त्या शिवलोके महीयते ॥ ७
कैलासाख्यञ्च यः कुर्य्यात् प्रासादं परमेष्ठिनः।
कैलासशिखराकारैर्विमानैर्मोदते सुखी ॥ ८
मन्दरं वा प्रकुर्व्वीत शिवाय विधिपूर्व्वकम्।
भक्त्या वित्तानुसारेण उत्तमाधममध्यमम् ॥ ९
मन्दराद्रिप्रतीकाशैर्विमानैर्विश्वतोमुखैः।
अप्सरोगणसङ्कीर्णैर्देवदानवदुर्लभैः ॥ १०
गत्वा शिवपुरं रम्यं भुक्त्वा भोगान् यथेप्सितान्।
ज्ञानयोगं समासाद्य गाणपत्यं लभेन्नरः ॥ ११
यः कुर्य्यान्मेरुनामानं प्रासादं परमेष्ठिनः।
स यत् फलमवाप्नोति न तत् सर्व्वैर्महामखैः ॥ १२
सर्व्वयज्ञ-तपो-दान-तीर्थ-वेदेषु यत् फलम्।
तत् फलं सकलं लब्ध्वा शिववन्मोदते चिरम् ॥ १३
निषधं नाम यः कुर्य्यात् प्रासादं भक्तितः सुधीः।
शिवलोकमनुप्राप्य शिववन्मोदते चिरम् ॥ १४
कुर्य्याद्वा यः शुभं विप्रा हिमशैलमनुत्तमम्।
हिमशैलोपमैर्यानैर्गत्वा शिवपुरं शुभम् ॥ १५
ज्ञानयोगं समासाद्य गाणपत्यमवाप्नुयात्।
नीलाद्रिशिखराख्यं वा प्रासादं यः सुशोभनम् ॥ १६
कृत्वा वित्तानुसारेण भक्त्या रुद्राय शम्भवे।
यत् फलं लभते मर्त्त्यस्तत् फलं प्रवदाम्यहम् ॥ १७
हिमशैले कृते भक्त्या यत् फलं प्राक् तवोदितम्।
तत् फलं सकलं लब्ध्वा सर्व्वदेवनमस्कृतः ॥ १८
रुद्रलोकमनुप्राप्य रुद्रैः सार्द्धं प्रमोदते।
महेन्द्रशैलनामानं प्रासादं रुद्रसम्मतम् ॥ १९
कृत्वा यत् फलमाप्नोति तत् फलं प्रवदाम्यहम्।
महेन्द्रपर्व्वताकारैर्विमानैर्वृषसंयुतैः ॥ २०
गत्वा शिवपुरं दिव्यं भुक्त्वा भोगान् यथेप्सितान्।
ज्ञानं विचारितं रुद्रैः सम्प्राप्य मुनिपुङ्गवाः ॥ २१
विषयान् विषवत् त्यक्त्वा शिवसायुज्यमाप्नुयात्।
हेम्ना यस्तु प्रकुर्व्वीत प्रासादं रत्नशोभितम् ॥ २२
द्राविड़ं नागरं वापि केसरं वा विधानतः।
कूटं वा मण्डपं वापि समं वा दीर्घमेव च ॥ २३
न तस्य शक्यते वक्तुं पुण्यं शतयुगैरपि।
जीर्णं वा पतितं वापि खण्डितं स्फुटितं तथा ॥ २४
पूर्व्ववत् कारयेद्यस्तु द्वाराद्यैः सुशुभं द्विजाः।
प्रासादं मण्डपं वापि प्राकारं गोपुरन्तु वा ॥ २५
कर्त्तुरप्यधिकं पुण्यं लभते नात्र संशयः।
वृत्त्यर्थं वा प्रकुर्व्वीत नरः कर्म्म शिवालये ॥ २६
यः स याति न सन्देहः स्वर्गलोकं सबान्धवः।
यश्चात्मभोगसिद्ध्यर्थमपि रुद्रालये सकृत् ॥ २७
कर्म्म कुर्य्याद्‌ यदि सुखं लब्ध्वा चापि प्रमोदते।
तस्मादायतनं भक्त्या यः कुर्य्यान्मुनिसत्तमाः ॥ २८

काष्ठेष्टकादिभिर्मर्त्यः शिवलोके महीयते।
प्रसादार्थं महेशस्य प्रासादो मुनिपुङ्गवाः॥ २९
कर्त्तव्यः सर्व्वयत्नेन धर्मकामार्थमुक्तये।
अशक्तश्चेन्मुनिश्रेष्ठाः प्रासादं कर्त्तुमुत्तमम्॥ ३०
सम्मार्ज्जनादिभिर्वापि सर्व्वान् कामानवाप्नुयात्।
सम्मार्ज्जनन्तु यः कुर्य्यात्सम्मार्ज्जन्या मृदु सूक्ष्मया॥ ३१
चान्द्रायणसहस्रस्य फलं मासेन लभ्यते।
यः कुर्य्याद्वस्त्रपूतेन गन्धगोमयवारिणा॥ ३२
आलेपनं यथान्यायं वर्षचान्द्रायणं लभेत्।
अर्द्धक्रोशं शिवक्षेत्रं शिवलिङ्गात् समन्ततः॥ ३३
यस्त्यजेद्दुस्त्यजान् प्राणान् शिवसायुज्यमाप्नुयात्।
स्वायम्भुवस्य मानं हि तथा बाणस्य सुव्रताः॥ ३४
स्वायम्भुवे तदर्द्धं स्यात् स्यादार्षे च तदर्द्धकम्।
मानुषे च तदर्द्धं स्यात् क्षेत्रमानं द्विजोत्तमाः॥ ३५
एवं यतीनामावासे क्षेत्रमानं द्विजोत्तमाः।
रुद्रावतारे चार्द्धं यच्छिष्ये चैव प्रशिष्यके॥ ३६
नरावतारे तच्छिष्ये तच्छिष्ये च प्रशिष्यके।
श्रीपर्व्वते महापुण्ये तस्य प्रान्ते च वा द्विजाः॥ ३७
तस्मिन् वा यस्त्यजेत् प्राणान् शिवसायुज्यमाप्नुयात्
वाराणस्यां तथाप्येवमविमुक्ते विशेषतः॥ ३८
केदारे च महाक्षेत्रे प्रयागे च विशेषतः।
कुरुक्षेत्रे च यः प्राणान् सन्त्यजेद्व याति निर्वृतिम्॥३९
प्रभासे पुष्कलेऽवन्त्यां तथा चैवामरेश्वरे।
वर्णीशैलाकुले चैव मृतो याति शिवात्मताम्॥ ४०
वाराणस्यां मृतो जन्तुर्न जातु जन्तुतां व्रजेत्।
त्रिविष्टपे विमुक्ते च केदारे सङ्गमेश्वरे॥ ४१
शालङ्के वा त्यजेत् प्राणांस्तथा वै जम्बुकेश्वरे।
शुक्रेश्वरे वा गोकर्णे भास्करेशे गुहेश्वरे॥ ४२
हिरण्यगर्भे नन्दीशे स याति परमां गतिम्।
नियमैः शोष्य यो देहं त्यजेत् क्षेत्रे शिवस्य तु॥४३
स याति शिवतां योगी मानुषे दैविकेऽपि वा।
आर्षे वापि मुनिश्रेष्ठास्तथा स्वायम्भुवेऽपि वा॥ ४४
स्वयम्भूते तथा देवे नात्र कार्य्या विचारणा।
आधायाग्निं शिवक्षेत्रे सम्पूज्य परमेश्वरम्॥ ४५
स्वदेहपिण्डं जुहुयाद्यः स याति परां गतिम्।
यावत् तावन्निराहारो भूत्वा प्राणान् परित्यजेत्॥४६
शिवक्षेत्रे मुनिश्रेष्ठाः शिवसायुज्यमाप्नुयात्।
छित्त्वा पादद्वयञ्चापि शिवक्षेत्रे वसेत् तु यः॥ ४७
स याति शिवताञ्चैव नात्र कार्य्या विचारणा।
क्षेत्रस्य दर्शनं पुण्यं प्रवेशस्तच्छताधिकः॥ ४८
तस्माच्छतगुणं पुण्यं स्पर्शनञ्च प्रदक्षिणम्।
तस्माच्छतगुणं पुण्यं जलस्नानमतः परम्॥ ४९
क्षीरस्नानं ततो विप्राः शताधिकमनुत्तमम्।
दध्ना सहस्रमाख्यातं मधुना तच्छताधिकम्॥ ५०
घृतस्नानेन चानन्तं शार्करे तच्छताधिकम्।
शिवक्षेत्रसमीपस्थां नदीं प्राप्यावगाह्य च॥ ५१
त्यजेद्देहं विहायान्नं शिवलोके महीयते।
शिवक्षेत्रसमीपस्था नद्यः सर्व्वाः सुशोभनाः॥ ५२
वापीकूपतडागाश्च शिवतीर्था इति स्मृताः।
स्नात्वा तेषु नरो भक्त्या तीर्थेषु द्विजसत्तमाः॥ ५३
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः।
प्रातः स्नात्वा मुनिश्रेष्ठाः शिवतीर्थेषु मानवः॥ ५४
अश्वमेधफलं प्राप्य रुद्रलोकं स गच्छति।
मध्याह्ने शिवतीर्थेषु स्नात्वा भक्त्या सकृन्नरः॥ ५५
गङ्गास्नानसमं पुण्यं लभते नात्र संशयः।
अस्तं गते तथा चार्के स्नात्वा गच्छेच्छिवं पदम्॥५६
पापकञ्चुकमुत्सृज्य शिवतीर्थेषु मानवः।
द्विजास्त्रिषवणं स्नात्वा शिवतीर्थे सकृन्नरः॥ ५७
शिवसायुज्यमाप्नोति नात्र कार्य्या विचारणा।
पुराथ शूकरः कश्चित् श्वानं दृष्ट्वा भयात् पथि॥५८
प्रसङ्गाहारसेकन्तु शिवतीर्थेऽवगाह्य च।
मृतः स्वयं द्विजश्रेष्ठा गाणपत्यमवाप्तवान्॥ ५९
यः प्रातर्देवदेवेशं शिवं लिङ्गस्वरूपिणम्।
पश्येत् स याति सर्व्वस्मादधिकां गतिमेव च॥ ६०
मध्याह्ने च महादेवं दृष्ट्वा यज्ञफलं लभेत्।
सायाह्ने सर्व्वयज्ञानां फलं प्राप्य विमुच्यते॥ ६१
मानसैर्वाचिकैः पापैः कायिकैश्च महत्तरैः।
तथोपपातकैश्चैव पापैश्चैवानुपातकैः॥ ६२
सङ्क्रमे देवमीशानं दृष्ट्वा लिङ्गाकृतिं प्रभुम्।
मासेन यत् कृतं पापं त्यक्त्वा याति शिवं पदम्॥ ६३
अयने सार्द्धमासेन दक्षिणे चोत्तरायणे।
विषुवे चैव सम्पूज्य प्रयाति परमां गतिम्॥ ६४
प्रदक्षिणत्रयं कुर्य्याद्यः प्रासादं समन्ततः।
सव्यापसव्यन्यायेन मृदुगत्या शुचिर्नरः॥ ६५

पदे पदेऽश्वमेधस्य यज्ञस्य फलमाप्नुयात्।
वाचा यस्तु शिवं नित्यं संरौति परमेश्वरम् ॥ ६६
सोऽपि याति शिवं स्थानं प्राप्यं किं पुनरेव च।
कृत्वा मण्डलकं चैवं गन्धगोमयवारिणा ॥ ६७
मुक्ताफलमयैश्चूर्णैरिन्द्रनीलमयैस्तथा।
पद्मरागमयैश्चैव स्फाटिकैश्च सुशोभनैः ॥ ६८
तथा मारकतैश्चैव सौवर्णै राजतैस्तथा।
तद्वणैर्मौक्तिकैश्चैव चूर्णैर्वित्तविवर्ज्जितैः ॥ ६९
आलिख्य कमलं भद्रं दशहस्तप्रमाणतः।
सवर्णिकं महाभागा महादेवसमीपतः ॥ ७०
तत्रावाह्य महादेवं नवशक्तिसमन्वितम्।
पञ्चभिश्च तथा षड्भिरष्टाभिश्चेष्टदं परम् ॥ ७१
पुनरष्टाभिरीशानं दशारे दशभिस्तथा।
पुनर्वान्हे च दशभिः सम्पूज्य प्रणिपत्य च ॥ ७२
निवेद्य देवदेवाय क्षितिदानफलं लभेत्।
शालिपिष्टादिभिर्वापि पद्ममालिख्य निर्द्धनः ॥ ७३
पूर्व्वोक्तमखिलं पुण्यं लभते नात्र संशयः।
द्वादशारं तथालिख्य मण्डले पद्ममुत्तमम् ॥ ७४
रत्नचूर्णादिभिश्चूर्णैस्तथा द्वादशमूर्त्तिभिः।
मण्डलस्य च मध्ये तु भास्करं स्थाप्य पूजयेत् ॥ ७५
अर्घ्येश्च संवृतं वापि सूर्य्यसायुज्यमुत्तमम्।
एवं प्राकृतमप्यार्थ्यां षड्स्रं परिकल्प्य च ॥ ७६
मध्यदेशे च देवेशीं प्रकृतिं ब्रह्मरूपिणीम्।
दक्षिणे सत्त्वमूर्त्तिञ्च वामतश्च रजोगुणम् ॥ ७७
अग्रतस्तु तमोमूर्त्तिं मध्ये देवीं तथाम्बिकाम्।
पञ्चभूतानि तन्मात्रापञ्चकञ्चैव दक्षिणे ॥ ७८
कर्म्मेन्द्रियाणि पञ्चैव तथा बुद्धीन्द्रियाणि च।
उत्तरे विधिवत् पूज्य षड्स्रे चैव पूजयेत् ॥ ७९
आत्मानञ्चान्तरात्मानं युगलं बुद्धिमेव च।
अहङ्कारञ्च महता सर्व्वयज्ञफलं लभेत् ॥ ८०
एवं वः कथितं सर्व्वं प्राकृतं मण्डलं परम्।
अतो वक्ष्यामि विप्रेन्द्राः सर्व्वकामार्थसाधनम् ॥ ८१
गोचर्म्ममात्रमालिख्य मण्डलं गोमयेन तु।
चतुरस्रं विधानेन चाग्निरभ्युक्ष्य मन्त्रवित् ॥ ८२
अलङ्कृत्य वितानाद्यैश्छत्रैर्वापि मनोरमैः।
बुद्बुदैरर्द्धचन्द्रैश्च हैमैरश्वत्थपत्रकैः ॥ ८३
सितैर्विकसितैः पद्मै रक्तैर्नीलोत्पलैस्तथा।
मुक्तादामैर्वितानान्ते लम्बितैस्तु सितध्वजैः ॥ ८४
सितमृत्पात्रकैश्चैव सुस्नच्छैः पूर्णकुम्भकैः।
फलपल्लवमालाभिर्वैजयन्तीभिरंशुकैः ॥ ८५
पञ्चाशद्दीपमालाभिर्धूपैः पञ्चविधैस्तथा।
पञ्चाशद्दलसंयुक्तमालिखेत् पद्ममुत्तमम् ॥ ८६
तत्तद्वर्णैस्तथा चूर्णैः श्वेतचूर्णैरथापि वा।
एकहस्तप्रमाणेन कृत्वा पद्मं विधानतः ॥ ८७
कर्णिकायां न्यसेद्देवं देव्या देवेश्वरं भवम्।
वर्णानि च न्यसेत् पत्रे रुद्रैः प्रागाद्यनुक्रमात् ॥ ८८
प्रणवादिनमोऽन्तानि सर्व्ववर्णानि सुव्रताः।
सम्पूज्यैवं मुनिश्रेष्ठा गन्धपुष्पादिभिः क्रमात् ॥ ८९
ब्राह्मणान् भोजयेत् तत्र पञ्चाशद्विधिपूर्व्वकम्।
अक्षमालोपवीतञ्च कुण्डलञ्च कमण्डलुम् ॥ ९०
आसनञ्च तथा दण्डमुष्णीषं वस्त्रमेव च।
दत्त्वा तेषां मुनीन्द्राणां देवदेवाय शम्भवे ॥ ९१
महाचरुं निवेद्यैवं कृष्णां गोमिथुनं तथा।
अन्ते च देवदेवाय दापयेच्चूर्णमण्डलम् ॥ ९२
यागोपयोगद्रव्याणि शिवाय विनिवेदयेत्।
ओङ्काराद्यं जपेद्धीमान् प्रतिवर्णमनुक्रमात् ॥ ९३
एवमालिख्य यो भक्त्या सर्व्वमण्डलमुत्तमम्।
यत् फलं लभते मर्त्त्यस्तद्वदामि समासतः ॥ ९४
साङ्गान् वेदान् यथान्यायमधीत्य विधिपूर्व्वकम्।
इष्ट्वा यज्ञैर्यथान्यायं ज्योतिष्टोमादिभिः क्रमात् ॥
ततो विश्वजिदन्तैश्च पुत्रानुत्पाद्य तादृशान्।
वानप्रस्थाश्रमं गत्वा सदारः साग्निरेव च ॥ ९६
चान्द्रायणादिकाः सर्व्वाः कृत्वा न्यस्य क्रिया वि-
ब्रह्मविद्यामधीत्यैव ज्ञानमासाद्य यत्नतः ॥ ९७
ज्ञानेन ज्ञेयमालोक्य योगी यत्फलमाप्नुयात्।
तत् फलं लभते सर्व्वं वर्णमण्डलदर्शनात् ॥ ९८
येन केनापि वा मर्त्त्यः प्रलिप्यायतनाग्रतः।
उत्तरे दक्षिणे वापि पृष्ठतो वा द्विजोत्तमाः ॥ ९९
चतुष्कोणन्तु वा चूर्णैरलङ्कृत्य समन्ततः।
पुष्पाक्षतादिभिः पूज्य सर्व्वपापैः प्रमुच्यते ॥ १००
यस्तु गर्भगृहं भक्त्या सकृदालिप्य सर्व्वतः।
चन्दनाद्यैः सकर्पूरगन्धद्रव्यैः समन्ततः ॥ १०१
विकीर्य्य गन्धकुसुमैर्धूपैर्धूप्य चतुर्व्विधैः।
प्रार्थयेद्देवमीशानं शिवलोकं स गच्छति ॥ १०२

तत्र भुक्त्वा महाभोगान् कल्पकोटिशतं नरः।
स्वदेहगन्धकुसुमैः पूरयन् शिवमन्दिरम् ॥ १०३
क्रमात्तान्धर्व्वमासाद्य गन्धर्व्वैश्च सुपूजितः।
क्रमादागत्य लोकेऽस्मिन् राजा भवति वीर्य्यवान्॥१०४
आदिदेवो महादेवः प्रलयस्थितिकारकः।
सर्गश्च भुवनाधीशः सर्व्वव्यापी सदाशिवः ॥ १०५
शिवब्रह्मामृतं ग्राह्यं मोक्षसाधनमुत्तमम्।
व्यक्ताव्यक्तं सदा नित्यमचिन्त्यमर्च्चयेत् प्रभुम् ॥ १०६

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे उपलेपनादिकथनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

## अष्टसप्ततितमोऽध्यायः।

### सूत उवाच।

वस्त्रपूतेन तोयेन कार्य्यञ्चैवोपलेपनम्।
शिवक्षेत्रे मुनिश्रेष्ठा नान्यथा सिद्धिरिष्यते ॥ १
आपः पूता भवन्त्येता वस्त्रपूताः समुद्धृताः।
अफेना मुनिशार्दूला नादेयाश्च विशेषतः ॥ २
तस्माद्दै सर्व्वकार्य्याणि दैविकानि द्विजोत्तमाः।
अद्भिः कार्य्याणि पूताभिः सर्व्वकार्य्यप्रसिद्धये ॥ ३
जन्तुभिर्मिश्रिता ह्यापः सूक्ष्माभिस्तान् निहत्य तु।
यत् पापं सकलञ्चाद्भिरपूताभिश्चिरं लभेत् ॥ ४
सम्मार्ज्जने तथा नृणां मार्ज्जने च विशेषतः।
अग्नौ कण्डनके चैव पेषणे तोयसंग्रहे ॥ ५
हिंसा सदा गृहस्थानां तस्माद्धिंसां विवर्ज्जयेत्।
अहिंसेयं परो धर्म्मः सर्व्वेषां प्राणिनां द्विजाः ॥ ६
तस्मात् सर्व्वप्रयत्नेन वस्त्रपूतं समाचरेत्।
तद्दानमभयं पुण्यं सर्व्वदानोत्तमोत्तमम् ॥ ७
तस्मात् तु परिहर्त्तव्या हिंसा सर्व्वत्र सर्व्वदा।
मनसा कर्म्मणा वाचा सर्व्वदाऽहिंसकं नरम् ॥ ८
रक्षन्ति जन्तवः सर्व्वे हिंसकं बाधयन्ति च।
त्रैलोक्यमखिलं दत्त्वा यत् फलं वेदपारगे ॥ ९
तत् फलं कोटिगुणितं लभतेऽहिंसको नरः।
मनसा कर्म्मणा वाचा सर्व्वभूतहिते रताः ॥ १०
दयार्द्रीशतपस्थानो रुद्रलोकं व्रजन्ति च।
स्वामिवत् परिरक्षन्ति बहूनि विविधानि च ॥ ११
ये पुत्रपौत्रवत् स्नेहाद्रुद्रलोकं व्रजन्ति ते।
तस्मात् सर्व्वप्रयत्नेन वस्त्रपूतेन वारिणा ॥ १२
कार्य्यमभ्युक्षणं नित्यं स्नापनञ्च विशेषतः।
त्रैलोक्यमखिलं हत्वा यत् फलं परिकीर्त्त्यते ॥१३
शिवालये निहत्यैकमपि तत् सकलं लभेत्।
शिवार्थं सर्व्वदा कार्य्या पुष्पहिंसा द्विजोत्तमाः ॥१४
यज्ञार्थं पशुहिंसा च क्षत्रियैर्दुष्टशासनम्।
विहिताविहितं नास्ति योगिनां ब्रह्मवादिनाम् ॥ १५
यतस्तस्मान्न हन्तव्या निषिद्धानां निषेवणात्।
सर्व्वकर्म्माणि विन्यस्य सन्न्यस्ता ब्रह्मवादिनः ॥ १६
न हन्तव्याः सदा पूज्याः पापकर्म्मरता अपि।
पवित्रास्तु स्त्रियः सर्व्वा अत्रेश्च कुलसम्भवाः ॥ १७
ब्रह्महत्यासमं पापमात्रेयीं विनिहत्य च।
स्त्रियः सर्व्वा न हन्तव्याः पापकर्म्मरता अपि ॥ १८
न यज्ञार्थं स्त्रियो ग्राह्याः सर्व्वैः सर्व्वत्र सर्व्वदा।
सर्व्ववर्णेषु विप्रेन्द्राः पापकर्म्मरता अपि ॥ १९
मलिना रूपवत्यश्च विरूपा मलिनाम्बराः।
न हन्तव्याः सदा मर्त्त्यैः शिववच्छ्रद्धया तथा ॥ २०
वेदबाह्यव्रताचाराः श्रौतस्मार्त्तबहिष्कृताः।
पाषण्डिन इति ख्याता न सम्भाष्या द्विजातिभिः ॥२१
न स्प्रष्टव्या न द्रष्टव्या दृष्ट्वा भानुं समीक्षते।
तथापि तेन वध्याश्च नृपैरन्यैश्च जन्तुभिः ॥ २२
प्रसङ्गाद्वापि यो मर्त्त्यः सतां सकृद्द्विजाः।
रुद्रलोकमवाप्नोति समभ्यर्च्य महेश्वरम् ॥ २३
भवन्ति दुःखिताः सर्व्वे निर्द्दया मुनिसत्तमाः।
भक्तिहीना नराः सर्व्वे भवे परमकारणे ॥ २४
ये भक्ता देवदेवस्य शिवस्य परमेष्ठिनः।
भाग्यवन्तो विमुच्यन्ते भुक्त्वा भोगानिहैव ते ॥ २५

पुत्रेषु दारेषु गृहेषु नृणां
भक्तां यथाचित्तमथादिदेवे।
सकृत्प्रसङ्गाद्दुयतितापसानां
तेषां न दूरः परमेशलोकः ॥ २६

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

## एकोनाशीतितमोऽध्यायः।

ऋषय ऊचुः।

कथं पूज्यो महादेवो मर्त्त्यैर्मन्दैर्महामते।
अल्पायुषैरल्पवीर्य्यैरल्पसत्त्वैः प्रजापतिः॥ १
संवत्सरसहस्रैश्च तपसा पूज्य शङ्करम्।
न पश्यन्ति सुराश्चापि कथं देवं यजन्ति ते॥ २

सूत उवाच।

कथितं तथ्यमेवात्र युष्माभिर्मुनिपुङ्गवाः।
तथापि श्रद्धया दृश्यः पूज्यः सम्भाष्य एव च॥ ३
प्रसङ्गाच्चैव सम्पूज्य भक्तिहीनैरपि द्विजाः।
भावानुरूपफलदो भगवानिति कीर्त्तितः॥ ४
उच्छिष्टः पूजयन् याति पैशाचन्तु द्विजाधमः।
संक्रुद्धो राक्षसं स्थानं प्राप्नुयान्मूढधीर्द्विजाः॥ ५
अभक्ष्यभक्षी सम्पूज्य याक्षं प्राप्नोति दुर्ज्जनः।
गानशीलश्च गान्धर्व्वं नृत्यशीलस्तथैव च॥ ६
ख्यातिशीलस्तथा चान्द्रं स्त्रीषु सक्तो नराधमः।
मदार्त्तः पूजयन् रुद्रं सोमस्थानमवाप्नुयात्॥ ७
गायत्र्या देवमभ्यर्च्य प्राजापत्यमवाप्नुयात्।
ब्राह्मं हि प्रणवेनैव वैष्णवञ्चाभिनन्द्य च॥ ८
श्रद्धया सकृदेवापि समभ्यर्च्य महेश्वरम्।
रुद्रलोकमनुप्राप्य रुद्रैः सार्द्धं प्रमोदते॥ ९
संशोध्य च शुभं लिङ्गममरासुरपूजितम्।
जलैः पूतैस्तथा पीठे देवमावाह्य भक्तितः॥ १०
दृष्ट्वा देवं यथान्यायं प्रणिपत्य च शङ्करम्।
कल्पिते चासने स्थाप्य धर्म्मज्ञानमये शुभे॥ ११
वैराग्यैश्वर्य्यसम्पन्ने सर्व्वलोकनमस्कृते।
ओङ्कारपद्ममध्ये तु सोमसूर्य्याग्निसम्भवे॥ १२
पाद्यमाचमनञ्चार्घ्यं दत्त्वा रुद्राय शम्भवे।
स्नापयेद्दिव्यतोयैश्च घृतेन पयसा तथा॥ १३
दध्ना च स्नापयेद्रुद्रं शोधयेच्च यथाविधि।
ततः शुद्धाम्बुना स्नाप्य चन्दनाद्यैश्च पूजयेत्॥ १४
रोचनाद्यैश्च सम्पूज्य दिव्यपुष्पैश्च पूजयेत्।
विल्वपत्रैरखण्डैश्च पद्मैर्नानाविधैस्तथा॥ १५
नीलोत्पलैश्च राजीवैर्नन्द्यावर्त्तैश्च मल्लिकैः।
चम्पकैर्जातिपुष्पैश्च वकुलैः करवीरकैः॥ १६
शमीपुष्पैर्वृहत्पुष्पैरुन्मत्तागस्त्यजैरपि।
अपामार्गकदम्बैश्च भूषणैरपि शोभनैः॥ १७
दत्त्वा पञ्चविधं धूपं पायसञ्च निवेदयेत्।
दधिभक्तञ्च मध्वाज्यपरिप्लुतमतः परम्॥ १८
शुद्धान्नञ्चैव मुद्गान्नं षड्विधञ्च निवेदयेत्।
अथ पञ्चविधं वापि सघृतं विनिवेदयेत्॥ १९
केवलञ्चापि शुद्धान्नमाढकं तण्डुलं पचेत्।
कृत्वा प्रदक्षिणञ्चान्ते नमस्कृत्य मुहुर्मुहुः॥ २०
स्तुत्वा च देवमीशानं पुनः सम्पूज्य शङ्करम्।
ईशानं पुरुषञ्चैव अघोरं वाममेव च॥ २१
सद्योजातं जपंश्चापि पञ्चभिः पूजयेच्छिवम्।
अनेन विधिना देवः प्रसीदति महेश्वरः॥ २२
वृक्षाः पुष्पादिपत्राद्यैरुपयुक्ताः शिवार्च्चने।
गावश्चैव द्विजश्रेष्ठाः प्रयान्ति परमां गतिम्॥ २३
पूजयेद्यः शिवं रुद्रं शर्व्वं भवमजं सकृत्।
स याति शिवसायुज्यं पुनरावृत्तिवर्ज्जितम्॥ २४
अर्च्चितं परमेशानं भवं शर्व्वमुमापतिम्।
सकृत्प्रसङ्गाद्वा दृष्ट्वा सर्व्वपापैः प्रमुच्यते॥ २५
पूजितं वा महादेवं पूज्यमानमथापि वा।
दृष्ट्वा प्रयाति वै मर्त्त्यो ब्रह्मलोकं न संशयः॥ २६
श्रुत्वानुमोदयेच्चापि स याति परमां गतिम्।
यो दद्याद्घृतदीपञ्च सकृल्लिङ्गस्य चाग्रतः॥ २७
स तां गतिमवाप्नोति स्वाश्रमैर्दुर्लभां स्थिराम्।
दीपवृक्षं पार्थिवं वा दारवं वा शिवालये॥ २८
दत्त्वा कुलशतं साग्रं शिवलोके महीयते।
आयसं ताम्रजं वापि रौप्यं सौवर्णिकं तथा॥ २९
शिवाय दीपं यो दद्याद्विधिना वापि भक्तितः।
सूर्य्यायुतसमैः श्लक्ष्णैः यानैः शिवपुरं व्रजेत्॥ ३०
कार्त्तिके मासि यो दद्याद्घृतदीपं शिवाग्रतः।
सम्पूज्यमानं वा पश्येद्विधिना परमेश्वरम्॥ ३१
स याति ब्रह्मणो लोकं श्रद्धया मुनिसत्तमाः।
आवाहनं सुसान्निध्यं स्थापनं पूजनं तथा॥ ३२
सम्प्रोक्तं रुद्रगायत्र्या आसनं प्रणवेन वै।
पञ्चभिः स्नपनं प्रोक्तं रुद्राद्यैश्च विशेषतः॥ ३३
एवं सम्पूजयेन्नित्यं देवदेवमुमापतिम्।
ब्रह्माणं दक्षिणे तस्य प्रणवेन समर्च्चयेत्॥ ३४
उत्तरे देवदेवेशं विष्णुं गायत्रिया यजेत्।
वह्नौ हुत्वा यथान्यायं पञ्चभिः प्रणवेन च॥ ३५

स याति शिवसायुज्यमेवं सम्पूज्य शङ्करम्॥ ३६
इति संक्षेपतः प्रोक्तो लिङ्गार्चनविधिक्रमः।
व्यासेन कथितः पूर्व्वं श्रुत्वा रुद्रमुखात् स्वयम्॥ ३७

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
शिवार्चनविधिर्नामैकोनाशीति-
तमोऽध्यायः॥ ७९॥

---

## अशीतितमोऽध्यायः।

ऋषय ऊचुः।
कथं पशुपतिं दृष्ट्वा पशुपाशविमोचनम्।
पशुत्वं तत्यजुर्देवास्तन्नो वक्तुमिहार्हसि॥ १
सूत उवाच।
पुरा कैलासशिखरे भोग्याख्ये स्वपुरे स्थितम्।
समेत्य देवाः सर्व्वज्ञमाजग्मुस्तत्प्रसादतः॥ २
हिताय सर्व्वदेवानां ब्रह्मणा च जनार्द्दनः।
गरुड़स्य तथा स्कन्धमारुह्य पुरुषोत्तमः।
जगाम देवताभिर्वै देवदेवान्तिकं हरिः॥ ३
सर्व्वं सम्प्राप्य देवस्य सार्द्धं गिरिवरं शुभम्।
सेन्द्राःससाध्याः सयमाः प्रणेमुर्गिरिमुत्तमम्॥ ४
भगवान् वासुदेवोऽसौ गरुड़ाद्गरुड़ध्वजः।
अवतीर्य्य गिरिं मेरुमारुरोह सुरोत्तमैः॥ ५
सकलदुरितहीनं सर्व्वदं भोगमुख्यं
मुदितकुररवृन्दं नादितं नागवृन्दैः।
मधुरस्वणितगीतं सानुकूलान्धकारं
प्रदरचितवनान्तं कान्तवातान्ततोयम्॥ ६
भवनशतसहस्रैर्जुष्टमादित्यकल्पै-
र्लङ्घितगतिविदग्धैर्हंसवृन्दैश्च भिन्नम्।
धव-खदिर-पलाशैश्चन्दनाद्यैश्च वृक्षै-
र्द्विजवरगणवृन्दैः कोकिलाद्यैर्द्विरेफैः॥ ७
क्वचिदशेषसुरद्रुमसङ्कुलं
कुरुवकैः प्रियकैस्तिलकैस्तथा।
बकुलकदम्बतमाललतावृतं
गिरिवरं शिखरैर्विविधैस्तथा॥ ८
गिरेः पृष्ठे पुरं शार्व्वं कल्पितं विश्वकर्म्मणा।
क्रीड़ार्थं देवदेवस्य भवस्य परमेष्ठिनः॥ ९
अपश्यंस्तत् पुरं देवाः सेन्द्रोपेन्द्राः समाहिताः।
प्रणेमुर्दूरतश्चैव प्रभावादेव शूलिनः॥ १०
सहस्रसूर्य्यप्रतिमं महान्तं
सहस्रशः सर्व्वगुणैश्च भिन्नम्।
जगाम कैलासगिरिं महात्मा
मेरुप्रभागे पुरमादिदेवः॥ ११
ततोऽथ नारीगजवाजिसङ्कुलं
रथैरनेकैरमरारिसूदनः।
गणैर्गणेशैश्च गिरीन्द्रसन्निभं
महापुरद्वारमजो हरिश्च॥ १२
अथ जाम्बूनदमयैर्भवनैर्मणिभूषितैः।
विमानैर्विविधाकारैः प्राकारैश्च समावृतम्॥ १३
दृष्ट्वा शम्भोः पुरं वाह्यं देवैः सब्रह्मकैर्हरिः।
प्रहृष्टवदनो भूत्वा प्रविवेश ततः पुरम्॥ १४
हर्म्यप्रासादसम्बाधं महाट्टालसमन्वितम्।
द्वितीयं देवदेवस्य चतुर्द्वारं सुशोभनम्॥ १५
वज्र-वैदूर्य्य-माणिक्य-मणिजालैः समावृतम्।
दोलाविक्षेपसंयुक्तं घण्टाचामरभूषितम्॥ १६
मृदङ्गमुरजैर्जुष्टं वीणावेणुनिनादितम्।
नृत्यद्भिरप्सरःसङ्घैर्भूतसङ्घैश्च संवृतम्।
देवेन्द्रभवनाकारैर्भवनैर्दृष्टिमोहनैः॥ १७
प्रासादशृङ्गेष्वथ पौरनार्य्यः
सहस्रशः पुष्पफलाक्षताद्यैः।
स्थिताः करैस्तस्य हरेः समन्तात्
प्रचिक्षिपुर्मूर्द्ध्नि यथा भवस्य॥ १८
दृष्ट्वा नार्य्यस्तदा विष्णुं मदघूर्णितलोचनाः।
विशालजघनाः सद्यो ननृतुर्मुमुदुर्जगुः॥ १९
काश्चिद्दृष्ट्वा हरिं नार्य्यः किञ्चित्प्रहसिताननाः।
किञ्चिद्विस्रस्तवस्त्राश्च स्रस्तकाञ्चीगुणा जगुः॥ २०
चतुर्थं पञ्चमञ्चैव षष्ठञ्च सप्तमं तथा।
अष्टमं नवमञ्चैव दशमञ्च पुरोत्तमम्॥ २१
अतीत्यासाद्य देवस्य पुरं शम्भोः सुशोभनम्।
सुवृत्तं सुतरां शुभ्रं कैलासशिखरे शुभे॥ २२
सूर्य्यमण्डलसङ्काशैर्विमानैश्च विभूषितम्।
स्फाटिकैर्मण्डपैः शुभ्रैर्जाम्बूनदमयैस्तथा॥ २३
नानारत्नमयैश्चैव दिग्विदिक्षु विभूषितम्।
गोपुरैर्गोपतेः शम्भोर्नानाभूषणभूषितैः॥ २४

अनेकैः सर्व्वतोभद्रैः सर्व्वरत्नमयस्तथा ।
प्राकारैर्विविधाकारैरष्टाविंशतिभिर्वृतम् ॥ २५
उपद्वारैर्महाद्वारैर्विदिक्षु विविधैर्दृढैः ।
गुह्यालयैर्गुह्यगृहैर्गुहस्य भवनैः शुभैः ॥ २६
ग्रास्यैरन्यैर्महाभागा मौक्तिकैर्दृष्टिमोहनैः ।
गणेशायतनैर्दिव्यैः पद्मरागमयैस्तथा ॥ २७
चन्दनैर्विविधाकारैः पुष्पोद्यानैश्च शोभनैः ।
तड़ागैर्दीर्घिकाभिश्च हेमसोपानपङ्क्तिभिः ॥ २८
स्त्रीणां गतिजितैर्हंसैः सेविताभिः समन्ततः ।
मयूरैश्चैव कारण्डैः कोकिलैश्चक्रवालकैः ॥ २९
शोभिताभिश्च वापीभिर्दिव्यामृतजलैस्तथा ।
संलापालापकुशलैः सर्व्वाभरणभूषितैः ॥ ३०
स्तनभारावनम्रैश्च मदाघूर्णितलोचनैः ।
गेयनादरतैर्दिव्यै रुद्रकन्यासहस्रकैः ॥ ३१
नृत्यद्भिरप्सरःसङ्घैरमरैरपि दुर्लभैः ।
प्रफुल्लाम्बुजवृन्दाद्यैस्तथा द्विजवरैरपि ॥ ३२
रुद्रस्त्रीगणसङ्कीर्णैर्जलक्रीड़ारतैस्तथा ।
रतोत्सवरतैश्चैव ललितैश्च पदे पदे ॥ ३३
ग्रामरागानुरक्तैश्च पद्मरागसमप्रभैः ।
स्त्रीसङ्घैर्देवदेवस्य भवस्य परमात्मनः ॥ ३४
दृष्ट्वा विस्मयमापन्नास्तस्थुर्देवाः समन्ततः ।
तत्रैव ददृशुर्देवा वृन्दं रुद्रगणस्य च ॥ ३५
गणेश्वराणां वीराणामपि वृन्दं सहस्रशः ।
सुवर्णकृतसोपानान् वज्रवैदूर्य्यभूषितान् ॥ ३६
स्फाटिकान् देवदेवस्य ददृशुस्ते विमानकान् ।
तेषां शृङ्गेषु हृष्टाश्च नार्य्यः कमललोचनाः ॥ ३७
विशालजघना यक्षा गन्धर्व्वाप्सरसस्तथा ।
किन्नर्य्यः किन्नराश्चैव भुजङ्गाः सिद्धकन्यकाः ॥ ३८
नानावेशधराश्चान्या नानाभूषणभूषिताः ।
नानाप्रभावसंयुक्ता नानाभोगरतिप्रियाः ॥ ३९
नीलोत्पलदलप्रख्याः पद्मपत्रायतेक्षणाः ।
पद्मकिञ्जल्कसङ्काशैरंशुकैरतिशोभनाः ॥ ४०
वलयैर्नूपुरैर्हारैश्छत्रैश्चित्रैस्तथांशुकैः ।
भूषिता भूषितैश्चान्यैर्मण्डिता मण्डनप्रियाः ॥ ४१

दृष्ट्वाथ वृन्दं सुरसुन्दरीणां
गणेश्वराणां सुरसुन्दरीणाम् ।
जग्मुर्गणेशस्य पुरं सुरेशाः
पुरद्विषः शक्रपुरोगमाश्च ॥ ४२
दृष्ट्वा च तस्थुः सुरसिद्धसङ्घाः
पुरस्य मध्ये पुरुहूतपूर्व्वाः ।
भवस्य बालार्कसहस्रवर्णं
विमानमाद्यं परमेश्वरस्य ॥ ४३

अथ तस्य विमानस्य द्वारि संस्थं गणेश्वरम् ।
नन्दिनं ददृशुः सर्व्वे देवाः शक्रपुरोगमाः ॥ ४
तं दृष्ट्वा नन्दिनं सर्व्वे प्रणम्याङ्गर्गणेश्वरम् ।
जयेति देवास्तं दृष्ट्वा सोऽप्याह च गणेश्वरः ॥
भो भो देवा महाभागाः सर्व्वे निर्द्धूतकल्मषाः ।
सम्प्राप्ताः सर्व्वलोकेशा वक्तुमर्हथ सुव्रताः ॥ ४
तमाहुर्वरदं देवं वारणेन्द्रसमप्रभम् ।
पशुपाशविमोक्षार्थं दर्शयास्मान् महेश्वरम् ॥ ४
पुरा पुरत्रयं दग्धुं पशुत्वं परिभाषितम् ।
शङ्किताश्च वयं तत्र पशुत्वं प्रति सुव्रत ॥ ४८
व्रतं पाशुपतं प्रोक्तं भवेन परमेष्ठिना ।
व्रतेनानेन भूतेश पशुत्वं नैव विद्यते ॥ ४९
अथ द्वादशवर्षं वा मासद्वादशकन्तु वा ।
दिनद्वादशकं वापि कृत्वा तद्व्रतमुत्तमम् ॥ ५०
मुच्यन्ते पशवः सर्व्वे पशुपाशैर्भवस्य तु ।
दर्शयामास तान् देवान् नारायणपुरोगमान् ॥
नन्दी शिलादतनयः सर्व्वभूतगणाग्रणीः ।
तं दृष्ट्वा देवमीशानं साम्बं सगणमव्ययम् ॥ ५२
प्रणेमुस्तुष्टुवुश्चैव प्रीतिकण्टकितत्वचः ।
विज्ञाप्य शितिकण्ठाय पशुपाशविमोचनम् ॥
तस्थुस्तदग्रतः शम्भोः प्रणिपत्य पुनः पुनः ।
ततः सम्प्रेक्ष्य तान् सर्व्वान् देवदेवो वृषध्वजः ॥
विशोध्य तेषां देवानां पशुत्वं परमेश्वरः ।
व्रतं पाशुपतञ्चैव स्वयं देवो महेश्वरः ॥ ५५
उपदिश्य मुनीनाञ्च सहास्ते चाम्बया भवः ।
तदाप्रभृति ते देवाः सर्व्वे पाशुपताः स्मृताः ॥ ५
पशूनाञ्च पतिर्यस्मात् तेषां साक्षाद्धि देवताः ।
तस्मात् पाशुपताः प्रोक्तास्तपस्तेपुश्च ते पुनः ॥ ५
ततो द्वादशवर्षान्ते मुक्तपाशाः सुरोत्तमाः ।
ययुर्यथागतं सर्व्वे ब्रह्मणा सह विष्णुना ॥ ५८
एतद्वः कथितं सर्व्वं पितामहमुखाच्छ्रुतम् ।
पुरा सनत्कुमारेण तस्माद्व्यासेन धीमता ॥ ५९

यः श्रावयेच्छुचिर्विप्रान् शृणुयाद्वा शुचिर्नरः।
स देहभेदमासाद्य पशुपाशैः प्रमुच्यते ॥ ६०

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे पाशुपतव्रत-
माहात्म्यं नामाशीतितमोऽध्यायः ॥ ८० ॥

---

## एकाशीतितमोऽध्यायः।

ऋषय ऊचुः।

व्रतमेतत् त्वया प्रोक्तं पशुपाशविमोचनम्।
व्रतं पाशुपतं लैङ्गं पुरा देवैरनुष्ठितम्।
वक्तुमर्हसि चास्माकं यथा पूर्व्वं त्वया श्रुतम् ॥ १

सूत उवाच।

पुरा सनत्कुमारेण पृष्टः शैलादिरादरात्।
नन्दी प्राह वचस्तस्मै प्रवदामि समासतः ॥ २
देवैर्दैत्यैस्तथा सिद्धैर्गन्धर्व्वैः सिद्धचारणैः।
मुनिभिश्च महाभागैरनुष्ठितमनुत्तमम् ॥ ३
व्रतं द्वादशलिङ्गाख्यं पशुपाशविमोचनम्।
भोगदं योगदञ्चैव कामदं मुक्तिदं शुभम् ॥ ४
अवियोगकरं पुण्यं भक्तानां भयनाशनम्।
षड़ङ्गसहितान् वेदान् मथित्वा तेन निर्म्मितम् ॥ ५
सर्व्वदानोत्तमं पुण्यमश्वमेधायुताधिकम्।
सर्व्वमङ्गलदं पुण्यं सर्व्वशत्रुविनाशनम् ॥ ६
संसारार्णवमग्नानां जन्तूनामपि मोचदम्।
सर्व्वव्याधिहरञ्चैव सर्व्वज्वरविनाशनम् ॥ ७
देवैरनुष्ठितं पूर्व्वं ब्रह्मणा विष्णुना तथा।
कृत्वा कनीयसं लिङ्गं स्नाप्य चन्दनवारिणा ॥ ८
चैत्रमासादि विप्रेन्द्रा शिवलिङ्गव्रतं चरेत्।
कृत्वा हैमं शुभं पद्मं कर्णिकाकेसरान्वितम् ॥ ९
नवरत्नैश्च खचितमष्टपत्रं यथाविधि।
कर्णिकायां न्यसेल्लिङ्गं स्फाटिकं पीठसंयुतम् ॥ १०
तत्र भक्त्या यथान्यायमर्च्चयेद्बिल्वपत्रकैः।
सितैः सहस्रकमलै रक्तैर्नीलोत्पलैरपि ॥ ११
श्वेतार्ककर्णिकारैश्च करवीरैर्वकैरपि।
एतैरन्यैर्यथालाभं गायत्र्या तस्य सुव्रताः ॥ १२
सम्पूज्य चैत्र गन्धाद्यैर्धूपैर्दीपैश्च मङ्गलैः।
नीराजनाद्यैश्चान्यैश्च लिङ्गमूर्त्तिं महेश्वरम् ॥ १३
अगुरुं दक्षिणे दद्यादघोरेण द्विजोत्तमाः।
पश्चिमे सद्यमन्त्रेण दिव्याञ्चैव मनःशिलाम् ॥ १४
उत्तरे वामदेवेन चन्दनं वापि दापयेत्।
पुरुषेण मुनिश्रेष्ठा हरितालञ्च पूर्व्वतः ॥ १५
सितागुरुद्भवं विप्रास्तथा कृष्णागुरूद्भवम्।
तथा गुग्गुलुधूपञ्च सौगन्धिकमनुत्तमम् ॥ १६
सितारं नाम धूपञ्च दद्यादीशाय भक्तितः।
महाचरुर्निवेद्यः स्यादाढ़कान्नमथापि वा ॥ १७
एतद्वः कथितं पुण्यं शिवलिङ्गमहाव्रतम्।
सर्व्वमासेषु सामान्यं विशेषोऽपि च कीर्त्त्यते ॥ १८
वैशाखे वज्रलिङ्गञ्च ज्यैष्ठे मारकतं तथा।
आषाढ़े मौक्तिकं लिङ्गं श्रावणे नीलनिर्म्मितम् ॥ १९
मासि भाद्रपदे लिङ्गं पद्मरागमयं शुभम्।
आश्विने चैव विप्रेन्द्रा गोमेदकमयं शुभम् ॥ २०
प्रवालेनैव कार्त्तिक्यां तथा वै मार्गशीर्षके।
वैदूर्य्यनिर्म्मितं लिङ्गं पुष्परागेण पुष्यके ॥ २१
माघे च सूर्य्यकान्तेन फाल्गुने स्फाटिकेन च ॥ २२
सर्व्वमासेषु कमलं हैममेकं विधीयते।
अलाभे राजतं वापि केवलं कमलन्तु वा ॥ २३
रत्नानामप्यलाभे तु हेम्ना वा राजतेन वा।
रजतस्याप्यलाभे तु ताम्रलोहेन कारयेत् ॥ २४
शैलं वा दारुजं वापि मृण्मयं वा सवेदिकम्।
सर्व्वगन्धमयं वापि क्षणिकं परिकल्पयेत् ॥ २५
हैमन्तिके महादेवं श्रीपत्रेणैव पूजयेत्।
सर्व्वमासेषु कमलं हैममेकमथापि वा ॥ २६
राजतं वापि कमलं हैमकर्णिकमुत्तमम्।
राजतस्याप्यभावे तु बिल्वपत्रैः समर्च्चयेत् ॥ २७
सहस्रकमलालाभे तदर्द्धेनापि पूजयेत्।
तदर्द्धार्द्धेन वा रुद्रमष्टोत्तरशतेन वा ॥ २८
बिल्वपत्रे स्थिता लक्ष्मीर्देवी लक्षणसंयुता।
नीलोत्पलेऽम्बिका साक्षादुत्पले षण्मुखः स्वयम् ॥ २९
पद्माश्रितो महादेवः सर्व्वदेवपतिः शिवः।
तस्मात् सर्व्वप्रयत्नेन श्रीपत्रं न त्यजेद्बुधः ॥ ३०
नीलोत्पलञ्चोत्पलञ्च कमलञ्च विशेषतः।
सर्व्ववश्यकरं पद्मं शिला सर्व्वार्थसिद्धिदा ॥ ३१
कृष्णागुरुसमुद्भूतं सर्व्वपापनिकृन्तनम्।
गुग्गुलुप्रभृतीनाञ्च दीपानाञ्च निवेदनम् ॥ ३२
सर्व्वरोगक्षयञ्चैव चन्दनं सर्व्वसिद्धिदम्।

सौगन्धिकं तथा धूपं सर्व्वकामार्थसाधकम् ॥ ३३
श्वेतागुरूद्भवञ्चैव तथा कृष्णागुरूद्भवम्।
सौम्यं सीतारिधूपञ्च साक्षान्निर्व्वाणसिद्धिदम् ॥ ३४
श्वेतार्ककुसुमे साक्षाच्चतुर्व्वक्त्रः प्रजापतिः।
कर्णिकारस्य कुसुमे मेधा साक्षाद्व्यवस्थिता ॥ ३५
करवीरे गणाध्यक्षो वक्के नारायणः स्वयम्।
सुगन्धिषु च सर्व्वेषु कुसुमेषु नगात्मजा ॥ ३६
तस्मादेतैर्यथालाभं पुष्पधूपादिभिः शुभैः।
पूजयेद्देवदेवेशं भक्त्या वित्तानुसारतः ॥ ३७
निवेदयेत् ततो भक्त्या पायसञ्च महाचरुम्।
सघृतं सोपदंशञ्च सर्व्वद्रव्यसमन्वितम् ॥ ३८
शुद्धान्नं वापि मुद्गान्नमाढ़कञ्चार्द्धकन्तु वा।
चामरं तालवृन्तञ्च तस्मै भक्त्या निवेदयेत् ॥ ३९
उपहाराणि पुण्यानि न्यायेनैवार्ज्जितान्यपि।
नानाविधानि चार्हाणि प्रोक्षितान्यम्भसा पुनः ॥ ४०
निवेदयेच्च रुद्राय भक्तियुक्तेन चेतसा।
क्षीरादि सर्व्वदेवानां स्थित्यर्थममृतं ध्रुवम् ॥ ४१
विष्णुना जिष्णुना साक्षादन्ने सर्व्वं प्रतिष्ठितम्।
भूतानामन्नदानेन प्रीतिर्भवति शङ्करे ॥ ४२
तस्मात् सम्पूजयेद्देवमन्ने प्राणाः प्रतिष्ठिताः।
उपहारे तथा तुष्टिर्व्यजने पवनः स्वयम् ॥ ४३
सर्व्वात्मको महादेवो गन्धतोये ह्यपां पतिः।
पीठे वै प्रकृतिः साक्षान्महदाद्यैर्व्यवस्थिता ॥ ४४
तस्माद्देवं यजेद्भक्त्या प्रतिमासं यथाविधि।
पौर्णमास्यां व्रतं कार्य्यं सर्व्वकामार्थसिद्धये ॥ ४५
सत्यं शौचं दया शान्तिः सन्तोषो दानमेव च।
पौर्णमास्याममावास्यामुपवासञ्च कारयेत् ॥ ४६
संवत्सरान्ते गोदानं वृषोत्सर्गं विशेषतः।
भोजयेद्ब्राह्मणान् भक्त्या श्रोत्रियान् वेदपारगान् ॥ ४७
तल्लिङ्गं पूजितं तेन सर्व्वं द्रव्यसमन्वितम्।
स्थापयेद्वा शिवक्षेत्रे दापयेद्ब्राह्मणाय वा ॥ ४८
य एवं सर्व्वमासेषु शिवलिङ्गमहाव्रतम्।
कुर्य्याद्भक्त्या मुनिश्रेष्ठाः स एव तपतां वरः ॥ ४९
सूर्य्यकोटिप्रतीकाशैर्विमाने रत्नभूषितैः।
गत्वा शिवपुरं दिव्यं नेहायाति कदाचन ॥ ५०
अथवा ह्येकमासं वा चरेदेवं व्रतोत्तमम्।
शिवलोकमवाप्नोति नात्र कार्य्या विचारणा ॥ ५१
अथवा सक्तचित्तश्चेद्धयान् यान् सञ्चिन्तयेद्धृदि
वर्षमेकं चरेदेवं तांस्तान् प्राप्य शिवं व्रजेत् ॥
देवत्वं वा पितृत्वं वा देवराजत्वमेव च।
गाणपत्यपदं वापि सक्तोऽपि लभते नरः ॥ ५
विद्यार्थी लभते विद्यां भोगार्थी भोगमाप्नुयात्
द्रव्यार्थी च निधिं पश्येदायुःकामश्चिरायुषम्।
यान् यांश्चिन्तयते कामांस्तांस्तान् प्राप्येह मो
एकमासव्रतादेव सोऽन्ते रुद्रत्वमाप्नुयात् ॥ ५
इदं पवित्रं परमं रहस्यं
व्रतोत्तमं विश्वसृजापि सृष्टम्।
हिताय देवासुर-सिद्ध-मर्त्त्य-
विद्याधराणां परमं शिवेन ॥ ५६
सम्पूज्य पूज्यं विधिनैवमीशं
प्रणम्य मूर्द्ध्ना सह भृत्यपुत्रैः।
व्यपोहनं नाम जपेत् स्तवञ्च
प्रदक्षिणं कृत्य शिवं प्रयत्नात् ॥ ५७
पुरा कृतं विश्वसृजा स्तवञ्च
हिताय देवेन जगत्त्रयस्य।
पितामहेनैव सुरेश्च सार्द्धं
महानुभावेन महार्थमेतत् ॥ ५८

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

## द्व्यशीतितमोऽध्यायः।

सूत उवाच।

व्यपोहनस्तवं वक्ष्ये सर्व्वसिद्धिप्रदं शुभम्।
नन्दिनश्च मुखाच्छ्रुत्वा कुमारेण महात्मना।
व्यासाय कथितं तस्माद्बहुमानेन वै मया ॥ १
नमः शिवाय शुद्धाय निर्म्मलाय यशस्विने।
दुष्टान्तकाय सर्व्वाय भवाय परमात्मने ॥ २
पञ्चवक्त्रो दशभुजो ह्यक्षपञ्चदशैर्युतः।
शुद्धस्फटिकसङ्काशः सर्व्वाभरणभूषितः ॥ ३
सर्व्वज्ञः सर्व्वगः शान्तः सर्व्वोपरिसुसंस्थितः।
पद्मासनस्थः सोमेशः पापमाशु व्यपोहतु ॥ ४
ईशानः पुरुषश्चैव अघोरः सद्य एव च।
वामदेवश्च भगवान् पापमाशु व्यपोहतु ॥ ५

अनन्तः सर्व्वविद्येशः सर्व्वज्ञः सर्व्वदः प्रभुः।
शिवध्यानैकसम्पन्नः स मे पापं व्यपोहतु॥ ६
सूक्ष्मः सुरासुरेशानो विश्वेशो गणपूजितः।
शिवध्यानैकसम्पन्नः स मे पापं व्यपोहतु॥ ७
शिवोत्तमो महापूज्यः शिवध्यानपरायणः।
सर्व्वगः सर्व्वदः शान्तः स मे पापं व्यपोहतु॥ ८
एकाक्षो भगवानीशः शिवार्चनपरायणः।
शिवध्यानैकसम्पन्नः स मे पापं व्यपोहतु॥ ९
त्रिमूर्त्तिभगवानीशः शिवभक्तिप्रबोधकः।
शिवध्यानैकसम्पन्नः स मे पापं व्यपोहतु॥ १०
श्रीकण्ठः श्रीपतिः श्रीमान् शिवध्यानरतः सदा।
शिवार्चनरतः साक्षात् स मे पापं व्यपोहतु॥ ११
शिखण्डी भगवान् शान्तः शवभस्मानुलेपनः।
शिवार्चनरतः श्रीमान् स मे पापं व्यपोहतु॥ १२
त्रैलोक्यनमिता देवी सोल्काकारा पुरातनी।
दाक्षायणी महादेवी गौरी हैमवती शुभा॥ १३
एकपर्णाग्रजा सौम्या तथा वै चैकपाटला।
अपर्णा वरदा देवी वरदानैकतत्परा॥ १४
उमासुरहरा साक्षात् कौशिकी वा कपर्द्दिनी।
खट्वाङ्गधारिणी दिव्या कराग्रतरुपल्लवा॥ १५
नैगमेयादिभिर्दिव्यैश्चतुर्भिः पुत्रकैर्वृता।
मेनाया नन्दिनी देवी वारिजा वारिजेक्षणा॥ १६
अम्बा या वीतशोकस्य नन्दिनश्च महात्मनः।
शुभावत्याः सखी शान्ता पञ्चचूड़ा वरप्रदा॥ १७
सृष्ट्यर्थं सर्व्वभूतानां प्रकृतित्वं गताव्यया।
त्रयोविंशतिभिस्तत्त्वैर्महदाद्यैर्विजृम्भिता॥ १८
लक्ष्म्यादिशक्तिभिर्नित्यं नमिता नन्दनन्दिनी।
मनोन्मनी महादेवी मायावी मण्डनप्रिया॥ १९
मायया या जगत् सर्व्वं ब्रह्माद्यं सचराचरम्।
क्षोभिणी मोहिनी नित्यं योगिनां हृदि संस्थिता॥ २०
एकानेकस्थिता लोके इन्दीवरनिभेक्षणा।
भक्त्या परमया नित्यं सर्व्वदेवैरभिष्टुता॥ २१
गणेन्द्राम्भोजगर्भेन्द्र-यमवित्तेशपूर्व्वकैः।
संस्तुता जननी तेषां सर्व्वोपद्रवनाशिनी।
भक्तानामार्त्तिहा भव्या भवभावविनाशिनी॥ २२
भुक्तिमुक्तिप्रदा दिव्या भक्तानामप्रयत्नतः।
सा मे साक्षान्महादेवी पापमाशु व्यपोहतु॥ २३
चण्डः सर्व्वगणेशानो मुखाच्छम्भोर्विनिर्गतः।
शिवार्चनरतः श्रीमान् स मे पापं व्यपोहतु॥ २४
शालङ्कायनपुत्रस्तु हलमार्गोत्थितः प्रभुः।
जामाता मरुतां देवः सर्व्वभूतमहेश्वरः॥ २५
सर्व्वगः सर्व्वदृक् शर्व्वः सर्व्वेशसदृशः प्रभुः।
सनारायणकैर्देवैः सेन्द्रचन्द्रदिवाकरैः॥ २६
सिद्धैश्च यक्षगन्धर्व्वैर्भूतैर्भूतविधायकैः।
उरगैर्ऋषिभिश्चैव ब्रह्मणा च महात्मना॥ २७
स्तुतस्त्रैलोक्यनाथस्तु मुनिरन्तःपुरं स्थितः।
सर्व्वदा पूजितः सर्व्वैर्नन्दी पापं व्यपोहतु॥ २८
महाकायो महातेजा महादेव इवापरः।
शिवार्चनरतः श्रीमान् स मे पापं व्यपोहतु॥ २९
मेरु-मन्दार-कैलासतटकूटप्रभेदनः।
ऐरावतादिभिर्दिव्यैर्दिग्गजैश्च सुपूजितः॥ ३०
सप्तपातालपादश्च सप्तद्वीपोरुजङ्घकः।
सप्तार्णवाङ्कुशश्चैव सर्व्वतीर्थोदरः शिवः॥ ३१
आकाशदेहो दिग्बाहुः सोमसूर्य्याग्निलोचनः।
हतासुरमहावृक्षो ब्रह्मविद्यामहोत्कटः॥ ३२
ब्रह्माद्याधोरणैर्दिव्यैर्योगपाशसमन्वितैः।
बद्धो हृत्पुण्डरीकाख्ये स्तम्भे वृत्तिं निरुध्य च॥ ३३
नागेन्द्रवक्त्रो यः साक्षाद्गणकोटिशतैर्वृतः।
शिवध्यानैकसम्पन्नः स मे पापं व्यपोहतु॥ ३४
भृङ्गीशः पिङ्गलाक्षोऽसौ भसिताशस्तु देहयुक्।
शिवार्चनरतः श्रीमान् स मे पापं व्यपोहतु॥ ३५
चतुर्भिस्तनुभिर्नित्यं सर्व्वासुरनिवर्हणः।
स्कन्दः शक्तिधरः शान्तः सेनानीः शिखिवाहनः।
देवसेनापतिः श्रीमान् स मे पापं व्यपोहतु॥ ३६
भवः शर्व्वस्तथेशानो रुद्रः पशुपतिस्तथा।
उग्रो भीमो महादेवः शिवार्चनरतः सदा।
एताः पापं व्यपोहन्तु मूर्त्तयः परमेष्ठिनः॥ ३७
महादेवः शिवो रुद्रः शङ्करो नीललोहितः।
ईशानो विजयो भीमो देवदेवो भवोद्भवः॥ ३८
कपालीशश्च विज्ञेयो रुद्रा रुद्रांशसम्भवाः।
शिवप्रणामसम्पन्ना व्यपोहन्तु मलं मम॥ ३९
विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्करो रविः।
लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः॥ ४०
आदित्यश्च तथा सूर्य्यश्चांशुमांश्च दिवाकरः।

एते वै द्वादशादित्या व्यपोहन्तु मलं मम ॥ ४१
गगनं स्पर्शनं तेजो रसश्च पृथिवी तथा ।
चन्द्रः सूर्य्यस्तथात्मा च तनवः शिवभाषिताः ।
पापं व्यपोहन्तु मम भयं निर्णाशयन्तु मे ॥ ४२
वासवः पावकश्चैव यमो निर्ऋतिरेव च ।
वरुणो वायु-सोमौ च ईशानो भगवान् हरिः ॥ ४३
पितामहश्च भगवान् शिवध्यानपरायणाः ।
एते पापं व्यपोहन्तु मनसा कर्म्मणा कृतम् ॥ ४४
नभस्वान् स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेश-जीवेशौ मारुतः शिवभाषिताः ।
शिवार्च्चनरताः सर्व्वे व्यपोहन्तु मलं मम ॥ ४५
खेचरी वसुचारी च ब्रह्मेशो ब्रह्मब्रह्मधीः ।
सुषेणः शाश्वतः पुष्टः सुपुष्टश्च महाबलः ॥ ४६
एते वै चारणाः शम्भोः पूजयातीवभाविताः ।
व्यपोहन्तु मलं सर्व्वपापञ्चैव मया कृतम् ॥ ४७
मन्त्रज्ञो मन्त्रवित् प्राज्ञो मन्त्रराट् सिद्धपूजितः ।
सिद्धवत् परमः सिद्धः सर्व्वसिद्धिप्रदायिनः ।
व्यपोहन्तु मलं सर्व्वे सिद्धाः शिवपदार्च्चकाः ॥ ४८
यक्षो यक्षेशधनदो जृम्भको मणिभद्रकः ।
पूर्णभद्रेश्वरो माली शितिकुण्डलिरेव च ।
नरेन्द्रश्चैव यक्षेशा व्यपोहन्तु मलं मम ॥ ४९
अनन्तः कुलिकश्चैव वासुकिस्तक्षकस्तथा ।
कर्कोटको महापद्मः शङ्खपालो महाबलः ॥ ५०
शिवप्रणामसम्पन्नाः शिवदेहप्रभूषणाः ।
मम पापं व्यपोहन्तु विषं स्थावरजङ्गमम् ॥ ५१
वीणाज्ञः किन्नरश्चैव सुरसेनः प्रमर्द्दनः ।
अतीशयः सप्रयोगी गीतज्ञश्चैव किन्नराः ।
शिवप्रणामसम्पन्ना व्यपोहन्तु मलं मम ॥ ५२
विद्याधरश्च विबुधो विद्याराशिर्विदां वरः ।
विबुद्धो विबुधः श्रीमान् कृतज्ञश्च महायशाः ॥ ५३
एते विद्याधराः सर्व्वे शिवध्यानपरायणाः ।
व्यपोहन्तु मलं घोरं महादेवप्रसादतः ॥ ५४
वामदेवो महाजम्भः कालनेमिर्महाबलः ।
सुग्रीवो मर्द्दकश्चैव पिङ्गलो देवमर्द्दनः ॥ ५५
प्रह्लादश्चाप्यनुह्लादः संह्लादः किल-वास्कलौ ।
जम्भः कुम्भश्च मायावी कार्त्तवीर्य्यः कृतञ्जयः ॥ ५६
एते शूरा महात्मानो महादेवपरायणाः ।
व्यपोहन्तु भयं घोरमासुरं भावमेव च ॥ ५७
गरुत्मान् खगतिश्चैव पक्षिराड्नागमर्द्दनः ।
नागशत्रुर्हिरण्याङ्गो वैनतेयः प्रभञ्जनः ।
नागाशीर्विषनाशश्च विष्णुवाहन एव च ॥ ५८
एते हिरण्यवर्णाभा गरुड़ा विष्णुवाहनाः ।
नानाभरणसम्पन्ना व्यपोहन्तु मलं मम ॥ ५९
अगस्त्यश्च वशिष्ठश्च अङ्गिरा भृगुरेव च ।
काश्यपो नारदश्चैव दधीचश्च्यवनस्तथा ॥ ६०
उपमन्युस्तथान्ये च ऋषयः शिवभाविताः ।
शिवार्च्चनरताः सर्व्वे व्यपोहन्तु मलं मम ॥ ६१
पितरः पितामहाश्च तथैव प्रपितामहाः ।
अग्निष्वात्ता वर्हिषदस्तथा मातामहादयः ।
व्यपोहन्तु भयं पापं शिवध्यानपरायणाः ॥ ६२
लक्ष्मीश्च धरणी चैव गायत्री च सरस्वती ।
दुर्गा उषा शची ज्येष्ठा मातरः सुरपूजिताः ॥ ६३
देवानां मातरश्चैव गणानां मातरस्तथा ।
भूतानां मातरः सर्व्वा यत्र या गणमातरः ॥ ६४
प्रसादाद्देवदेवस्य व्यपोहन्तु मलं मम ॥ ६५
उर्व्वशी मेनका चैव रम्भा-रति-तिलोत्तमाः ।
सुमुखी दुर्म्मुखी चैव कामुकी कामवर्द्धनी ॥ ६६
तथान्याः सर्व्वलोकेषु दिव्याश्चाप्सरसस्तथा ।
शिवाय ताण्डवं नित्यं कुर्व्वन्त्योऽतीवभाविताः ।
देव्यः शिवार्च्चनरता व्यपोहन्तु मलं मम ॥ ६८
अर्कः सोमोऽङ्गारकश्च बुधश्चैव बृहस्पतिः ।
शुक्रः शनैश्चरश्चैव राहुः केतुस्तथैव च ।
व्यपोहन्तु भयं घोरं ग्रहपीड़ां शिवार्च्चकाः ॥ ६९
मेषो वृषोऽथ मिथुनस्तथा कर्कटकः शुभः ।
सिंहश्च कन्या विपुला तुला वै वृश्चिकस्तथा ।
धनुश्च मकरश्चैव कुम्भो मीनस्तथैव च ॥ ७०
राशयो द्वादश ह्येते शिवपूजापरायणाः ।
व्यपोहन्तु भयं पापं प्रसादात् परमेष्ठिनः ॥ ७१
अश्विनी भरणी चैव कृत्तिका रोहिणी तथा ।
श्रीमन्मृगशिराश्चार्द्रा पुनर्व्वसु-पुष्य-सार्पकाः ॥
मघा वै पूर्व्वफल्गुन्य उत्तराफल्गुनी तथा ।
हस्ता चित्रा तथा स्वाती विशाखा चानुराधिकाः
ज्येष्ठा मूलं महाभागा पूर्व्वाषाढ़ा तथैव च ।
उत्तराषाढ़िका चैव श्रवणश्च श्रविष्ठिका ॥ ७४

शतभिषक् पूर्व्वभद्रा तथा प्रोष्ठपदा तथा।
पौष्णश्च दिव्यः सततं व्यपोहन्तु मलं मम ॥ ७५
ज्वरः कुम्भोदरश्चैव शङ्कुकर्णो महाबलः।
महाकर्णः प्रभातश्च महाभूतप्रमर्द्दनः ॥ ७६
श्येनजिच्छिवदूतश्च प्रमथाः प्रीतिवर्द्धनाः ॥ ७७
कोटिकोटिशतैश्चैव भूतानां मातरः सदा।
व्यपोहन्तु भयं पापं महादेवप्रसादतः ॥ ७८
शिवध्यानैकसम्पन्नो हिमराड्म्बुसन्निभः।
कुन्देन्दुसदृशाकारः कुम्भकुन्देन्दुभूषणः ॥ ७९
वडवानलशत्रुर्यो वडवामुखभेदनः।
चतुष्पादसमायुक्तः क्षीरोद इव पाण्डुरः ॥ ८०
रुद्रलोके स्थितो नित्यं रुद्रैः सार्द्धं गणेश्वरैः।
वृषेन्द्रो विश्वधृग्देवो विश्वस्य जगतः पिता ॥ ८१
वृतो नन्दादिभिर्नित्यं मातृभिर्मखमर्द्दनः।
शिवार्च्चनरतो नित्यं स मे पापं व्यपोहतु ॥ ८२
गङ्गा माता जगन्माता रुद्रलोके व्यवस्थिता।
शिवभक्ता तु या नन्दा सा मे पापं व्यपोहतु ॥ ८३
भद्रा भद्रपदा देवी शिवलोके व्यवस्थिता।
माता गवां महाभागा सा मे पापं व्यपोहतु ॥ ८४
सुरभिः सर्व्वतो भद्रा सर्व्वपापप्रणाशनी।
रुद्रपूजारता नित्यं सा मे पापं व्यपोहतु ॥ ८५
सुशीला शीलसम्पन्ना श्रीप्रदा शिवभाविता।
शिवलोके स्थिता नित्यं सा मे पापं व्यपोहतु ॥ ८६
वेदशास्त्रार्थतत्त्वज्ञः सर्व्वकार्य्याभिचिन्तकः।
समस्तगुणसम्पन्नः सर्व्वदेवेश्वरात्मजः ॥ ८७
ज्येष्ठः सर्व्वेश्वरः सौम्यो महाविष्णुतनुः स्वयम्।
आर्य्यः सेनापतिः साक्षाद्गहनो मखमर्द्दनः ॥ ८८
ऐरावतगजारूढः कृष्णकुञ्चितमूर्द्धजः।
कृष्णाङ्गो रक्तनयनः शशि-पन्नगभूषणः ॥ ८९
भूतैः प्रेतैः पिशाचैश्च कुष्माण्डैश्च समावृतः।
शिवार्च्चनरतः साक्षात् स मे पापं व्यपोहतु ॥ ९०
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा।
वाराही चैव माहेन्द्री चामुण्डाग्नेयिका तथा ॥ ९१
एता वै मातरः सर्व्वाः सर्व्वलोकप्रपूजिताः।
योगिनीभिर्महापापं व्यपोहन्तु समाहिताः ॥ ९२
वीरभद्रो महातेजा हिमकुन्देन्दुसन्निभः।
रुद्रस्य तनयो रौद्रः शूलासक्तमहाकरः ॥ ९३
सहस्रबाहुः सर्व्वज्ञः सर्व्वायुधधरः स्वयम्।
त्रेताग्निनयनो देवस्त्रैलोक्याभयदः प्रभुः ॥ ९४
मातृणां रक्षको नित्यं महावृषभवाहनः।
त्रैलोक्यनमितः श्रीमान् शिवपादार्च्चने रतः ॥ ९५
यज्ञस्य च शिरश्छेत्ता पूष्णो दन्तविनाशनः।
वह्नेर्हस्तहरः साक्षाद्भगनेत्रनिपातनः ॥ ९६
पादाङ्गुष्ठेन सोमाङ्ग-पेषकः प्रभुसंज्ञकः।
उपेन्द्रेन्द्रयमादीनां देवानामङ्गरक्षकः ॥ ९७
सरस्वत्या महादेव्या नासिकोष्ठावकर्त्तनः।
गणेश्वरो यः सेनानीः स मे पापं व्यपोहतु ॥ ९८
ज्येष्ठा वरिष्ठा वरदा वराभरणभूषिता।
महालक्ष्मीर्जगन्माता सा मे पापं व्यपोहतु ॥ ९९
महामोहा महाभागा महाभूतगणैर्वृता।
शिवार्च्चनरता नित्यं सा मे पापं व्यपोहतु ॥ १००
लक्ष्मीः सर्व्वगुणोपेता सर्व्वलक्षणसंयुता।
सर्व्वदा सर्व्वगा देवी सा मे पापं व्यपोहतु ॥ १०१
सिंहारूढ़ा महादेवी पार्व्वत्यास्तनयाव्यया।
विष्णोर्निद्रा महामाया वैष्णवी सुरपूजिता ॥ १०२
त्रिनेत्रा वरदा देवी महिषासुरमर्द्दिनी।
शिवार्च्चनरता दुर्गा सा मे पापं व्यपोहतु ॥ १०३
ब्रह्माण्डधारका रुद्राः सर्व्वलोकप्रपूजिताः।
सत्याश्च मानसाः सर्व्वे व्यपोहन्तु भयं मम ॥ १०४
भूताः प्रेताः पिशाचाश्च कुष्माण्डगणनायकाः।
कुष्माण्डकाश्च ते पापं व्यपोहन्तु समाहिताः ॥ १०५
अनेन देवाः स्तुत्वा तु चान्ते सर्व्वं समापयेत्।
प्रणम्य शिरसा भूमौ प्रतिमासे द्विजोत्तमाः ॥ १०६
व्यपोहनस्तवं दिव्यं यः पठेच्छृणुयादपि।
विधूय सर्व्वपापानि रुद्रलोके महीयते ॥ १०७
कन्यार्थी लभते कन्यां जयकामो जयं लभेत्।
अर्थकामो लभेदर्थं पुत्त्रकामो बहून् सुतान् ॥ १०८
विद्यार्थी लभते विद्यां भोगार्थी भोगमाप्नुयात्।
यान् यान् प्रार्थयते कामान् मानवः श्रवणादिह ॥ १०९
तान् सर्व्वान् शीघ्रमाप्नोति देवानाञ्च प्रियो भवेत्।
पठ्यमानमिदं पुण्यं यमुद्दिश्य तु पठ्यते ॥ ११०
तस्य रोगा न बाधन्ते वातपित्तादिसम्भवाः।
नाकाले मरणं तस्य न सर्पैरपि दृश्यते ॥ १११
यत् पुण्यञ्चैव तीर्थानां यज्ञानाञ्चैव यत् फलम्।

दानानाञ्चैव यत् पुण्यं व्रतानाञ्च विशेषतः ॥ ११२
तत् पुण्यं कोटिगुणितं जप्त्वा चाप्नोति मानवः ।
गोघ्नश्चैव कृतघ्नश्च वीरहा ब्रह्महा भवेत् ॥ ११३
शरणागतघाती च मित्रविश्वासघातकः ।
दुष्टः पापसमाचारो मातृहा पितृहा तथा ॥ ११४
व्यपोह्य सर्व्वपापानि शिवलोके महीयते ॥ ११५

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
द्व्यशीतितमोऽध्यायः ॥८२॥

---

## त्र्यशीतितमोऽध्यायः ।

ऋषय ऊचुः ।

व्यपोहनस्तवं पुण्यं श्रुतमस्माभिरादरात् ।
प्रसङ्गाल्लिङ्गदानस्य व्रतान्यपि वदस्व नः ॥ १

सूत उवाच ।

व्रतानि वः प्रवक्ष्यामि शुभानि मुनिसत्तमाः ।
नन्दिना कथितानीह ब्रह्मपुत्राय धीमते ॥ २
तानि व्यासादुपश्रुत्य युष्माकं प्रवदाम्यहम् ।
अष्टम्याञ्च चतुर्द्दश्यां पक्षयोरुभयोरपि ॥ ३
वर्षमेकन्तु भुञ्जानो नक्तं यः पूजयेच्छिवम् ।
सर्व्वयज्ञफलं प्राप्य स याति परमां गतिम् ॥ ४
पृथिवीं भाजनं कृत्वा भुक्त्वा पर्व्वसु मानवः ।
अहोरात्रेण चैकेन त्रिरात्रफलमश्नुते ॥ ५
द्वयोर्मासस्य पञ्चम्योर्द्वयोः प्रतिपदोर्नरः ।
क्षीरधाराव्रतं कुर्य्यात् सोऽश्वमेधफलं लभेत् ॥ ६
कृष्णाष्टम्यान्तु नक्तेन यावत् कृष्णा चतुर्द्दशी ।
भुञ्जन् भोगानवाप्नोति ब्रह्मलोकञ्च गच्छति ॥ ७
योऽब्दमेकं प्रकुर्व्वीत नक्तं पर्व्वसु पर्व्वसु ।
ब्रह्मचारी जितक्रोधः शिवध्यानपरायणः ॥ ८
संवत्सरान्ते विप्रेन्द्रान् भोजयेद्विधिपूर्व्वकम् ।
स याति शाङ्करं लोकं नात्र कार्य्या विचारणा ॥ ९
उपवासात् परं भैक्ष्यं भैक्ष्यात् परमयाचितम् ।
अयाचितात् परं नक्तं तस्मान्नक्तेन वर्त्तयेत् ॥ १०
देवैर्भुक्तन्तु पूर्व्वाह्णे मध्याह्ने ऋषिभिस्तथा ।
अपराह्णे च पितृभिः सन्ध्यायां गुह्यकादिभिः ॥ ११
सर्व्ववेलामतिक्रम्य नक्तभोजनमुत्तमम् ।
हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ॥ १२
अग्निकार्य्यमधःशय्यां नक्तभोजी समाचरेत् ।
प्रतिमासं प्रवक्ष्यामि शिवव्रतमनुत्तमम् ॥ १३
धर्म्मकामार्थमोक्षार्थं सर्व्वपापविशुद्धये ।
पुष्यमासे च सम्पूज्य यः कुर्य्यान्नक्तभोजनम् ॥ १४
सत्यवादी जितक्रोधः शालि-गोधूम-गोरसैः ।
पक्षयोरष्टमीं यत्नादुपवासेन वर्त्तयेत् ॥ १५
भूमिशय्याञ्च मासान्ते पौर्णमास्यां घृतादिभिः ।
स्नाप्य रुद्रं महादेवं सम्पूज्य विधिपूर्व्वकम् ॥ १६
यावकञ्चौदनं दत्त्वा सक्षीरं सघृतं द्विजाः ।
भोजयेद्ब्राह्मणान् शिष्टान् जपेच्छान्तिं विशेषतः ॥ १७
तथा गोमिथुनञ्चैव कपिलं विनिवेदयेत् ।
भवाय देवदेवाय शिवाय परमेष्ठिने ॥ १८
स याति मुनिशार्दूला वाह्नेयं लोकमुत्तमम् ।
भुक्त्वा स विपुलान् लोकान् तत्रैव स विमुच्यते ॥ १९
माघमासे तु सम्पूज्य यः कुर्य्यान्नक्तभोजनम् ।
कृशरं घृतसंयुक्तं भुञ्जानः संयतेन्द्रियः ॥ २०
सोपवासं चतुर्द्दश्यां भवेदुभयपक्षयोः ।
रुद्राय पौर्णमास्यान्तु दद्याद्वै घृतकम्बलम् ॥ २१
कृष्णां गोमिथुनं दद्यात् पूजयेच्चैव शङ्करम् ।
भोजयेद्ब्राह्मणांश्चैव यथाविभवविस्तरम् ॥ २२
याम्यमासाद्य वै लोकं यमेन सह मोदते ।
फाल्गुने चैव सम्प्राप्ते कुर्य्याद्वै नक्तभोजनम् ॥ २३
श्यामाकान्नघृतक्षीरैर्जितक्रोधो जितेन्द्रियः ।
चतुर्द्दश्यामथाष्टम्यामुपवासञ्च कारयेत् ॥ २४
पौर्णमास्यां महादेवं स्नाप्य सम्पूज्य शङ्करम् ।
दद्याद्गोमिथुनं वापि ताम्राभं शूलपाणये ॥ २५
ब्राह्मणान् भोजयित्वा तु प्रार्थयेत् परमेश्वरम् ।
स याति चन्द्रसायुज्यं नात्र कार्य्या विचारणा ॥ २६
चैत्रेऽपि रुद्रमभ्यर्च्य कुर्य्याद्वै नक्तभोजनम् ।
शाल्यन्नं पयसा युक्तं घृतेन च यथासुखम् ॥ २७
गोष्ठशायी मुनिश्रेष्ठाः क्षितौ निशि भवं स्मरेत् ।
पौर्णमास्यां शिवं स्नाप्य दद्याद्गोमिथुनं सितम् ॥ २८
ब्राह्मणान् भोजयेच्चैव निर्ऋतेः स्थानमाप्नुयात् ।
वैशाखे च तथा मासे कृत्वा वै नक्तभोजनम् ॥ २९
पौर्णमास्यां भवं स्नाप्य पञ्चगव्यघृतादिभिः ।
श्वेतं गोमिथुनं दत्त्वा सोऽश्वमेधफलं लभेत् ॥ ३०
ज्यैष्ठे मासे च देवेशं भवं शर्व्वमुमापतिम् ।

सम्पूज्य श्रद्धया भक्त्या कृत्वा वै नक्तभोजनम्॥ ३१
रक्तशाल्यन्नमश्वा च श्रद्भिः पूतं घृतादिभिः।
वीरासनी निशार्द्धञ्च गवां शुश्रूषणे रतः॥ ३२
पौर्णमास्यान्तु सम्पूज्य देवदेवमुमापतिम्।
स्नाप्य शक्त्या यथान्यायं चरुं दद्याच्च शूलिने॥ ३३
ब्राह्मणान् भोजयित्वा च यथाविभवविस्तरम्।
धूम्रं गोमिथुनं दत्त्वा वायुलोके महीयते॥ ३४
आषाढ़े मासि चाप्येवं नक्तभोजनतत्परः।
भूरिखण्डाज्यसंमिश्रं शक्तुभिश्चैव गोरसम्॥ ३५
पौर्णमास्यां घृताद्यैस्तु स्नाप्य पूज्य यथाविधि।
ब्राह्मणान् भोजयित्वा च श्रोत्रियान् वेदपारगान्॥३६
दद्याद्गोमिथुनं गौरं वारुणं लोकमाप्नुयात्।
श्रावणे च द्विजा मासि कृत्वा वै नक्तभोजनम्॥ ३७
क्षीरषष्टिकभक्तेन सम्पूज्य वृषभध्वजम्।
पौर्णमास्यां घृताद्यैस्तु स्नाप्य पूज्य यथाविधि॥३८
ब्राह्मणान् भोजयित्वा च श्रोत्रियान् वेदपारगान्।
श्वेताग्रपादं पौण्ड्रञ्च दद्याद्गोमिथुनं पुनः॥ ३९
स याति वायुसायुज्यं वायुवत् सर्व्वगो भवेत्।
प्राप्ते भाद्रपदे मासि कृत्वैवं नक्तभोजनम्॥ ४०
हुतशेषञ्च विप्रेन्द्रान् वृक्षमूलाश्रितो दिवा।
पौर्णमास्यान्तु देवेशं स्नाप्य सम्पूज्य शङ्करम्॥ ४१
नीलस्कन्धं वृषं गाञ्च दत्त्वा भक्त्या यथाविधि।
ब्राह्मणान् भोजयित्वा च वेदवेदाङ्गपारगान्॥४२
यक्षलोकमनुप्राप्य यक्षराजो भवेन्नरः।
ततश्चाश्वयुजे मासि कृत्वैवं नक्तभोजनम्॥ ४३
सघृतं शङ्करं पूज्य पौर्णमास्याञ्च पूर्व्ववत्।
ब्राह्मणान् भोजयित्वा च शिवभक्तान् सदाशुचीन्॥४४
वृषभं नीलवर्णाभमुरोदेशसमुन्नतम्।
गाञ्च दत्त्वा यथान्यायमैशानं लोकमाप्नुयात्॥ ४५
कार्त्तिके च तथा मासि कृत्वा वै नक्तभोजनम्।
क्षीरोदनेन साज्येन सम्पूज्य च भवं प्रभुम्॥ ४६
पौर्णमास्याञ्च विधिवत् स्नाप्य दत्त्वा चरुं पुनः।
ब्राह्मणान् भोजयित्वा च यथाविभवविस्तरम्॥४७
दत्त्वा गोमिथुनञ्चैव कापिलं पूर्व्ववद्द्विजाः।
सूर्य्यसायुज्यमाप्नोति नात्र कार्य्या विचारणा॥ ४८
मार्गशीर्षे च मासेऽपि कृत्वैवं नक्तभोजनम्।
यवान्नेन यथान्यायमाज्यक्षीरादिभिः समम्॥ ४९
पौर्णमास्याञ्च पूर्व्वोक्तं कृत्वा शर्व्वाय शर्व्वे।
ब्राह्मणान् भोजयित्वा च दरिद्रान् वेदपारगान्॥५०
दत्त्वा गोमिथुनञ्चैव पाण्डुरं विधिपूर्व्वकम्।
सोमलोकमनुप्राप्य सोमेन सह मोदते॥ ५१
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं क्षमा दया।
त्रिःस्नानञ्चाग्निहोत्रञ्च भूशय्या नक्तभोजनम्॥ ५२
पक्षयोरुपवासश्च चतुर्द्दश्यष्टमीषु च।
इत्येतदखिलं प्रोक्तं प्रतिमासं शिवव्रतम्॥ ५३
कुर्य्याद्वर्षं क्रमेणैव व्युत्क्रमेणापि वा द्विजाः।
स याति शिवसायुज्यं ज्ञानयोगमवाप्नुयात्॥ ५४

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे शिवव्रत-
कथनं नाम त्र्यशीतितमोऽध्यायः॥८३॥

---

## चतुरशीतितमोऽध्यायः।

सूत उवाच।

उमामहेश्वरं वक्ष्ये व्रतमीश्वरभाषितम्।
नरनार्य्यादिजन्तूनां हिताय मुनिसत्तमाः॥ १
पौर्णमास्याममावास्यां चतुर्द्दश्यष्टमीषु च।
नक्तमब्दं प्रकुर्व्वीत हविष्यं पूजयेद्भवम्॥ २
उमामहेशप्रतिमां हेम्ना कृत्वा सुशोभनाम्।
राजतीं वाथ वर्षान्ते प्रतिष्ठाप्य यथाविधि॥ ३
ब्राह्मणान् भोजयित्वा च दत्त्वा शक्त्या च दक्षिणाम्
रथाद्यैर्वापि देवेशं नीत्वा रुद्रालयं प्रति॥ ४
सर्व्वातिशयसंयुक्तैश्छत्र-चामर-भूषणैः।
निवेदयेद्व्रतञ्चैव शिवाय परमेष्ठिने॥ ५
स याति शिवसायुज्यं नारी देव्या यदि प्रभो।
अष्टम्याञ्च चतुर्द्दश्यां नियता ब्रह्मचारिणी॥ ६
वर्षमेकं न भुञ्जीत कन्या वा विधवापि वा।
वर्षान्ते प्रतिमां कृत्वा पूर्व्वोक्तविधिना ततः॥ ७
प्रतिष्ठाप्य यथान्यायं दत्त्वा रुद्रालये पुनः।
ब्राह्मणान् भोजयित्वा च भवान्या सह मोदते॥ ८
या नार्य्येवं चरेदब्दं कृष्णामेकां चतुर्द्दशीम्।
वर्षान्ते प्रतिमां कृत्वा येन केनापि वा द्विजाः॥ ९
पूर्व्वोक्तमखिलं कृत्वा भवान्या सह मोदते।
अमावास्यां निराहारा भवेदब्दं सुयन्त्रिता॥ १०
मूलञ्च विधिना कृत्वा वर्षान्ते विनिवेदयेत्।

स्नाप्येशानं यजेद्भक्त्या सहस्रैः कमलैः सितैः ॥ ११
राजतं कमलञ्चैव जाम्बूनदसुकर्णिकम्।
दत्त्वा भवाय विप्रेभ्यः प्रदद्याद्दक्षिणामपि ॥ १२
कामतोऽपि कृतं पापं भ्रूणहत्यादिकञ्च यत्।
तत् सर्व्वं मूलदानेन भिन्द्यान्नारी न संशयः ॥ १३
सायुज्यञ्चैवमाप्नोति भवान्या द्विजसत्तमाः।
कुर्य्याद्यदा नरः सोऽपि रुद्रसायुज्यमाप्नुयात् ॥ १४
पौर्णमास्याममावास्यां वर्षमेकमतन्द्रिता।
उपवासरता नारी नरोऽपि द्विजसत्तमाः ॥ १५
नियोगादेव तत् कार्य्यं भर्त्तॄणां द्विजसत्तमाः।
जपं दानं तपः सर्व्वमस्वतन्त्रा यतः स्त्रियः ॥ १६
वर्षान्ते सर्व्वगन्धाढ्यां प्रतिमासं निवेदयेत्।
सा भवान्याश्च सायुज्यं सारूप्यञ्चापि सुव्रता ॥ १७
लभते नात्र सन्देहः सत्यं सत्यं वदाम्यहम्।
कार्त्तिक्यां वा तु या नारी एकभक्तेन वर्त्तते ॥ १८
क्षमाहिंसादिनियमैः संयुक्ता ब्रह्मचारिणी।
दद्यात् कृष्णतिलानाञ्च भारमेकमतन्द्रिता ॥ १९
सघृतं सगुड़ञ्चैव ओदनं परमेष्ठिने।
दत्त्वा च ब्राह्मणेभ्यश्च यथा विभवविस्तरम् ॥ २०
अष्टम्याञ्च चतुर्द्दश्यामुपवासरता च सा।
भवान्या मोदते सार्द्धं सारूप्यं प्राप्य सुव्रता ॥ २१
क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः।
सर्व्वव्रतेष्वयं धर्म्मः सामान्यो रुद्रपूजनम् ॥ २२
समासादः प्रवक्ष्यामि प्रतिमासमनुक्रमात्।
मार्गशीर्षकमासादि-कार्त्तिकान्तं यथाक्रमम् ॥ २३
व्रतं सुविपुलं पुण्यं नन्दिना परिभाषितम्।
मार्गशीर्षकमासेऽथ वृषं पूर्णाङ्गमुत्तमम् ॥ २४
अलङ्कृत्य यथान्यायं शिवाय विनिवेदयेत्।
सा च सार्द्धं भवान्या वै मोदते नात्र संशयः ॥ २५
पुष्यमासे तु वै शूलं प्रतिष्ठाप्य निवेदयेत्।
पूर्व्वोक्तमखिलं कृत्वा भवान्या सह मोदते ॥ २६
माघमासे रथं कृत्वा सर्व्वलक्षणलक्षितम्।
दद्यात् संपूज्य देवेशं ब्राह्मणांश्चैव भोजयेत् ॥ २७
सा च देव्या महाभागा मोदते नात्र संशयः।
फाल्गुने प्रतिमां कृत्वा हिरण्येन यथाविधि ॥ २८
राजतेनापि तारेण यथाविभवविस्तरम्।
प्रतिष्ठाप्य समभ्यर्च्य स्थापयेच्छङ्करालये ॥ २९
सा च सार्द्धं महादेव्या मोदते नात्र संशयः।
चैत्रे भवं कुमारञ्च भवानीञ्च यथाविधि ॥ ३०
ताम्राद्यैर्विधिवत् कृत्वा प्रतिष्ठाप्य यथाविधि।
भवान्या मोदते सार्द्धं दत्त्वा रुद्राय शम्भवे ॥ ३१
कृत्वालयं हि कौबेरं राजतं रजतेन वै।
ईश्वरीमासमायुक्तं गणेशैश्च समन्ततः ॥ ३२
सर्व्वरत्नसमायुक्तं प्रतिष्ठाप्य यथाविधि।
स्थापयेत् परमेशस्य भवस्यायतने शुभे ॥ ३३
वैशाखे वै चरेद्देवं कैलासाख्यं व्रतोत्तमम्।
कैलासपर्व्वतं प्राप्य भवान्या सह मोदते ॥ ३४
ज्येष्ठे मासि महादेवं लिङ्गमूर्त्तिमुमापतिम्।
कृताञ्जलिपुटेनैव ब्रह्मणा विष्णुना तथा ॥ ३५
मध्ये भवेन संयुक्तं लिङ्गमूर्त्तिं द्विजोत्तमाः।
हंसेन च वराहेण कृत्वा ताम्रादिभिः शुभाम् ॥ ३६
प्रतिष्ठाप्य यथान्यायं ब्राह्मणान् भोजयेत् ततः।
शिवाय शिवमासाद्य शिवस्थाने यथाविधि ॥ ३७
ब्राह्मणैः सहितां स्थाप्य देव्याः सायुज्यमाप्नुयात्।
आषाढ़े च शुभे मासे गृहं कृत्वा सुशोभनम् ॥ ३८
पक्वेष्टकाभिर्विधिवद्यथाविभवविस्तरम्।
सर्व्वबीजरसैश्चापि सम्पूर्णं सर्व्वशोभनैः ॥ ३९
गृहोपकरणैश्चैव मुषलोलूखलादिभिः।
दासीदासादिभिश्चैव शयनैरशनादिभिः ॥ ४०
सम्पूर्णञ्च गृहं वस्त्रैराच्छाद्य च समन्ततः।
देवं घृतादिभिः स्नाप्य महादेवमुमापतिम् ॥ ४१
ब्राह्मणानां सहस्रञ्च भोजयित्वा यथाविधि।
विद्याविनयसम्पन्नं ब्राह्मणं वेदपारगम् ॥ ४२
प्रथमाश्रमिणं भक्त्या सम्पूज्य च यथाविधि।
कन्यां सुमध्यमां यावत् कालजीवनसंयुताम् ॥ ४३
क्षेत्रं गोमिथुनञ्चैव तद्गृहे च निवेदयेत्।
सायनैर्विविधैर्दिव्यैर्मेरुपर्व्वतसन्निभैः ॥ ४४
गोलोकं समनुप्राप्य भवान्या सह मोदते।
भवान्या सहशी भूत्वा सर्व्वकल्पेषु साव्यया ॥ ४५
भवान्याश्चैव सायुज्यं लभते नात्र संशयः।
सर्व्वधातुसमाकीर्णं विचित्रध्वजशोभितम् ॥ ४६
निवेदयीत शर्व्वाय श्रावणे तिलपर्व्वतम्।
वितान-ध्वज-वस्त्राद्यैर्धातुभिश्च निवेदयेत् ॥ ४७
ब्राह्मणान् भोजयित्वा च पूर्व्वोक्तमखिलं भवेत्।

कृत्वा भाद्रपदे मासि शोभनं शालिपर्व्वतम् ॥ ४८
वितान-ध्वज-वस्त्राद्यैर्धातुभिश्च निवेदयेत् ।
ब्राह्मणान् भोजयित्वा च दापयेच्च यथाविधि ॥४९
सा च सूर्य्यांशुसङ्काशा भवान्या सह मोदते ।
कृत्वा चाश्वयुजे मासि विपुलं धान्यपर्व्वतम् ॥ ५०
सुवर्णवस्त्रसंयुक्तं दत्त्वा सम्पूज्य शङ्करम् ।
ब्राह्मणान् भोजयित्वा च पूर्व्वोक्तमखिलं भवेत्॥५१
सर्व्वधान्यसमायुक्तं सर्व्वबीजरसादिभिः ।
सर्व्वधातुसमायुक्तं सर्व्वरत्नोपशोभितम् ॥ ५२
शृङ्गैश्चतुर्भिः संयुक्तं वितानच्छत्रशोभितम् ।
गन्धमाल्यैस्तथा धूपैश्चित्रैश्चापि सुशोभितम् ॥ ५३
विचित्रैर्नृत्यगीतैश्च शङ्खवीणादिभिस्तथा ।
ब्रह्मघोषैर्महापुण्यं मङ्गलैश्च विशेषतः ॥ ५४
महाध्वजाष्टसंयुक्तं विचित्रकुसुमोज्ज्वलम् ।
नगेन्द्रं मेरुनामानं त्रैलोक्याधारमुत्तमम् ॥ ५५
तस्य मूर्द्धि शिवं कुर्य्यान्मध्यतो धातुनैव तु ।
दक्षिणे च यथान्यायं ब्रह्माणञ्च चतुर्म्मुखम् ॥ ५६
उत्तरे देवदेवेशं नारायणमनामयम् ।
इन्द्रादिलोकपालांश्च कृत्वा भक्त्या यथाविधि ॥ ५७
प्रतिष्ठाप्य ततः स्नाप्य समभ्यर्च्य महेश्वरम् ।
देवस्य दक्षिणे हस्ते शूलं त्रिदशपूजितम् ॥ ५८
वामे पार्श्वे भवान्याश्च कमलं हेमभूषितम् ।
विष्णोश्च शङ्खं चक्रञ्च गदामब्जं प्रयत्नतः ॥ ५९
ब्रह्मणश्चाक्षसूत्रञ्च कमण्डलुमनुत्तमम् ।
इन्द्रस्य वज्रमग्नेश्च शक्त्याख्यं परमायुधम् ॥ ६०
यमस्य दण्डं निर्ऋतेः खड्गं निशिचरस्य तु ।
वरुणस्य महापाशं नागाख्यं सुरमद्भुतम् ॥ ६१
वायोर्यष्टिं कुबेरस्य गदां लोकप्रपूजिताम् ।
टङ्कञ्चेशानदेवस्य निवेदयेत् क्रमेण च ॥ ६२
शिवस्य महतीं पूजां कृत्वा चरुसमन्विताम् ।
पूजयेत् सर्व्वदेवांश्च यथाविभवविस्तरम् ॥ ६३
ब्राह्मणान् भोजयित्वा च पूजां कृत्वा प्रयत्नतः ।
महामेरुव्रतं कृत्वा महादेवाय दापयेत् ॥ ६४
महामेरुमनुप्राप्य महादेव्या प्रमोदते ।
चिरं सायुज्यमाप्नोति महादेव्या न संशयः ॥ ६५
कार्त्तिक्यामपि या नारी कृत्वा देवीमुमां शुभाम् ।
सर्व्वाभरणसम्पूर्णां सर्व्वलक्षणलक्षिताम् ॥ ६६
हेमताम्रादिभिश्चैव प्रतिष्ठाप्य विधानतः ।
देवञ्च कृत्वा देवेशं सर्व्वलक्षणसंयुतम् ॥ ६७
तयोरग्रे कृताञ्च सुवहस्तं पितामहम् ।
नारायणञ्च दातारं सर्व्वाभरणभूषितम् ॥ ६८
लोकपालैस्तथा सिद्धैः संवृतं स्नाप्य यत्नतः ।
रुद्रालये व्रतं तस्मै दापयेद्भक्तिपूर्व्वकम् ॥ ६९
सा भवान्यास्तनुं गत्वा भवेन सह मोदते ।
एकभक्तव्रतं पुण्यं प्रतिमासमनुक्रमात् ॥ ७०
मार्गशीर्षकमासादि-कार्त्तिकान्तं प्रवर्त्तितम् ।
नरनार्य्यादिजन्तूनां हिताय मुनिसत्तमाः ॥ ७१
नरः कृत्वा व्रतञ्चैव शिवसायुज्यमाप्नुयात् ।
नारी देव्या न सन्देहः शिवेन परिभाषितम् ॥ ७२

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे उमा-
महेश्वरव्रतं नाम चतुरशीति-
तमोऽध्यायः ॥ ८४ ॥

---

## पञ्चाशीतितमोऽध्यायः ।

सूत उवाच ।
सर्व्वव्रतेषु सम्पूज्य देवदेवमुमापतिम् ।
जपेत् पञ्चाक्षरीं विद्यां विधिनैव द्विजोत्तमाः ॥ १
जपादेव न सन्देहो व्रतानां वै विशेषतः ।
समाप्तिर्नान्यथा तस्माज्जपेत् पञ्चाक्षरीं शुभाम् ॥ २
ऋषय ऊचुः ।
कथं पञ्चाक्षरी विद्या प्रभावो वा कथं वद ।
क्रमोपायं महाभाग श्रोतुं कौतूहलं हि नः ॥ ३
सूत उवाच ।
पुरा देवेन रुद्रेण देवदेवेन शम्भुना ।
पार्व्वत्याः कथितं पुण्यं प्रवदामि समासतः ॥ ४
श्रीदेव्युवाच ।
भगवन् देवदेवेश सर्व्वलोक महेश्वर ।
पञ्चाक्षरस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः ॥ ५
श्रीभगवानुवाच ।
पञ्चाक्षरस्य माहात्म्यं वर्षकोटिशतैरपि ।
न शक्यं कथितुं देवि तस्मात् संक्षेपतः शृणु ॥ ६
प्रलये समनुप्राप्ते नष्टे स्थावर-जङ्गमे ।
नष्टे देवासुरे चैव नष्टे चोरग-राक्षसे ॥ ७

सर्व्वं प्रकृतिमापन्नं लया प्रलयमेष्यति।
एकोऽहं संस्थितो देवि न द्वितीयोऽस्ति कुत्रचित् ॥ ८
तस्मिन् वेदाश्च शास्त्राणि मन्त्रे पञ्चाक्षरे स्थिताः।
ते नाशं नैव सम्प्राप्ता मच्छक्त्या ह्यनुपालिताः ॥ ९
अहमेको द्विधाप्यासं प्रकृत्यात्मप्रभेदतः।
स तु नारायणः शेते देवो मायामयीं तनुम् ॥ १०
आस्थाय योगपर्य्यङ्क-शयने तोयमध्यगः।
तन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामहः ॥ ११
सिसृक्षमाणो लोकान् वै त्रीनशक्तो सहायवान्।
दश ब्रह्मा ससर्ज्जादौ मानसानमितौजसः ॥ १२
तेषां सृष्टिप्रसिद्ध्यर्थं मां प्रोवाच पितामहः।
मत्पुत्राणां महादेव शक्तिं देहि महेश्वर ॥ १३
इति तेन समादिष्टः पञ्चवक्त्रधरो ह्यहम्।
पञ्चाक्षरान् पञ्चमुखैः प्रोक्तवान् पद्मयोनये ॥ १४
तान् पञ्चवदनैर्गृह्णन् ब्रह्मा लोकपितामहः।
वाच्य-वाचकभावेन ज्ञातवान् परमेश्वरम् ॥ १५
वाच्यः पञ्चाक्षरैर्द्देवि शिवस्त्रैलोक्यपूजितः।
वाचकः परमो मन्त्रस्तस्य पञ्चाक्षरः स्थितः ॥ १६
ज्ञात्वा प्रयोगं विधिना च सिद्धिं
लब्ध्वा तथा पञ्चमुखो महात्मा।
प्रोवाच पुत्रेषु जगद्धिताय
मन्त्रं महार्थं किल पञ्चवर्णम् ॥ १७
ते लब्ध्वा मन्त्ररत्नन्तु साक्षाल्लोकपितामहात्।
तमाराधयितुं देवं परात्परतरं शिवम् ॥ १८
ततस्तुतोष भगवान् त्रिमूर्त्तीनां परः शिवः।
दत्तवानखिलं ज्ञानमणिमादिगुणाष्टकम् ॥ १९
तेऽपि लब्ध्वा वरान् विप्रास्तदाराधनकाङ्क्षिणः।
मेरोस्तु शिखरे रम्ये मुञ्जवान् नाम पर्व्वतः ॥ २०
मत्प्रियः सततं श्रीमान् मद्भूतैः परिरक्षितः।
तस्याभ्यासे तपस्तीव्रं लोकसृष्टिसमुत्सुकाः ॥ २१
दिव्यवर्षसहस्रन्तु वायुभक्षाः समाचरन्।
तिष्ठन्तोऽनुग्रहार्थाय देवि ते ऋषयः पुरा ॥ २२
तेषां भक्तिमहं दृष्ट्वा सद्यः प्रत्यक्षतामियाम्।
पञ्चाक्षरमृषिश्छन्दो-दैवतं शक्तिबीजवत् ॥ २३
न्यासं षडङ्गं दिग्बन्धं विनियोगमशेषतः।
प्रोक्तवानहमार्य्याणां लोकानां हितकाम्यया ॥ २४
तच्छ्रुत्वा मन्त्रमाहात्म्यमृषयस्ते तपोधनाः।

मन्त्रस्य विनियोगञ्च कृत्वा सर्व्वमनुष्ठिताः ॥ २५
तन्माहात्म्यात् तदा लोकान् सदेवासुरमानुषान्।
वर्णान् वर्णविभागांश्च सर्व्वधर्म्मांश्च शोभनान् ॥ २६
पूर्व्वकल्पसमुद्भूतान् श्रुतवन्तो यथा पुरा।
पञ्चाक्षरप्रभावाच्च लोका वेदा महर्षयः ॥ २७
तिष्ठन्ति शाश्वता धर्म्मा देवाः सर्व्वमिदं जगत्।
तदिदानीं प्रवक्ष्यामि शृणु चावहिताखिलम् ॥ २८
अल्पाक्षरं महार्थञ्च वेदसारं विमुक्तिदम्।
आज्ञासिद्धमसन्दिग्धं वाक्यमेतच्छिवात्मकम् ॥ २९
नानासिद्धियुतं दिव्यं लोकचित्तानुरञ्जकम्।
सुनिश्चितार्थं गम्भीरं वाक्यं मे पारमेश्वरम् ॥ ३०
मन्त्रं मुखसुखोच्चार्य्यमशेषार्थप्रसाधकम्।
तद्बीजं सर्व्वविद्यानां मन्त्रमाद्यं सुशोभनम् ॥ ३१
अतिसूक्ष्मं महार्थञ्च ज्ञेयं तद्वटबीजवत्।
वेदः स त्रिगुणातीतः सर्व्वज्ञः सर्व्वकृत् प्रभुः ॥ ३२
ओमित्येकाक्षरं मन्त्रं स्थितः सर्व्वगतः शिवः।
मन्त्रे षडक्षरे सूक्ष्मे पञ्चाक्षरतनुः शिवः ॥ ३३
वाच्य-वाचकभावेन स्थितः साक्षात् स्वभावतः।
वाच्यः शिवः प्रमेयत्वान्मन्त्रस्तद्वाचकः स्मृतः ॥ ३४
वाच्य-वाचकभावोऽयमनादिः संस्थितस्तयोः।
वेदे शिवागमे वापि यत्र यत्र षडक्षरः ॥ ३५
मन्त्रः स्थितः सदा मुख्यो लोके पञ्चाक्षरो मतः।
किं तस्य बहुभिर्मन्त्रैः शास्त्रैर्वा बहुविस्तरैः ॥ ३६
यस्यैवं हृदिसंस्थोऽयं मन्त्रः स्यात् पारमेश्वरः।
तेनाधीतं श्रुतं तेन तेन सर्व्वमनुष्ठितम् ॥ ३७
यो विद्वान् वै जपेत् सम्यगधीत्यैव विधानतः।
एतावद्धि शिवज्ञानमेतावत् परमं पदम् ॥ ३८
एतावद्ब्रह्मविद्या च तस्मान्नित्यं जपेद्बुधः।
पञ्चाक्षरैः सप्रणवो मन्त्रोऽयं हृदयं मम ॥ ३९
गुह्याद्गुह्यतरं साक्षान्मोक्षज्ञानमनुत्तमम्।
अस्य मन्त्रस्य वक्ष्यामि ऋषिश्छन्दोऽधिदैवतम्।
बीजं शक्तिं स्वरं वर्णं स्थानञ्चैवाक्षरं प्रति।
वामदेवो नाम ऋषिः पङ्क्तिश्छन्द उदाहृतः ॥ ४१
देवता शिव एवाहं मन्त्रस्यास्य वरानने।
नकारादीनि बीजानि पञ्चभूतात्मकानि च ॥ ४२
आत्मानं प्रणवं विद्धि सर्व्वव्यापिनमव्ययम्।
शक्तिस्त्वमेव देवेशि सर्व्वदेवनमस्कृते ॥ ४३

त्वदीयं प्रणवं किञ्चिन्मदीयं प्रणवं तथा।
त्वदीयं देवि मन्त्राणां शक्तिभूतं न संशयः॥ ४४
अकारोकारमकारा मदीये प्रणवे स्थिताः।
उकारश्च मकारश्च अकारश्च क्रमेण वै॥ ४५
त्वदीयं प्रणवं विद्धि त्रिमात्रं प्लुतमुत्तमम्।
ओङ्कारस्य स्वरोदात्त ऋषिर्ब्रह्मार्षितं वपुः॥ ४६
छन्दो देवी च गायत्री परमात्माधिदेवता।
उदात्तः प्रथमस्तद्वत् चतुर्थश्च द्वितीयकः॥ ४७
पञ्चमः स्वरितश्चैव मध्यमो निषधः स्मृतः।
नकारः पीतवर्णश्च स्थानं पूर्व्वमुखं स्मृतम्॥ ४८
इन्द्रोऽधिदैवतं छन्दो गायत्री गौतमो ऋषिः।
मकारः कृष्णवर्णोऽस्य स्थानं वै दक्षिणा मुखम्॥४९
छन्दोऽनुष्टवृषिश्चात्री रुद्रो दैवतमुच्यते।
शिकारो धूम्रवर्णोऽस्य स्थानं वै पश्चिमं मुखम्॥ ५०
विश्वामित्र ऋषिस्त्रिष्टुप् छन्दो विष्णुस्तु दैवतम्।
वाकारो हेमवर्णोऽस्य स्थानञ्चैवोत्तरं मुखम्॥ ५१
ब्रह्माधिदैवतं छन्दो वृहती चाङ्गिरा ऋषिः।
यकारो रक्तवर्णश्च स्थानमूर्द्धं मुखं विराट्॥ ५२
छन्दो ऋषिर्भरद्वाजः स्कन्दो दैवतमुच्यते।
न्यासमस्य प्रवक्ष्यामि सर्व्वसिद्धिकरं शुभम्॥ ५३
सर्व्वपापहरश्चैव त्रिविधो न्यास उच्यते।
उत्पत्ति-स्थिति-संहार-भेदतस्त्रिविधः स्मृतः॥ ५४
ब्रह्मचारिगृहस्थानां यतीनां क्रमशो भवेत्।
उत्पत्तिर्ब्रह्मचारीणां गृहस्थानां स्थितिः सदा॥ ५५
यतीनां संहृतिर्न्यासः सिद्धिर्भवति नान्यथा।
अङ्गन्यासः करन्यासो देहन्यास इति त्रिधा॥ ५६
उत्पत्त्यादित्रिभेदेन वक्ष्यते ते वरानने।
न्यसेत् पूर्व्वं करन्यासं देहन्यासमनन्तरम्॥ ५७
अङ्गन्यासं ततः पश्चादक्षराणां विधिक्रमात्।
मूर्द्धादिपादपर्य्यन्तमुत्पत्तिर्न्यास उच्यते॥ ५८
पादादिमूर्द्धपर्य्यन्तं संहारो भवति प्रिये।
हृदयास्यगलन्यासः स्थितिन्यास उदाहृतः॥ ५९
ब्रह्मचारि-गृहस्थानां यतीनाञ्चैव शोभने।
सशिरस्कं ततो देहं सर्व्वमन्त्रेण संस्पृशेत्॥ ६०
स देहन्यास इत्युक्तः सर्व्वेषां सम एव सः।
दक्षिणाङ्गुष्ठमारभ्य वामाङ्गुष्ठान्त एव हि॥ ६१
न्यस्यते यत् तदुत्पत्तिविपरीतस्तु संहृतिः।
अङ्गुष्ठादि-कनिष्ठान्तं न्यस्यते हस्तयोर्द्वयोः॥ ६२
अतीव भोगदो देवि स्थितिन्यासः कुटुम्बिनाम्।
करन्यासं पुरा कृत्वा देहन्यासमनन्तरम्॥ ६३
अङ्गन्यासं न्यसेत् पश्चादेष साधारणो विधिः।
ओङ्कारं सम्पुटीकृत्य सर्व्वाङ्गेषु च विन्यसेत्॥ ६४
करयोरुभयोश्चैव दशाग्राङ्गुलिषु क्रमात्।
प्रक्षाल्य पादावाचम्य शुचिर्भूत्वा समाहितः॥ ६५
प्राङ्मुखोदङ्मुखो वापि न्यासकर्म्म समाचरेत्।
स्मरेत् पूर्व्वमृषिं छन्दो दैवतं वीजमेव च॥ ६६
शक्तिञ्च परमात्मानं गुरुञ्चैव वरानने।
मन्त्रेण पाणी सम्मृज्य तलयोः प्रणवं न्यसेत्॥ ६७
अङ्गुलीनाञ्च सर्व्वेषां तथा चाद्यन्तपर्व्वसु।
सविन्दुकानि वीजानि पञ्च मध्यमपर्व्वसु॥ ६८
उत्पत्त्यादित्रिभेदेन न्यसेदाश्रमतः क्रमात्।
उभाभ्यामेव पाणिभ्यामापादतलमस्तकम्॥ ६९
मन्त्रेण संस्पृशेद्देहं प्रणवेनैव सम्पुटम्।
मूर्द्ध्नि वक्त्रे च कण्ठे च हृदये गुह्यके तथा॥ ७०
पादयोरुभयोश्चैव गुह्ये च हृदये तथा।
कण्ठे च मुखमध्ये च भूर्द्ध्नि च प्रणवादिकम्॥ ७१
हृदये गुह्यके चैव पादयोर्मूर्द्ध्नि वाचि वा।
कण्ठे चैव न्यसेदेव प्रणवादित्रिभेदतः॥ ७२
कृत्वाङ्गन्यासमेवं हि मुखानि परिकल्पयेत्।
पूर्व्वादि चोर्द्ध्वपर्य्यन्तं नकारादि यथाक्रमम्॥ ७३
षडङ्गानि न्यसेत् पश्चाद्यथास्थानञ्च शोभनम्।
नमः स्वाहा वषड्हूञ्च वौषट् फट्कारकैः सह॥७४
प्रणवं हृदयं विद्यान्नकारः शिर उच्यते।
शिखा मकार आख्यातः शिकारः कवचं तथा॥ ७५
वाकारो नेत्रमस्त्वन्तु यकारः परिकीर्त्तितः।
इत्थमङ्गानि विन्यस्य ततो वै बन्धयेद्दिशः॥ ७६
विघ्नेशो मातरो दुर्गा क्षेत्रज्ञो देवता दिशः।
आग्नेयादिषु कोणेषु चतुर्ष्वपि यथाक्रमम्॥ ७७
अङ्गुष्ठतर्ज्जन्यग्राभ्यां संस्थाप्य सुमुखं शुभम्
रक्षध्वमिति चोक्त्वा तु नमस्कुर्य्यात् पृथक् पृथक्॥७८
गले मध्ये तथाङ्गुष्ठे तर्ज्जन्याद्याङ्गुलीषु च।
अङ्गुष्ठेन करन्यासं कुर्य्यादेवं विचक्षणः॥ ७९
एवं न्यासमिमं प्रोक्तं सर्व्वपापहरं शुभम्।
सर्व्वसिद्धिकरं पुण्यं सर्व्वरक्षाकरं शिवम्॥ ८०

न्यस्ते मन्त्रस्य सुभगी शङ्करप्रतिमो भवेत्।
जन्मान्तरकृतं पापमपि नश्यति तत्क्षणात् ॥ ८१
एवं विन्यस्य मेधावी शुद्धकायो दृढ़व्रतः।
जपेत् पञ्चाक्षरं मन्त्रं लब्धा चार्य्यप्रसादतः ॥ ८२
अतः परं प्रवक्ष्यामि मन्त्रसंग्रहणं शुभे।
यं विना निष्फलं नित्यं येन वा सफलं भवेत् ॥ ८३
आज्ञाहीनं क्रियाहीनं श्रद्धाहीनममानसम्।
आज्ञप्तं दक्षिणाहीनं सदा जप्तञ्च निष्फलम् ॥ ८४
आज्ञासिद्धं क्रियासिद्धं श्रद्धासिद्धं सुमानसम्।
एवञ्च दक्षिणासिद्धं मन्त्रं सिद्धं यतस्ततः ॥ ८५
उपगम्य गुरुं विप्रं मन्त्रतत्त्वार्थवेदिनम्।
ज्ञानिनं सद्गुणोपेतं ध्यानयोगपरायणम् ॥ ८६
तोषयेत् तं प्रयत्नेन भावशुद्धिसमन्वितः।
वाचा च मनसा चैव कायेन द्रविणेन च ॥ ८७
आचार्य्यं पूजयेच्छिष्यः सर्व्वदातिप्रयत्नतः।
हस्त्यश्वरथरत्नानि क्षेत्राणि च गृहाणि च ॥ ८८
भूषणानि च वासांसि धान्यानि विविधानि च।
एतानि गुरवे दद्याद्भक्त्या च विभवे सति ॥ ८९
वित्तशाठ्यं न कुर्व्वीत यदीच्छेत् सिद्धिमात्मनः।
पश्चान्निवेदयेद्देवि आत्मानं सपरिच्छदम् ॥ ९०
एवं सम्पूज्य विधिवद्यथाशक्ति त्ववञ्चयन्।
आददीत गुरोर्मन्त्रं ज्ञानञ्चैव क्रमेण तु ॥ ९१
एवं तुष्टो गुरुः शिष्यं पूजितं वत्सरोषितम्।
शुश्रूषुमनहङ्कारमुपवासकृशं शुचिम् ॥ ९२
स्नापयित्वा तु शिष्याय ब्राह्मणानपि पूज्य च।
समुद्रतीरे नद्याञ्च गोष्ठे देवालयेऽपि वा ॥ ९३
शुचौ देशे गृहे वापि काले सिद्धिकरे तिथौ।
नक्षत्रे शुभयोगे च सर्व्वदा दोषवर्ज्जिते ॥ ९४
अनुगृह्य ततो दद्याच्छिवज्ञानमनुत्तमम्।
स्वरेणोच्चारयेत् सम्यगेकान्तेऽपि प्रसन्नधीः ॥ ९५
उच्चार्य्योच्चारयित्वा तु आचार्य्यः सिद्धिदः स्वयम्।
शिवञ्चास्तु शुभञ्चास्तु शोभनोऽस्तु प्रियोऽस्त्विति॥९६
एवं लब्धा परं मन्त्रं ज्ञानञ्चैव गुरोस्ततः।
जपेन्नित्यं ससङ्कल्पं पुरश्चरणमेव च ॥ ९७
यावज्जीवं जपेन्नित्यमष्टोत्तरसहस्रकम्।
अनश्नंस्तत्परो भूत्वा स याति परमां गतिम् ॥ ९८
जपेदक्षरलक्षं वै चतुर्गुणितमादरात्।
नक्ताशी संयमी यश्च पौरश्चरणिकः स्मृतः ॥ ९९
पुरश्चरणजापी वा अपि वा नित्यजापकः।
अचिरात् सिद्धिकाङ्क्षी तु तयोरन्यतरो भवेत् ॥१०
यः पुरश्चरणं कृत्वा नित्यजापी भवेन्नरः।
तस्य नास्ति समो लोके स सिद्धः सिद्धिदो वशी॥
आसनं रुचिरं बद्धा मौनी चैकाग्रमानसः।
प्राङ्मुखोदङ्मुखो वापि जपेन्मन्त्रमनुत्तमम् ॥१०
आद्यन्तयोर्जपस्यापि कुर्य्याद्वै प्राणसंयमान्।
तथा चान्ते जपेद्बीजं शतमष्टोत्तरं शुभम् ॥ १०३
चत्वारिंशत्समावृत्ति प्राणानायस्य संस्मरेत्।
पञ्चाक्षरस्य मन्त्रस्य प्राणायाम उदाहृतः ॥ १०४
प्राणायामाद्भवेत् क्षिप्रं सर्व्वपापपरिक्षयः।
इन्द्रियाणां वशित्वञ्च तस्मात् प्राणांश्च संयमेत् ॥
गृहे जपः समं विद्याद्गोष्ठे शतगुणं भवेत्।
नद्यां शतसहस्रन्तु अनन्तः शिवसन्निधौ ॥ १०६
समुद्रतीरे देवह्रदे गिरौ देवालयेषु च।
पुण्याश्रमेषु सर्व्वेषु जपः कोटिगुणो भवेत् ॥ १०
शिवस्य सन्निधाने च सूर्य्यस्याग्रे गुरोरपि।
दीपस्य गोर्जलस्यापि जपकर्म्म प्रशस्यते ॥ १०८
अङ्गुलीजपसंख्यानमेकमेकं शुभानने।
रेखैरष्टगुणं प्रोक्तं पुत्रजीवफलैर्दश ॥ १०९
शतं वै शङ्खमणिभिः प्रवालैश्च सहस्रकम्।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्ष उच्यते ॥ ११०
पद्माक्षैर्दशलक्षन्तु सौवर्णैः कोटिरुच्यते।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुण उच्यते ॥ १११
पञ्चविंशति मोक्षार्थं सप्तविंशति पौष्टिकम्।
त्रिंशच्च धनसम्पत्त्यै पञ्चाशच्चाभिचारिकम् ॥ ११२
तत् पूर्व्वाभिमुखं वश्यं दक्षिणञ्चाभिचारिकम्।
पश्चिमं धनदं विद्यादुत्तरं शान्तिकं भवेत् ॥ ११३
अङ्गुष्ठं मोक्षदं विद्यात् तर्ज्जनी शत्रुनाशनी।
मध्यमा धनदा शान्तिं करोत्येषा ह्यनामिका ॥ १
कनिष्ठा रक्षणीया सा जपकर्म्मणि शोभने।
अङ्गुष्ठेन जपेज्जप्यमन्यैरङ्गुलिभिः सह।
अङ्गुष्ठेन विना कर्म्म कृतं तदफलं यतः ॥ ११५
शृणुष्व सर्व्वयज्ञेभ्यो जपयज्ञो विशिष्यते।
हिंसया ते प्रवर्त्तन्ते जपयज्ञो न हिंसया ॥ ११६
यावन्तः कर्म्मयज्ञाः स्युः प्रदानानि तपांसि च।

सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥ ११७
माहात्म्यं वाचिकस्यैव जपयज्ञस्य कीर्त्तितम्।
तस्माच्छतगुणोपांशुः सहस्रो मानसः स्मृतः ॥ १८
यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः।
मन्त्रमुच्चारयेद्वाचा जपयज्ञः स वाचिकः ॥ ११९
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ तु चालयेत्।
किञ्चित् कर्णान्तरं विद्यादुपांशुः स जपः स्मृतः ॥१२०
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम्।
शब्दार्थं चिन्तयेद्भूयः स तूक्तो मानसो जपः ॥ १२१
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः।
भवेद्धयज्ञविशेषेण वैशिष्ट्यं तत् फलस्य च ॥ १२२
जपेन देवता नित्यं स्तूयमाना प्रसीदति।
प्रसन्नाविपुलान्भोगान्दद्यान्मुक्तिञ्च शाश्वतीम् १२३
यक्षरक्षःपिशाचाश्च ग्रहाः सर्व्वे च भीषणाः।
जापिनं नोपसर्पन्ति भयभीताः समन्ततः ॥ १२४

जपेन पापं शमयेदशेषं
यत्तत् कृतं जन्मपरम्परासु।
जपेन भोगान् जयते च मृत्युं
जपेन सिद्धिं लभते च मुक्तिम् ॥ १२५

एवं लब्ध्वा शिवं ज्ञानं ज्ञात्वा जपविधिक्रमम्।
सदाचारी जपन् नित्यं ध्यायन् भद्रं समश्नुते ॥ १२६
सदाचारं प्रवक्ष्यामि सम्यग्धर्म्मस्य साधनम्।
यस्मादाचारहीनस्य साधनं निष्फलं भवेत् ॥ १२७
आचारः परमो धर्म्म आचारः परमं तपः।
आचारः परमा विद्या आचारः परमा गतिः ॥ १२८
सदाचारवतां पुंसां सर्व्वत्राप्यभयं भवेत्।
तदाचारहीनानां सर्व्वत्रैव भयं भवेत् ॥ १२९
सदाचारेण देवत्वमृषित्वञ्च वरानने।
उपयान्ति कुयोनित्वं तदाचारलङ्घनात् ॥ १३०
आचारहीनः पुरुषो लोके भवति निन्दितः।
तस्मात् संसिद्धिमन्विच्छन्सम्यगाचारवान्भवेत्१३१
दुर्वृत्तोऽशुद्धिभूयिष्ठः पापीयान् ज्ञानदूषकः।
वर्णाश्रमविधानोक्तं धर्म्मं कुर्व्वीत यत्नतः ॥ १३२
यस्य यद्विहितं कर्म्म तत् कुर्व्वन् मत्प्रियः सदा।
सन्ध्योपासनशीलः स्यात् सायं प्रातः प्रसन्नधीः॥ १३३
उदयास्तमयात् पूर्व्वमारभ्य विधिना शुचिः।
कामान्मोहाद्भयाल्लोभात् सन्ध्यां नातिक्रमेद्द्विजः॥१३४
सन्ध्यातिक्रमणाद्विप्रो ब्राह्मण्यात् पतते यतः।
असत्यं न वदेत् किञ्चिन्न सत्यञ्च परित्यजेत् ॥ १३५
यत् सत्यं ब्रह्म इत्याहुरसत्यं ब्रह्मदूषणम्।
अनृतं परुषं शाठ्यं पैशुन्यं पापहेतुकम् ॥ १३६
परदारान् परद्रव्यं परहिंसाञ्च सर्व्वदा।
क्वचिच्चापि न कुर्व्वीत वाचा च मनसा तथा ॥१३७
शूद्रान्नं यातयामान्नं नैवेद्यं श्राद्धमेव च।
गणान्नं समुदायान्नं राजान्नञ्च विवर्ज्जयेत् ॥ १३८
अन्नशुद्धौ सत्त्वशुद्धिर्न मृदा न जलेन वै।
सत्त्वशुद्धौ भवेत् सिद्धिस्ततोऽन्नं परिशोधयेत् ॥ १३९
राजप्रतिग्रहैर्दग्धान् ब्राह्मणान् ब्रह्मवादिनः।
खिन्नानामपि वीजानां पुनर्जन्म न विद्यते ॥ १४०
राजप्रतिग्रहो घोरो बुद्ध्वा चादौ विषोपमः।
बुधेन परिहर्त्तव्यः श्वमांसञ्चापि वर्ज्जयेत् ॥ १४१
अस्नात्वा न च भुञ्जीयादजपोऽग्निमपूज्य च।
पर्णपृष्ठे न भुञ्जीयाद्रात्रौ दीपं विना तथा ॥ १४२
भिन्नभाण्डे च रथ्यायां पतितानाञ्च सन्निधौ।
शूद्रशेषं न भुञ्जीयात् सहान्नं शिशुकैरपि ॥ १४३
शुद्धान्नं स्निग्धमश्नीयात् संस्कृतञ्चाभिमन्त्रितम्।
भोक्ता शिव इति ज्ञात्वा मौनी चैकाग्रमानसः ॥१४४
आस्येन न पिबेत् तोयं तिष्ठन्नञ्जलिनापि वा।
वामहस्तेन शय्यायां तथैवान्यकरेण वा ॥ १४५
विभीतकार्कंकारञ्जस्नुहि-च्छायां न चाश्रयेत्।
स्तम्भदीपमनुष्याणामन्येषां प्राणिनां तथा ॥ १४६
एको न गच्छेदध्वानं बाहुभ्यां नोत्तरेन्नदीम्।
नावरोहेत कूपादिं नारोहेदुच्चपादपान् ॥ १४७
सूर्य्याग्निजलदेवानां गुरूणां विमुखः शुभे।
न कुर्य्यादिह कार्य्याणि जपकर्म्मशुभानि वा ॥१४८
अग्नौ न तापयेत् पादौ हस्तं पद्भ्यां न संस्पृशेत्।
अग्नेर्नोच्चयमासीत नाग्नौ किञ्चिन्मलं त्यजेत् ॥१४९
न जलं ताड़येत् पद्भ्यां नाप्स्वङ्गमलं त्यजेत्।
मलं प्रक्षालयेत् तीरे प्रक्षाल्य स्नानमाचरेत् ॥ १५०
नखाग्रकेशनिर्धूत-स्नानवस्त्रघटोदकम्।
अश्रीकरं मनुष्याणामशुद्धं संस्पृशेद्यदि ॥ १५१
अजाश्वानखरोष्ट्राणां मार्ज्जनात् तुषरेणुकान्।
संस्पृशेद्यदि मूढ़ात्मा श्रियं हन्ति हरेरपि ॥ १५२
मार्ज्जारश्च गृहे यस्य सोऽप्यन्त्यजसमो नरः।

भोजयेद्वयस्तु विप्रेन्द्रान्मार्ज्जारान्सन्निधौयदि॥१५३
तच्चाण्डालसमं ज्ञेयं नात्र कार्य्या विचारणा ।
श्लिग्वातं शूर्पवातञ्च वातं प्राणमुखानिलम् ॥१५४
सुकृतानि हरन्त्येते संस्पृष्टाः पुरुषस्य तु ।
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो मलावृतः ॥१५५
अपवित्रकरोऽशुद्धः प्रलपन् न जपेत् क्वचित् ।
क्रोधो मदः क्षुधा तन्द्री निष्ठीवन-विजृम्भणे ॥ १५६
श्व-नीचदर्शनं निद्रा प्रलापास्ते जपद्विषः ।
एतेषां सम्भवे वापि कुर्य्यात् सूर्य्यादिदर्शनम् ॥१५७
आचम्य वा जपेच्छेषं कृत्वा वा प्राणसंयमम् ।
सूर्य्योऽग्निश्चन्द्रमाश्चैव ग्रह-नक्षत्र-तारकाः ॥ १५८
एते ज्योतींषि प्रोक्तानि विद्वद्भिर्ब्राह्मणैस्तथा ।
प्रसार्य्य पादौ न जपेत् कुक्कुटासन एव च ॥ १५९
अनासनः शयानो वा रथ्यायां शूद्रसन्निधौ ।
रक्तभूम्याञ्च खट्वायां न जपेज्जापकस्तथा ॥ १६०
आसनस्थो जपेत् सम्यङ्मन्त्रार्थगतमानसः ।
कौशेयं व्याघ्रचर्म्मं वा चैलं तौलमथापि वा ॥१६१
दारवं तालपर्णं वा आसनं परिकल्पयेत् ।
त्रिसन्ध्यन्तु गुरोः पूजा कर्त्तव्या हितमिच्छता ॥ १६२
यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ।
यथा शिवस्तथा विद्या यथा विद्या तथा गुरुः ॥१६३
शिवविद्यागुरोस्तस्माद्भक्त्या च सदृशं फलम् ।
सर्व्वदेवमयो देवि सर्व्वशक्तिमयो हि सः ॥ १६४
सगुणो निर्गुणो वापि तस्याज्ञां शिरसा वहेत् ।
श्रेयोऽर्थी यस्तु गुर्व्वाज्ञां मनसापि न लङ्घयेत् ॥१६५
गुर्व्वाज्ञापालकः सम्यग्ज्ञानसम्पत्तिमश्नुते ।
गच्छंस्तिष्ठन् स्वपन्भुञ्जन्यद्वयत्कर्म्मसमाचरेत् १६६
समक्षं यदि तत् सर्व्वं कर्त्तव्यं गुर्व्वनुज्ञया ।
गुरोर्देवसमक्षं वा न यथेष्टासनो भवेत् ॥ १६७
गुरुर्देवो यतः साक्षात् तद्गृहं देवमन्दिरम् ।
पापिनाञ्च यथा सङ्गात् तत्पापैः पतनं भवेत् ॥ १६८
तद्वदाचार्य्यसङ्गेन तद्धर्म्मफलभाग्भवेत् ।
यथैव वह्निसम्पर्कान्मलं त्यजति काञ्चनम् ॥ १६९
तथैव गुरुसम्पर्कात् पापं त्यजति मानवः ।
यथा वह्निसमीपस्थो घृतकुम्भो विलीयते ॥ १७०
तथा पापं विलीयेत आचार्य्यस्य समीपतः ।
यथा प्रज्वलितो वह्निर्निष्ठां काष्ठञ्च निर्दहेत् ॥१७१
गुरुस्तुष्टो दहत्येवं पापं तन्मन्त्रतेजसा ।
ब्रह्मा हरिस्तथा रुद्रो देवाश्च मुनयस्तथा ॥ १७२
कुर्व्वन्त्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः ।
कर्म्मणा मनसा वाचा गुरोः क्रोधं न कारयेत् ॥१७३
तस्य क्रोधेन दह्यन्ते आयुः श्रीर्ज्ञानसत्क्रियाः ।
तत्क्रोधं ये करिष्यन्ति तेषां यज्ञाश्च निष्फलाः॥१७४
जपान्यनियमाश्चैव नात्र कार्य्या विचारणा ।
गुरोर्विरुद्धं यद्वाक्यं न वदेत् सर्व्वयत्नतः ॥ १७५
वदेद्वयदि महामोहाद्रौरवं नरकं व्रजेत् ।
चित्तेनैव च वित्तेन तथा वाचा च सुव्रताः ॥ १७६
मिथ्या न कारयेद्देवि क्रियया च गुरोः सदा ।
दुर्गुणे ख्यापिते तस्य नैर्गुण्यशतभाग्भवेत् ॥ १७७
गुणे तु ख्यापिते तस्य सार्व्वगुण्यफलं भवेत् ।
गुरोर्हितं प्रियं कुर्य्यादादिष्टो वा न वा सदा ॥१७८
असमक्षं समक्षं वा गुरोः कार्य्यं समाचरेत् ।
गुरोर्हितं प्रियं कुर्य्यान्मनोवाक्कायकर्म्मभिः ॥ १७९
कुर्व्वन् पतत्यधो गत्वा तत्रैव परिवर्त्तते ।
तस्मात् स सर्व्वदोपास्यो वन्दनीयश्च सर्व्वदा ॥१८०
समीपस्थोऽप्यनुज्ञाप्य वदेत् तद्विमुखो गुरुम् ।
एवमाचारवान् भक्तो नित्यं जपपरायणः ॥ १८१
गुरुप्रियकरो मन्त्रं विनियोक्तुं ततोऽर्हति ।
विनियोगं प्रवक्ष्यामि सिद्धमन्त्रप्रयोजनम् ॥ १८२
दौर्बल्यं याति तन्मन्त्रं विनियोगमजानतः ।
यस्य येन वियुञ्जीत कार्य्येण तु विशेषतः ॥ १८३
विनियोगः स विज्ञेय ऐहिकामुष्मिकं फलम् ।
विनियोगजमायुष्यमारोग्यं-तनुनित्यता ॥ १८४
राज्यैश्वर्य्यञ्च विज्ञानं स्वर्गो निर्व्वाण एव च ।
प्रोक्षणञ्चाभिषिकञ्च अघमर्षणमेव च ॥ १८५
स्नाने च सन्ध्ययोश्चैव कुर्य्यादेकादशेन वै ।
शुचिः पर्व्वतमारुह्य जपेल्लक्षमतन्द्रितः ॥ १८६
महानद्यां हिलक्षन्तु दीर्घमायुरवाप्नुयात् ।
दूर्व्वाङ्कुरास्तिला वाणी गुडूची गुटिका तथा ॥१८७
तेषान्तु दशसाहस्रं होममायुष्यवर्द्धनम् ।
अश्वत्थवृक्षमाश्रित्य जपेल्लक्षद्वयं सुधीः ॥ १८८
शनैश्चरदिने स्पृष्ट्वा दीर्घायुष्यं लभेन्नरः ।
शनैश्चरदिनेऽश्वत्थं पाणिभ्यां संस्पृशेत् सुधीः ॥ १८९
जपेदष्टोत्तरशतं सोऽपमृत्युहरो भवेत् ।

आदित्याभिमुखो भूत्वा जपेल्लक्षमनन्यधीः ॥ १९०
अर्कैरष्टशतं नित्यं जुह्वन् व्याधेर्विमुच्यते।
समस्तव्याधिशान्त्यर्थं पलाशसमिधैर्नरः ॥ १९१
हुत्वा दशसहस्रन्तु नीरोगी मनुजो भवेत्।
नित्यमष्टशतं जप्त्वा पिवेदम्भोऽर्कसन्निधौ ॥ १९२
औदर्य्यैर्व्याधिभिः सर्व्वैर्मासेनैकेन मुच्यते।
एकादशेन भुञ्जीयादन्नञ्चैवाभिमन्त्रितम् ॥ १९३
भक्ष्यञ्चान्यत् तथा पेयं विषमप्यमृतं भवेत् ॥ १९४
जपेल्लक्षन्तु पूर्व्वाह्णे हुत्वा चाष्टशतेन वै।
सूर्य्यं नित्यमुपस्थाय सम्यगारोग्यमाप्नुयात् ॥ १९५
नदीतोयेन सम्पूर्णं घटं संस्पृश्य शोभनम्।
जप्त्वायुतञ्च तत्स्नानाद्रोगाणां भेषजं भवेत् ॥ १९६
अष्टाविंशज्जपैरन्नमश्नीयादन्वहं शुचिः।
हुत्वा च तावत् पालाशैरेवं वारोग्यमश्नुते ॥ १९७
चन्द्रसूर्य्यग्रहे पूर्व्वमुपोष्य विधिना शुचिः ॥ १९८
यावद्ग्रहणमोक्षन्तु तावन्नद्यां समाहितः।
जपेत् समुद्रगामिण्यां विमोक्षे ग्रहणस्य तु ॥ १९९
अष्टोत्तरसहस्रेण पिवेद्ब्राह्मीरसं द्विजाः।
ऐहिकां लभते मेधां सर्व्वशास्त्रधरां शुभाम् ॥ २००
सारस्वती भवेद्देवी तस्य वागतिमानुषी।
ग्रहनक्षत्रपीड़ासु जपेद्भक्त्यायुतं नरः ॥ २०१
हुत्वा चाष्टसहस्रन्तु ग्रहपीड़ां व्यपोहति।
दुःस्वप्नदर्शने स्नात्वा जपेद्वै चायुतं नरः ॥ २०२
घृतेनाष्टशतं हुत्वा सद्यः शान्तिर्भविष्यति।
चन्द्रसूर्य्यग्रहे लिङ्गं समभ्यर्च्य यथाविधि ॥ २०३
यत्किञ्चित्प्रार्थयेद्देवि जयेदयुतमादरात्।
सन्निधावस्य देवस्य शुचिः संयतमानसः ॥ २०४
सर्व्वान् कामानवाप्नोति पुरुषो नात्र संशयः।
गजानां तुरगाणान्तु गोजातीनां विशेषतः ॥ २०५
व्याध्यागमे शुचिर्भूत्वा जुहुयात् समिधाहुतिम्।
मासमभ्यर्च्च विधिनाऽयुतं भक्तिसमन्वितः ॥ २०६
तेषामृद्धिश्च शान्तिश्च भविष्यति न संशयः।
उत्पाते शत्रुबाधायां जुहुयादयुतं शुचिः ॥ २०७
पालाशसमिधैर्देवि तस्य शान्तिर्भविष्यति।
आभिचारिकबाधायामेतद्देवि समाचरेत् ॥ २०८
प्रत्यक्षवति तच्छक्तिः शत्रोः पीड़ा भविष्यति।
विद्वेषणार्थं जुहुयाद्बिभीतसमिधाष्टकम् ॥ २०९
अक्षरप्रातिलोम्येन आद्रया रुधिरेण वा।
विषेण रुधिराभ्यक्तो विद्वेषणकरं नृणाम् ॥ २१०
प्रायश्चित्तं प्रवक्ष्यामि सर्व्वपापविशुद्धये।
पापशुद्धिर्यथा सम्यग् कर्त्तुमभ्युद्यतो नरः ॥ २११
पापशुद्धियतः सम्यगज्ञानसम्पत्तिहेतुकी।
पापशुद्धिर्न चेत् पुंसः क्रियाः सर्व्वाश्च निष्फलाः॥२१२
ज्ञानञ्च क्षीयते तस्मात् कर्त्तव्यं पापशोधनम्।
विद्यालक्ष्मीविशुद्ध्यर्थं मां ध्यात्वाञ्जलिना शुभे॥ २१३
शिवैनैकादशैनाद्भिरभिषिञ्चेत् समन्ततः।
अष्टोत्तरशतेनैव स्नायात् पापविशुद्धये ॥ २१४
सर्व्वतीर्थफलं तच्च सर्व्वपापहरं शुभम्।
सन्ध्योपासनविच्छेदे जपेदष्टशतं नरः ॥ २१५
विड्वराहैश्च चाण्डालैर्दुर्ज्जनैः कुक्कुटैरपि।
स्पृष्टमन्नं न भुञ्जीत भुक्त्वा चाष्टशतं जपेत् ॥ २१६
ब्रह्महत्याविशुद्ध्यर्थं जपेल्लक्षायुतं नरः।
पातकानां तदर्द्धं स्यान्नात्र कार्य्या विचारणा ॥२१७
उपपातकदुष्टानां तदर्द्धं परिकीर्त्तितम्।
शेषाणामपि पापानां जपेत् पञ्चसहस्रकम् ॥ २१८
आत्मबोधपरं गुह्यं शिवबोधप्रकाशकम्।
शिवः स्यात् स जपेन्मन्त्रं पञ्चलक्षमनाकुलः ॥ २१९
पञ्चवायुजयं भद्रे प्राप्नोति मनुजः सुखम्।
जपेच्च पञ्चलक्षन्तु विशुद्धीतेन्द्रियः शुचिः ॥ २२०
पञ्चेन्द्रियाणां विजयो भविष्यति वरानने।
ध्यानयुक्तो जपेद्यस्तु पञ्चलक्षमनाकुलः ॥ २२१
विषयाणाञ्च पञ्चानां जयं प्राप्नोति मानवः।
चतुर्थं पञ्चलक्षन्तु यो जपेद्भक्तिसंयुतः ॥ २२२
भूतानामिह पञ्चानां विजयं मनुजो लभेत्।
चतुर्लक्षं जपेद्यस्तु मनः संयम्य यत्नतः ॥ २२३
सम्यग्विजयमाप्नोति करणानां वरानने।
पञ्चविंशतिलक्षाणां जपेन कमलानने ॥ २२४
पञ्चविंशतितत्त्वानां विजयं मनुजो लभेत्।
मध्यरात्रेऽतिनिर्व्वाते जपेदयुतमादरात् ॥ २२५
ब्रह्मसिद्धिमवाप्नोति व्रतेनानेन सुन्दरि।
जपेल्लक्षमनालस्यो निर्व्वाते ध्वनिवर्ज्जिते ॥ २२६
मध्यरात्रे च शिवयोः पश्यत्येव न संशयः।
अन्धकारविनाशश्च दीपस्येव प्रकाशनम् ॥ २२७
हृदयान्तर्बहिर्वापि भविष्यति न संशयः।

सर्व्वसम्पत्समृद्ध्यर्थं जपेदयुतमात्मवान् ॥ २२८
सबीजसम्पुटं मन्त्रं शतलक्षं जपेच्छुचिः।
मत्सायुज्यमवाप्नोति भक्तिमान् किमतः परम् ॥२२९
इति ते सर्व्वमाख्यातं पञ्चाक्षरविधिक्रमम्।
यः पठेच्छृणुयाद्वापि स याति परमां गतिम् ॥२३०
श्रावयेच्च द्विजान् शुद्धान् पञ्चाक्षरविधिक्रमम्।
दैवे कर्म्मणि पित्र्ये वा शिवलोके महीयते ॥ २३१

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे पञ्चाक्षरमाहात्म्यं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

## षड़शीतितमोऽध्यायः।

ऋषय ऊचुः।

जपाच्छ्रेष्ठतमं प्राहुर्ब्राह्मणा दग्धकिल्बिषाः।
विरक्तानां प्रबुद्धानां ध्यानयज्ञं सुशोभनम् ॥ १
तस्मादस्य सूताद्य ध्यानयज्ञमशेषतः।
विस्तरात् सर्व्वयत्नेन विरक्तानां महात्मनाम् ॥ २
तेषां तद्वचनं श्रुत्वा मुनीनां दीर्घसत्रिणाम्।
रुद्रेण कथितं प्राह गुहां प्राप्य महात्मनाम्।
संहृत्य कालकूटाख्यं विषं वै विश्वकर्म्मणा ॥ ३

सूत उवाच।

गुहां प्राप्य सुखासीनं भवान्या सह शङ्करम्।
मुनयः संशितात्मानः प्रणेमुस्तं गुहाश्रयम्।
अस्तुवंश्च ततः सर्व्वे नीलकण्ठमुमापतिम् ॥ ४
अत्युग्रं कालकूटाख्यं संहृतं भगवंस्त्वया।
अतः प्रतिष्ठितं सर्व्वं त्वया देव वृषध्वज ॥ ५
तेषां तद्वचनं श्रुत्वा भगवान् नीललोहितः।
प्रहसन् प्राह विश्वात्मा सनन्दनपुरोगमान् ॥ ६
किमनेन द्विजश्रेष्ठा विषं वक्ष्ये सुदारुणम्।
संहरेत् तद्विषं यस्तु स समर्थो ह्यनेन किम् ॥ ७
न विषं कालकूटाख्यं संसारो विषमुच्यते।
तस्मात् सर्व्वप्रयत्नेन संहरेत सुदारुणम् ॥ ८
संसारो द्विविधः प्रोक्तः स्वाधिकारानुरूपतः।
पुंसां संमूढ़चित्तानामसंक्षीणः सुदारुणः ॥ ९
ईर्षणारागदोषेण सर्गो ह्यानेन सुव्रताः।
तद्वशादेव सर्व्वेषां धर्म्माधर्म्मौ न संशयः ॥ १०
असन्निकृष्टे त्वर्थेऽपि शास्त्रं तच्छ्रवणात् सताम्।
बुद्धिमुत्पादयत्येव संसारे विदुषां द्विजाः ॥ ११
तस्माद्दृष्टानुश्रविकं दुष्टमित्युभयात्मकम्।
सन्त्यजेत् सर्व्वयत्नेन विरक्तः सोऽभिधीयते ॥ १२
शास्त्रमित्युच्यतेऽभागं श्रुतेः कर्म्मसु तद्द्विजाः।
मूर्द्धानं ब्रह्मणः सारमृषीणां कर्म्मणः फलम् ॥ १३
ननु स्वभावः सर्व्वेषां कामो दृष्टो न चान्यथा।
श्रुतिः प्रवर्त्तिका तेषामिति कर्म्मण्यतद्विदः ॥ १४
निवृत्तिलक्षणो धर्म्मः समर्थानामिहोच्यते।
तस्मादज्ञानमूलो हि संसारः सर्व्वदेहिनाम् ॥ १५
कला संशोषमायाति कर्म्मणान्यस्वभावतः।
सकलस्त्रिविधो जीवो ज्ञानहीनस्त्वविद्यया ॥ १६
नारकी पापकृत् स्वर्गी पुण्यकृत् पुण्यगौरवात्।
व्यतिमिश्रेण वै जीवश्चतुर्द्धा संव्यवस्थितः ॥ १७
उद्भिजः स्वेदजश्चैव अण्डजो वै जरायुजः।
एवं व्यवस्थितो देही कर्म्मणाज्ञो ह्यनिर्वृतः ॥ १८
प्रजया कर्म्मणा मुक्तिर्धनेन च सतां न हि।
त्यागेनैकेन मुक्तिः स्यात् तदभावाद्भ्रमत्यसौ ॥ १९
एवमज्ञानदोषेण नानाकर्म्मवशेन च।
षट्कौशिकं समुद्भूतं भजत्येष कलेवरम् ॥ २०
गर्भे दुःखान्यनेकानि योनिमार्गे च भूतले।
कौमारे यौवने चैव वार्द्धके मरणेऽपि वा ॥ २१
विचारतः सतां दुःखं स्त्रीसंसर्गादिभिर्द्विजाः।
दुःखेनैकेन वै दुःखं प्रशाम्यन्तीह दुःखिनः ॥ २२
न जातु कामः कामानां ह्युपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ २३
तस्माद्विचारतो नास्ति संयोगादपि वै नृणाम्।
अर्थानामर्ज्जनेऽप्येवं पालने च व्यये तथा ॥ २४
पैशाचे राक्षसे दुःखं याक्षे चैव विचारतः।
गान्धर्व्वे च तथा चान्द्रे सौम्यलोके द्विजोत्तमाः ॥
प्राजापत्ये तथा ब्राह्मे प्राकृते पौरुषे तथा।
क्षयसातिशयाद्यैस्तु दुःखदुःखानि सुव्रताः ॥ २५
तानि भाग्यान्यशुद्धानि सन्त्यजेच्च धनानि च।
तस्मादष्टगुणं भोगं तथा षोड़शधा स्थितम् ॥ २६
चतुर्व्विंशत्प्रकारेण संस्थितञ्चापि सुव्रताः।
द्वात्रिंशद्भेदमनघाश्चत्वारिंशद्गुणं पुनः ॥ २८
तथाष्टचत्वारिंशच्च षट्पञ्चाशत्प्रकारतः।

चतुःषष्टिविधञ्चैव दुःखमेव विवेकिनः॥ २९
पार्थिवञ्च तथाप्यञ्च तैजसञ्च विचारतः।
वायव्यञ्च तथा व्योमं मानसञ्च यथाक्रमम्॥ ३०
आभिमानिकमप्येवं बौद्धं प्राकृतमेव च।
दुःखमेव न सन्देहो योगिनां ब्रह्मवादिनाम्॥ ३१
गौणं गणेश्वराणाञ्च दुःखमेव विचारतः।
आदौ मध्ये तथा चान्ते सर्व्वलोकेषु सर्व्वदा॥ ३२
वर्त्तमानानि दुःखानि भविष्याणि यथातथम्।
दोषदुष्टेषु देशेषु दुःखानि विविधानि च॥ ३३
न भावयन्त्यतीतानि ह्यज्ञाने ज्ञानमानिनः।
क्षुद्व्याधेः परिहारार्थं न सुखायान्नमुच्यते॥ ३४
यथैतरेषां रोगाणामौषधं न सुखाय तत्।
शीतोष्णवातवर्षाद्यैस्तत्तत्कालेषु देहिनाम्॥ ३५
दुःखमेव न सन्देहो न जानन्ति ह्यपण्डिताः॥ ३६
स्वर्गेऽप्येवं मुनिश्रेष्ठा ह्यविशुद्धक्षयादिभिः।
रोगैर्नानाविधैर्ग्रस्ता रागद्वेषभयादिभिः॥ ३७
छिन्नमूलतरुर्यद्वदवशः पतति क्षितौ॥ ३८
पुण्यवृक्षक्षयात् तद्वन्नां पतन्ति दिवौकसः।
दुःखाभिलाषनिष्ठानां दुःखभोगादिसम्पदाम्॥ ३९
अस्मात् तु पततां दुःखं कष्टं स्वर्गाद्दिवौकसाम्।
नरके दुःखमेवात्र नरकाणां निषेवणात्॥ ४०
विहिताकरणाच्चैव वर्णिनां मुनिपुङ्गवाः॥ ४१
यथा मृगो मृत्युभयस्य भीतो
उत्क्रिन्नवासो न लभेत निद्राम्।
एवं यतिर्ध्यानपरो महात्मा
संसारभीतो न लभेत निद्राम्॥ ४२
कीट-पक्षि-मृगाणाञ्च पशूनां गजवाजिनाम्।
दृष्टमेवासुखं तस्मात् त्यजतः सुखमुत्तमम्॥ ४३
वैमानिकानामप्येवं दुःखं कल्पाधिकारिणाम्।
स्थानाभिमानिनाञ्चैव मन्वादीनाञ्च सुव्रताः॥ ४४
देवानाञ्चैव दैत्यानामन्योन्यविजिगीषया।
दुःखमेव नृपाणाञ्च राक्षसानां जगत्त्रये॥ ४५
अमार्थमाश्रमश्चापि वर्णानां परमार्थतः।
आश्रमैर्न च देवैश्च यज्ञैः सांख्यैर्व्रतैस्तथा॥ ४६
उग्रैस्तपोभिर्विविधैर्दानैर्नानाविधैरपि।
न लभन्ते तथात्मानं लभन्ते ज्ञानिनः स्वयम्॥ ४७
तस्मात् सर्व्वप्रयत्नेन चरेत् पाशुपतव्रतम्।
भस्मशायी भवेन्नित्यं व्रते पाशुपते बुधः॥ ४८
पञ्चार्थज्ञानसम्पन्नः शिवतत्त्वे समाहितः।
कैवल्यकरणं योगं विधिकर्म्मच्छिदं बुधः॥ ४९
पञ्चार्थयोगसम्पन्नो दुःखान्तं व्रजते सुधीः।
परया विद्यया वेद्यं विदन्त्यपरया न हि॥ ५०
द्वे विद्ये वेदितव्ये हि परा चैवापरा तथा।
अपरा तत्र ऋग्वेदो यजुर्व्वेदो द्विजोत्तमाः॥ ५१
सामवेदस्तथाथर्व्व-वेदः सर्व्वार्थसाधकः।
शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च॥ ५२
ज्योतिषञ्चापरा विद्या पराक्षरमिति स्थितम्।
तदद्रश्यं तदग्राह्यमगोत्रं तदवर्णकम्॥ ५३
तदचक्षुस्तदश्रोत्रं तदपाणि अपादकम्।
तदजातमभूतञ्च तदशब्दं द्विजोत्तमाः॥ ५४
अस्पर्शं तदरूपञ्च रसगन्धविवर्ज्जितम्।
अव्ययञ्चाप्रतिष्ठञ्च तन्नित्यं सर्व्वगं विभुम्॥ ५५
महान्तं तद्बृहन्तञ्च तदजं चिन्मयं द्विजाः।
अप्राणममनस्कञ्च तदस्निग्धमलोहितम्॥ ५६
अप्रमेयं तदस्थूलमदीर्घं तदनुल्बणम्।
अह्रस्वं तदपारञ्च तदानन्दं तदच्युतम्॥ ५७
अनपावृतमद्वैतं तदनन्तमगोचरम्।
असंवृतं तदात्मैकं परा विद्या न चान्यथा॥ ५८
परापरेति कथिते नैवेह परमार्थतः।
अहमेव जगत् सर्व्वं मय्येव सकलं जगत्॥ ५९
मत्त उत्पद्यते तिष्ठन् मयि मय्येव लीयते।
मत्तो नान्यदितीक्षेत मनोवाक्पाणिभिस्तथा॥ ६०
सर्व्वमात्मनि सम्पश्येत् सच्चासच्च समाहितः।
सर्व्वं ह्यात्मनि सम्पश्यन् न वाह्ये कुरुते मनः॥ ६१
अधोदृष्ट्या वितस्त्यान्तु नाभ्यामुपरि तिष्ठति।
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्॥ ६२
हृदयस्यास्य मध्ये तु पुण्डरीकमवस्थितम्।
धर्म्मकन्दसमुद्भूतं ज्ञाननालं सुशोभनम्॥ ६३
ऐश्वर्य्याष्टदलं श्वेतं परं वैराग्यकर्णिकम्।
छिद्राणि च दिशो यस्य प्राणाद्यास्य प्रतिष्ठिताः॥ ६४
प्राणाद्यैश्चैव संयुक्तः पश्यते बहुधा क्रमात्।
दशप्राणवहा नाड्यः प्रत्येकं मुनिपुङ्गवाः॥ ६५
द्विसप्ततिसहस्राणि नाड्यः सम्परिकीर्त्तिताः।
नेत्रस्थं जाग्रतं विद्यात् कण्ठे स्वप्नं समादिशेत्॥ ६६

सुषुप्तं हृदयस्थन्तु तुरीयं मूर्द्धनि स्थितम्।
जाग्रे ब्रह्मा च विष्णुश्च स्वप्ने चैव यथाक्रमात् ॥६७
ईश्वरस्तु सुषुप्ते तु तुरीये च महेश्वरः।
वदन्त्येवमथान्येऽपि समस्तकरणैः पुमान् ॥ ६८
वर्त्तमानस्तदा तस्य जाग्रदित्यभिधीयते।
मनो बुद्धिरहङ्कारश्चित्तञ्चेति चतुष्टयम् ॥ ६९
यदा व्यवस्थितस्त्वेतैः स्वप्न इत्यभिधीयते।
करणानि विलीनानि यदा स्वात्मनि सुव्रताः ॥७०
सुषुप्तः करणैर्भिन्नस्तुरीयः परिकीर्त्त्यते।
परस्तुरीयातीतोऽसौ शिवः परमकारणम् ॥ ७१
जाग्रत्-स्वप्न-सुषुप्तिश्च तुरीयञ्चाधिभौतिकम्।
आध्यात्मिकञ्च विप्रेन्द्राश्चाधिदैविकमुच्यते ॥ ७२
तत् सर्व्वमहमेवेति वेदितव्यं विजानता।
बुद्धीन्द्रियाणि विप्रेन्द्रास्तथा कर्म्मेन्द्रियाणि च॥७३
मनो बुद्धिरहङ्कारश्चित्तञ्चेति चतुष्टयम्।
अध्यात्मं पृथगेवेदं चतुर्द्दशविधं स्मृतम् ॥ ७४
द्रष्टव्यञ्चैव श्रोतव्यं घ्रातव्यञ्च यथाक्रमम्।
रसितव्यं मुनिश्रेष्ठाः स्पर्शितव्यं तथैव च ॥ ७५
मन्तव्यञ्चैव बोद्धव्यमहङ्कर्त्तव्यमेव च।
तथा चेतयितव्यञ्च वक्तव्यं मुनिपुङ्गवाः ॥ ७६
आदातव्यञ्च गन्तव्यं विसर्गायितमेव च।
आनन्दितव्यमित्येते ह्यधिभूतमनुक्रमात् ॥ ७७
आदित्योऽपि दिशश्चैव पृथिवी वरुणस्तथा।
वायुश्चन्द्रस्तथा ब्रह्मा रुद्रः क्षेत्रज्ञ एव च ॥ ७८
अग्निरिन्द्रस्तथा विष्णुर्मित्रो देवः प्रजापतिः।
आधिदैविकमेवं हि चतुर्द्दशविधं क्रमात् ॥ ७९
राज्ञी सुदर्शना चैव जिता सौम्या यथाक्रमम्।
मोघा रुद्रा मृता सत्या मध्यमा च द्विजोत्तमाः ॥८०
नाड़ी राशिशुका चैव असुरा चैव कृत्तिका।
भास्वती नाड़यश्चैताश्चतुर्द्दशनिबन्धनाः ॥ ८१
वायवो नाड़िमध्यस्था वाहकाश्च चतुर्द्दश।
प्राणो व्यानस्त्वपानश्च उदानश्च समानकः ॥ ८२
वैरम्भश्च तथा मुख्यो ह्यन्तर्यामः प्रभञ्जनः।
कूर्म्मकश्च तथा श्येनः श्वेतः कृष्णस्तथानिलः ॥ ८३
नाग इत्येव कथिता वायवश्च चतुर्द्दश।
यश्चक्षुःष्वथ द्रष्टव्ये तथादित्ये च सुव्रताः ॥ ८४
नाड्यां प्राणे च विज्ञाने त्वानन्दे च यथाक्रमम्।

हृद्याकाशे य एतस्मिन् सर्व्वस्मिन्नन्तरे परः ॥८५
आत्मा एकश्च चरति तमुपासीत मां प्रभुम्।
अजरं तमनन्तञ्च अशोकममृतं ध्रुवम् ॥ ८६
चतुर्द्दशविधेष्वेव सञ्चरत्येक एव सः।
लीयन्ते तानि तत्रैव यदन्यं नास्ति वै द्विजाः ॥८७
एक एव हि सर्व्वज्ञः सर्व्वेशस्त्वेक एव सः।
एष सर्व्वाधिपो देवस्त्वन्तर्यामी महाद्युतिः ॥८८
उपास्यमानः सर्व्वस्य सर्व्वसौख्यः सनातनः।
उपास्यति न चैवेह सर्व्वसौख्यं द्विजोत्तमाः ॥८९
उपास्यमानो वेदैश्च शास्त्रैर्नानाविधैरपि।
नवैष वेदशास्त्राणि सर्व्वज्ञो यास्यति प्रभुः ॥९०
अस्यैवान्नमिदं सर्व्वं न सोऽन्नं भवति स्वयम्।
स्वात्मना रचितञ्चाद्यादन्नभूतं न कुत्रचित् ॥९१
सर्व्वत्र प्राणिनामन्नं प्राणिनां ग्रन्थिरप्यहम्।
प्रशास्त नयनश्चैव पञ्चात्मा स विभागशः ॥ ९२
अन्नमयोऽसौ भूतात्मा चाद्यते ह्यन्नमुच्यते।
प्राणमयश्चेन्द्रियात्मा सङ्कल्पात्मा मनोमयः ॥९३
कालात्मा सोम एवेह विज्ञानमय उच्यते।
सदानन्दमयो भूत्वा महेशः परमेश्वरः ॥ ९४
सोऽहमेवं जगत् सर्व्वं मय्येव सकलं स्थितम्।
परतन्त्रं स्वतन्त्रेऽपि तदा भावाद्विचारतः ॥ ९५
एकत्वमपि नास्त्येव द्वैतं तत्र कुतस्त्वहो।
एवं नास्त्यथ मर्त्यञ्च कुतोऽमृतमजोद्भवः ॥ ९६
नान्तःप्रज्ञो वहिःप्रज्ञो न चोभयगतस्तथा।
न प्रज्ञा न घनस्त्वेवं न प्राज्ञो ज्ञानपूर्व्वकः ॥ ९७
विदितं नास्ति वेद्यञ्च निर्व्वाणं परमार्थतः।
निर्व्वाणञ्चैव कैवल्यं निःश्रेयसमनामयम् ॥ ९८
अमृतञ्चाक्षरं ब्रह्म परमात्मा परापरम्।
निर्व्विकल्पं निराभासं ज्ञानं पर्य्यायवाचकम् ॥ ९९
प्रसन्नञ्च यदेकाग्रं तदा ज्ञानमिति स्मृतम्।
अज्ञानमितरत् सर्व्वं नात्र कार्य्या विचारणा ॥ १००
इत्थं प्रसन्नं विज्ञानं गुरुसम्पर्कजं ध्रुवम्।
राग-द्वेषानृतक्रोध-काम-तृष्णादिभिः सदा ॥ १०१
अपरामृष्टमद्यैव विज्ञेयं मुक्तिदन्त्विदम्।
अज्ञानमलपूर्व्वत्वात् पुरुषो मलिनः स्मृतः ॥ १०२
तत्क्षयाद्धि भवेन्मुक्तिर्नान्यथा जन्मकोटिभिः।
ज्ञानमेकं विना नास्ति पुण्यपापपरिक्षयः ॥ १०३

ज्ञानमेवाभ्यसेत् तस्मान्मुत्तयर्थं ब्रह्मवित्तमाः।
ज्ञानाभ्यासाद्धि वै पुंसां बुद्धिर्भवति निर्म्मला ॥ १०४
तस्मात् सदाभ्यसेज्ज्ञानं तन्निष्ठस्तत्परायणः।
ज्ञानेनैकेन तृप्तस्य त्यक्तसङ्गस्य योगिनः ॥ १०५
कर्त्तव्यं नास्ति विप्रेन्द्रा अस्ति चेत् तत्त्ववित्र च।
इह लोके परे चापि कर्त्तव्यं नास्ति तस्य वै ॥ १०६
जीवन्मुक्तो यतस्तस्माद्ब्रह्मवित् परमार्थतः।
ज्ञानाभ्यासरतो नित्यं ज्ञानतत्त्वार्थवित् स्वयम्॥१०७
कर्त्तव्याभ्यासमुत्सृज्य ज्ञानमेवाधिगच्छति।
वर्णाश्रमाभिमानी यस्त्यक्तक्रोधो द्विजोत्तमाः ॥ १०८
अन्यत्र रमते मूढ़ः सोऽज्ञानी नात्र संशयः।
संसारहेतुरज्ञानं संसारस्तनुसंग्रहः ॥ १०९
मोक्षहेतुस्तथा ज्ञानं मुक्तः स्वात्मन्यवस्थितः।
अज्ञाने सति विप्रेन्द्राः क्रोधाद्या नात्र संशयः ॥ ११०
क्रोधो हर्षस्तथा लोभो मोहो दम्भो द्विजोत्तमाः।
धर्म्माधर्म्मौ हि तेषाञ्च तद्वशात् तनुसंग्रहः ॥ १११
शरीरे सति वै क्लेशः सोऽविद्यां सन्त्यजेद्बुधः।
अविद्यां विद्यया छित्वा स्थितस्यैव च योगिनः ॥११२
क्रोधाद्या नाशमायान्ति धर्म्माधर्म्मौ च वै द्विजाः।
तत्क्षयाच्च शरीरेण न पुनः सम्प्रयुज्यते ॥ ११३
स एव मुक्तः संसाराद्दुःखत्रयविवर्ज्जितः।
एवं ज्ञानं विना नास्ति ध्यानं ध्यातुर्द्विजर्षभाः ॥ ११४
ज्ञानं गुरोर्हि सम्यक्तन्नि वा चापरमार्थतः।
चतुर्व्यूहमिति ज्ञात्वा ध्याता ध्यानं समभ्यसेत् ॥ ११५
सहजागन्तुकं पापमस्थिवागुद्भवं तथा।
ज्ञानाग्निर्दहते क्षिप्रं शुष्केन्धनमिवानलः ॥ ११६
ज्ञानात् परतरं नास्ति सर्व्वपापविनाशनम्।
अभ्यसेच्च सदा ज्ञानं सर्व्वसङ्गविवर्ज्जितः ॥ ११७
ज्ञानिनः सर्व्वपापाणि जीर्य्यन्ते नात्र संशयः।
क्रीड़न्नपि न लिप्येत पापैर्नानाविधैरपि ॥ ११८
ज्ञानं यथा तथा ध्यानं तस्माद्ध्यानं समभ्यसेत्।
ध्यानं निर्व्विषयं प्रोक्तमादौ सविषयं तथा ॥ ११९
षट्प्रकारं समभ्यस्य चतुःषड्दशभिस्तथा।
तथा द्वादशधा चैव पुनः षोड़शधा क्रमात् ॥ १२०
द्विधाभ्यस्य च योगीन्द्रो मुच्यते नात्र संशयः।
शुद्धजाम्बूनदाकारं विधूमाङ्गारसन्निभम् ॥ १२१
पीतं रक्तं सितं विद्युत्कोटिकोटिसमप्रभम्।
अथवा ब्रह्मरन्ध्रस्थं चित्तं कृत्वा प्रयत्नतः ॥ १२२
नसितं वा सितं पीतं न स्मरेद्ब्रह्मविद्भवेत्।
अहिंसकः सत्यवादी अस्तेयी सर्व्वयत्नतः ॥ १२३
परिग्रहविनिर्म्मुक्तो ब्रह्मचारी दृढ़व्रतः।
सन्तुष्टः शौचसम्पन्नः स्वाध्यायनिरतः सदा ॥ १२४
मद्भक्तश्चाभ्यसेद्ध्यानं गुरुसम्पर्कजं ध्रुवम्।
न बुध्यति तथा ध्याता स्थाप्य चित्तं द्विजोत्तमाः॥१२५
न चाभिमन्यते योगी न पश्यति समन्ततः।
न घ्राति न शृणोत्येव लीनः स्वात्मनि यः स्वयम्१२६
न च स्पर्शं विजानाति स वै समरसः स्मृतः।
पार्थिवे पटले ब्रह्मा वारितत्त्वे हरिः स्वयम् ॥१२७
वाह्नेये कालरुद्राख्यो वायुतत्त्वे महेश्वरः।
सुषिरे स शिवः साक्षात् क्रमादेवं विचिन्तयेत्॥१२८
क्षितौ शर्व्वः स्मृतो देवो ह्यपां भव इति स्मृतः।
रुद्र एव तथा वह्नावुग्रो वायौ व्यवस्थितः ॥ १२९
भीमः सुषिरनाकोऽसौ भास्करे मण्डले स्थितः।
ईशानः सोमबिम्बे च महादेव इति स्मृतः ॥ १३०
पुंसां पशुपतिर्देवश्चाष्टधाहं व्यवस्थितः।
काठिन्यं यत् तनौ सर्व्वं पार्थिवं परिगीयते ॥ १३१
आप्यं द्रवमिति प्रोक्तं वर्णाख्यो वह्निरुच्यते।
यत् सञ्चरति तद्वायुः सुषिरं यद्द्विजोत्तमाः ॥ १३२
तदाकाशञ्च विज्ञानं शब्दजं व्योमसम्भवम्।
तथैव विप्रा विज्ञानं स्पर्शाख्यं वायुसम्भवम् ॥ १३३
रूपं वाह्नेयमित्युक्तमाप्यं रसमयं द्विजाः।
गन्धाख्यं पार्थिवं भूयश्चिन्तयेद्भास्करं क्रमात् ॥ १३४
नेत्रे च दक्षिणे वामे सोमं हृदि विभुं द्विजाः।
आजानु पृथिवीतत्त्वमा नाभेर्वारिमण्डलम् ॥ १३५
आकण्ठं वह्नितत्त्वं स्याल्ललाटान्तं द्विजोत्तमाः।
वायव्यं वै ललाटाद्यं व्योमाख्यं वा शिखाग्रकम् १३६
हंसाख्यञ्च ततो ब्रह्म व्योम्नश्चोर्द्धं ततः परम्।
व्योमाख्यो व्योममध्यस्थो ह्ययं प्राथमिकः स्मरेत्१३७
न जीवः प्रकृतिः सत्त्वं रजश्चाथ तमः पुनः।
महांस्तथाभिमानश्च तन्मात्राणीन्द्रियाणि च ॥१३८
व्योमादीनि च भूतानि नैवेह परमार्थतः।
व्याप्य तिष्ठद्यतो विश्वं स्थाणुरित्यभिधीयते ॥ १३९
उदेति सूर्य्यो भीतश्च पवते वात एव च।
द्योतते चन्द्रमा वह्निर्ज्ज्वलत्यापो वहन्ति च ॥ १४०

दधाति भूमिराकाशमवकाशं ददाति च ।
तदाज्ञया ततं सर्व्वं तस्मादेवं चिन्तयेद्द्विजाः ॥ १४१
तेनैवाधिष्ठितं तस्मादेतत् सर्व्वं द्विजोत्तमाः ।
सर्व्वरूपमयः शर्व्व इति मत्वा स्मरेद्भवम् ॥ १४२
संसारविषतप्तानां ज्ञानध्यानामृतेन वै ।
प्रतीकारः समाख्यातो नान्यथा द्विजसत्तमाः ॥ १४३
ज्ञानं धर्म्मोद्भवं साक्षाज्ज्ञानाद्वैराग्यसम्भवः ।
वैराग्यात् परमं ज्ञानं परमार्थप्रकाशकम् ॥ १४४
ज्ञान-वैराग्ययुक्तस्य योगसिद्धिर्द्विजोत्तमाः ।
योगसिद्ध्या विमुक्तिः स्यात् सत्त्वनिष्ठस्य नान्यथा॥१४५
तमोविद्यापदच्छन्नं चित्रं यत्पदमव्ययम् ।
सत्त्वशक्तिं समास्थाय शिवमभ्यर्चयेद्द्विजाः ॥ १४६
यः सत्त्वनिष्ठो मद्भक्तो मदर्चनपरायणः ।
सर्व्वतो धर्म्मनिष्ठश्च सदोत्साही समाहितः ॥ १४७
सर्व्वद्वन्द्वसहो धीरः सर्व्वभूतहिते रतः ।
ऋजुस्वभावः सततं स्वस्थचित्तो मृदुः सदा ॥ १४८
अमानी बुद्धिमाञ्छान्तस्त्यक्तस्पर्द्धो द्विजोत्तमाः ।
सदा मुमुक्षुर्धर्म्मज्ञः स्वात्मलक्षणलक्षणः ॥ १४९
ऋणत्रयविनिर्म्मुक्तः पूर्व्वजन्मनि पुण्यभाक् ।
जरायुक्तो द्विजो भूत्वा श्रद्धया च गुरोः क्रमात्॥१५०
अन्यथा वापि शुश्रूषां कृत्वा कृत्रिमवर्ज्जितः ।
स्वर्गलोकमनुप्राप्य भुक्त्वा भोगाननुक्रमात् ॥ १५१
आसाद्य भारतं वर्षं ब्रह्मविज्जायते द्विजाः ।
सम्पर्काज्ज्ञानमासाद्य ज्ञानिनो योगविद्भवेत् ॥१५२
क्रमोऽयं मत्प्रपूर्णस्य ज्ञानप्राप्तेर्द्विजोत्तमाः ।
तस्मादनेन मार्गेण त्यक्तसङ्गो दृढव्रतः ॥ १५३
संसारकालकूटाख्यान्मुच्यते मुनिपुङ्गवाः ।
एवं संक्षेपतः प्रोक्तं मया युष्माकमच्युतम् ॥ १५४
ज्ञानस्यैवेह माहात्म्यं प्रसङ्गादिह शोभनम् ।
एवं पाशुपतं योगं कथितं लोकेश्वरेण तु ॥ १५५
न देयं यस्य कस्यापि शिवोक्तं मुनिपुङ्गवाः ।
दातव्यं योगिने नित्यं भस्मनिष्ठाय सुप्रियम् ॥ १५६
यः पठेच्छृणुयाद्वापि संसारशमनं नरः ।
स याति ब्रह्मसायुज्यं नात्र कार्य्या विचारणा १५७

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे संसारविष-
कथनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

---

## सप्ताशीतितमोऽध्यायः ।

सूत उवाच ।

निशम्य ते महाप्राज्ञाः कुमाराद्याः पिनाकिनः ।
प्रोचुः प्रणम्य वै भीताः प्रसन्नं परमेश्वरम् ॥ १
एवञ्चेदनया देव्या हैमवत्या महेश्वर ।
क्रीडसे विविधैर्भोगैः कथं वक्तुमिहार्हसि ॥ २

सूत उवाच ।

एवमुक्तः प्रहस्येशः पिनाकी नीललोहितः ।
प्राह तामम्बिकां प्रेक्ष्य प्रणिपत्य स्थितान् द्विजान् ।
बन्ध-मोक्षौ न चैवेह मम स्वेच्छाशरीरिणः ।
अकर्त्ता ह्यः पशुर्जीवो विभुर्भोक्ता ह्यणुः पुमान् ।
मायी च मायया बद्धः कर्म्मभिर्युज्यते तु सः ।
ज्ञानं ध्यानञ्च बन्धश्च मोक्षो नास्त्यात्मनो द्विजाः ।
यदेवं मयि विद्वान् यस्तस्यापि न च सर्व्वतः ।
एषा विद्या ह्यहं वेद्यः प्रज्ञैषा च श्रुतिः स्मृतिः ।
धृतिरेषाभया निष्ठा ज्ञानशक्तिः क्रिया तथा ।
इच्छाख्या च तथा ह्याज्ञा द्वे विद्ये न च संशयः ।
न ह्येषा प्रकृतिर्जैवी विकृतिश्च विचारतः ।
विकारो नैव मायैषा सदसद्व्यक्तिवर्ज्जिता ॥ ८
पुरा ममाज्ञा मद्वक्त्रात् समुत्पन्ना सनातनी ।
पञ्चवक्त्रा महाभागा जगतामभयप्रदा ॥ ९
तामाज्ञां सम्प्रविश्याहं चिन्तयं जगतां हितम् ।
सप्तविंशत्प्रकारेण सर्व्वं व्याख्यानया शिवः ।
तदाप्रभृति वै मोक्ष-प्रवृत्तिर्द्विजसत्तमाः ॥ १०

सूत उवाच ।

एवमुक्त्वा तदापश्यद्भवानीं परमेश्वरः ।
भवानी च तमालोक्य मायामहरदव्यया ॥ ११
ते मायामलनिर्म्मुक्ता मुनयः प्रेक्ष्य पार्व्वतीम् ।
प्रीता बभूवुर्मुक्ताश्च तस्मादेषा परा गतिः ॥ १२
उमा-शङ्करयोर्भेदो नास्त्येव परमार्थतः ।
द्विधाऽसौ रूपमास्थाय स्थित एव न संशयः ॥ १३
यदा विद्यानसङ्गः स्यादाज्ञया परमेष्ठिनः ।
तदा मुक्तिः क्षणादेव नान्यथा कर्म्मकोटिभिः ॥ १४
क्रमो विवक्षितो भूतविद्भवः परमेष्ठिनः ।
प्रसादेन क्षणान्मुक्तिः प्रतिज्ञैषा न संशयः ॥ १५
गर्भस्थो जायमानो वा बालो वा तरुणोऽपि वा ।

वृद्धो वा मुच्यते जन्तुः प्रसादात् परमेष्ठिनः ॥ १६
अण्डजश्चोद्भिजो वापि स्वेदजो वापि मुच्यते।
प्रसादाद्देवदेवस्य नात्र कार्य्या विचारणा ॥ १७
एष एव जगन्नाथो बन्धमोचकरः शिवः।
भूर्भुवः स्वर्महश्चैव जनः साचात् तपः स्वयम् ॥ १८
सत्यलोकस्तथाण्डानां कोटिकोटिशतानि च।
विग्रहं देवदेवस्य तथाण्डावरणाष्टकम् ॥ १९
सप्तद्वीपेषु सर्व्वेषु पर्व्वतेषु वनेषु च।
समुद्रेषु च सर्व्वेषु वायुस्कन्धेषु सर्व्वतः ॥ २०
तथान्येषु च लोकेषु वसन्ति च चराचराः।
सर्व्वं भवांशजा नूनं गतिस्तेषां स एव वै ॥ २१
सर्व्वो रुद्रो नमस्तेऽस्तु पुरुषाय महात्मने।
विश्वं भूतं तथा जातं बहुधा रुद्र एव सः ॥ २२
रुद्रांशेषा स्थिता देवी ह्यनया मुक्तिरम्बिका।
इत्येवं खेचराः सिद्धा जजल्पुः प्रीतिमानसाः ॥ २३
यदावलोक्य तान् सर्व्वान् प्रसादादनयाम्बिका।
तदा तिष्ठन्ति सायुज्यं प्राप्तास्ते खेचराः प्रभोः ॥२४

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

## अष्टाशीतितमोऽध्यायः।

ऋषय ऊचुः।
केन योगेन वै सूत गुणप्राप्तिः सतामिह।
अणिमादिगुणोपेता भवन्त्येवेह योगिनः।
तत् सर्व्वं विस्तरात् सूत वक्तुमर्हसि साम्प्रतम् ॥ १

सूत उवाच।
अत ऊर्द्ध्वं प्रवक्ष्यामि योगं परमदुर्लभम्।
पञ्चधा संस्मरेदादौ स्थाप्य चित्ते सनातनम् ॥ २
कल्पयेच्चासनं पद्मं सोम-सूर्य्याग्निसंयुतम्।
षड्विंशच्छक्तिसंयुक्तमष्टधा च द्विजोत्तमाः ॥ ३
ततः षोड़शधा चैव पुनर्द्वादशधा द्विजाः।
स्मरेच्च तत् तथा मध्ये देव्या देवमुमापतिम् ॥ ४
अष्टशक्तिसमायुक्तमष्टमूर्त्तिमजं प्रभुम्।
ताभिश्चाष्टविधा रुद्राश्चतुःषष्टिविधाः पुनः ॥ ५
शक्तयश्च तथा सर्व्वा गुणाष्टकसमन्विताः।
एवं स्मरेत् क्रमेणैव लब्ध्वा ज्ञानमनुत्तमम् ॥ ६
एवं पाशुपतं योगं मोक्षसिद्धिप्रदायकम्।
तस्याणिमादयो विप्रा नान्यथा कर्म्मकोटिभिः ॥ ७
तत्राष्टगुणमैश्वर्य्यं योगिनां समुदाहृतम्।
तत् सर्व्वं क्रमयोगेण उच्यमानं निबोधत ॥ ८
अणिमा लघिमा चैव महिमा प्राप्तिरेव च।
प्राकाम्यञ्चैव सर्व्वत्र ईशित्वञ्चैव सर्व्वतः ॥ ९
वशित्वमथ सर्व्वत्र तत्र कामावशायिता।
तच्चापि त्रिविधं ज्ञेयमैश्वर्य्यं सार्व्वकामिकम् ॥ १०
सावद्यं निरवद्यञ्च सूक्ष्मञ्चैव प्रवर्त्तते।
सावद्यं नाम यत् तत्र पञ्चभूतात्मकं स्मृतम् ॥ ११
इन्द्रियाणि मनश्चैव अहङ्कारश्च यः स्मृतः।
तत्र सूक्ष्मप्रवृत्तिस्तु पञ्चभूतात्मिका पुनः ॥ १२
इन्द्रियाणि मनश्चित्तबुद्ध्यहङ्कारसंज्ञितम्।
तथा सर्व्वमयञ्चैव आत्मस्था ख्यातिरेव च ॥ १३
संयोग एष त्रिविधः सूक्ष्मेष्वेव प्रवर्त्तते।
पुनरष्टगुणश्चापि सूक्ष्मेष्वेव विधीयते ॥ १४
तस्य रूपं प्रवक्ष्यामि यथाह भगवान् प्रभुः।
त्रैलोक्ये सर्व्वभूतेषु यथास्य नियमः स्मृतः ॥ १५
अणिमाद्यं तथा व्यक्तं सर्व्वत्रैव प्रतिष्ठितम्।
त्रैलोक्ये सर्व्वभूतानां दुष्प्रापं समुदाहृतम् ॥ १६
तत् तस्य भवति प्राप्यं प्रथमं योगिनां बलम्।
लङ्घनं प्लवनं लोके रूपमस्य सदा भवेत् ॥ १७
गौरवं सर्व्वभूतेषु द्वितीयन्तु पदं स्मृतम्।
त्रैलोक्ये सर्व्वभूतानां महिम्ना चैव वन्दितम् ॥ १८
महित्वञ्चापि लोकेऽस्मिंस्तृतीयो योग उच्यते।
त्रैलोक्ये सर्व्वभूतेषु यथेष्टगमनं स्मृतम् ॥ १९
प्राकामान् विषयान् भुङ्क्ते तथा प्रतिहतः क्वचित्।
त्रैलोक्ये सर्व्वभूतानां सुखदुःखं प्रवर्त्तते ॥ २०
ईशो भवति सर्व्वत्र प्रविभागेण योगवित्।
वश्यानि चास्य भूतानि त्रैलोक्ये सचराचरे ॥ २१
इच्छया तस्य रूपाणि भवन्ति न भवन्ति च।
यत्र कामावशायित्वं त्रैलोक्य सचराचरे ॥ २२
शब्द-स्पर्शौ रसो गन्धो रूपञ्चैव मनस्तथा।
प्रवर्त्तन्तेऽस्य चेच्छातो न भवन्ति यथेच्छया ॥ २३
न जायते न म्रियते च्छिद्यते न च भिद्यते।
न दह्यते न मुह्येत लीयते न च लिप्यते ॥ २४
न क्षीयते न चरति खिद्यते न कदाचन।

क्रियते वा न सर्व्वत्र तथा विक्रियते न च ॥ २५
अगन्धरसरूपस्तु अस्पर्शः शब्दवर्ज्जितः।
अवर्णो ह्यस्वरश्चैव असवर्णस्तु कर्हिचित् ॥ २६
स भुङ्क्ते विषयांश्चैव विषयैर्न च युज्यते।
अणुलात् तु परः सूक्ष्मः सूक्ष्मलादपवर्गिकः ॥ २७
व्यापकश्चापवर्गाच्च व्यापकात् पुरुषः स्मृतः।
पुरुषः सूक्ष्मभावात् तु ऐश्वर्य्ये परमे स्थितः ॥ २८
गुणोत्तरमथैश्वर्य्यं सर्व्वतः सूक्ष्ममुच्यते।
ऐश्वर्य्यञ्चाप्रतीघातं प्राप्य योगमनुत्तमम् ॥ २९
अपवर्गं ततो गच्छेत् सूक्ष्मं तत् परमं पदम्।
एवं पाशुपतं योगं ज्ञातव्यं मुनिपुङ्गवाः ॥ ३०
स्वर्गापवर्गफलदं शिवसायुज्यकारणम्।
अथवा गतविज्ञानो रागात् कर्म्म समाचरेत् ॥ ३१
राजसं तामसं वापि भुक्त्वा तत्रैव मुच्यते।
तथा सुकृतकर्म्मा तु फलं स्वर्गे समश्नुते ॥ ३२
तस्मात् स्थानात् पुनः श्रेष्ठो मानुष्यमुपपद्यते।
तस्माद्ब्रह्म परं सौख्यं ब्रह्म शाश्वतमुत्तमम् ॥ ३३
ब्रह्म एव हि सेवेत ब्रह्मैव हि परं सुखम्।
परिश्रमो हि यज्ञानां महतार्थेन वर्त्तते ॥ ३४
भूयो मृत्युवशं याति तस्मान्मोक्षः परं सुखम्।
अथवा ध्यानसंयुक्तो ब्रह्मतत्त्वपरायणः ॥ ३५
न तु च्यावयितुं शक्यो मन्वन्तरशतैरपि।
दृष्ट्वा तु पुरुषं दिव्यं विश्वाख्यं विश्वतोमुखम् ॥ ३६
विश्वपादशिरोग्रीवं विश्वेशं विश्वरूपिणम्।
विश्वगन्धं विश्वमाल्यं विश्वाम्बरधरं प्रभुम् ॥ ३७

गोभिर्मही सम्पतते पतत्रिणो
नैवं भूयो जनयत्येवमेव।
कविं पुराणमनुशासितारं
सूक्ष्माच्च सूक्ष्मं महतो महान्तम् ॥ ३८
योगेन पश्येन च चक्षुषा पुन-
र्निरिन्द्रियं पुरुषं रुक्मवर्णम्।
आलिङ्गिनं निर्गुणं चेतनञ्च
नित्यं सदा सर्व्वगं सर्व्वसारम् ॥ ३९
पश्यन्ति युक्त्या ह्यचलप्रकाशं
तद्भावितास्तेजसा दीप्यमानम्।
अपाणिपादोदरपार्श्वजिह्वो
ह्यतीन्द्रियो वापि सुसूक्ष्म एकः ॥ ४०
पश्यत्यचक्षुः स शृणोत्यकर्णो
न चास्यबुद्धं न च बुद्धिरस्ति।
स वेद सर्व्वं न च सर्व्ववेद्यं
तमाहुरग्र्यं पुरुषं महान्तम् ॥ ४१

अचेतनां सर्व्वगतां सूक्ष्मां प्रसवधर्म्मिणीम्।
प्रकृतिं सर्व्वभूतानां युक्ताः पश्यन्ति योगिनः।
सर्व्वतःपाणिपादं तत् सर्व्वतोऽक्षिशिरोमुखम्।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥ ४
युक्तो योगेन चेशानं सर्व्वतश्च सनातनम्।
पुरुषं सर्व्वभूतानां तं विद्वान् न विमुह्यति ॥
भूतात्मानं महात्मानं परमात्मानमव्ययम्।
सर्व्वात्मानं परंब्रह्म तद्वै ध्याता न मुह्यति ॥
पवनो हि यथा ग्राह्यो विचरन् सर्व्वमूर्त्तिषु।
पुरि शेते सुदुर्ग्राह्यस्तस्मात् पुरुष उच्यते ॥ ४
अथ चेल्लुप्तधर्म्मा तु सावशेषैः स्वकर्म्मभिः।
ततस्तु ब्रह्मगर्भे वै शुक्रशोणितसंयुते ॥ ४७
स्त्रीपुंसोः सम्प्रयोगे हि जायते हि ततः प्र-
ततस्तु गर्भकालेन कललं नाम जायते ॥ ४८
कालेन कललञ्चापि बुद्बुदं सम्प्रजायते।
मृत्पिण्डस्तु यथा चक्रे चक्रावर्त्तेन पीड़ितः ॥
हस्ताभ्यां क्रियमाणस्तु विम्बत्वमनुगच्छति।
एवमाध्यात्मिकैर्युक्तो वायुना सम्प्रपूरितः ॥ ५
यदि योनिं विमुञ्चामि तत् प्रपद्ये महेश्वरम्।
यावद्धि वैष्णवो वायुर्जातमात्रं न संस्पृशेत् ॥ ५
तावत्कालं महादेवमर्च्चयामीति चिन्तयेत्।
जायते मानुषस्तत्र यथारूपं यथावयः ॥ ५२
वायुः सम्भवते खात् तु वाताद्भवति वै जलम्।
जलात् सम्भवति प्राणः प्राणाच्छुक्रं विवर्द्धते।
रक्तभागास्त्रयस्त्रिंशत्त्रयोदश भागाश्चतुर्द्दश।
भागतोऽर्द्धफलं कृत्वा ततो गर्भो निषिच्यते ॥ ५
ततस्तु गर्भसंयुक्तः पञ्चभिर्वायुभिर्वृतः।
पितुः शरीतात् प्रत्यङ्गं रूपमस्योपजायते ॥ ५
ततोऽस्य मातुराहारात् पीतलीढ़प्रवेशनात्।
नाभिदेशेन वै प्राणास्ते ह्याधारा हि देहिनाम्।
नवमासात् परिक्लिष्टः संवेष्टितशिरोधरः।
वेष्टितः सर्व्वगात्रैश्च अपर्य्याप्तप्रवेशनः ॥ ५७
नवमासोषितश्चापि योनिच्छिद्रादवाङ्मुखः।

ततः स्वकर्म्मभिः पापैर्निरयं सम्प्रपद्यते ॥ ५८
असिपत्रवनञ्चैव शाल्मलिच्छेदनं तथा।
ताड़नं भक्षणञ्चैव पूय-शोणितभक्षणम् ॥ ५९
यथा ह्यापस्तु सञ्छिन्नाः संश्लेषमुपयान्ति वै।
तथा च्छिन्नाश्च भिन्नाश्च यातनास्थानमागताः ॥ ६०
एवं जीवास्तु तैः पापैस्तप्यमानाः स्वयंकृतैः।
प्राप्नुयुः कर्म्मभिः शेषैर्दुःखं वा यदि वेतरत् ॥ ६१
एकेनैव तु गन्तव्यं सर्व्वमुत्सृज्य वै जनम्।
एकेनैव तु भोक्तव्यं तस्मात् सुकृतमाचरेत् ॥ ६२
न ह्येनं प्रस्थितं कश्चिद्गच्छन्तमनुगच्छति।
यदनेन कृतं कर्म्म तदेनमनुगच्छति ॥ ६३

ते नित्यं यमविषयेषु सम्प्रवृत्ताः
क्रोशन्तः सततमनिष्टसम्प्रयोगैः।
शुष्यन्ते परिगतवेदनाशरीरा
बह्वीभिः सुभृशमनन्तयातनाभिः ॥ ६४

कर्म्मणा मनसा वाचा यदभीक्ष्णं निषेवते।
तदभ्यासो हरत्येनं तस्मात् कल्याणमाचरेत् ॥ ६५
अनादिमान् प्रबन्धः स्यात् पूर्व्वकर्म्मणि देहिनः।
संसारं तामसं घोरं षड्विधं प्रतिपद्यते ॥ ६६
मानुष्यात् पशुभावश्च पशुभावान्मृगो भवेत्।
मृगत्वात् पक्षिभावश्च तस्माच्चैव सरीसृपः ॥ ६७
सरीसृपत्वाद्गच्छेद्वै स्थावरत्वं न संशयः।
स्थावरत्वे पुनः प्राप्ते यावदुन्मिलते जनः ॥ ६८
कुलालचक्रवद्भ्रान्तस्तत्रैव परिवर्त्तते।
इत्येवं हि मनुष्यादिः संसारस्थावरान्तिकः ॥ ६९
विज्ञेयस्तामसो नाम तत्रैव परिवर्त्तते।
सात्त्विकश्चापि संसारो ब्रह्मादिः परिकीर्त्तितः ॥ ७०
पिशाचान्तः स विज्ञेयः स्वर्गस्थानेषु देहिनाम्।
ब्राह्मे तु केवलं सत्त्वं स्थावरे केवलं तमः ॥ ७१
चतुर्द्दशानां स्थानानां मध्ये विष्टम्भकं रजः।
मर्म्मसु च्छिद्यमानेषु वेदनार्त्तस्य देहिनः ॥ ७२
ततस्तत् परमं ब्रह्म कथं विप्रः स्मरिष्यति।
संसारः पूर्व्वधर्म्मस्य भावनाभिः प्रचोदितः ॥ ७३
मानुषं भजते नित्यं तस्माद्ध्यानं समाचरेत्।
चतुर्द्दशविधं ह्येतद्बुद्ध्वा संसारमण्डलम् ॥ ७४
नित्यं समारभेद्धर्म्मं संसारभयपीड़ितः।
ततस्तरति संसारं क्रमेण परिवर्त्तितः ॥ ७५
तस्माच्च सततं युक्तो ध्यानतत्परयुञ्जकः।
तथा समारभेद्योगं यथात्मानं स पश्यति ॥ ७६
एष आपः परं ज्योतिरेष सेतुरनुत्तमः।
विवृत्या ह्येष सम्भेदाद्भूतानाञ्चैव शाश्वतः ॥ ७७
तदेनं सेतुमात्मानमग्निं वै विश्वतोमुखम्।
हृदिस्थं सर्व्वभूतानामुपासीत महेश्वरम् ॥ ७८
तथान्तःसंस्थितं देवं स्वशक्त्या परिमण्डितम्।
अष्टधा चाष्टधा चैव तथा चाष्टविधेन च ॥ ७९
सूक्ष्मार्थं संस्थितं वह्निं संक्षिप्य च हृदि स्थितम्।
ध्यात्वा यथावद्देवेशं रुद्रं भुवननायकम् ॥ ८०
हुत्वा पञ्चाहुतीः सम्यक् तच्चिन्तागतमानसः।
वैश्वानरं हृदिस्थन्तु यथावदनुपूर्व्वशः ॥ ८१
आपः पूताः सकृत् प्राश्य तूष्णीं हुत्वा ह्युपाविशन्
प्राणायेति ततस्तस्य प्रथमा ह्याहुतिः स्मृता ॥ ८२
अपानाय द्वितीया च व्यानायेति तथापरा।
उदानाय चतुर्थी स्यात् समानायेति पञ्चमी ॥ ८३
स्वाहाकारैः पृथक् हुत्वा शेषं भुञ्जीत कामतः।
अपः पुनः सकृत् प्राश्य आचम्य हृदयं स्पृशेत् ॥ ८४
प्राणानां ग्रन्थिरस्यात्मा रुद्रो ह्यात्मा विशान्तकः।
रुद्रो वै ह्यात्मनः प्राण एवमाप्याययेत् स्वयम् ॥ ८५
प्राणे निविष्टो वै रुद्रस्तस्मात् प्राणमयः स्वयम्।
प्राणाय चैव रुद्राय जुहोत्यमृतमुत्तमम् ॥ ८६
शिवाविशेह मामीश स्वाहा ब्रह्मात्मने स्वयम्।
एवं पञ्चाहुतीश्चैव आद्ये कुर्व्वीत शासनात् ॥ ८७
पुरुषोऽसि पुरे शेषे त्वमङ्गुष्ठप्रमाणतः।
आश्रितश्चैव चाङ्गुष्ठमीशः परमकारणम् ॥ ८८
सर्व्वस्य जगतश्चैव प्रभुः प्रीणातु शाश्वतः।
त्वं देवानामसि ज्येष्ठो रुद्रस्त्वञ्च पुरो वृषा ॥ ८९
मृदुस्त्वमन्नमस्मभ्यमेतदस्तु हुतं तव।
इत्येवं कथितं सर्व्वं गुणप्राप्तिविशेषतः ॥ ९०
योगाचारः स्वयं तेन ब्रह्मणा कथितः पुरा।
एवं पाशुपतं ज्ञानं ज्ञातव्यञ्च प्रयत्नतः ॥ ९१
भस्मस्नायी भवेन्नित्यं भस्मलिप्तः सदा भवेत्।
यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥ ९२
दैवे कर्म्मणि पित्र्ये वा स याति परमां गतिम् ॥ ९३

इति श्रीलैङ्गे महापुराणे पूर्व्वभागेऽष्टा-
शीतितमोऽध्यायः ॥ ८८ ॥

## एकोननवतितमोऽध्यायः।

सूत उवाच।

अत ऊर्द्ध्वं प्रवक्ष्यामि शौचाचारस्य लक्षणम्।
यदनुष्ठाय शुद्धात्मा परेत्य गतिमाप्नुयात् ॥ १
ब्रह्मणा कथितं पूर्व्वं सर्व्वभूतहिताय वै।
संक्षेपात् सर्व्ववेदार्थं सञ्चयं ब्रह्मवादिनाम् ॥ २
उदयार्थन्तु शौचानां मुनीनामुत्तमं पदम्।
यस्तत्राप्रमत्तः स्यात् स मुनिर्नावसीदति ॥ ३
मानावमानौ द्वावेतौ तावेवाहुर्विषामृते।
अवमानोऽमृतं तत्र सम्मानो विषमुच्यते ॥ ४
गुरोरपि हिते युक्तः स तु संवत्सरं वसेत्।
नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥ ५
प्राप्यानुज्ञां ततश्चैव ज्ञानयोगमनुत्तमम्।
अविरोधेन धर्म्मस्य चरेत पृथिवीमिमाम् ॥ ६
चक्षुःपूतं चरेन्मार्गं वस्त्रपूतं जलं पिबेत्।
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥ ७
मत्स्यग्राहस्य यत् पापं षण्मासाभ्यन्तरे भवेत्।
एकाहं तत्समं ज्ञेयमपूतं यज्जलं भवेत् ॥ ८
अपूतोदकपाने तु जपेच्च शतपञ्चकम्।
अघोरलक्षणं मन्त्रं ततः शुद्धिमवाप्नुयात् ॥ ९
अथवा पूजयेच्छम्भुं घृतस्नानादिविस्तरैः।
त्रिधा प्रदक्षिणीकृत्य शुध्यते नात्र संशयः ॥ १०
आतिथ्यश्राद्धयज्ञेषु न गच्छेद्योगवित् क्वचित्।
एवं ह्यहिंसको योगी भवेदिति विचारितम् ॥ ११
वह्नौ विधूमेऽत्यङ्गारे सर्व्वस्मिन् भुक्तवज्जने।
चरेत् तु मतिमान् भैक्ष्यं न तु तेष्वेव नित्यशः ॥ १२
अथैनमवमन्यन्ते परे परिभवन्ति च।
तथा युक्तं चरेद्भैक्ष्यं सतां धर्म्ममदूषयन् ॥ १३
भैक्ष्यं चरेद्वनस्थेषु यायावरगृहेषु च।
श्रेष्ठा तु प्रथमा ह्येयं वृत्तिरस्योपजायते ॥ १४
अत ऊर्द्ध्वं गृहस्थेषु शालीनेषु चरेद्द्विजाः।
श्रद्दधानेषु दान्तेषु श्रोत्रियेषु महात्मसु ॥ १५
अत ऊर्द्ध्वं पुनश्चापि अदुष्टापतितेषु च।
भैक्ष्यचर्य्या हि वर्णेषु जघन्या वृत्तिरुच्यते ॥ १६
भैक्ष्यं यवागूस्तक्रं वा पयो यावकमेव च।
फलमूलादि पक्वं वा कणपिण्याकसक्तवः ॥ १७

इत्येते व मया प्रोक्ता योगिनां सिद्धिवर्द्धनाः।
आहारास्तेषु सिद्धेषु श्रेष्ठं भैक्ष्यमिति स्मृतम् ॥
अब्बिन्दुं यः कुशाग्रेण मासि मासि समश्नुते।
न्यायतो यश्चरेद्भैक्ष्यं पूर्व्वोक्तात् स विशिष्यते।
जरा-मरण-गर्भेभ्यो भीतस्य नरकादिषु।
एवं हाययते तस्मात् तद्भैक्ष्यमिति संस्मृतम् ॥ २
दधिभक्षाः पयोभक्षा ये चान्ये जीवक्षीणकाः।
सर्व्वे ते भैक्ष्यभक्षस्य कलां नार्हन्ति षोड़शीम्।
भस्मशायी भवेन्नित्यं भिक्षाचारी जितेन्द्रियः।
य इच्छेत् परमं स्थानं व्रतं पाशुपतं चरेत् ॥ २
योगिनाञ्चैव सर्व्वेषां श्रेष्ठं चान्द्रायणं भवेत्।
एकं द्वे त्रीणि चत्वारि शक्तितो वा समाचरेत्।
अस्तेयं ब्रह्मचर्य्यञ्च अलोभस्त्याग एव च।
व्रतानि पञ्च भिक्षूणां अहिंसा परमा त्विह ॥ २
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्।
नित्यं स्वाध्याय इत्येते नियमाः परिकीर्त्तिताः।
वीज-योनि-गुणा वस्तु-बन्धः कर्म्मभिरेव च।
यथा द्विप इवारण्ये मनुष्याणां विधीयते ॥ २
देवैस्तुल्याः सर्व्वयज्ञक्रियास्तु
यज्ञाज्जाप्यं ज्ञानमाहुश्च जाप्यात्।
ज्ञानाद्ध्यानं सङ्गरागादपेतं
तस्मिन् प्राप्ते शाश्वतस्योपलम्भः ॥ २७
दमः शमः सत्यमकल्मषत्वं
मौनञ्च भूतेष्वखिलेषु चार्ज्जवम्।
अतीन्द्रियं ज्ञानमिदं तथा शिवं
प्राहुस्तथा ज्ञानविशुद्धबुद्धयः ॥ २८
समाहितो ब्रह्मपरोऽप्रमादी
शुचिस्तथैकान्तरतिर्जितेन्द्रियः।
समाप्नुयाद्योगमिमं महात्मा
महर्षयश्चैवमनिन्दितामलाः ॥ २९
प्राप्यतेऽभिमतान् देशानङ्कुशेन निवारितः।
एतन्मार्गेण शुद्धेन दग्धवीजो ह्यकल्मषः ॥ ३०
सदाचाररताः शान्ताः स्वधर्म्मपरिपालकाः।
सर्व्वान् लोकान् विनिर्ज्जित्य ब्रह्मलोकं व्रजन्ति
पितामहेनोपदिष्टो धर्म्मः साक्षात् सनातनः।
सर्व्वलोकोपकारार्थं शृणुध्वं प्रवदामि वः ॥ ३२
शुक्लपदेशयुक्तानां वृद्धानां क्रमवर्त्तिनाम्।

अभ्युत्थानादिकं सर्व्वं प्रणामञ्चैव कारयेत् ॥ ३३
अष्टाङ्गप्रणिपातेन त्रिधा न्यस्तेन सुव्रताः।
त्रिःप्रदक्षिणयोगेन वन्द्यो वै ब्राह्मणो गुरुः ॥ ३४
ज्येष्ठान्येऽपि च ते सर्व्वे वन्दनीया विजानता।
आश्रमभङ्गं न कुर्व्वीत यदीच्छेत् सिद्धिमुत्तमाम् ॥ ३५
धातु-शून्य-विलक्षेत्र-क्षुद्रमन्त्रोपजीवनम् ॥
विषग्रहविड्म्बादीन् वर्ज्जयेत् सर्व्वयत्नतः ॥ ३६
कैतवं वित्तशाठ्यञ्च पैशुन्यं वर्ज्जयेत् सदा।
अतिहासमवष्टम्भं लीला स्वेच्छाप्रवर्त्तनम् ॥ ३७
वर्ज्जयेत् सर्व्वयत्नेन गुरूणामपि सन्निधौ।
तद्वाक्यप्रतिकूलञ्च अयुक्तं वै गुरोर्वचः ॥ ३८
न वदेत् सर्व्वयत्नेन अनिष्टं न स्मरेत् सदा।
यतीनामासनं वस्त्रं दण्डाद्यं पादुके तथा ॥ ३९
माल्यञ्च शयनस्थानं पात्रं छायाञ्च यत्नतः।
यज्ञोपकरणाङ्गञ्च न स्पृशेद्वै पदेन च ॥ ४०
देवद्रोहं गुरुद्रोहं न कुर्य्यात् सर्व्वयत्नतः।
कृत्वा प्रमादतो विप्राः प्रणवस्यायुतं जपेत् ॥ ४१
देवद्रोह-गुरुद्रोहात् कोटिमात्रेण शुध्यति।
महापातकशुद्ध्यर्थं तथैव च यथाविधि ॥ ४२
पातकी च तदर्द्धेन शुध्यते कृतवान् यदि।
उपपातकिनः सर्व्वे तदर्द्धेनवसुव्रताः ॥ ४३
सन्ध्यालोपे कृते विप्रः त्रिरात्रस्यैव शुध्यति।
आह्निकच्छेदने जाते शतमेकमुदाहृतम् ॥ ४४
लङ्घने समयानान्तु अभक्ष्यस्य च भक्षणे।
अवाच्यवाचने चैव सहस्राच्छुद्धिरुच्यते ॥ ४५
काकोलूककपोतानां पक्षिणामपि घातने।
शतमष्टोत्तरं जप्त्वा मुच्यते नात्र संशयः ॥ ४६
यः पुनस्तत्त्ववेत्ता च ब्रह्मविद्ब्राह्मणोत्तमः।
स्मरणाच्छुद्धिमाप्नोति नात्र कार्य्या विचारणा ॥ ४७
नैवमात्मविदामस्ति प्रायश्चित्तानि चोदना।
विश्वस्यैव हिते शुद्धा ब्रह्मविद्याविदो जनाः ॥ ४८
योगध्यानैकनिष्ठाश्च निर्लेपाः काञ्चनं यथा।
शुद्धानां शोधनं नास्ति विशुद्धा ब्रह्मविद्यया ॥ ४९
उद्धृतानुष्णफेनाभिः पूताभिर्वस्त्रचक्षुषा।
अद्भिः समाचरेत् सर्व्वं वर्ज्जयेत् कलुषोदकम् ॥ ५०
गन्ध-वर्ण-रसैर्दुष्टमशुचिस्थानसंस्थितम्।
पङ्काश्मदूषितञ्चैव सामुद्रं पल्वलोदकम् ॥ ५१
सशैवालं तथान्यैर्वा दोषैर्दुष्टं विवर्ज्जयेत्।
वस्त्रशौचान्वितः कुर्य्यात् सर्व्वकार्य्याणि वै द्विजाः ॥ ५२
नमस्कारादिकं सर्व्वं गुरुशुश्रूषणादिकम्।
वस्त्रशौचविहीनात्मा ह्यशुचिर्नात्र संशयः ॥ ५३
दैवकार्य्योपयुक्तानां प्रत्यहं शौचमिष्यते।
इतरेषां हि वस्त्राणां शौचं कार्य्यं मलागमे ॥ ५४
वर्ज्जयेत् सर्व्वयत्नेन वासोऽन्यैर्विधृतं द्विजाः।
कौशेयाविकयो रूक्षैः चौमाणां गौरसर्षपैः ॥ ५५
श्रीफलैरंशुपट्टानां कुतपानामरिष्टकैः।
चर्म्मणां विदलानाञ्च वेत्राणां वस्त्रवन्मतम् ॥ ५६
वल्कलानान्तु सर्व्वेषां छत्रचामरयोरपि।
चैलवच्छौचमाख्यातं ब्रह्मविद्भिर्मुनीश्वरैः ॥ ५७
भस्मना शुध्यते कांस्यं क्षारेणायसमुच्यते।
ताम्रमम्लेन वै विप्रास्त्रपु-सीसकयोरपि ॥ ५८
हैममद्भिः शुभं पात्रं रौप्यपात्रं द्विजोत्तमाः।
मण्यश्म-शङ्ख-मुक्तानां शौचं तैजसवत् स्मृतम् ॥ ५९
अग्नेरपाञ्च संयोगादत्यन्तोपहतस्य च।
रसानामिह सर्व्वेषां शुद्धिरुत्प्लवनं स्मृतम् ॥ ६०
तृणकाष्ठादिवस्तूनां शुभेनाभ्युक्षणं स्मृतम्।
उष्णेन वारिणा शुद्धिस्तथा स्रुक्स्रुवयोरपि ॥ ६१
तथैव यज्ञपात्राणां मुषलोलूखलस्य च।
शृङ्गास्थिदारुदन्तानां तक्षणेनैव शोधनम् ॥ ६२
संहतानां महाभागा द्रव्याणां प्रोक्षणं स्मृतम्।
असंहतानां द्रव्याणां प्रत्येकं शौचमुच्यते ॥ ६३
अभुक्तराशिधान्यानामेकदेशस्य दूषणे।
तावन्मात्रं समुद्धृत्य प्रोक्षयेद्वै कुशाम्भसा ॥ ६४
शाक-मूल-फलादीनां धान्यवच्छुद्धिरिष्यते।
मार्ज्जनोन्मार्ज्जनैर्वेश्म पुनः पाकेन मृण्मयम् ॥ ६५
उल्लेखनेनाञ्जनेन तथा सम्मार्ज्जनेन च।
गोनिवासेन वै शुद्धा सेचनेन धरा स्मृता ॥ ६६
भूमिस्थमुदकं शुद्धं वैतृष्यं यत्र गौर्व्रजेत्।
अव्याप्तं यदमेध्येन गन्ध-वर्ण-रसान्वितम् ॥ ६७
वत्सः शुचिः प्रस्रवणे शकुनिः फलपातने।
स्वदारास्यं गृहस्थानां रतौ भार्य्याभिकाङ्क्षया ॥ ६८
हस्ताभ्यां क्षालितं वस्त्रं कारुणा च यथाविधि।
कुशाम्बुना सुसम्प्रोक्ष्य गृह्णीयाद्धर्म्मवित्तमः ॥ ६९
पण्यं प्रसारितञ्चैव वर्णाश्रमविभागशः।

शुचिराकरजं तेषां श्वा मृगग्रहणे शुचिः ॥ ७०
छाया च विप्रुषो विप्रा मक्षिकाद्या द्विजोत्तमाः ।
रजो भूर्वायुरग्निश्च मेध्यानि स्पर्शने सदा ॥ ७१
सुप्ता भुक्त्वा च वै विप्राः क्षुत्वा पीत्वा च वै तथा ।
ष्ठीवित्वाध्ययनादौ च शुचिरप्याचमेत् पुनः ॥ ७२
पादौ स्पृशन्ति ये चापि पराचमनबिन्दवः ।
ते पार्थिवैः समा ज्ञेया न तैरप्रयतो भवेत् ॥ ७३
कृत्वा च मैथुनं स्पृष्ट्वा पतितं कुक्कुटादिकम् ।
शूकरञ्चैव काकादि-श्वानमुष्ट्रं खरं तथा ॥ ७४
यूपं चाण्डालकाद्यांश्च स्पृष्ट्वा स्नानेन शुध्यति ।
रजस्वलां सूतिकाञ्च न स्पृशेदन्त्यजामपि ॥ ७५
सूतिकाशौचसंयुक्तः शावाशौचसमन्वितः ।
संस्पर्शेन्न रजस्तासां स्पृष्ट्वा स्नात्वैव शुध्यति ॥ ७६
नैवाशौचं यतीनाञ्च वनस्थ-ब्रह्मचारिणाम् ।
नष्ठिकानां नृपाणाञ्च मण्डलीनाञ्च सुव्रताः ॥ ७७
ततः कार्य्यविरोधाद्धि नृपाणां नान्यथा भवेत् ।
वखानसानां विप्राणां पतितानामसम्भवात् ॥ ७८
असत्त्वयद्विजानाञ्च स्नानमात्रेण नान्यथा ।
तथा सन्निहितानाञ्च यज्ञार्थं दीक्षितस्य च ॥ ७९
एकाहाद्व्ययज्ञयाजीनां शुद्धिरुक्ता स्वयम्भुवा ।
ततस्त्वधीतशाखानां चतुर्भिः सर्व्वदेहिनाम् ॥ ८०
सूतकं प्रेतकं नास्ति त्र्यहादूर्द्ध्वममुत्र वै ।
अर्व्वागेकादशाहान्तं बान्धवानां द्विजोत्तमाः ॥ ८१
स्नानमात्रेण वै शुद्धिर्मरणे समुपस्थिते ।
ततो ऋतुत्रयादर्व्वागेकाहः परिगीयते ॥ ८२
सप्तवर्षात् ततश्चार्व्वाक् त्रिरात्रं हि ततः परम् ।
दशाहं ब्राह्मणानां वै प्रथमेऽहनि वा पितुः ॥ ८३
दशाहं सूतिकाशौचं मातुरप्येवमव्ययाः ।
अर्व्वाक् त्रिवर्षात् स्नानेन बान्धवानां पितुः सदा॥८४
अष्टाब्दादेकरात्रेण शुद्धिः स्याद्बान्धवस्य तु ।
द्वादशाब्दात् ततश्चार्व्वाक् त्रिरात्रं स्त्रीषु सुव्रताः॥८५
सपिण्डता च पुरुषे सप्तमे विनिवर्त्तते ।
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ॥ ८६
ततः सन्निहितो विप्रश्चार्व्वाक् पूर्व्वं तदेव वै ।
संवत्सरे व्यतीते तु स्नानमात्रेण शुध्यति ॥ ८७
स्पृष्ट्वा प्रेतं त्रिरात्रेण धर्म्मार्थं स्नानमुच्यते ।
दाहकानाञ्च नेतॄणां स्नानमात्रमबान्धवे ॥ ८८

अनुगम्य च वै स्नात्वा घृतं प्राश्य विशुध्यति ।
आचार्य्यमरणे चैव त्रिरात्रं श्रोत्रिये मृते ॥ ८९
पक्षिणी मातुलानाञ्च सोदराणाञ्च वा द्विजाः ।
भूपानां मण्डलीनाञ्च सद्यो नौराष्ट्रवासिनाम् ॥ ९०
केवलं द्वादशाहेन क्षत्रियाणां द्विजोत्तमाः ।
नाभिषिक्तस्य चाशौचं सम्भ्रमादिषु वै रणे ॥ ९१
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ।
इति संक्षेपतः प्रोक्ता द्रव्यशुद्धिरनुत्तमा ॥ ९२
अशौचञ्चानुपूर्व्वेण यतीनां नैव विद्यते ।
त्रेताप्रभृति नारीणां मासि मास्यार्त्तवं द्विजाः ॥ ९३
कृते सकृद्युगवशाज्जायन्ते वै सहैव तु ।
प्रयान्ति च महाभागा भार्य्याभिः कुरवो यथा ॥ ९४
वर्णाश्रमव्यवस्था च त्रेताप्रभृति सुव्रताः ।
भारते दक्षिणे वर्षे व्यवस्था नेतरेष्वथ ॥ ९५
महावीते सुवीते च जम्बूद्वीपे तथाष्टसु ।
शाकद्वीपादिषु प्रोक्तो धर्म्मो वै भारते यथा ॥ ९६
रसोल्लासा कृते वृत्तिस्त्रेतायां गृहवृक्षजा ।
सैवार्त्तवकृताद्दोषाद्रागद्वेषादिभिर्नृणाम् ॥ ९७
मैथुनात् कामतो विप्रास्तथैव परुषादिभिः ।
यवाद्याः सम्प्रजायन्ते ग्राम्यारण्याश्चतुर्दश ॥ ९८
ओषध्यश्च रजोदोषात् स्त्रीणां रागादिभिर्नृणाम् ।
अकालकृष्टा विध्वस्ताः पुनरुत्पादितास्तथा ॥ ९९
तस्मात् सर्व्वप्रयत्नेन न सम्भाष्या रजस्वला ।
प्रथमेऽहनि चाण्डाली यथा वर्ज्या तथाङ्गना ॥ १००
द्वितीयेऽहनि विप्रा हि यथा वै ब्रह्मघातिनी ।
तृतीयेऽह्नि तदर्द्धेन चतुर्थेऽहनि सुव्रताः ॥ १०१
स्नात्वार्द्धमासात् संशुद्धा ततः शुद्धिर्भविष्यति ।
आ षोड़शात् ततः स्त्रीणां मूत्रवच्छौचमिष्यते ॥ १०२
पञ्चरात्रं तथास्पृश्या रजसा वर्त्तते यदि ।
सा विंशद्दिवसादूर्द्ध्वं रजसा पूर्व्ववत् तथा ॥ १०३
स्नानं शौचं तथा गानं रोदनं हसनं तथा ।
यानमभ्यञ्जनं नारी द्यूतञ्चैवानुलेपनम् ॥ १०४
दिवास्वप्नं विशेषेण तथा व दन्तधावनम् ।
मैथुनं मानसं वापि वाचिकं दैवतार्च्चनम् ॥ १०५
वर्ज्जयेत् सर्व्वयत्नेन नमस्कारं रजस्वला ।
रजस्वलाङ्गनास्पर्श-सम्भाषे च रजस्वला ॥ १०६
सन्ध्यागन्धैव वस्त्राणां वर्ज्जयेत् सर्व्वयत्नतः ।

स्नात्वान्यपुरुषं नारी न स्पृशेत् तु रजस्वला ॥ १०७
ईक्षयेद्भास्करं देवं ब्रह्मकूर्चं ततः पिबेत्।
केवलं पञ्चगव्यं वा क्षीरं वा चात्मशुद्धये ॥ १०८
चतुर्थ्यां स्त्री न गम्या तु गतोऽल्पायुः प्रसूयते।
विद्याहीनं व्रतभ्रष्टं पतितं पारदारिकम् ॥ १०९
दारिद्र्यार्णवमग्नञ्च तनयं सम्प्रसूयते।
कन्यार्थिनैव गन्तव्या पञ्चम्यां विधिवत् पुनः ॥ ११०
रक्ताधिक्याद्भवेन्नारी शुक्राधिक्ये भवेत् पुमान्।
समे नपुंसकञ्चैव पञ्चम्यां कन्यका भवेत् ॥ १११
षष्ठ्यां गम्या महाभागा सत्पुत्रजननी भवेत्।
पुत्रत्वं व्यञ्जयेत् तस्य जातपुत्रो महाद्युतिः ॥ ११२
पुमिति नरकस्याख्या दुःखञ्च नरकं विदुः।
पुंसस्त्राणान्वितं पुत्रं तथाभूतं प्रसूयते ॥ ११३
सप्तम्याञ्चैव कन्यार्थी गच्छेत् सैव प्रसूयते।
अष्टम्यां सर्व्वसम्पन्नं तनयं सम्प्रसूयते ॥ ११४
नवम्यां दारिकायार्थी दशम्यां पण्डितो भवेत्।
एकादश्यां तथा नारीं जनयेत् सैव पूर्व्ववत् ॥ ११५
द्वादश्यां धर्म्मतत्त्वज्ञं श्रौतस्मार्त्तप्रवर्त्तकम्।
त्रयोदश्यां जड़ां नारीं सर्व्वसङ्करकारिणीम् ॥ ११६
जनयत्यङ्गना यस्मान्न गच्छेत् सर्व्वयत्नतः।
चतुर्द्दश्यां यदा गच्छेत् सा पुत्रजननी भवेत् ॥ ११७
पञ्चदश्याञ्च धर्म्मिष्ठां षोड़श्यां ज्ञानपारगम्।
स्त्रीणां वै मैथुने काले वामपार्श्वे प्रभञ्जनः ॥ ११८
चरेद्यदि भवेन्नारी पुमांसं दक्षिणे लभेत्।
स्त्रीणां मैथुनकाले तु पापग्रहविवर्ज्जिते ॥ ११९
उक्तकाले शुचिर्भूत्वा शुद्धां गच्छेच्छुचिस्मिताम्।
इत्येवं सम्प्रसङ्गेन यतीनां धर्म्मसंग्रहे ॥ १२०
सर्व्वेषामेव भूतानां सदाचारः प्रकीर्त्तितः।
यः पठेच्छृणुयाद्वापि सदाचारं शुचिर्नरः ॥ १२१
श्रावयेद्वा यथान्यायं ब्राह्मणान् दग्धकिल्बिषान्।
ब्रह्मलोकमनुप्राप्य ब्रह्मणा सह मोदते ॥ १२२

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सदाचारकथनं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः।

सूत उवाच।

अत ऊर्द्ध्वं प्रवक्ष्यामि यतीनामिह निश्चितम्।
प्रायश्चित्तं शिवप्रोक्तं यतीनां पापशोधनम् ॥ १
पापं हि त्रिविधं ज्ञेयं वाङ्मनःकायसम्भवम्।
सततं हि दिवा रात्रौ येनेदं वेष्ट्यते जगत् ॥ २
तत् कर्म्मणा विनाप्येष तिष्ठतीति परा श्रुतिः।
क्षणमेवं प्रयोज्यन्तु आयुषन्तु विधारणम् ॥ ३
भवेद्धि योगोऽप्रमत्तस्य योगो हि परमं बलम्।
न हि योगात् परं किञ्चिन्नराणां दृश्यते शुभम्।
तस्माद्योगं प्रशंसन्ति धर्म्मयुक्ता मनीषिणः ॥ ४
अविद्यां विद्यया जित्वा प्राप्यैश्वर्य्यमनुत्तमम्।
दृष्ट्वा परावरं धीराः परं गच्छन्ति तत्पदम् ॥ ५
व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च।
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ॥ ६
उपेत्य तु स्त्रियं कामात् प्रायश्चित्तं विनिर्द्दिशेत्।
प्राणायामसमायुक्तं चरेत् सान्तपनं व्रतम् ॥ ७
ततश्चरति निर्द्दिष्टात् कृच्छ्रञ्चान्ते समाहितः।
पुनराश्रममागत्य चरेद्भिक्षुरतन्द्रितः ॥ ८
न धर्म्मयुक्तमनृतं हिनस्तीति मनीषिणः।
तथापि न च कर्त्तव्यं प्रसङ्गो ह्येष दारुणः ॥ ९
अहोरात्रोपवासश्च प्राणायामशतं तथा।
असद्वादो न कर्त्तव्यो यतिना धर्म्मलिप्सुना ॥ १०
परमापद्गतेनापि न कार्य्यं स्तेयमप्युत।
स्तेयादभ्यधिकः कश्चिन्नास्त्यधर्म्म इति श्रुतिः ॥ ११
हिंसा ह्येषा परा सृष्टा स्तैन्यं वै कथितं तथा।
यदेतद्द्रविणं नाम प्राणा ह्येते बहिश्चराः ॥ १२
स तस्य हरते प्राणान् यो यस्य हरते धनम्।
एवं कृत्वा सुदुष्टात्मा भिन्नवृत्तो व्रताच्युतः ॥ १३
भूयो निर्व्वेदमापन्नश्चरेच्चान्द्रायणं व्रतम्।
विधिना शास्त्रदृष्टेन संवत्सरमिति श्रुतिः ॥ १४
ततः संवत्सरस्यान्ते भूयः प्रक्षीणकल्मषः।
पुनर्निर्व्वेदमापन्नश्चरेद्भिक्षुरतन्द्रितः ॥ १५
अहिंसा सर्व्वभूतानां कर्म्मणा मनसा गिरा ॥ १६
अकामादपि हिंसेत यदि भिक्षुः पशून् कृमीन्।
कृच्छ्रातिकृच्छ्रं कुर्व्वीत चान्द्रायणमथापि वा ॥ १७

स्कन्देदिन्द्रियदौर्ब्बल्यात् स्त्रियं दृष्ट्वा यतिर्यदि।
तेन धारयितव्या वै प्राणायामास्तु षोड़श ॥ १८
दिवास्कन्दस्य विप्रस्य प्रायश्चित्तं विधीयते।
त्रिरात्रमुपवासश्च प्राणायामशतं तथा ॥ १९
रात्रौ स्कन्नः शुचिः स्नात्वा द्वादशैव तु धारणाः।
प्राणायामेन शुद्धात्मा विरजा जायते द्विजाः ॥ २०
एकान्नं मधु मांसं वा अशृतान्नं तथैव च।
अभोज्यानि यतीनान्तु प्रत्यक्षलवणानि च ॥ २१
एकैकातिक्रमात् तेषां प्रायश्चित्तं विधीयते।
प्राजापत्येन कृच्छ्रेण ततः पापात् प्रमुच्यते ॥ २२
व्यतिक्रमाश्च ये केचित् वाङ्मनःकायसम्भवाः।
सद्भिः सह विनिश्चित्य यद्ब्रूयुस्तत् समाचरेत् ॥ २३

चरेद्विशुद्धः समलोष्टकाञ्चनः
समस्तभूतेषु च सत्समाहितः।
स्थानं ध्रुवं शाश्वतमव्ययन्तु
परं हि गत्वा न पुनर्हि जायते ॥ २४

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे यति-
प्रायश्चित्तं नाम नवतितमोऽध्यायः ॥९०॥

---

## एकनवतितमोऽध्यायः।

सूत उवाच।

अत ऊर्द्ध्वं प्रवक्ष्यामि अरिष्टानि निबोधत।
येन ज्ञानविशेषेण मृत्युं पश्यन्ति योगिनः ॥ १
अरुन्धतीं ध्रुवञ्चैव सोमच्छायां महापथम्।
यो न पश्येन्न जीवेत् स नरः संवत्सरात् परम् ॥ २
अरश्मिवन्तमादित्यं रश्मिवन्तञ्च पावकम्।
यः पश्यति न जीवेद्वै मासादेकादशात् परम् ॥ ३
वमेन्मूत्रं पुरीषञ्च सुवर्णं रजतं तथा।
प्रत्यक्षमथवा स्वप्ने दशमासान्न जीवति ॥ ४
रुक्मवर्णं द्रुमं पश्येद्गन्धर्व्वनगराणि च।
पश्येत् प्रेतपिशाचांश्च नव मासान् स जीवति ॥ ५
अकस्माच्च भवेत् स्थूलो ह्यकस्माच्च कृशो भवेत्।
प्रकृतेश्च निवर्त्तेत चाष्टौ मासांश्च जीवति ॥ ६
अग्रतः पृष्ठतो वापि खण्डं यस्य पदं भवेत्।
पांशुके कर्द्दमे वापि सप्त मासान् स जीवति ॥ ७
काकः कपोतो गृध्रो वा निलीयेद्यस्य मूर्द्धनि।
क्रव्यादो वा खगो यस्य षण्मासान् नातिवर्त्तते ॥ ८
गच्छेद्वायसपङ्क्तीभिः पांशुवर्षेण वा पुनः।
स्वच्छायां विकृतां पश्येच्चतुःपञ्च स जीवति ॥ ९
अनभ्रे विद्युतं पश्येद्दक्षिणां दिशमास्थिताम्।
उदके धनुरैन्द्रं वा त्रीणि द्वौ वा स जीवति ॥ १०
अप्सु वा यदि वादर्शे यो ह्यात्मानं न पश्यति।
अशिरस्कं तथा पश्यन् मासादूर्द्ध्वं न जीवति ॥ ११
शवगन्धि भवेद्गात्रं वसागन्धमथापि वा।
मृत्युर्ह्युपागतस्तस्य अर्द्धमासान्न जीवति ॥ १२
यस्य वै स्नातमात्रस्य हृदयं परिशुष्यति।
धूमं वा मस्तकात् पश्येद्दशाहान्न स जीवति ॥ १३
सम्भिन्नो मारुतो यस्य मर्म्मस्थानानि कृन्तति।
अद्भिः स्पृष्टो न हृष्येत तस्य मृत्युरुपस्थितः ॥ १४
ऋक्ष-वानरयुक्तेन रथेनाशाञ्च दक्षिणाम्।
गायन् नृत्यन् व्रजेत् स्वप्ने विद्यान्मृत्युमुपस्थितम् ॥ १५
कृष्णाम्बरधरा श्यामा गायन्ती वाप्यथाङ्गना।
यं नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥ १६
छिद्रं वा स्वस्य कण्ठस्य स्वप्ने यो वीक्षते नरः।
नग्नं वा श्रमणं दृष्ट्वा विद्यान्मृत्युमुपस्थितम् ॥ १७
आ मस्तकतलाद्यस्तु निमज्जेत् पङ्कसागरे।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥ १८
भस्माङ्गारांश्च केशांश्च नदीं शुष्कां भुजङ्गमान्।
पश्येद्यो दशरात्रन्तु न स जीवति तादृशः ॥ १९
कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः।
पाषाणैस्ताड्यते स्वप्ने यः सद्यो न स जीवति ॥ २०
सूर्य्योदये प्रत्युषसि प्रत्यक्षं यस्य वै शिवाः।
क्रोशन्त्यभिमुखं प्रेत्य स गतायुर्भवेन्नरः ॥ २१
यस्य वा स्नातमात्रस्य हृदयं पीड्यते भृशम्।
जायते दन्तहर्षश्च तं गतायुषमादिशेत् ॥ २२
भूयो भूयश्श्वसेद्यस्तु रात्रौ वा यदि वा दिवा।
दीपगन्धञ्च नाघ्राति विद्याद्मृत्युमुपस्थितम् ॥ २३
रात्रौ चेन्द्रधनुः पश्येद्दिवा नक्षत्रमण्डलम्।
परनेत्रेषु चात्मानं न पश्येन्न स जीवति ॥ २४
नेत्रमेकं स्रवेद्यस्य कर्णौ स्थानाच्च भ्रश्यतः।
वक्रा च नासा भवति विज्ञेयो गतजीवितः ॥ २५
यस्य कृष्णा खरा जिह्वा पद्माभासञ्च वै मुखम्।
गण्डे वा पिण्डिका रक्ते तस्य मृत्युरुपस्थितः ॥ २६

मुक्तकेशो हसंश्चैव गायन् नृत्यंश्च यो नरः।
याम्यामभिमुखं गच्छेत् तदन्तं तस्य जीवितम्॥ २७
यस्य श्वेतघनाभासा श्वेतसर्षपसन्निभा।
श्वेता च मूर्त्तिर्ह्यसकृत् तस्य मृत्युरुपस्थितः॥ २८
उष्ट्रा वा रासभा वापि-युक्ताः स्वप्ने रथेऽशुभाः।
यस्य सोऽपि न जीवेत् तु दक्षिणाभिमुखो गतः॥२९
द्वे वाथ परमेऽरिष्टे एकीभूतः परं भवेत्।
घोषं न शृणुयात् कर्णे ज्योतिर्नेत्रे न पश्यति॥ ३०
श्वभ्रे यो निपतेत् स्वप्ने द्वारञ्चापि पिधीयते।
न चोत्तिष्ठति यः श्वभ्रात् तदन्तं तस्य जीवितम्॥३१
ऊर्ध्वा च दृष्टिर्न च सम्प्रतिष्ठा
रक्ता पुनः सम्परिवर्त्तमाना।
मुखस्य शोषः सुषिरा च नाभि-
रत्युष्णमूत्रो विषमस्थ एव॥ ३२
दिवा वा यदि वा रात्रौ प्रत्यक्षं यो निहन्यते।
हन्तारं न च पश्येच्च स गतायुर्न जीवति॥ ३३
अग्निप्रवेशं कुरुते स्वप्नान्ते यस्तु मानवः।
स्मृतिं नोपलभेच्चापि तदन्तं तस्य जीवितम्॥ ३४
यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः।
कृष्णं रक्तमपि स्वप्ने तस्य मृत्युरुपस्थितः॥ ३५
अरिष्टे सूचिते देहे तस्मिन् काल उपस्थिते।
त्यक्त्वा खेदं विषादञ्च उपेयाद्बुद्धिमान् नरः॥ ३६
प्राचीं वा यदि वोदीचीं दिशं निष्क्रम्य वै शुचिः।
समेति स्थावरे देशे विविक्ते जन्तुवर्ज्जिते॥ ३७
उदङ्मुखः प्राङ्मुखो वा स्वस्थश्चाचान्त एव च।
स्वस्तिकेनोपविष्टस्तु नमस्कृत्वा महेश्वरम्॥ ३८
समकायशिरोग्रीवो धारयन् नावलोकयेत्।
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता॥ ३९
प्रागुदक्प्रवणे देशे तथा युञ्जीत शास्त्रवित्।
कामं वितर्कं प्रीतिञ्च सुखदुःखे उभे तथा॥ ४०
निगृह्य मनसा सर्व्वं शुक्लं ध्यानमनुस्मरेत्।
घ्राणे च रसने नित्यं चक्षुषी स्पर्शने तथा॥ ४१
श्रोत्रे मनसि बुद्धौ च तत्र वक्षसि धारयेत्।
कालकर्म्माणि विज्ञाय समूहेष्वेव नित्यशः॥ ४२
द्वादशाध्यात्ममित्येवं योगधारणमुच्यते।
शतमर्द्धशतं वापि धारणां मूर्ध्नि धारयेत्॥ ४३
खिन्नस्य धारणायोगाद्वायुरूर्द्ध्वं प्रवर्त्तते।

ततश्चापूरयेद्देहमोङ्कारेण समन्वितः॥ ४४
तथोङ्कारमयो योगी अक्षरे लक्षरो भवेत्।
अत ऊर्द्ध्वं प्रवक्ष्यामि ओङ्कारप्राप्तिलक्षणम्॥ ४५
एष त्रिमात्रो विज्ञेयो व्यञ्जनञ्चात्र चेश्वरः।
प्रथमा विद्युती मात्रा द्वितीया तामसी स्मृता॥ ४६
तृतीयां निर्गुणाञ्चैव मात्रामक्षरगामिणीम्।
गान्धारी चैव विज्ञेया गान्धारस्वरसम्भवा॥ ४७
पिपीलिकागतिस्पर्शा प्रयुक्ता मूर्ध्नि लक्ष्यते।
यथा प्रयुक्त ओङ्कारः प्रतिनिर्याति मूर्द्धनि॥ ४८
तथोङ्कारमयो योगी लक्षरे लक्षरो भवेत्।
प्रणवो धनुः शरो ह्यात्मा ब्रह्म लक्षणमुच्यते॥ ४९
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्।
ओमित्येकाक्षरं ह्येतद्गुहायां निहितं पदम्॥ ५०
ओमित्येतत् त्रयो लोकास्त्रयो वेदास्त्रयोऽग्नयः।
विष्णुक्रमास्त्रयस्त्वेते ऋक् सामानि यजूंषि च॥ ५१
मात्रा चार्द्धञ्च तिस्रस्तु विज्ञेयाः परमार्थतः।
तत्प्रयुक्तस्तु यो योगी तस्य सालोक्यमाप्नुयात्॥५२
अकारो ह्यक्षरो ज्ञेय उकारः स्वरितः स्मृतः।
मकारसहितोङ्कारस्त्रिमात्र इति संज्ञितः॥ ५३
अकारस्त्वेष भूर्लोक उकारो भुव उच्यते।
सव्यञ्जनो मकारस्तु स्वर्लोक इति गीयते॥ ५४
ओङ्कारस्तु त्रयो लोकाः शिरस्तस्य त्रिविष्टपम्।
भुवनाङ्गञ्च तत् सर्व्वं ब्राह्मं तत् पदमुच्यते॥ ५५
मात्रापादो रुद्रलोको ह्यमात्रन्तु शिवं पदम्।
एवं ध्यानविशेषेण तत् पदं समुपास्यते॥ ५६
तस्माद्ध्यानरतिर्नित्यममात्रं हि तदक्षरम्।
उपास्यं हि प्रयत्नेन शाश्वतं सुखमिच्छता॥ ५७
ह्रस्वा तु प्रथमा मात्रा ततो दीर्घा ह्यनन्तरम्।
ततः प्लुतवती चैव तृतीया चोपदिश्यते॥ ५८
एतास्तु मात्रा विज्ञेया यथावदनुपूर्व्वशः।
यावदेव तु शक्यन्ते धार्य्यन्ते तावदेव हि॥ ५९
इन्द्रियाणि मनो बुद्धिं ध्यायन्नात्मनि यः सदा।
अर्द्धं तन्मात्रमपि चेच्छृणु यत् फलमाप्नुयात्॥ ६०
मासि मासेऽश्वमेधेन यो यजेत शतं समाः।
तेन यत् प्राप्यते पुण्यं मात्रया तदवाप्नुयात्॥ ६१
न तथा तपसोग्रेण न यज्ञैर्भूरिदक्षिणैः।
यत् फलं प्राप्यते सम्यङ्मात्रया तदवाप्नुयात्॥ ६२

तत्र चैषा तु या मात्रा प्लुता नामोपदिश्यते ।
एषा एव भवेत् कार्य्या गृहस्थानान्तु योगिनाम्॥६३
एषाञ्चैव विशेषेण ऐश्वर्य्यं ह्यष्टलक्षणे ।
अणिमाद्ये तु विज्ञेया तस्माद्युञ्जीत तां द्विजाः॥६४
एवं हि योगसंयुक्तः शुचिर्दान्तो जितेन्द्रियः ।
आत्मानं विद्यते यस्तु स सर्व्वं विन्दते द्विजाः ॥ ६५
तस्मात् पाशुपतैर्योगैरात्मानं चिन्तयेद्बुधः ।
आत्मानं जानते ये तु शुचयस्ते न संशयः ॥ ६६
ऋचो यजूंषि सामानि वेदोपनिषदस्तथा ।
योगज्ञानादवाप्नोति ब्राह्मणोऽध्यात्मचिन्तकः ॥६७
सर्व्वदेवमयो भूत्वा अभूतः स तु जायते ।
योनिसंक्रमणं त्यक्त्वा याति वै शाश्वतं पदम् ॥ ६८
यथा वृक्षात् फलं पक्वं पवनेन समीरितम् ।
नमस्कारेण रुद्रस्य तथा पापं प्रणश्यति ॥ ६९
तत्र रुद्रनमस्कारः सर्व्वकर्म्मफलो ध्रुवः ।
अन्यदेवनमस्कारान्न तत् फलमवाप्नुयात् ॥ ७०
तस्मात् त्रिप्रवणं योगी उपासीत महेश्वरम् ।
दशविस्तारकं ब्रह्म तथा च ब्रह्मविस्तरैः ॥ ७१
एवं ध्यानसमायुक्तः स्वदेहं यः परित्यजेत् ।
स याति शिवसायुज्यं समुद्धृत्य कुलत्रयम् ॥ ७२
अथवारिष्टमालोक्य मरणे समुपस्थिते ।
अविमुक्तेश्वरं गत्वा वाराणस्यान्तु शोभनम् ।
येन केनापि वा देहं सन्त्यजेन्मुच्यते नरः ॥ ७३
श्रीपर्व्वते वा विप्रेन्द्राः सन्त्यजेत् स्वतनुं नरः ।
स याति शिवसायुज्यं नात्र कार्य्या विचारणा ॥ ७४
अविमुक्तं परं चैवं जन्तूनां मुक्तिदं सदा ।
सेवेत सततं धीमान् विशेषान्मरणान्तिके ॥ ७५

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
अरिष्ट कथनं नामैकनवति
तमोऽध्यायः ॥ ९१ ॥

## द्विनवतितमोऽध्यायः ।

ऋषय ऊचुः ।

एवं वाराणसी पुण्या यदि सूत महामते ।
वक्तुमर्हसि चास्माकं तत्प्रभावं हि साम्प्रतम् ॥ १
क्षेत्रस्यास्य च माहात्म्यमविमुक्तस्य शोभनम् ।
विस्तरेण यथान्यायं श्रोतुं कौतूहलं हि नः ॥

सूत उवाच ।

वक्ष्ये संक्षेपतः सम्यग्वाराणस्याः सुशोभनम् ।
अविमुक्तस्य माहात्म्यं यथाह भगवान् भवः ॥
विस्तरेण मया वक्तुं ब्रह्मणा च महात्मना ।
शक्यते नैव विप्रेन्द्रा वर्षकोटिशतैरपि ॥ ४
देवः पुरा कृतोद्वाहः शङ्करो नीललोहितः ।
हिमवच्छिखराद्देव्या हैमवत्या गणेश्वरैः ॥
वाराणसीमनुप्राप्य दर्शयामास शङ्करः ।
अविमुक्तेश्वरं लिङ्गं वासं तत्र चकार सः ॥ ६
वाराणसी-कुरुक्षेत्र-श्रीपर्व्वत-महालये ।
तुङ्गेश्वरे च केदारे तत्स्थाने यो यतिर्भवेत् ॥
योगी पाशुपते सम्यग्दिनमेकं यतिर्भवेत् ।
तस्मात् सर्व्वं परित्यज्य चरेत् पाशुपतं व्रतम् ॥
देवोद्याने वसेत् तत्र सर्व्वोद्यानमनुत्तमम् ।
मनसा निर्म्ममे रुद्रो विमानञ्च सुशोभनम् ॥ ९
दर्शयामास च तदा देवोद्यानमनुत्तमम् ।
हैमवत्याः स्वयं देवः सनन्दी परमेश्वरः ॥ १०
क्षेत्रस्यास्य च माहात्म्यमविमुक्तस्य शङ्करः ।
उक्तवान् परमेशानः पार्व्वत्याः प्रीतये भवः ॥ ११

प्रफुल्लनानाविधगुल्मशोभितं
लताप्रतानादिमनोहरं बहिः ।
विरूढपुष्पैः परितः प्रियङ्गुभिः
सुपुष्पितैः कण्टकितैश्च केतकैः ॥ १२
तमालगुल्मैर्निचितं सुगन्धिभि-
र्निकामपुष्पैर्बकुलैश्च सर्व्वतः ।
अशोकपुन्नागशतैः सुपुष्पितै-
र्द्विरेफमालाकुलपुष्पसञ्चयैः ॥ १३
क्वचित् प्रफुल्लाम्बुजरेणुभूषितै-
र्विहङ्गमैश्चानुकलप्रणादिभिः ।
विनादितं सारसचक्रवाकैः
प्रमत्तदात्यूहवरैश्च सर्व्वतः ॥ १४
क्वचिच्च केकारुतनादितं शुभं
क्वचिच्च कारण्डवनादनादितम् ।
क्वचिच्च मत्तालिकुलाकुलीकृतं
मदाकुलाभिर्भ्रमराङ्गनादिभिः ॥ १५
निषेवितं चारुसुगन्धिपुष्पकैः

क्वचित् सुपुष्पैः सहकारवृक्षैः।
लतोपगूढैस्तिलकैश्च गूढं
प्रगीतविद्याधरसिद्धचारणम्॥ १६
प्रवृत्तनृत्याप्सरोगणं
प्रहृष्टनानाविधपक्षिसेवितम्।
प्रवृत्तहारीतकुलोपनादितं
मृगेन्द्रनादाकुलमत्तमानसैः॥ १७
क्वचित् क्वचिद्गन्धकदम्बकैर्मृगै-
र्विलूनदर्भाङ्कुरपुष्पसञ्चयम्।
प्रफुल्लनानाविधचारुपङ्कजैः
सरस्तडागैरुपशोभितं क्वचित्॥ १८
विटपनिचयलीनं नीलकण्ठाभिरामं
मदमुदितविहङ्गप्राप्तनादाभिरामम्।
कुसुमिततरुशाखालीनमत्तद्विरेफं
नवकिसलयशोभाशोभितं प्रांशुशाखम्॥ १९
क्वचिच्च दन्तक्षतचारुवीरुधं
क्वचिल्लतालिङ्गितचारुवृक्षकम्।
क्वचिद्विलासालसगामिनीभि-
र्निषेवितं किम्पुरुषाङ्गनाभिः॥ २०
पारावतध्वनिविकूजितचारुशृङ्गै-
रभ्रङ्कषैः सितमनोहरचारुरूपैः।
आकीर्णपुष्पनिकरप्रविभक्तहंसै-
र्विभ्राजितं त्रिदशदिव्यकुलैरनेकैः॥ २१
फुल्लोत्पलाम्बुजवितानसहस्रयुक्तं
तोयाशयैः समनुशोभितदेवमार्गम्।
मार्गान्तराकलितपुष्पविचित्रपङ्क्ति-
सम्बद्धगुल्मविटपैर्विविधैरुपेतम्॥ २२
तुङ्गाग्रैर्नीलपुष्पैः स्तवकभरनत-
प्रांशुशाखैरशोकै-
र्दोलाप्रान्तान्तलीनश्रुतिसुखजनकै-
र्भासितान्तं मनोज्ञैः।
रात्रौ चन्द्रस्य भासा कुसुमिततिलकै-
रेकतां सम्प्रयातं
छायासुप्तप्रबुद्धस्थितहरिणकुला-
लुप्तदूर्वाङ्कुराग्रम्॥ २३
हंसानां पक्षवातप्रचलितकमल-
स्वच्छविस्तीर्णतोयं
तोयानां तीरजातप्रचकितकदली-
चाटुनृत्यन्मयूरम्।
मायूरैः पक्षचन्द्रैः क्वचिदवनिगतै-
रञ्जितक्ष्माप्रदेशं
देशे देशे विलीनप्रमुदितविलस-
न्मत्तहारीतवृन्दम्॥ २४
सारङ्गैः क्वचिदुपशोभितप्रदेशं
प्रच्छन्नं कुसुमचयैः क्वचिद्विचित्रैः।
हृष्टाभिः क्वचिदपि किन्नराङ्गनाभि-
र्वीणाभिः सुमधुरगीतनृत्यकण्ठम्॥ २५
संसृष्टैः क्वचिदुपलिप्तकीर्णपुष्पै-
रावासैः परिवृतपादपं मुनीनाम्।
आ मूलात् फलनिचितैः क्वचिद्विशालै-
रुत्तुङ्गैः पनसमहीरुहैरुपेतम्॥ २६
फुल्लातिमुक्तकलतागृहनीतसिद्ध-
सिद्धाङ्गनाकनकनूपुररावरम्यम्।
रम्यं प्रियङ्गुतरुमञ्जरिसक्तभृङ्गं
भृङ्गावलीकवलिताम्रकदम्बपुष्पम्॥ २७
पुष्पोत्कराऽनिलविघूर्णितवारिरम्यं
रम्यद्विरेफविनिपातितमञ्जुगुल्मम्।
गुल्मान्तरप्रसभभीतमृगीसमूहं
वातेरितं तनुभृतामपवर्गदात्र॥ २८
चन्द्रांशुजालशबलैस्तिलकैर्मनोज्ञैः
सिन्दूर-कुङ्कुम-कुसुम्भनिभैरशोकैः।
चामीकरद्युतिसमैरथ कर्णिकारैः
पुष्पोत्करैरुपचितं सुविशालशाखैः॥ २९
क्वचिदञ्जनचूर्णाभैः क्वचिद्विद्रुमसन्निभैः।
क्वचित् काञ्चनसङ्काशैः पुष्पैराचितभूतलम्॥ ३०
पुन्नागेषु द्विजशतविरुतं
रक्ताशोकस्तवकभरनतम्।
रम्यापान्तश्रमहरभवनं
फुल्लाब्जेषु भ्रमरविलसितम्॥ ३१
सकलभुवनभर्त्ता लोकनाथस्तदानीं
तुहिनशिखरपुत्र्या सार्द्धमिष्टैर्गणेशैः।
विविधतरुविशालं मत्तहृष्टान्यपुष्टै-
रुपवनमतिरम्यं दर्शयामास देव्याः॥ ३२
पुष्पैर्वन्यैः शुभशुभतमैः कल्पितैर्दिव्यभूषै-

देवीं दिव्यामुपवनगतां भूषयामास सर्व्वः।
सा चाप्येनं तुहिनगिरिसुता शङ्करं देवदेवं
पुष्पैर्दिव्यैः शुभतरतमैर्भूषयामास भक्त्या॥ ३३
सम्पूज्य पूज्यं त्रिदशेश्वराणां
सम्प्रेक्ष्य चोद्यानमतीव रम्यम्।
गणेश्वरैर्नन्दिमुखैश्च सार्द्ध-
मुवाच देवं प्रणिपत्य देवी॥ ३४
श्रीदेव्युवाच।
उद्यानं दर्शितं देव प्रभया परया युतम्।
क्षेत्रस्य च गुणान् सर्व्वान् पुनर्मे वक्तुमर्हसि॥ ३५
अस्य क्षेत्रस्य माहात्म्यमविमुक्तस्य सर्व्वथा।
वक्तुमर्हसि देवेश देवदेव वृषध्वज॥ ३६
सूत उवाच।
देव्यास्तद्वचनं श्रुत्वा देवदेवो वरप्रभुः।
आघ्राय वदनाम्भोजं तदाह गिरिजां हसन्॥ ३७
श्रीभगवानुवाच।
इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम।
सर्व्वेषामेव जन्तूनां हेतुर्मोक्षस्य सर्व्वदा॥ ३८
अस्मिन् सिद्धाः सदा देवि मदीयं व्रतमास्थिताः।
नानालिङ्गधरा नित्यं मम लोकाभिकाङ्क्षिणः॥ ३९
अभ्यस्यन्ति परं योगं युक्तात्मानो जितेन्द्रियाः।
नानावृक्षसमाकीर्णे नानाविहगशोभिते॥ ४०
कमलोत्पलपुष्पाढ्यैः सरोभिः समलङ्कृते।
अप्सरोगणगन्धर्व्वैः सदा संसेविते शुभे॥ ४१
रोचते मे सदा वासो येन कार्य्येण तच्छृणु।
मन्मना मम भक्तश्च मयि नित्यार्पितक्रियः॥ ४२
यथा मोक्षमवाप्नोति अन्यत्र न तथा क्वचित्।
कामं ह्यत्र मृतो देवि जन्तुर्मोक्षाय कल्पते॥ ४३
एतन्मम पुरं दिव्यं गुह्याद्गुह्यतमं महत्।
ब्रह्मादयो विजानन्ति ये च सिद्धा मुमुक्षवः॥ ४४
अतः परमिदं क्षेत्रं परा चेयं गतिर्मम।
विमुक्तं न मया यस्मान्मोक्ष्यते वा कदाचन॥ ४५
मम क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम्।
नैमिषे च कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे॥ ४६
स्नानात् संसेवनाद्वापि न मोक्षः प्राप्यते यतः।
इह सम्प्राप्यते येन तत एतद्विशिष्यते॥ ४७
प्रयागे वा भवेन्मोक्ष इह वा मत्परिग्रहात्।
प्रयागादपि तीर्थाग्र्यादविमुक्तमिदं शुभम्॥ ४८
धर्म्मस्योपनिषत् सत्यं मोक्षस्योपनिषच्छमः।
क्षेत्रतीर्थोपनिषदं न विदुर्बुधसत्तमाः॥ ४९
कामं भुञ्जन् स्वपन्क्रीडन्कुर्व्वन्हि विविधाः क्रियाः।
अविमुक्ते त्यजेत् प्राणान् जन्तुर्मोक्षाय कल्पते॥
कृत्वा पापसहस्राणि पिशाचत्वं वरं नृणाम्।
न तु शक्रसहस्रत्वं स्वर्गे काशीपुरीं विना॥ ५१
तस्मात् संसेवनीयं हि अविमुक्तं हि मुक्तये।
जैगीषव्यः परां सिद्धिं गतो यत्र महातपाः॥ ५२
अस्य क्षेत्रस्य माहात्म्याद्भक्त्या च मम भावितः।
जैगीषव्यगुहा श्रेष्ठा योगिनां स्थानमिष्यते॥ ५३
ध्यायतस्तत्र मां नित्यं योगाग्निर्दीप्यते भृशम्।
कैवल्यं परमं यान्ति देवानामपि दुर्लभम्॥ ५४
अव्यक्तलिङ्गैर्मुनिभिः सर्व्वसिद्धान्तवेदिभिः।
इह सम्प्राप्यते मोक्षो दुर्लभोऽन्यत्र कर्हिचित्॥ ५५
तेभ्यश्चाहं प्रवक्ष्यामि योगैश्वर्य्यमनुत्तमम्।
आत्मनश्चैव सायुज्यमीप्सितं स्थानमेव च॥ ५६
कुबेरोऽत्र मम क्षेत्रे मयि सर्व्वार्पितक्रियः।
क्षेत्रसंसेवनादेव गणेशत्वमवाप ह॥ ५७
सम्वर्त्तो भविता यश्च सोऽपि भक्तो ममैव तु।
इहैवाराध्य मां देवि सिद्धिं यास्यत्यनुत्तमाम्॥
पराशरसुतो योगी ऋषिर्व्यासो महातपाः।
मम भक्तो भविष्यश्च वेदसंस्थाप्रवर्त्तकः॥ ५८
रंस्यते सोऽपि पद्माक्षि क्षेत्रेऽस्मिन् मुनिपुङ्गवः।
ब्रह्मा देवर्षिभिः सार्द्धं विष्णुर्वापि दिवाकरः॥ ६०
देवराजस्तथा शक्रो येऽपि चान्ये दिवौकसः।
उपासते महात्मानः सर्व्वे मामिह सुव्रते॥ ६१
अन्येऽपि योगिनो दिव्याश्छन्नरूपा महात्मनः।
अनन्यमनसो भूत्वा मामिहोपासते सदा॥ ६२
विषयासक्तचित्तोऽपि त्यक्तधर्म्मरतिर्नरः।
इह क्षेत्रे मृतः सोऽपि संसारे न पुनर्भवेत्॥ ६३
ये पुनर्निर्म्ममा धीराः सत्त्वस्था विजितेन्द्रियाः।
व्रतिनश्च निरारम्भाः सर्व्वे ते मयि भाविताः॥ ६४
देवदेवं समासाद्य धीमन्तः सङ्गवर्ज्जिताः।
गता इह परं मोक्षं प्रसादान्मम सुव्रते॥ ६५
जन्मान्तरसहस्रेषु यन्न योगी समाप्नुयात्।
तमिहैव परं मोक्षं प्रसादान्मम सुव्रते॥ ६६

गोप्रेक्षकमिदं क्षेत्रं ब्रह्मणा स्थापितं पुरा।
कैलासभवनञ्चात्र पश्य दिव्यं वरानने ॥ ६७
गोप्रेक्षकमथागम्य दृष्ट्वा मामत्र मानवः।
न दुर्गतिमवाप्नोति कल्मषैश्च विमुच्यते ॥ ६८
कपिलाह्रदमित्येवं तथा वै ब्रह्मणा कृतम्।
गवां स्तन्यजतोयेन तीर्थं पुण्यतमं महत् ॥ ६९
अत्रापि स्वयमेवाहं वृषध्वज इति स्मृतः।
सान्निध्यं कृतवान् देवि सदाहं दृश्यते त्वया ॥ ७०
भद्रतोयञ्च पश्येह ब्रह्मणा च कृतं ह्रदम्।
सर्व्वहं वैरहं देवि अस्मिन् देवि प्रसादितः ॥ ७१
गच्छोपशममीशेति उपशान्तः शिवस्तथा।
अत्राहं ब्रह्मणानीय स्थापितः परमेष्ठिना ॥ ७२
ब्रह्मणा चापि संगच्छ विष्णुना स्थापितः पुनः।
ब्रह्मणापि ततो विष्णुः प्रोक्तः संविग्नचेतसा ॥ ७३
मया नीतमिदं लिङ्गं कस्मात् स्थापितवानसि।
तमुवाच पुनर्विष्णुर्ब्रह्माणं कुपितान्नम् ॥ ७४
रुद्रे देवे ममात्यन्तं परा भक्तिर्महत्तरा।
मयेव स्थापितं लिङ्गं तव नाम्ना भविष्यति ॥ ७५
हिरण्यगर्भ इत्येवं ततोऽत्राहं समास्थितः।
दृष्ट्वेनमपि देवेशं मम लोकं व्रजेन्नरः ॥ ७६
ततः पुनरपि ब्रह्मा मम लिङ्गमिदं शुभम्।
स्थापयामास विधिवद्भक्त्या परमया युतः ॥ ७७
स्वर्लीनेश्वर इत्येवमत्राहं स्वयमागतः।
प्राणानिह नरस्त्यक्त्वा न पुनर्जायते क्वचित् ॥ ७८
अनन्या सा गतिस्तस्य योगिनाञ्चैव या स्मृता।
अस्मिन्नपि मया देवि दैत्यो दैवतकण्टकः ॥ ७९
व्याघ्ररूपं समास्थाय निहतो दर्पितो बली।
व्याघ्रेश्वर इति ख्यातो नित्यमत्राहमास्थितः ॥ ८०
न पुनर्दुर्गतिं याति दृष्ट्वेनं व्याघ्रमीश्वरम्।
उत्पलो विदलश्चैव यौ दैत्यौ ब्रह्मणा पुरा ॥ ८१
स्त्रीवध्यौ दर्पितौ दृष्ट्वा त्वयैव निहतौ रणे।
सावज्ञं कन्दुकेनात्र तस्येदं देहमास्थितम् ॥ ८२
आदावत्राहमागम्य प्रस्थितो गणैः सह।
ज्येष्ठस्थानमिदं तस्मादेतन्मे पुण्यदर्शनम् ॥ ८३
देवैः समन्तादेतानि लिङ्गानि स्थापितान्यतः।
दृष्ट्वापि नियतो मर्त्यो देहभेदे गणो भवेत् ॥ ८४
पित्रा ते शैलराजेन पुरा हिमवता स्वयम्।
मम प्रियहितं स्थानं ज्ञात्वा लिङ्गं प्रतिष्ठितम् ॥ ८५
शैलेश्वरमिति ख्यातं दृश्यतामिह चादरात्।
दृष्ट्वेतन्मनुजो देवि न दुर्गतिमतो व्रजेत् ॥ ८६
नद्येषा वरुणा देवि पुण्या पापप्रमोचनी।
क्षेत्रमेतदलङ्कृत्य जाह्नव्या सह सङ्गता ॥ ८७
स्थापितं ब्रह्मणा चापि सङ्गमे लिङ्गमुत्तमम्।
सङ्गमेश्वरमित्येवं ख्यातं जगति दृश्यताम् ॥ ८८
सङ्गमे देवनद्या हि यः स्नात्वा मनुजः शुचिः।
अर्चयेत् सङ्गमेशानं तस्य जन्मभयं कुतः ॥ ८९
इदं मन्ये महाक्षेत्रं निवासो योगिनां परम्।
क्षेत्रमध्ये च यत्राहं स्वयं भूत्वाग्रमास्थितः ॥ ९०
मध्यमेश्वरमित्येवं ख्यातः सर्व्वसुरासुरैः।
सिद्धानां स्थानमेतद्धि मदीयव्रतधारिणाम् ॥ ९१
योगिनां मोक्षलिप्सूनां ज्ञानयोगरतात्मनाम्।
दृष्ट्वेनं मध्यमेशानं जन्म प्रति न शोचति ॥ ९२
स्थापितं लिङ्गमेतत् तु शुक्रेण भृगुसूनुना।
नाम्ना शुक्रेश्वरं नाम सर्व्वसिद्धामरार्चितम् ॥ ९३
दृष्ट्वेनं नियतः सद्यो मुच्यते सर्व्वकिल्बिषैः।
मृतश्च न पुनर्जन्तुः संसारी तु भवेन्नरः ॥ ९४
पुरा जम्बूकरूपेण असुरो देवकण्टकः।
ब्रह्मणो हि वरं लब्ध्वा गोमायुर्बलदर्पितः ॥ ९५
निहतो हिमवत्पुत्रि जम्बुकेशस्ततो ह्यहम्।
अद्यापि जगति ख्यातं सुरासुरनमस्कृतम् ॥ ९६
दृष्ट्वेनमपि देवेशं सर्व्वान् कामानवाप्नुयात्।
ग्रहैः शुक्रपुरोगैश्च एतानि स्थापितानि वै ॥ ९७
पश्य पुण्यानि लिङ्गानि सर्व्वकामप्रदानि तु।
एवमेतानि पुण्यानि मन्निवासानि पार्व्वति ॥ ९८
कथितानि मम क्षेत्रे गुह्यञ्चान्यदिदं शृणु।
चतुःक्रोशं चतुर्दिक्षु क्षेत्रमेतत् प्रकीर्त्तितम् ॥ ९९
योजनं विद्धि चार्व्वङ्गि मृत्युकालेऽमृतप्रदम्।
महालयगिरिस्थं मां केदारे च व्यवस्थितम् ॥ १००
गणत्वं लभते दृष्ट्वा ह्यस्मिन् मोक्षो ह्यवाप्यते।
गाणपत्यं लभेद्यस्माद्यतः सा मुक्तिरुत्तमा ॥ १०१
ततो महालयात् तस्मात् केदाराम्मध्यमादपि।
स्मृतं पुण्यतमं क्षेत्रमविमुक्तं वरानने ॥ १०२
केदारं मध्यमं क्षेत्रं स्थानञ्चैव महालयम्।
मम पुण्यानि भूर्लोके तेभ्यः श्रेष्ठतमन्त्विदम् ॥ १०३

यतः सृष्टास्त्विमे लोकास्ततः क्षेत्रमिदं शुभम्।
कदाचिन्न मया मुक्तमविमुक्तं ततोऽभवत् ॥ १०४
अविमुक्तेश्वरं लिङ्गं मम दृष्ट्वेह मानवः।
सद्यः पापविनिर्म्मुक्तः पशुपाशैर्विमुच्यते ॥ १०५
शैलेशं सङ्गमेशञ्च स्वर्लीनं मध्यमेश्वरम्।
हिरण्यगर्भमीशानं गोप्रेक्षं वृषभध्वजम् ॥ १०६
उपशान्तं शिवञ्चैव ज्येष्ठस्थाननिवासिनम्।
शुक्रेश्वरञ्च विख्यातं व्याघ्रेशं जम्बुकेश्वरम्।
दृष्ट्वा न जायते मर्त्त्यः संसारे दुःखसागरे ॥ १०७
सूत उवाच।
एवमुक्त्वा महादेवो दिशः सर्व्वा व्यलोकयत्।
विलोक्य संस्थिते पश्चाद्देवदेवे महेश्वरे ॥ १०८
अकस्मादभवत् सर्व्वः स देशो ज्वलितो यथा।
ततः पाशुपताः सिद्धा भस्माभ्यङ्गसितप्रभाः ॥१०९
माहेश्वरा महात्मानस्तथा वै नियतव्रताः।
बहवः शतशोऽभ्येत्य नमश्चक्रुर्महेश्वरम् ॥ ११०
पुनर्निरीक्ष्य योगीशं ध्यानयोगञ्च कृत्स्नशः।
तस्थुरात्मानमास्थाय लीयमाना इवेश्वरे ॥ १११
स्थितानां स तदा तेषां देवदेव उमापतिः।
स बिभ्रत् परमां मूर्त्तिं बभूव पुरुषः प्रभुः ॥ ११२
कृत्स्नं जगदिदैकस्थं कर्त्तुमन्त इव स्थितः।
तस्य तां परमां मूर्त्तिमास्थितस्य जगत्प्रभोः ॥ ११३
न शशाक पुनर्द्रष्टुं हृष्टरोमा गिरीन्द्रजा।
ततस्तद्दृष्टमाकारं बुद्ध्वा सा प्रकृतिस्थितम् ॥ ११४
प्रकृतेर्मूर्त्तिमास्थाय योगेन परमेश्वरी।
तं शशाक पुनर्द्रष्टुं हरस्य च महात्मनः ॥ ११५
ततस्ते लयमाधाय योगिनः पुरुषस्य तु।
विविशुर्हृदयं सर्व्वे दग्धसंसारबीजिनः ॥ ११६
पश्चाचरस्य वै बीजं संस्मरन्तः शुशोभनम्।
सर्व्वपापहरं दिव्यं पुरा चैव प्रकाशितम् ॥ ११७
नीललोहितमूर्त्तिस्थं पुनश्चक्रे वपुः शुभम्।
तं दृष्ट्वा शैलजा प्राह हृष्टसर्व्वतनूरुहा ॥ ११८
स्तुवती चरणौ नत्वा क इमे भगवन्निति।
तामुवाच सुरश्रेष्ठस्तदा देवीं गिरीन्द्रजाम् ॥ ११९
श्रीभगवानुवाच।
मदीयं व्रतमाश्रित्य भक्तिमद्भिर्दिजोत्तमैः।
अयैर्यैगा दृहाश्यस्तास्तेषामेकेन जन्मना ॥ १२०

क्षेत्रस्यास्य प्रभावेण भक्त्या च मम भामिनि।
अनुग्रहो मया ह्येवं क्रियते मूर्त्तितः स्वयम् ॥ १२१
तस्मादेतन्महत् क्षेत्रं ब्रह्माद्यैः सेवितं तथा।
श्रुतिमद्भिश्च विप्रेन्द्रैः संसिद्धैश्च तपस्विभिः ॥ १२२
प्रतिमासं तथाष्टम्यां प्रतिमासं चतुर्द्दशीम्।
उभयोः पक्षयोर्देवि वाराणस्यामुपास्यते ॥ १२३
शशिभानूपरागे च कार्त्तिक्याञ्च विशेषतः।
सर्व्वपर्व्वसु पुण्येषु विषुवेष्वयनेषु च ॥ १२४
पृथिव्यां सर्व्वतीर्थानि वाराणस्यान्तु जाह्नवीम्।
उत्तरप्रवहां पुण्यां मम मौलिविनिःसृताम् ॥ १२५
पितुस्ते गिरिराजस्य शुभां हिमवतः सुताम्।
पुण्यस्थानस्थितां पुण्यां पुण्यदिक्प्रवहां सदा।
भजन्ते सर्व्वतोऽभ्येत्य ये तान् शृणु वरानने।
सन्निहत्य कुरुक्षेत्रं साद्धं तीर्थशतैस्तथा ॥ १२७
पुष्करं निमिषञ्चैव प्रयागञ्च पृथूदकम्।
इमक्षेत्रं कुरुक्षेत्रं नैमिषं तीर्थसंयुतम् ॥ १२८
क्षेत्राणि सर्व्वतो देवि देवता ऋषयस्तथा।
सन्ध्या च ऋतवश्चैव सर्व्वा नद्यः सरांसि च ॥ १२९
समुद्राः सप्त चैवात्र देवतीर्थानि कृत्स्नशः।
भागीरथीं समेष्यन्ति सर्व्वपर्व्वसु सुव्रते ॥ १३०
अविमुक्तेश्वरं दृष्ट्वा दृष्ट्वा चैव त्रिविष्टपम्।
कालभैरवमासाद्य धूतपापानि सर्व्वशः ॥ १३१
भवन्ति हि सुरेशानि सर्व्वपर्व्वसु पर्व्वसु।
पृथिव्यां यानि पुण्यानि महत्यायतनानि च ॥ १३२
प्रविशन्ति सदाभ्येत्य पुण्यं पर्व्वसु पर्व्वसु।
अविमुक्तं क्षेत्रवरं महापापनिवर्हणम् ॥ १३३
केदारे चैव यल्लिङ्गं यच्च लिङ्गं महालये।
मध्यमेश्वरसंज्ञञ्च तथा पाशुपतेश्वरम् ॥ १३४
शङ्कुकर्णेश्वरञ्चैव गोकर्णौ च स्तथाद्युभौ।
द्रुमचण्डेश्वरं नाम भद्रेश्वरमनुत्तमम् ॥ १३५
स्थानेश्वरं तथैकाग्रं कालेश्वरमजेश्वरम्।
भैरवेश्वरमीशानं तथोङ्कारकसंज्ञितम् ॥ १३६
अमरेशं महाकालं ज्योतिषं भस्मगात्रकम्।
यानि चान्यानि पुण्यानि स्थानानि मम भूतले ॥ १३७
अष्टषष्टिसमाख्यानि रूढान्यन्यानि कृत्स्नशः।
तानि सर्व्वाण्यशेषाणि वाराणस्यां विशन्ति माम् ॥ १३८
सर्व्वपर्व्वसु पुण्येषु गुह्यञ्चैतदुदाहृतम्।

तेनेह लभते जन्तुर्मृतो दिव्यामृतं पदम् ॥ १३९
स्नातस्य चैव गङ्गायां दृष्टेन च मया शुभे।
सर्व्वयज्ञफलैस्तुल्यमिष्टैः शतसहस्रशः ॥ १४०
सद्य एव समाप्नोति किं ततः परमाद्भुतम्।
सर्व्वायतनमुख्यानि देवि भूमौ गिरिष्वपि ॥ १४१
परात्परतरं देवि बुध्यस्वेति मयोदितम्।
अविशब्देन पापस्तु वेदोक्तः कथ्यते द्विजैः ॥ १४२
तेन मुक्तं मया जुष्टमविमुक्तमतोच्यते।
इत्युक्त्वा भगवान् रुद्रः सर्व्वलोकमहेश्वरः ॥ १४३
सुदृष्टं कुरु देवेशि अविमुक्तं गृहं मम ॥ १४४
इत्युक्त्वा भगवान् देवस्तया सार्द्धमुमापतिः।
दर्शयामास भगवान् श्रीपर्व्वतमनुत्तमम् ॥ १४५
अविमुक्तेश्वरे नित्यमवसच्च सदा तया।
सर्व्वगत्वाच्च सर्व्वत्वात् सर्व्वात्मा सदसन्मयः ॥ १४६
श्रीपर्व्वतमनुप्राप्य देव्या देवेश्वरो हरः।
क्षेत्राणि दर्शयामास सर्व्वभूतपतिर्भवः ॥ १४७
कुण्डीप्रभञ्च परमं दिव्यं वै अवधेश्वरम्।
आशालिङ्गञ्च देवेशं दिव्यं यच्च बलेश्वरम् ॥ १४८
रामेश्वरञ्च परमं विष्णुना यत् प्रतिष्ठितम्।
दक्षिणद्वारपार्श्वे तु कुण्डलेश्वरमीश्वरम् ॥ १४९
पूर्व्वद्वारसमीपस्थं त्रिपुरान्तकमुत्तमम्।
त्रिव्रद्धं गिरिणा सार्द्धं देवदेवनमस्कृतम् ॥ १५०
मध्यमेश्वरमित्युक्तं त्रिषु लोकेषु विश्रुतम्।
अमरेश्वरञ्च वरदं देवैः पूर्व्वं प्रतिष्ठितम् ॥ १५१
गोचर्म्मेश्वरमीशानं तथेन्द्रेश्वरमद्भुतम्।
कर्म्मेश्वरञ्च विपुलं कार्य्यार्थं ब्रह्मणा कृतम् ॥ १५२
श्रीमल्लिकवटञ्चैव सदावासो ममाव्यये।
अजेन निर्म्मितं दिव्यं साक्षादजविलं शुभम् ॥ १५३
तत्रैव पादुके दिव्ये मदीये च विलेश्वरे।
तत्र शृङ्गाटकाकारं शृङ्गाटाचलमध्यमे ॥ १५४
शृङ्गाटकेश्वरं नाम श्रीदेव्या तु प्रतिष्ठितम्।
मल्लिकार्ज्जुनकञ्चैव मम वासमिदं शुभम् ॥ १५५
रजेश्वरञ्च पर्य्याये रजसा सुप्रतिष्ठितम्।
गजेश्वरञ्च वैशाखं कपोतेश्वरमव्ययम् ॥ १५६
कोटीश्वरं महातीर्थं रुद्रकोटिगणैः पुरा।
सेवितं देवि पश्चाद्य सर्व्वस्मादधिकं शुभम् ॥ १५७
द्विदेवकुलसंज्ञञ्च ब्रह्मणा दक्षिणे शुभम्।
उत्तरे स्थापितञ्चैव विष्णुना चैव शैलजम् ॥ १५८
महाप्रमाणलिङ्गञ्च मया पूर्व्वं प्रतिष्ठितम्।
पश्चिमे पर्व्वते पञ्च ब्रह्मेश्वर-मलेश्वरम् ॥ १५९
अलङ्कृतं त्वया ब्रह्मन् पुरस्तान्मुनिभिः सह।
इत्युक्त्वा तद्गृहे तिष्ठत्वं गच्छमिति स्मृतम् ॥ १६०
तत्रापि तीर्थं तीर्थज्ञे व्योमलिङ्गञ्च पञ्च मे।
कदम्बेश्वरमेतद्धि स्कन्देनैव प्रतिष्ठितम् ॥ १६१
गोमण्डलेश्वरञ्चैव नन्द्याद्यैः सुप्रतिष्ठितम्।
देवैः सर्व्वैस्तु शक्राद्यैः स्थापितानि वरानने ॥ १६२
श्रीमद्देवह्रदप्रान्ते स्थानानीमानि पञ्च मे।
तथा द्वारपुरे देवि तव द्वारे निपातिते ॥ १६३
त्वया हिताय जगतां द्वारकुण्डमिदं कृतम्।
शिवरुद्रपुरे चैव तत्कायोपरि सुव्रते ॥ १६४
तत्र पित्रा सुशैलेन स्थापितन्त्वचलेश्वरम्।
अलङ्कृतं मया ब्रह्म पुरस्तान्मुनिभिः सह ॥ १६५
चण्डिकेश्वरकं देवि चण्डिकेशा तवात्मजा।
चण्डिकानिर्म्मितं स्थानमम्बिकातीर्थमुत्तमम् ॥ १६६
रुचिकेश्वरकञ्चैव धारेषा कपिला शुभा।
एतेषु देवि स्थानेषु तीर्थेषु विविधेषु च ॥ १६७
पूजयेत्त्वां सदा भक्त्या मया सार्द्धं स मोदते।
श्रीशैले सन्त्यजेद्देहं ब्राह्मणो दग्धकिल्बिषः ॥ १६८
मुच्यते नात्र सन्देहो ह्यविमुक्ते यथाशुभम्।
महास्नानञ्च यः कुर्य्याद्घृतेन विधिनैव तु ॥ १६९
स याति मम सायुज्यं स्थानेष्वेतेषु सुव्रते।
स्नानं पलशतं ज्ञेयमभ्यङ्गं पञ्चविंशति ॥ १७०
पलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितम्।
स्नाप्य लिङ्गं मदीयन्तु गव्येनैव घृतेन च ॥ १७१
विशोध्य सर्व्वद्रव्यैस्तु वारिभिरभिषिञ्चति।
संमार्ज्जा शतयज्ञानां स्नानेन प्रयुतं तथा ॥ १७२
पूजया शतसाहस्रमनन्तं गीतवादिनाम्।
महास्नाने प्रसक्ते तु स्नानमष्टगुणं स्मृतम् ॥ १७३
जलेन केवलेनैव गन्धतोयेन भक्तितः।
अनुलेपनन्तु तत् सर्व्वं पञ्चविंशत्पलेन वै ॥ १७४
शमीपुष्पञ्च विधिना विल्वपत्रञ्च पङ्कजम्।
अन्यान्यपि च पुष्पाणि विल्वपत्रं न सन्त्यजेत् ॥ १७५
चतुर्द्रोणैर्महादेवमष्टद्रोणैरथापि वा।
दशद्रोणैस्तु नैवेद्यमष्टद्रोणैरथापि वा ॥ १७६

अतद्रोणसमं पुण्यमाढ़कोऽपि विधीयते।
वित्तहीनस्य विप्रस्य नात्र कार्य्या विचारणा ॥ १७७
भेरी-मृदङ्ग-मुरज-तिमिरा-पटहादिभिः।
वादित्रैर्विविधैश्चान्यैर्विनादैर्विविधैरपि ॥ १७८
जागरं कारयेद्यस्तु प्रार्थयेच्च यथाक्रमम्।
सभृत्य-पुत्र-दारैश्च तथा सम्बन्धि-बान्धवैः ॥ १७९
सार्द्धं प्रदक्षिणं कृत्वा प्रार्थयेल्लिङ्गमुत्तमम्।
द्रव्यहीनं क्रियाहीनं श्रद्धाहीनं सुरेश्वर ॥ १८०
कृतं वा न कृतं वापि क्षन्तुमर्हसि शङ्कर।
इत्युक्त्वा वै जपेद्रुद्रं त्वरितं शान्तिमेव च ॥ १८१
जपित्वैवं महावीजं तथा पञ्चाक्षरस्य वै।
स एवं सर्व्वतीर्थेषु सर्व्वयज्ञेषु यत् फलम् ॥ १८२
तत् फलं समवाप्नोति वाराणस्यां यथा मृतः।
तथैव मम सायुज्यं लभते नात्र संशयः ॥ १८३
मत्प्रियार्थमिदं कार्य्यं मन्त्रैर्विधिपूर्व्वकम्।
ये न कुर्व्वन्ति ते भक्ता न भवन्ति न संशयः ॥ १८४

सूत उवाच।

निशम्य वचनं देवी गत्वा वाराणसीं पुरीम्।
अविमुक्तेश्वरं लिङ्गं पयसा च घृतेन च ॥ १८५
अर्च्चयामास देवेशं रुद्रं भुवननायकम्।
अविमुक्ते च तपसा मन्दरस्य महात्मनः ॥ १८६
कल्पयामास वै क्षेत्रं मन्दरे चारुकन्दरे।
तत्रान्धकं महादैत्यं हिरण्याक्षसुतं प्रभुः ॥ १८७
अनुगृह्य गणत्वञ्च प्रापयामास लीलया।
एतद्वः कथितं सर्व्वं कथासर्व्वस्वमादरात् ॥ १८८
यः पठेच्छृणुयाद्वापि क्षेत्रमाहात्म्यमुत्तमम्।
सर्व्वक्षेत्रेषु यत् पुण्यं तत् सर्व्वं सहसा लभेत् ॥ १८९
श्रावयेद्वा द्विजान् सर्व्वान् कृतशौचान् जितेन्द्रियान्।
स एव सर्व्वयज्ञस्य फलं प्राप्नोति मानवः ॥ १९०

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

## त्रिनवतितमोऽध्यायः।

ऋषय ऊचुः।

अन्धको नाम दैत्येन्द्रो मन्दरे चारुकन्दरे।
दमितस्तु कथं लेभे गाणपत्यं महेश्वरात्।
वक्तुमर्हसि चास्माकं यथावृत्तं यथाश्रुतम् ॥ १

सूत उवाच।

अन्धकानुग्रहञ्चैव मन्दरे शोषणं तथा।
वरलाभमशेषञ्च प्रवक्ष्यामि समासतः ॥ २
हिरण्याक्षस्य तनयो हिरण्यनयनोपमः।
पुरान्धक इति ख्यातस्तपसा लब्धविक्रमः ॥ ३
प्रसादाद्ब्रह्मणः साक्षादवध्यत्वमवाप्य च।
त्रैलोक्यमखिलं भुक्त्वा जित्वा चेन्द्रपुरं पुरा ॥ ४
लीलया चाप्रयत्नेन त्रासयामास वासवम् ॥ ५
बाधितास्ताड़िता बद्धाः पातितास्तेन ते सुराः।
विविशुर्मन्दरं भीता नारायणपुरोगमाः ॥ ६
एवं सम्पीड्य वै देवानन्धकोऽपि महासुरः।
यदृच्छया गिरिं प्राप्तो मन्दरं चारुकन्दरम् ॥ ७
ततस्ते समस्ताः सुरेन्द्राः ससाध्याः
सुरेशं महेशं पुरेत्याह्नदेवम्।
इतश्चाल्पवीर्य्यप्रभिन्नाङ्गभिन्ना
वयं दैत्यराजस्य शस्त्रैर्निकृत्ताः ॥ ८
इतीदमखिलं श्रुत्वा दैत्यागममनौपमम्।
गणेश्वरैश्च भगवानन्धकाभिमुखं ययौ ॥ ९
तत्रेन्द्रपद्मोद्भवविष्णुमुख्याः
सुरेश्वरा विप्रवराश्च सर्व्वे।
जयेति वाचा भगवन्तमूचुः
किरीटबद्धाञ्जलयः समन्तात् ॥ १०
अथाशेषासुरांस्तस्य कोटिकोटिशतैस्ततः।
भस्मीकृत्य महादेवो निर्बिभेदान्धकं तदा ॥ ११
शूलेन शूलिना प्रोतं दग्धकल्मषकञ्चुकम्।
दृष्ट्वान्धकं ननादेशं प्रणम्य स पितामहः ॥ १२
तन्नादश्रवणान्नेदुर्देवा देवं प्रणम्य तम्।
ननृतुर्मुनयः सर्व्वे मुमुदुर्गणपुङ्गवाः ॥ १३
ससृजुः पुष्पवर्षाणि देवाः शम्भोस्तदोपरि।
त्रैलोक्यमखिलं हर्षान्ननन्द च ननाद च ॥ १४
दग्धोऽग्निना च शूलेन प्रोतः प्रेत इवान्धकः।
सात्त्विकं भावमास्थाय चिन्तयामास चेतसा ॥ १५
जन्मान्तरेऽपि देवेन दग्धो यस्माच्छिवेन वै।
आराधितो मया शम्भुः पुरा साक्षान्महेश्वरः ॥ १६
तस्मादेतन्मया लब्धमन्यथा नोपपद्यते।
यः स्मरेन्मनसा रुद्रं प्राणान्ते सकृदेव वा ॥ १७

स याति शिवसायुज्यं किं पुनर्बहुशः स्मरन्।
ब्रह्मा च भगवान् विष्णुः सर्व्वे देवाः सवासवाः ॥ १८
शरणं प्राप्य तिष्ठन्ति तमेव शरणं व्रजेत्।
एवं सञ्चिन्त्य तुष्टात्मा सोऽन्धकस्त्वान्धकार्द्दनम् ॥ १९
सगणं शिवमीशानमस्तुवत् पुण्यगौरवात्।
प्रार्थितस्तेन भगवान् परमार्त्तिहरो हरः ॥ २०
हिरण्यनेत्रतनयं शूलाग्रस्थं सुरेश्वरः।
प्रोवाच दानवं प्रेक्ष्य घृणया नीललोहितः ॥ २१
तुष्टोऽस्मि वत्स भद्रं ते कामं किं करवाणि ते।
वरान् वरय दैत्येन्द्र वरदोऽहं तवान्धक ॥ २२
श्रुत्वा वाक्यं तदा शम्भोर्हिरण्यनयनात्मजः।
हर्षगद्गदया वाचा प्रोवाचेदं महेश्वरम् ॥ २३
भगवन् देवदेवेश भक्तार्त्तिहर शङ्कर।
त्वयि भक्तिः प्रसीदेश यदि देयो वरश्च मे ॥ २४
श्रुत्वा भवोऽपि वचनमन्धकस्य महात्मनः।
प्रददौ दुर्लभां श्रद्धां दैत्येन्द्राय महाद्युतिः ॥ २५
गाणपत्यञ्च दैत्याय प्रददौ चावरोप्य तम्।
प्रणेमुस्तं सुरेन्द्राद्या गाणपत्ये प्रतिष्ठितम् ॥ २६

इति श्रीलैङ्गे महापुराणे पूर्व्वभागेऽन्धक-
गाणपत्यात्मको नाम त्रिनवति-
तमोऽध्यायः ॥ ९३ ॥

---

## चतुर्नवतितमोऽध्यायः।

ऋषय ऊचुः।

कथमस्य पिता दैत्यो हिरण्याक्षः सुदारुणः।
विष्णुना सूदितो विष्णुर्वराहत्वं कथं गतः। १
तस्य शृङ्गं महेशस्य भूषणत्वं कथं गतम्।
एतत् सर्व्वं विशेषेण सूत वक्तुमिहार्हसि ॥ २

सूत उवाच।

हिरण्यकशिपोर्भ्राता हिरण्याक्ष इति स्मृतः।
पुरान्धकासुरेशस्य पिता कालान्तकोपमः ॥ ३
देवान् जित्वाथ दैत्येन्द्रो बद्धा च धरणीमिमाम्।
नीत्वा रसातलं चक्रे वन्दीमिन्दीवरप्रभाम् ॥ ४
ततः सब्रह्मका देवाः परिम्लानमुखश्रियः।
बाधितास्ताड़िता बद्धा हिरण्याक्षेण तेन वै।
बलिना दैत्यमुख्येन क्रूरेण सुदुरात्मना ॥ ५
प्रणम्य शिरसा विष्णुं दैत्यकोटिविमर्द्दनम्।
सर्व्वं विज्ञापयामासुर्धरणीबन्धनं हरेः ॥ ६
श्रुत्वैतद्भगवान् विष्णुर्धरणीबन्धनं हरिः।
भूत्वा यज्ञवराहोऽसौ यथा लिङ्गोद्भवे तथा ॥ ७
दैत्यैश्च सार्द्धं दैत्येन्द्रं हिरण्याक्षं महाबलम्।
दंष्ट्राग्रकोट्या हत्वैनं रेजे दैत्यान्तकृत् प्रभुः ॥ ८
कल्पादिषु यथापूर्व्वं प्रविश्य च रसातलम्।
आनीय वसुधां देवीमङ्कस्थामकरोद्धरिः ॥ ९
ततस्तुष्टाव देवेशं देवदेवः पितामहः।
शक्राद्यैः सहितो भूत्वा हर्षगद्गदया गिरा ॥ १०
शाश्वताय वराहाय दंष्ट्रिणे दण्डिने नमः।
नारायणाय सर्व्वाय ब्रह्मणे परमात्मने ॥ ११
कर्त्त्रे धर्त्त्रे धरायास्तु हर्त्त्रे देवारिणां स्वयम्।
कर्त्त्रे नेत्रे सुरेन्द्राणां शास्त्रे च सकलस्य च ॥ १२

त्वमष्टमूर्त्तिस्त्वमनन्तमूर्त्ति-
स्त्वमादिदेवस्त्वमनन्तवेदितः।
त्वया कृतं सर्व्वमिदं प्रसीद
सुरेश लोकेश वराह विष्णो ॥ १३
तथैकदंष्ट्राग्रसुखाग्रकोटि-
भागैकभागार्द्धतमेन विष्णो।
हताः क्षणात् कामद दैत्यमुख्याः
स्वदंष्ट्रकोट्या सह पुत्रभृत्यैः ॥ १४
त्वयोद्धृता देव धरा धरेश
धराधराकार धृताग्रदंष्ट्रे।
धराधरैः सर्व्वजनैः समुद्रैः
सुरासुरैः सेवितचन्द्रवक्त्र ॥ १५
त्वयैव देवेश विभो कृतश्च
जयः सुराणामसुरेश्वराणाम्।
अहो प्रदत्तस्तु वरः प्रसीद
वाग्देवता-वारिजसम्भवाय ॥ १६
तव रोम्णि सकलामरेश्वरा
नयनद्वये शशिरवी पदद्वये।
निहिता रसातलगता वसुन्धरा
तव पृष्ठतः सकलतारकादयः ॥ १७
जगतां हिताय भवता वसुन्धरा
भगवन् रसातलपुटं गता तदा।
अवलोकिता च भगवंस्त्वयैव

सकलं त्वयैव हि धृतं जगद्गुरो ॥ १८
इति वाक्पतिर्बहुविधैः स्तवार्च्चनैः
प्रणिपत्य विष्णुममरैः प्रजापतिः ।
विविधान् वरान् हरिमुखात् तु लब्धवान्
हरिनाभिवारिजदेहभृत् स्वयम् ॥ १९
अथ तामुद्धृतां तेन धरां देवा मुनीश्वराः ।
मूर्द्ध्न्यारोप्य नमश्चक्रुश्चक्रिणः सन्निधौ तदा ॥ २०
अनेनैव वराहेण चोद्धृतासि वरप्रदे ।
कृष्णेनाक्लिष्टकार्य्येण शतहस्तेन विष्णुना ॥ २१
धरणि त्वं महाभोगी भूमिस्त्वं धेनुरव्यये ।
लोकानां धारणी त्वं हि मृत्तिके हर पातकम् ॥ २२
मनसा कर्म्मणा वाचा वरदे वारिजेक्षणे ।
त्वया हतेन पापेन जीवामस्त्वत्प्रसादतः ॥ २३
इत्युक्ता सा तदा देवी धरा देवैरथाब्रवीत् ॥ २४
वराहदंष्ट्राभिन्नायां धरायां मृत्तिकां द्विजाः ।
मन्त्रेणानेन यो बिभ्रन्मूर्द्ध्नि पापात् प्रमुच्यते ॥ २५
आयुष्मान् बलवान् धन्यः पुत्रपौत्रसमन्वितः ।
क्रमाद्भुवि दिवं प्राप्य कर्म्मान्ते मोदते सुरैः ॥ २६
अथ देवे गते त्यक्त्वा वराहे क्षीरसागरम् ।
वाराहरूपमनघं चचाल च धरा पुनः ॥ २७
तस्य दंष्ट्राभराक्रान्ता देवदेवस्य धीमतः ।
यदृच्छया भवः पश्यन् जगाम जगदीश्वरः ॥ २८
दंष्ट्रां जग्राह दृष्ट्वा तां भूषणार्थमथात्मनः ।
दधार च महादेवः कूर्च्चान्ते वै महोरसि ॥ २९
देवाश्च तुष्टुवुः सेन्द्रा देवदेवस्य वै भवम् ।
धरा प्रतिष्ठिता ह्येवं देवदेवेन लीलया ॥ ३०
भूतानां संप्लवे चापि विष्णोश्चैव कलेवरम् ।
ब्रह्मणश्च तथान्येषां देवानामपि लीलया ॥ ३१
विभुरङ्गविभागेन भूषितो न यदि प्रभुः ।
कथं विमुक्तिविप्राणां तस्माद्दंष्ट्री महेश्वरः ॥ ३२

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
वराहप्रादुर्भावो नाम चतुर्नवति-
तमोऽध्यायः ॥ ९४ ॥

---

## पञ्चनवतितमोऽध्यायः ।

ऋषय ऊचुः ।

नृसिंहेन हतः पूर्व्वं हिरण्याक्षाग्रजः श्रुतम् ।
कथं निसूदितस्तेन हिरण्यकशिपुर्वद ॥ १

सूत उवाच ।

हिरण्यकशिपोः पुत्रः प्रह्लाद इति विश्रुतः ।
धर्म्मज्ञः सत्यसम्पन्नस्तपस्वी चाभवत् सुधीः ॥ २
जन्मप्रभृति देवेशं पूजयामास चाव्ययम् ।
सर्व्वज्ञं सर्व्वगं विष्णुं सर्व्वदेवभवोद्भवम् ॥ ३
तमादिपुरुषं भक्त्या परब्रह्मस्वरूपिणम् ।
ब्रह्मणोऽधिपतिं सृष्टि-स्थिति-संहारकारणम् ॥ ४
सोऽपि विष्णोस्तथाभूतं दृष्ट्वा पुत्रं समाहितम् ।
नमो नारायणायेति गोविन्देति मुहुर्म्मुहुः ॥ ५
स्तुवन्तं प्राह देवारिः प्रदहन्निव पापधीः ।
न मां जानासि दुर्बुद्धे सर्व्वदैत्यामरेश्वरम् ॥ ६
प्रह्लाद वीर दुष्पुत्र द्विजदेवार्त्तिकारणम् ।
को विष्णुः पद्मजो वापि शक्रश्च वरुणोऽथवा ॥ ७
वायुः सोमस्तथेशानः पावको मम यः समः ।
मामेवार्च्चय भक्त्या च त्यक्त्वा नारायणं सदा ॥ ८
प्रह्लाद जीविते वाञ्छा तवैषा शृणु चास्ति चेत् ।
श्रुत्वापि तस्य वचनं हिरण्यकशिपोः सुधीः ॥ ९
प्रह्लादः पूजयामास नमो नारायणेति च ।
नमो नारायणायेति सर्व्वदैत्यकुमारकान् ॥ १०
अध्यापयामास च तां ब्रह्मविद्यां शुशोभनाम् ।
दुर्लङ्घ्याच्चात्मनो दृष्ट्वा शक्रादिभिरपि स्वयम् ॥ ११
पुत्रेण लङ्घितामाज्ञां हिरण्यः प्राह दानवान् ।
एतं नानाविधैर्वध्यं दुष्पुत्रं हन्तुमर्हथ ॥ १२
एवमुक्तास्तदा तेन दैत्येन सुदुरात्मना ।
निजघ्नुर्देवदेवस्य भृत्यं प्रह्लादमव्ययम् ॥ १३
तत्र तत् प्रतिकृतं तदा सुरै-
र्दैत्यराजतनयं द्विजोत्तमाः ।
क्षीरवारिनिधिशायिनः प्रभो-
र्निष्फलन्त्वथ बभूव तेजसा ॥ १४
तदाथ गर्व्वभिन्नस्य हिरण्यकशिपोः प्रभुः ।
तत्रैवाविरभूद्धन्तुं नृसिंहाकृतिमास्थितः ॥ १५
जघान च सुतं प्रेक्ष्य पितरं दानवाधमम् ।

बिभेद तत्क्षणादेव करजैर्निशितैः स तैः ॥ १६
ततो निहत्य तं दैत्यं सबान्धवमथापरः।
पीड़यामास दैत्येन्द्रं युगान्ताग्निरिवापरः ॥ १७
नादैस्तस्य नृसिंहस्य घोरैर्वित्रासितं जगत्।
आब्रह्मभुवनाद्विप्राः प्रचचाल च सुव्रताः ॥ १८

दृष्ट्वा सुरासुरमहोरगसिद्धसाध्या-
स्तस्मिन् क्षणे हरिविरिञ्चिमुखा नृसिंहम्।
धैर्यं बलञ्च समवाप्य ययुर्विहृच्य
आदिक्षुखान्तमसुरक्षणतत्पराश्च ॥ १९
ततस्तैर्गतैः शेष देवो नृसिंहः
सहस्राकृतिः सर्व्वपात् सर्व्वबाहुः।
सहस्रेक्षणः सोमसूर्य्याग्निनेत्र-
स्तदा संस्थितः सर्व्वमावृत्य मायी ॥ २०

तं तुष्टुवुः सुरश्रेष्ठा लोकालोकाचले स्थिताः।
सब्रह्मकाः ससिद्धाश्च सयमाः समरुद्गणाः ॥ २१
परात्परतरं ब्रह्म तत्त्वात् तत्त्वतमं भवान्।
ज्योतिषान्तु परं ज्योतिः परमात्मा जगन्मयः ॥२२
स्थूलं सूक्ष्मं सुसूक्ष्मञ्च शब्दब्रह्ममयः शुभः।
वागतीतो निरालम्बो निर्द्वन्द्वो निरुपद्रवः ॥ २३
यज्ञभुग्यज्ञमूर्त्तिस्त्वं यज्विनां फलदः प्रभुः।
भवान् मत्स्याकृतिः कौर्म्मीमास्थाय जगति स्थितः।
वाराहीञ्चैव त्वं सैंहीमास्थायेह व्यवस्थितः ॥ २४
देवानां राज्यरक्षार्थं निहत्य दितिजेश्वरम्।
द्विजशापच्छलेनैवमवतीर्णोऽसि लीलया ॥ २५
न दृष्टं यत् त्वदन्यं हि भवान् सर्व्वं चराचरम्।
भवान् विष्णुर्भवान् रुद्रो भवानेव पितामहः ॥ २६
भवानादिर्भवानन्तो भवानेव वयं विभो।
भवानेव जगत् सर्व्वं प्रलापेन किमीश्वर ॥ २७
मायया बहुधासंस्थमद्वितीयमयं प्रभो।
स्तोष्यामस्त्वां कथं भासि देवदेव मृगाधिप ॥ २८
स्तुतोऽपि विविधैः स्तुत्यैर्भावैर्नानाविधैः प्रभुः।
न जगाम द्विजाः शान्तिं मानयन् योनिमात्मनः॥२९
यो नृसिंहस्तवं भक्त्या पठेद्वार्थं विचारयेत्।
श्रावयेद्वा द्विजान् सर्व्वान् विष्णुलोके महीयते ॥ ३०
तदन्तरे शिवं देवाः सेन्द्राः सब्रह्मकाः प्रभुम्।
सम्प्राप्य तुष्टुवुः सर्व्वे विज्ञाप्य मृगरूपिणः ॥ ३१
ततो ब्रह्मादयस्तूर्णं संस्तूय परमेश्वरम्।
आत्मत्राणाय शरणं जग्मुः परमकारणम् ॥ ३२
मन्दरस्थं महादेवं क्रीड़मानं सहोमया।
सेवितं गणगन्धर्वैः सिद्धैरप्सरसां गणैः ॥ ३३
देवताभिः सह ब्रह्मा भीतभीतः सगद्गदम्।
प्रणम्य दण्डवद्भूमौ तुष्टाव परमेश्वरम् ॥ ३४

ब्रह्मोवाच।

नमस्ते कालकालाय नमस्ते रुद्रमन्यवे।
नमः शिवाय रुद्राय शङ्कराय शिवाय ते ॥ ३५
उग्रोऽसि सर्व्वभूतानां नियन्तासि शिवोऽसि नः।
नमः शिवाय शर्व्वाय शङ्करायार्त्तिहारिणे ॥ ३६
मयस्कराय विश्वाय विष्णवे ब्रह्मणे नमः।
अन्तकाय नमस्तुभ्यमुमायाः पतये नमः ॥ ३७
हिरण्यबाहवे साक्षाद्धिरण्यपतये नमः।
शर्व्वाय सर्व्वरूपाय पुरुषाय नमो नमः ॥ ३८
सदसद्व्यक्तिहीनाय महतः कारणाय ते।
नित्याय विश्वरूपाय जायमानाय ते नमः ॥ ३९
जाताय बहुधा लोके प्रभूताय नमो नमः।
रुद्राय नीलरुद्राय कद्रुद्राय प्रचेतसे ॥ ४०
कालाय कालरूपाय नमः कालाङ्गहारिणे।
मीढुष्टमाय देवाय शितिकण्ठाय ते नमः ॥ ४१
महीयसे नमस्तुभ्यं हन्त्रे देवारिणां सदा।
ताराय च सुताराय तारणाय नमो नमः ॥ ४२
हरिकेशाय देवाय शम्भवे परमात्मने।
देवानां शम्भवे तुभ्यं भूतानां शम्भवे नमः ॥ ४३
शम्भवे हैमवत्याश्च मन्यवे रुद्ररूपिणे।
कपर्द्दिने नमस्तुभ्यं कालकण्ठाय ते नमः ॥ ४४
हिरण्याय महेशाय श्रीकण्ठाय नमो नमः।
भस्मदिग्धशरीराय दण्डमुण्डीश्वराय च ॥ ४५
नमो ह्रस्वाय दीर्घाय वामनाय नमो नमः।
नम उग्रत्रिशूलाय उग्राय च नमो नमः ॥ ४६
भीमाय भीमरूपाय भीमकर्म्मरताय ते।
अग्रे वधाय वै भूत्वा नमो दूरे वधाय च ॥ ४७
धन्विने शूलिने तुभ्यं गदिने हलिने नमः।
चक्रिणे वर्म्मिणे नित्यं दैत्यानां कर्म्मभेदिने ॥ ४८
सद्याय सद्यरूपाय सद्योजाताय ते नमः।
वामाय वामरूपाय वामनेत्राय ते नमः ॥ ४९
अघोररूपाय विकटाय विकटशरीराय ते नमः।

पुरुषरूपाय पुरुषेषतत्पुरुषाय वै नमः ॥ ५०
पुरुषार्थप्रदानाय पतये परमेष्ठिने।
ईशानाय नमस्तुभ्यमीश्वराय नमो नमः ॥ ५१
ब्रह्मणे ब्रह्मरूपाय नमः साक्षाच्छिवाय ते।
सर्व्वविष्णुनृसिंहस्य रूपमास्थाय विश्वकृत् ॥ ५२
हिरण्यकशिपुं हत्वा करजैर्निशितैः स्वयम्।
दैत्येन्द्रैर्बहुभिः सार्द्धं हितार्थं जगतां प्रभुः ॥ ५३
सैंहीं समानयन्योनिं बाधते निखिलं जगत्।
यत् कृत्यमत्र देवेश तत् कुरुष्व भवानिह ॥ ५४
उग्रोऽसि सर्व्वदुष्टानां नियन्तासि शिवोऽसि नः।
कालकूटादिवपुषा त्राहि नः शरणागतान् ॥ ५५
शुक्रन्तु वृत्तं विश्वेश क्रीड़ा वै केवलं वयम्।
तवोन्मेष-निमेषाभ्यामस्माकं प्रलयोदयौ ॥ ५६
उन्मीलये त्वयि ब्रह्मन् विनाशोऽस्ति न ते शिव।
सन्तप्ताः स्मो वयं देव हरिणामिततेजसा।
सर्व्वलोकहितायैनं तत्त्वं संहर्त्तुमिच्छसि ॥ ५७

सूत उवाच।

विज्ञापितस्तथा देवः प्रहसन् प्राह तान् सुरान्।
अभयञ्च ददौ तेषां हनिष्यामीति तं प्रभुः ॥ ५८
सोऽपि शक्रः सुरैः सार्द्धं प्रणिपत्य यथागतम्।
जगाम भगवान् ब्रह्मा तथान्ये च सुरोत्तमाः ॥ ५९
अथोत्थाय महादेवः शारभं रूपमास्थितः।
ययौ प्रान्ते नृसिंहस्य गर्व्वितस्य मृगाशिनः ॥ ६०
अपहृत्य तदा प्राणान् शरभः सुरपूजितः।
एवं स्तुतस्तदा देवैर्जगाम स यथाक्रमम् ॥ ६१
सिंहात् ततो नरो भूत्वा जगाम च यथाक्रमम् ॥ ६२
यः पठेच्छृणुयाद्वापि संस्तवं शार्व्वमुत्तमम्।
रुद्रलोकमनुप्राप्य रुद्रेण सह मोदते ॥ ६३

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे नारसिंहे
पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः।

ऋषय ऊचुः।

कथं देवो महादेवो विश्वसंहारकारकः।
शरभाख्यं महाघोरं विकृतं रूपमास्थितः।
किं किं धैर्य्यं कृतं तेन ब्रूहि सर्व्वमशेषतः ॥ १

सूत उवाच।

एवमभ्यर्थितो देवैर्मतिं चक्रे कृपालयः।
यत् तेजस्तु नृसिंहाख्यं संहर्त्तुं परमेश्वरः ॥ २
तदर्थं स्मृतवान् रुद्रो वीरभद्रं महाबलम्।
आत्मनो भैरवं रूपं महाप्रलयकारकम् ॥ ३
आजगाम पुरा सद्यो गणानामग्रतो हसन्।
साट्टहासैर्गणवरैरुत्पतद्भिरितस्ततः ॥ ४
नृसिंहरूपैरत्युग्रैः कोटिभिः परिवारितः।
तावद्भिरभितो वीरैर्नृत्यद्भिश्च मुदान्वितैः ॥ ५
क्रीड़द्भिश्च महाधीरैर्ब्रह्माद्यैः कन्दुकैरिव।
अदृष्टपूर्व्वैरन्यैश्च वेष्टितो वीरवन्दितः ॥ ६
कल्पान्तज्वलनज्वालो विलसल्लोचनत्रयः।
आत्तशस्त्रो जटाजूटे ज्वलद्बालेन्दुमण्डितः ॥ ७
बालेन्दुद्वितयाकार-तीक्ष्णदंष्ट्राङ्कुरद्वयः।
आखण्डलधनुःखण्ड-सन्निभभ्रूलतायुतः ॥ ८
महाप्रचण्डहुङ्कार-बधिरीकृतदिङ्मुखः।
नीलमेघाञ्जनाकार-भीषणश्मश्रुरद्भुतः ॥ ९
वादखण्डमखण्डाभ्यां भ्रामयंस्त्रिशिखं मुहुः।
वीरभद्रोऽपि भगवान् वीरशक्तिविजृम्भितः ॥ १०
स्वयं विज्ञापयामास किमत्र स्मृतिकारणम्।
आज्ञापय जगत्स्वामिन् प्रसादः क्रियतां मयि ॥ ११

श्रीभगवानुवाच।

अकाले भयमुत्पन्नं देवानामपि भैरव।
ज्वलितः स नृसिंहाग्निः शमयैनं दुरासदम् ॥ १२
सान्त्वयन् बोधयादौ तं तेन किं नोपशाम्यति।
ततो मत्परमं भावं भैरवं सम्प्रदर्शय ॥ १३
सूक्ष्मं सूक्ष्मेण संहृत्य स्थूलं स्थूलेन तेजसा।
वक्त्रमानय कृत्तिञ्च वीरभद्र ममाज्ञया ॥ १४
इत्यादिष्टो गणाध्यक्षः प्रशान्तवपुरास्थितः।
जगाम रंहसा तत्र यत्रास्ते नरकेशरी ॥ १५
ततस्तं बोधयामास वीरभद्रो हरो हरिम्।
उवाच वाक्यमीशानः पिता पुत्रमिवौरसम् ॥ १६

वीरभद्र उवाच।

जगत्सुखाय भगवन्नवतीर्णोऽसि माधव।
स्थित्यर्थेन च युक्तोऽसि परेण परमेष्ठिना ॥ १७
जन्तुचक्रं भगवता रचितं मत्स्यरूपिणा।
पुच्छेनैव समाबध्य भ्रमन्नेकार्णवे पुरा ॥ १८

बिभर्षि कूर्म्मरूपेण वाराहेणोद्धृता मही ।
अनेन हरिरूपेण हिरण्यकशिपुर्हतः ॥ १९
वामनेन बलिर्बद्धस्त्वया विक्रमता पुनः ।
त्वमेव सर्व्वभूतानां प्रभावः प्रभुरव्ययः ॥ २०
यदा यदा हि लोकस्य दुःखं किञ्चित् प्रजायते ।
तदा तदावतीर्णस्त्वं करिष्यसि निरामयम् ॥ २१
नाधिकस्त्वत्समोऽप्यस्ति हरे शिवपरायण ।
त्वया धर्म्माश्च वेदाश्च शुभे मार्गे प्रतिष्ठिताः ॥ २२
यदर्थमवतारोऽयं निहतः सोऽपि केशव ॥ २३
अत्यन्तघोरं भगवन् नरसिंहवपुस्तव ।
उपसंहर विश्वात्मंस्त्वमेव मम सन्निधौ ॥ २४

सूत उवाच ।

इत्युक्तो वीरभद्रेण नृसिंहः शान्तया गिरा ।
ततोऽधिकं महाघोरं कोपं प्रज्वालयद्धरिः ॥ २५

श्रीनृसिंह उवाच ।

आगतोऽसि यतस्तत्र गच्छ त्वं मा हितं वद ।
इदानीं संहरिष्यामि जगदेतच्चराचरम् ॥ २६
संहर्त्तुर्न हि संहारः स्वतो वा परतोऽपि वा ।
शासितं मम सर्व्वत्र शास्ता कोऽपि न विद्यते ॥ २७
मत्प्रसादेन सकलं समर्य्यादं प्रवर्त्तते ।
अहं हि सर्व्वशक्तीनां प्रवर्त्तकनिवर्त्तकः ॥ २८
यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्ज्जितमेव वा ।
तत्तद्विद्धि गणाध्यक्ष मम तेजोविजृम्भितम् ॥ २९
देवता परमार्थज्ञा ममैव परमं विदुः ।
मदंशाः शक्तिसम्पन्ना ब्रह्मशक्रादयः सुराः ॥ ३०
मन्नाभिपङ्कजाज्जातः पुरा ब्रह्मा चतुर्म्मुखः ।
तल्ललाटसमुत्पन्नो भगवान् वृषभध्वजः ॥ ३१
रजसाधिष्ठितः स्रष्टा रुद्रस्तामस उच्यते ।
अहं नियन्ता सर्व्वस्य मत्परं नास्ति दैवतम् ॥ ३२
विश्वाधिकः स्वतन्त्रश्च कर्त्ता हर्त्ताखिलेश्वरः ।
इदन्तु मत्परं तेजः कः पुनः श्रोतुमिच्छति ॥ ३३
अतो मां शरणं प्राप्य गच्छ त्वं विगतज्वरः ।
अवेहि परमं भावमिदं भूतमहेश्वर ॥ ३४
कालोऽस्म्यहं कालविनाशहेतु-
र्लोकान् समाहर्त्तुमहं प्रवृत्तः ।
मृत्योर्मृत्युं विद्धि मां वीरभद्र
जीवन्त्येते मत्प्रसादेन देवाः ॥ ३५

सूत उवाच ।

साहङ्कारमिदं श्रुत्वा हरेरमितविक्रमः ।
विहस्योवाच सावज्ञं ततो विस्फुरिताधरः ॥ ३६

वीरभद्र उवाच ।

किं न जानासि विश्वेशं संहर्त्तारं पिनाकिनम् ।
असद्वादो विवादश्च विनाशस्त्वयि केवलः ॥ ३७
तवान्योन्यावताराणि कानि शेषाणि साम्प्रतम् ।
कृतानि येन केनापि कथाशेषो भविष्यति ॥ ३८
दोषं त्वं पश्य एतत् त्वमवस्थामीदृशीं गतः ।
तेन संहारदक्षेण क्षणात् संक्षयमेष्यसि ॥ ३९
प्रकृतिस्त्वं पुमान् रुद्रस्त्वयि वीर्य्यं समाहितम् ।
त्वन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामहः ॥ ४०
स्रष्टुर्य्येन जगत् पूर्व्वं शङ्करं नीललोहितम् ।
ललाटे चिन्तयामास तपस्युग्रे व्यवस्थितः ।
तल्ललाटादभूच्छम्भोः स्रष्टुर्यं तन्न दूषणम् ॥ ४१
अंशोऽहं देवदेवस्य महाभैरवरूपिणः ।
त्वत्संहारे नियुक्तोऽस्मि विनयेन बलेन च ॥ ४२
एवं रक्षो विदार्य्यैव त्वं शक्तिकलया युतः ।
अहङ्कारावलेपेन गर्ज्जसि त्वमतन्द्रितः ॥ ४३
उपकारो ह्यसाधूनामपकाराय केवलम् ।
यदि सिंह महेशानं स्वपुनर्भूत मन्यसे ॥ ४४
न त्वं स्रष्टा न संहर्त्ता न स्वतन्त्रो हि कुत्रचित् ।
कुलालचक्रवच्छक्त्या प्रेरितोऽसि पिनाकिना ॥ ४५
अद्यापि तव निक्षिप्तं कपालं कूर्म्मरूपिणः ।
हरहारलतामध्ये मुग्धे कस्मान्न बुध्यसे ॥ ४६
विस्मृतं किं तदंशेन दंष्ट्रोत्पाटनपीड़ितः ।
वाराहविग्रहस्तेऽद्य साक्रोशं तारकारिणा ॥ ४७
दग्धोऽसि यस्य शूलाग्रे विष्वक्सेनच्छलाद्भवान् ।
दक्षयज्ञे शिरश्छिन्नं मया ते यज्ञरूपिणः ॥ ४८
अद्यापि तव पुत्त्रस्य ब्रह्मणः पञ्चमं शिरः ।
छिन्नं तमेनाभिसन्धं तदंशं तस्य तद्बलम् ॥ ४९
निर्ज्जितस्त्वं दधीचेन संग्रामे समरुद्गणः ।
कण्डूयमाने शिरसि कथं तद्विस्मृतं त्वया ॥ ५०
चक्रं विक्रमतो यस्य चक्रपाणे तव प्रियम् ।
कुतः प्राप्तं कृतं केन त्वया तदपि विस्मृतम् ॥ ५१
ते मया सकला लोका गृहीतास्त्वं पयोनिधौ ।
निद्रापरवशः शेषे स कथं सात्त्विको भवान् ॥ ५२

ब्रह्मादिस्तम्बपर्य्यन्तं रुद्रशक्तिविजृम्भितम् ।
शक्तिमानभितस्त्वञ्च अनलस्त्वञ्च मोहितः ॥ ५३
तत्तेजसोऽपि माहात्म्यं युवां द्रष्टुं न हि क्षमौ ।
स्थूला ये हि प्रपश्यन्ति तद्विष्णोः परमं पदम् ॥ ५४
द्यावापृथिव्या इन्द्राग्नि-यमस्य वरुणस्य च ।
ध्वान्तोदरे शशाङ्कस्य जनिता परमेश्वरः ॥ ५५
कालोऽसि त्वं महाकालः कालकालो महेश्वरः ।
अतस्त्वमुग्रकलया मृत्योर्मृत्युर्भविष्यसि ॥ ५६
स्थिरधन्वाक्षयो वीरो वीरो विश्वाधिकः प्रभुः ।
उपहस्ता ज्वरं भीमो मृगपक्षिहिरण्मयः ॥ ५७
शास्ताशेषस्य जगतो न त्वं नैव चतुर्म्मुखः ।
इत्थं सर्व्वं समालोक्य संहरात्मानमात्मना ॥ ५८
नो चेदिदानीं क्रोधस्य महाभैरवरूपिणः ।
वज्राशनिरिव स्थाणोस्त्वेवं मृत्युः पतिष्यति ॥ ५९

सूत उवाच ।

इत्युक्तो वीरभद्रेण नृसिंहः क्रोधविह्वलः ।
ननाद तनुवेगेन तं ग्रहीतुं प्रचक्रमे ॥ ६०
अत्रान्तरे महाघोरं विपक्षभयकारणम् ।
गगनव्यापिदुर्द्धर्ष-शैवतेजःसमुद्भवम् ॥ ६१
वीरभद्रस्य तद्रूपं तत्क्षणादेव दृश्यत ।
न तद्धिरण्मयं सौम्यं न सौरं नाग्निसम्भवम् ॥ ६२
न तड़िच्चन्द्रसदृशमनौपम्यं महेश्वरम् ।
तदा तेजांसि सर्व्वाणि तस्मिन् लीनानि शाङ्करे ॥ ६३
ततो व्यक्तो महातेजा व्यक्ते सम्भवतस्ततः ।
रुद्रसाधारणञ्चैव चिह्नितं विकृताकृति ॥ ६४
ततः संहाररूपेण सुव्यक्तः परमेश्वरः ।
पश्यतां सर्व्वदेवानां जयशब्दादिमङ्गलैः ॥ ६५
सहस्रबाहुर्जटिलश्चन्द्रार्द्धकृतशेखरः ।
स मृगार्द्धशरीरेण पक्षाभ्यां चञ्चुना द्विजाः ॥ ६६
अतितीक्ष्णमहादंष्ट्रो वज्रतुल्यनखायुधः ।
कण्ठेकालो महाबाहुश्चतुष्पाद्वह्निसम्भवः ॥ ६७
युगान्तोद्यतजीमूत-भीमगम्भीरनिस्वनः ।
समं कुपितवृत्ताग्नि-व्यावृत्तनयनत्रयः ॥ ६८
स्पष्टदंष्ट्रोऽधरोष्ठश्च हुङ्कारेण युतो हरः ।
हरिस्तद्दर्शनादेव विनष्टबलविक्रमः ॥ ६९
बिभ्रद्दौर्स्यं सहस्रांशोरधः खद्योतविभ्रमम् ।
अथ विभ्रम्य पक्षाभ्यां नाभिपादेऽभ्युदारयन् ॥ ७०
पादावाबध्य पुच्छेन बाहुभ्यां बाहुमण्डलम् ।
भिन्दन्नुरसि बाहुभ्यां निजग्राह हरो हरिम् ॥ ७१
ततो जगाम गगनं देवैः सह महर्षिभिः ।
सहसैव भयाद्विष्णुं विहगश्च यथोरगम् ॥ ७२
उत्क्षिप्योत्क्षिप्य संगृह्य निपात्य च निपात्य च ।
उड्डीयोड्डीय भगवान् पक्षाघातविमोहितम् ॥ ७३
हरिं हरन्तं वृषभं विश्वेशानं तमीश्वरम् ।
अनुयान्ति सुराः सर्व्वे नमोवाक्येन तुष्टुवुः ॥ ७४
नीयमानः परवशो दीनवक्त्रः कृताञ्जलिः ।
तुष्टाव परमेशानं हरिस्तं ललिताक्षरैः ॥ ७५

श्रीनृसिंह उवाच ।

नमो रुद्राय शर्व्वाय महाग्रासाय विष्णवे ।
नम उग्राय भीमाय नमः क्रोधाय मन्यवे ॥ ७६
नमो भवाय शर्व्वाय शङ्कराय शिवाय ते ।
कालकालाय कालाय महाकालाय मृत्यवे ॥ ७७
वीराय वीरभद्राय क्षयद्वीराय शूलिने ।
महादेवाय महते पशूनां पतये नमः ॥ ७८
एकाय नीलकण्ठाय श्रीकण्ठाय पिनाकिने ।
नमोऽनन्ताय सूक्ष्माय नमस्ते मृत्युमन्यवे ॥ ७९
पराय परमेशाय परात्परतराय ते ।
परात्पराय विश्वाय नमस्ते विश्वमूर्त्तये ॥ ८०
नमो विष्णुकलत्राय विष्णुक्षेत्राय भानवे ।
कैवर्त्ताय किराताय महाव्याधाय शाश्वते ॥ ८१
भैरवाय शरण्याय महाभैरवरूपिणे ।
नमो नृसिंहसंहर्त्रे कामकालपुरारये ॥ ८२
महापाशौघसंहर्त्रे विष्णुमायान्तकारिणे ।
त्र्यम्बकाय त्र्यक्षराय शिपिविष्टाय मीढ़ुषे ॥ ८३
मृत्युञ्जयाय शर्व्वाय सर्व्वज्ञाय मखारये ।
मखेशाय वरेण्याय नमस्ते वह्निरूपिणे ॥ ८४
महाघ्राणाय जिह्वाय प्राणापानप्रवर्त्तिने ।
त्रिगुणाय त्रिशूलाय गुणातीताय योगिने ॥ ८५
संसाराय प्रवाहाय महायन्त्रप्रवर्त्तिने ।
नमश्चन्द्राग्निसूर्य्याय मुक्तिवैचित्र्यहेतवे ॥ ८६
वरदायावताराय सर्व्वकारणहेतवे ।
कपालिने करालाय पतये पुण्यकीर्त्तये ॥ ८७
अमोघायाग्निनेत्राय लकुलीशाय शम्भवे ।
भिषक्तमाय मुण्डाय दण्डिने योगरूपिणे ॥ ८८

मेघवाहाय देवाय पार्व्वतीपतये नमः॥ ८९
अव्यक्ताय विशोकाय स्थिराय स्थिरधन्विने।
स्थाणवे कृत्तिवासाय नमः पञ्चार्थहेतवे॥ ९०
वरदायैकपादाय नमश्चन्द्रार्द्धमौलिने।
नमस्तेऽध्वरराजाय वयसां पतये नमः॥ ९१
योगीश्वराय नित्याय सत्याय परमेष्ठिने।
सर्व्वात्मने नमस्तुभ्यं नमः सर्व्वेश्वराय ते॥ ९२
एक-द्वि-त्रि-चतुः-पञ्चकृत्वस्तेऽस्तु नमो नमः।
दशकृत्वस्तु साहस्र-कृत्वस्ते च नमो नमः॥ ९३
नमोऽपरिमितं कृत्वानन्तकृत्वो नमो नमः।
नमो नमो नमो भूयः पुनर्भूयो नमो नमः॥ ९४

सूत उवाच।

नाम्नामष्टशतेनैवं स्तुत्वामृतमयेन तु।
पुनस्तु प्रार्थयामास नृसिंहः शरभेश्वरम्॥ ९५
यदा यदा ममाज्ञानमत्यहङ्कारदूषितम्।
तदा तदापनेतव्यं त्वयैव परमेश्वर॥ ९६
एवं विज्ञापयन् प्रीतः शङ्करं नरकेशरी।
नन्वशक्तो भवान् विष्णो जीवितान्तं पराजितः॥९७
तदङ्गशेषमात्रान्तं कृत्वा सर्व्वस्य विग्रहम्।
शुक्तिशिष्टं तदा मङ्गं वीरभद्रः क्षणात् ततः॥ ९८

देवा ऊचुः।

अथ ब्रह्मादयः सर्व्वे वीरभद्र त्वया हताः।
जीविताः स्मो वयं देवाः पर्ज्जन्येनेव पादपाः॥ ९९
यस्य भीषा दहत्यग्निरुदेति च रविः स्वयम्।
वातो वाति च सोऽसि त्वं मृत्युर्धावति पञ्चमः॥१००
यदव्यक्तं परं व्योम कलातीतं सदाशिवम्।
भगवंस्त्वामेव भवं वदन्ति ब्रह्मवादिनः॥ १०१
वयं क एव धातुक्ये वेदने परमेश्वरः।
न विद्धि परमं धाम रूपलावण्यवर्णने॥ १०२
उपसर्गेषु सर्व्वेषु त्रायस्वास्मान् गणाधिप।
एकादशात्मन् भगवान् वर्त्तते रूपवान् हरः॥१०३
ईदृशान्तेऽवताराणि दृष्ट्वा शिवबन्धूं स्तमः।
कदाचित् सन्दिहेनास्मांस्त्वच्चिन्तास्तमया तथा॥१०४
गुञ्जागिरिवरतटामितरूपाणि सर्व्वशः।
अथसंहर गम्यं ते न नीतव्यं परापरा॥ १०५
ह तनू तव रुद्रस्य वेदज्ञा ब्राह्मणा विदुः।
घोराष्यन्या शिवाष्यन्या ते प्रत्येकमनेकधा॥ १०६
दृष्ट्वास्मान् पाहि भगवन् नित्याहतमहाबलः।
भवता हि जगत् सर्व्वं व्याप्तं स्वेनैव तेजसा॥ १०७
ब्रह्मविष्ण्वीन्द्रचन्द्रादि वयञ्च प्रमुखाः सुराः।
सुरासुराः सम्प्रसूतास्त्वत्तः सर्व्वे महेश्वर॥ १०८
ब्रह्मा च इन्द्रो विष्णुश्च यमाद्या न सुरासुरान्।
ततो निगृह्य च हरिं सिंह इत्युपचेतसम्॥ १०९
यतो बिभर्षि सकलं विभज्य तनुमष्टधा।
अतोऽस्मान् पाहिभगवन्सुरान्दानैरभीप्सितैः॥११०
उवाच तान् सुरान् देवो महर्षींश्च पुरातनान्।
यथा जले जलं क्षिप्तं क्षीरं क्षीरे घृतं घृते॥ १११
एक एव तदा विष्णुः शिवलीनो न चान्यथा।
एष एव नृसिंहात्मा सदपश्च महाबलः॥ ११२
जगत्संहारकारेण प्रवृत्तो नरकेशरी।
याजनीयो नमस्तस्मै मद्भक्तिसिद्धिकाङ्क्षिभिः॥११३
एतावदुक्त्वा भगवान् वीरभद्रो महाबलः।
अपश्यन् सर्व्वभूतानां तत्रैवान्तरधीयत॥ ११४
नृसिंहकृत्तिवसनस्तदाप्रभृति शङ्करः।
वक्त्रं तन्मुण्डमालायां नायकत्वेन कल्पितम्॥ ११५
ततो देवा निरातङ्काः कीर्त्तयन्तः कथामिमाम्॥
विस्मयोत्फुल्लनयना जग्मुः सर्व्वे यथागतम्॥ ११६
य इदं परमाख्यानं पुण्यं देवैः समन्वितम्।
पठित्वा शृणुते चैव सर्व्वदुःखविनाशनम्॥ ११७
धन्यं यशस्यमायुष्यमारोग्यं पुष्टिवर्द्धनम्।
सर्व्वविघ्नप्रशमनं सर्व्वव्याधिविनाशनम्॥ ११८
अपमृत्युप्रशमनं महाशान्तिकरं शुभम्।
अरिचक्रप्रशमनं सर्व्वाधिप्रविनाशनम्॥ ११९
ततो दुःस्वप्नशमनं सर्व्वभूतनिवारणम्।
विषग्रहक्षयकरं पुत्रपौत्रादिवर्द्धनम्॥ १२०
योगसिद्धिप्रदं सम्यक् शिवज्ञानप्रकाशकम्।
शेषलोकस्य सोपानं वाञ्छितार्थैकसाधनम्॥ १२१
विष्णुमायानिरसनं देवतापरमार्थदम्।
वाञ्छासिद्धिप्रदञ्चैव ऋद्धिप्रज्ञादिसाधनम्॥ १२२
इदन्तु शरभाकारं परं रूपं पिनाकिनः।
प्रकाशितव्यं भक्तेषु चिरेषूद्यमितेषु च॥ १२३
तेरेव पठितव्यञ्च श्रोतव्यञ्च शिवात्मभिः।
शिवोत्सवेषु सर्व्वेषु चतुर्द्दश्यष्टमीषु च॥ १२४
पठेत् प्रतिष्ठाकालेषु शिवसन्निधिकारणम्।

चोरव्याघ्राहिसिंहान्तकृतो राजभयेषु च ॥ १२५
अत्रान्योत्पातभूकम्प-दवाग्नि-पांशुवृष्टिषु।
उल्कापाते महावाते विना वृष्ट्यातिवृष्टिषु ॥ १२६
अतस्तव पठेद्विद्वान् शिवभक्तो दृढ़व्रतः ॥ १२७
यः पठेच्छृणुयाद्वापि स्तवं सर्व्वमनुत्तमम्।
स रुद्रत्वं समासाद्य रुद्रस्यानुचरो भवेत् ॥ १२८

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
षण्णवतितमोऽध्यायः ॥९६॥

---

## सप्तनवतितमोऽध्यायः।

ऋषय ऊचुः।

जलन्धरं जटामौलिः पुरा जम्भारिविक्रमम्।
कथं जघान भगवान् भगनेत्रहरो हरः।
वक्तुमर्हसि चास्माकं रोमहर्षण सुव्रत ॥ १

सूत उवाच।

जलन्धर इति ख्यातो जलमण्डलसम्भवः।
आसीदन्तकसङ्काशस्तपसा लब्धविक्रमः ॥ २
तेन देवाः सगन्धर्व्वाः सयक्षोरगराक्षसाः।
निर्ज्जिताः समरे सर्व्वे ब्रह्मा च भगवानजः ॥ ३
जित्वैव देवसङ्घातं ब्रह्माणं वै जलन्धरः।
जगाम देवदेवेशं विष्णुं विश्वहरं गुरुम् ॥ ४
तयोः समभवद्युद्धं दिवारात्रमविश्रमम्।
जलन्धरेणयोस्तत्र निर्ज्जितो मधुसूदनः ॥ ५
जलन्धरोऽपि तं जित्वा देवदेवं जनार्द्दनम्।
प्रोवाचेदं दितेः पुत्रान् न्यायधीर्ज्जेतुमीश्वरम् ॥ ६
सर्व्वे जिता मया युद्धे शङ्करो ह्यजितो रणे।
तं जित्वा सर्व्वमीशानं गणपैर्नन्दिना क्षणात् ॥ ७
अहमेव भवत्वञ्च ब्रह्मत्वं वैष्णवं तथा।
वासवत्वञ्च युष्माकं दास्ये दानवपुङ्गवाः ॥ ८
जलन्धरवचः श्रुत्वा सर्व्वे ते दानवाधमाः।
जगर्ज्जुरुच्चैः पापिष्ठा मृत्युदर्शनतत्पराः ॥ ९
दैत्यैरेतैस्तथान्यैश्च रथनागतुरङ्गमैः।
सन्नद्धैः सह सन्नह्य शर्व्वं प्रति ययौ बली ॥ १०
भवोऽपि दृष्ट्वा दैत्येन्द्रं मेरुकूटमिव स्थितम्।
अवध्यत्वमपि श्रुत्वा तथान्यैर्भगनेत्रहा ॥ ११
ब्रह्मणो वचनं रक्षन् रक्षको जगतां प्रभुः।
साम्बः सनन्दी सगणः प्रोवाच प्रहसन्निव ॥ १२
किं कृत्यमसुरेशान युद्धे नानेन साम्प्रतम्।
महाणैर्भिन्नसर्व्वाङ्गो मर्त्तुमभ्युद्यते मुदा ॥ १३
जलन्धरोऽपि तद्वाक्यं श्रुत्वा श्रोत्रविदारणम्।
सुरेश्वरमुवाचेदं सुरेतरबलेश्वरः ॥ १४
वाक्येनालं महाबाहो देवदेव वृषध्वज।
चन्द्रांशुसन्निभैः शस्त्रैर्हर योद्धुमिहागतः ॥ १५
निशम्यास्य वचः शूली पादाङ्गुष्ठेन लीलया।
महाम्भसि चकाराशु रथाङ्गं रौद्रमायुधम् ॥ १६

कृत्वार्णवाम्भसि सितं भगवान् रथाङ्गं
स्मृत्वा जगत्त्रयमनेन हताः सुराश्च।
दक्षान्धकान्तकपुरत्रययज्ञहर्त्ता
लोकत्रयान्तककरः प्रहसंस्तदाह ॥ १७

पादेन निर्म्मितं दैत्य जलन्धर महार्णवे।
बलवान् यदि चोद्धर्त्तुं तिष्ठ योद्धुं न चान्यथा ॥ १८
तस्य तद्वचनं श्रुत्वा क्रोधेनादीप्तलोचनः।
प्रदहन्निव नेत्राभ्यां प्राहालोक्य जगत्त्रयम् ॥ १९

जलन्धर उवाच।

गदामुद्धृत्य हत्वा च नन्दिनं त्वाञ्च शङ्कर।
हत्वा लोकान् सुरैः सार्द्धं डुण्डुभान् गरुड़ो यथा ॥ २०
हन्तुं चराचरं सर्व्वं समर्थोऽहं सवासवम्।
को महेश्वर मद्बाणैरच्छेद्यो भुवनत्रये ॥ २१
बालभावे च भगवान् तपसैव विनिर्ज्जितः।
ब्रह्मा बली यौवने वै मुनयः सुरपुङ्गवैः ॥ २२
दग्धं क्षणेन सकलं त्रैलोक्यं सचराचरम्।
तपसा किं त्वया रुद्र निर्ज्जितो भगवानपि ॥ २३
इन्द्राग्नि-यम-वित्तेश-वायु-वारीश्वरादयः।
न सेहिरे यथा नागा गन्धं पक्षिपतेरिव ॥ २४
न लब्धा दिवि भूमौ च बाहवो मम शङ्कर।
समस्तान् पर्व्वतान् प्राप्य घर्षिताश्च गणेश्वर ॥ २५
गिरीन्द्रो मन्दरः श्रीमान् नीलो मेरुः सुशोभनः।
घर्षितो बाहुदण्डेन कण्डूनोदार्थमापतत् ॥ २६
गङ्गा निरुद्धा बाहुभ्यां लीलार्थं हिमवद्गिरौ।
नारीणां मम भृत्यैश्च वन्द्यो बद्धो दिवौकसाम् ॥ २७
बड़वाया मुखं भग्नं गृहीत्वा वै करेण तु।
तत्क्षणादेव सकलञ्चैकार्णवमभूदिदम् ॥ २८
ऐरावतादयो नागाः क्षिप्ताः सिन्धुजलोपरि।

सरथो भगवानिन्द्रः चिप्तश्च शतयोजनम्॥ २९
गरुड़ोऽपि मया बद्धो नागपाशेन विष्णुना।
उर्व्वश्याद्या मया नीता नार्य्यः कारागृहान्तरम्॥३०
कथञ्चिल्लब्धवान् शक्रः शचीमेकां प्रणम्य माम्।
मां न जानासि दैत्येन्द्रं जलन्धरमुमापते॥ ३१

सूत उवाच।

एवमुक्तो महादेवः प्राहद्दद्रे रथं तदा।
तस्य नेत्राग्निभागेकक्रलाद्रर्द्दन चाकुलम्॥ ३२

दैत्यानामतुलबलैर्दैश्च नागे-
दैत्येन्द्रास्त्रिपुररिपोर्निरीचणेन।
नागादैशसमनुसंवृतश्च नागे-
र्द्देवेशं वचनमुवाच चाल्पबुद्धिः
किं कार्य्यं मम युधि देवदैत्यसङ्घै-
र्हन्तं यत् सकलमिदं चणात् समर्थः।
यत् तस्माद्भयमिह नास्ति योद्धुमीश
वाञ्छैषा विपुलतरा न संशयोऽत्र॥ ३४
तस्मात् त्वं मम मदनारिदचशत्रो
यद्वारे त्रिपुररिपो ममैव वीरैः।
भूतेन्द्रैर्हरिविदनेन देवसङ्घै-
र्योद्धुं ते बलमिह चास्ति चेद्धि तिष्ठ॥ ३५

इत्युक्त्वाथ महादेवं महादेवारिनन्दनः।
न चचाल न सस्मार निहतान् बान्धवान् युधि॥३६
दुर्म्मदेनाविनीतात्मा दोर्भ्यामास्फोट्य दोर्ब्बलात्।
सुदर्शनाख्यं यच्चक्रं तेन हन्तुं समुद्यतः॥ ३७
दुर्द्धरेण रथाङ्गेन कृच्छ्रेणापि द्विजोत्तमाः।
स्थापयामास वै स्कन्धे द्विधाभूतश्च तेन वै॥ ३८
कुलिशेन यथा छिन्नो द्विधा गिरिवरो द्विजाः।
पपात दैत्यो बलवानञ्जनाद्रिरिवापरः॥ ३९
तस्य रक्तेन रौद्रेण सम्पूर्णमभवत् चणात्॥ ४०
तद्रक्तमखिलं रुद्र-नियोगान्मांसमेव च।
महारौरवमासाद्य रक्तकुण्डमभूदहो॥ ४१
जलन्धरं हतं दृष्ट्वा देवगन्धर्व्वपार्षदाः।
सिंहनादं महत् कृत्वा साधु देवेति चाब्रुवन्॥ ४२
यः पठेच्छृणुयाद्वापि जलन्धरविमर्द्दनम्।
श्रावयेद्वा यथान्यायं गाणपत्यमवाप्नुयात्॥ ४३
इति श्रीलैङ्गे महापुराणे पूर्व्वभागे सप्त-
नवतितमोऽध्यायः॥ ९७॥

## अष्टनवतितमोऽध्यायः।

ऋषय ऊचुः।

कथं देवेन वै सूत देवदेवान्महेश्वरात्।
सुदर्शनाख्यं वै लब्धं वक्तुमर्हसि विष्णुना॥ १

सूत उवाच।

देवानामसुरेन्द्राणामभवच्च सुदारुणः।
सर्व्वेषामेव भूतानां विनाशकरणो महान्॥ २
ते देवाः शक्तिमुषलैः सायकैर्नतपर्व्वभिः।
प्रभिद्यमानाः कुन्तैश्च दुद्रुवुर्भयविह्वलाः॥ ३
पराजितास्तदा देवा देवदेवेश्वरं हरिम्।
प्रणेमुस्तं सुरेशानं शोकसंविग्नमानसाः॥ ४
तान् समीक्ष्याथ भगवान् देवदेवेश्वरो हरिः।
प्रणिपत्य स्थितान् देवानिदं वचनमब्रवीत्॥ ५
वत्साः किमिति वै देवाश्च्युतालङ्कारविक्रमाः।
समागताः ससन्तापा वक्तुमर्हथ सुव्रताः॥ ६
तस्य तद्वचनं श्रुत्वा तथाभूताः सुरोत्तमाः।
प्रणम्याहुर्यथावृत्तं देवदेवाय विष्णवे॥ ७
भगवन् देवदेवेश विष्णो जिष्णो जनार्द्दन।
दानवैः पीड़िताः सर्व्वे वयं शरणमागताः॥ ८
त्वमेव देवदेवेश गतिर्नः पुरुषोत्तम।
त्वमेव परमात्मा हि त्वं पिता जगतामपि॥ ९
त्वमेव भर्त्ता हर्त्ता च भोक्ता दाता जनार्द्दन।
हन्तुमर्हसि तस्मात् त्वं दानवान् दानवार्द्दन॥ १०
दैत्याश्च वैष्णवैर्ब्राह्मै रौद्रैर्याम्यैः सुदारुणैः।
कौवेरैश्चैव सौम्यैश्च नैर्ऋत्यैर्वारुणैर्दृढ़ैः॥ ११
वायव्यैश्च तथाग्नेयैरैशानैर्वार्षिकैः शुभैः।
सौरै रौद्रैस्तथा भीमैः कम्पनैर्जृम्भणैर्दृढ़ैः॥ १२
अवध्या वरलाभात् ते सर्व्वे वारिजलोचन।
सूर्य्यमण्डलसम्भूतं त्वदीयं चक्रमुद्यतम्॥ १३
कुण्ठितं हि दधीचेन च्यावनेन जगद्गुरो।
दण्डं शार्ङ्गं तवास्त्रञ्च लब्धं दैत्यैः प्रसादतः॥ १४
पुरा जलन्धरं हन्तुं निर्म्मितं त्रिपुरारिणा।
रथाङ्गं सुशितं घोरं तेन तान् हन्तुमर्हसि।
तस्मात् तेन निहन्तव्या नान्यैः शस्त्रशतैरपि॥ १५
ततो निशम्य तेषां वै वचनं वारिजेक्षणः।
वाचस्पतिमुखानां स ...
यच्छ्री श्रीपतिरज्वा यच्छान्तोऽमोघविक्रमः।

श्रीविष्णुरुवाच ।

भो भो देवा महादेवं सर्व्वैर्देवैः सनातनैः ।
सम्प्राप्य साम्प्रतं सर्व्वं करिष्यामि दिवौकसाम् ॥ १७
देवा जलन्धरं हन्तुं निर्म्मितं हि पुरारिणा ।
लब्ध्वा रथाङ्गं तेनैव निहत्य च महासुरान् ॥ १८
सर्व्वान् धुन्धुमुखान् दैत्यानष्टषष्टिशतान् सुरान् ।
सबान्धवान् क्षणादेव युष्मान् सन्तारयाम्यहम् ॥ १९

सूत उवाच ।

एवमुक्त्वा सुरश्रेष्ठान् सुरश्रेष्ठमनुस्मरन् ।
सुरश्रेष्ठस्तदा श्रेष्ठं पूजयामास शङ्करम् ॥ २०
लिङ्गं स्थाप्य यथान्यायं हिमवच्छिखरे शुभे ।
मेरुपर्व्वतसङ्काशं निर्म्मितं विश्वकर्म्मणा ॥ २१
त्वरिताख्येन रुद्रेण रौद्रेण च जनार्द्दनः ।
स्नाप्य सम्पूज्य गन्धाद्यैर्ज्वालाकारं मनोरमम् ॥ २२
तुष्टाव च तदा रुद्रं सम्पूज्याग्नौ प्रणम्य च ।
देवं नाम्नां सहस्रेण भवाद्येन यथाक्रमम् ॥ २३
पूजयामास च शिवं प्रणवाद्यं नमोऽन्तकम् ।
देवं नाम्नां सहस्रेण भवाद्येन महेश्वरम् ॥, २४
प्रतिनाम स पद्मेन पूजयामास शङ्करम् ।
अग्नौ च नामभिर्देवं भवाद्यैः समिदादिभिः ॥ २५
स्वाहान्तैर्विधिवद्धुत्वा प्रत्येकमयुतं प्रभुम् ।
तुष्टाव च पुनः शम्भुं भवाद्यैर्भवमीश्वरम् ॥ २६

श्रीविष्णुरुवाच ।

भवः शिवो हरो रुद्रः पुरुषः पद्मलोचनः ।
अर्थितव्यः सदाचारः सर्व्वशम्भुमहेश्वरः ॥ २७
ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात् ।
वरीयान् वरदो वन्द्यः शङ्करः परमेश्वरः ॥ २८
गङ्गाधरः शूलधरः परार्थैकप्रयोजनः ।
सर्व्वज्ञः सर्व्वदेवादि-गिरिधन्वा जटाधरः ॥ २९
चन्द्रापीडश्चन्द्रमौलिर्विद्वान् विश्वामरेश्वरः ।
वेदान्तसारसन्दोहः कपाली नीललोहितः ॥ ३०
ध्यानाधारोऽपरिच्छेद्यो गौरीभर्त्ता गणेश्वरः ।
अष्टमूर्त्तिर्विश्वमूर्त्तिस्त्रिवर्गः स्वर्गसाधनः ॥ ३१
ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ।
वामदेवो महादेवः पाण्डुः परिदृढोऽदृढः ॥ ३२
विश्वरूपो विरूपाक्षो वागीशः शुचिरन्तरः ।
ब्रह्मणो वचनं रचन् रचिका जगता प्रभुः ।
ईशः पिनाकी खट्वाङ्गी चित्रवेशश्चिरन्तनः ।
तमोहरो महायोगी गोप्ता ब्रह्माङ्गहृज्जटी ॥ ३४
कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ।
उन्मत्तवेषश्चक्षुष्यो दुर्व्वासाः स्मरशासनः ॥ ३५
दृढायुधः स्कन्दगुरुः परमेष्ठी परायणः ।
अनादि-मध्य-निधनो गिरिशो गिरिबान्धवः ॥ ३६
कुबेरबन्धुः श्रीकण्ठो लोकवर्णोत्तमोत्तमः ।
सामान्यदेवः कोदण्डी नीलकण्ठः परश्वधी ॥ ३७
विशालाक्षो मृगव्याधः सुरेशः सूर्य्यतापनः ।
धर्म्मकर्म्माक्षमः क्षेत्रं भगवान् भगनेत्रभित् ॥ ३८
उग्रः पशुपतिस्तार्क्ष्यप्रियभक्तः प्रियंवदः ।
दान्तो दयाकरो दक्षः कपर्द्दी कामशासनः ॥ ३९
श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः ।
लोककर्त्ता भूतपतिर्महाकर्त्ता महौषधी ॥ ४०
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी ॥ ४१
सोमपोऽमृतपः सोमो महानीतिर्महामतिः ।
अजातशत्रुरालोकः सम्भाव्यो हव्यवाहनः ॥ ४२
लोककारो वेदकारः सूत्रकारः सनातनः ।
महर्षिः कपिलाचार्य्यो विश्वदीप्तिस्त्रिलोचनः ॥ ४३
पिनाकपाणिर्भूर्देवः स्वस्तिदः स्वस्तिकृत् सदा ।
त्रिधामा सौभगः शर्व्वः सर्व्वज्ञः सर्व्वगोचरः ॥ ४४
ब्रह्मधृग्विश्वसृक् स्वर्गः कर्णिकारः प्रियः कविः ।
शाखो विशाखो गोशाखः शिवो नैकः क्रतुः समः ॥ ४५
गङ्गाप्लवोदको भावः सकलः स्थपतिः स्थिरः ।
विजितात्मा विधेयात्मा भूतवाहनसारथिः ॥ ४६
सगणो गणकार्य्यश्च सुकीर्त्तिश्छिन्नसंशयः ।
कामदेवः कामपालो भस्मोद्धूलितविग्रहः ॥ ४७
भस्मप्रियो भस्मशायी कामी कान्तः कृतागमः ।
समायुक्तो निवृत्तात्मा धर्म्मयुक्तः सदाशिवः ॥ ४८
चतुर्म्मुखश्चतुर्बाहुर्दुरावासो दुरासदः ।
दुर्गमो दुर्लभो दुर्गः सर्व्वायुधविशारदः ॥ ४९
अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्द्धनः ।
शुभाङ्गो लोकसारङ्गो जगदीशोऽमृताशनः ॥ ५०
भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः ।
हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः ॥ ५१
महाह्रदो महागर्भः सिद्धवृन्दारवन्दितः ।

व्याघ्रचर्म्मधरो व्यालो महाभूतो महानिधिः॥ ५२
अमृताङ्गोऽमृतवपुः पञ्चयज्ञः प्रभञ्जनः।
पञ्चविंशतितत्त्वज्ञः पारिजातः परावरः॥ ५३
सुलभः सुव्रतः शूरो वाङ्मयैकनिधिर्निधिः।
वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः॥ ५४
आश्रमः क्षपणः क्षामो ज्ञानवानचलाचलः।
प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः॥ ५५
धनुर्द्धरो धनुर्व्वेदो गुणराशिर्गुणाकरः।
अनन्तदृष्टिरानन्दो दण्डो दमयिता दमः॥ ५६
अभिवाद्यो महाचार्य्यो विश्वकर्म्मा विशारदः।
वीतरागो विनीतात्मा तपस्वी भूतभावनः॥ ५७
उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः।
कल्याणप्रकृतिः कल्पः सर्व्वलोकप्रजापतिः॥ ५८
तपस्वी तारको धीमान् प्रधानप्रभुरव्ययः।
लोकपालोऽन्तर्हितात्मा कल्पादिः कमलेक्षणः॥ ५९
वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः।
चन्द्रः सूर्य्यः शनिः केतुर्विरामो विद्रुमच्छविः॥ ६०
भक्तिगम्यः परंब्रह्म मृगवाणार्पणोऽनघः।
अद्रिराजालयः कान्तः परमात्मा जगद्गुरुः॥ ६१
सर्व्वकर्म्माचलस्त्वष्टा मङ्गल्यो मङ्गलावृतः।
महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः॥ ६२
अहः संवत्सरो व्याप्तिः प्रमाणं परमं तपः।
संवत्सरकरो मन्त्रः प्रत्ययः सर्व्वदर्शनः॥ ६३
अजः सर्व्वेश्वरः स्निग्धो महारेता महाबलः।
यागी योग्यो महारेताः सिद्धः सर्व्वादिरग्निदः॥६४
वसुर्वसुमनाः सत्यः सर्व्वपापहरो हरः।
अमृतः शाश्वतः शान्तो वाणहस्तः प्रतापवान्॥ ६५
कमण्डलुधरो धन्वी वेदाङ्गो वेदविन्मुनिः।
भ्राजिष्णुर्भोजनं भोक्ता लोकनेता दुराधरः॥ ६६
अतीन्द्रियो महामायः सर्व्वावासश्चतुष्पथः।
कालयोगी महानादो महोत्साहो महाबलः॥ ६७
महाबुद्धिर्महावीर्य्यो भूतचारी पुरन्दरः।
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः॥ ६८
अनिर्देश्यवपुः श्रीमान् सर्व्वहार्य्यमितो गतिः।
बहुश्रुतो बहुमयो नियतात्मा भवोद्भवः॥ ६९
ओजस्तेजोद्युतिकरो नर्त्तकः सर्व्वकामकः।
नृत्यप्रियो नृत्यनृत्यः प्रकाशात्मा प्रतापनः॥ ७०
बुद्धस्पष्टाक्षरो मन्त्रः सम्मानः सारसंप्लवः।
युगादिकृद्युगावर्त्तो गम्भीरो वृषवाहनः॥ ७१
इष्टो विशिष्टः शिष्टेष्टः शरभः शरभो धनुः।
अपांनिधिरधिष्ठानं विजयो जयकालवित्॥ ७२
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः।
विरोचनः सुरगणो विद्येशो विबुधाश्रयः॥ ७३
बालरूपो बलोन्माथी विवर्त्तो गहनो गुरुः।
करणं कारणं कर्त्ता सर्व्वबन्धविमोचनः॥ ७४
विद्वत्तमो वीतभयो विश्वभर्त्ता निशाकरः।
व्यवसायो व्यवस्थानः स्थानदो जगदादिजः॥ ७५
दुन्दुभो ललितो विश्वो भवात्मात्मनि संस्थितः।
वीरेश्वरो वीरभद्रो वीरहा वीरभृद्विराट्॥७६
वीरचूडामणिर्वेत्ता तीव्रनादो नदीधरः।
आज्ञाधारस्त्रिशूली च शिपिविष्टः शिवालयः॥७७
वालखिल्यो महाचापस्तिग्मांशुर्निधिरव्ययः।
अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः॥ ७८
मघवान् कौशिको गोमान् विश्रामः सर्व्वशासनः।
ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत्॥ ७९
अमोघदण्डो मध्यस्थो हिरण्यो ब्रह्मवर्च्चसी।
परमार्थः परमयः शम्बरो व्याघ्रकोऽनलः॥ ८०
रुचिर्वररुचिर्वन्द्यो वाचस्पतिरहर्पतिः।
रविर्विरोचनः स्कन्धः शास्ता वैवस्वतो जनः॥ ८१
युक्तिरुन्नतकीर्त्तिश्च शान्तरागः पराजयः।
कैलासपति-कामारिः सविता रविलोचनः॥ ८२
विद्वत्तमो वीतभयो विश्वहर्त्ता निवारितः।
नित्यो नियतकल्याणः पुण्यश्रवणकीर्त्तनः॥ ८३
दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः।
उत्तारको दुष्कृतिहा दुर्द्धर्षो दुःसहोऽभयः॥ ८४
अनादिर्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः।
विश्वगोप्ता विश्वभर्त्ता सुधीरो रुचिराङ्गदः॥ ८५
जननो जनजन्मादिः प्रीतिमान् नीतिमान् नयः।
विशिष्टः काश्यपो भानुर्भीमो भीमपराक्रमः॥ ८६
प्रणवः सप्तधाचारो महाकायो महाधनुः।
जन्माधिपो महादेवः सकलागमपारगः॥ ८७
तत्त्वातत्त्वविवेकात्मा विभूष्णुर्भूतिभूषणः।
ऋषिर्ब्राह्मणविज्जिष्णुर्जन्म-मृत्यु-जरातिगः॥ ८८
यज्ञो यज्ञपतिर्यज्वा यज्ञान्तोऽमोघविक्रमः।

महेन्द्रो दुर्भरः सेनी यज्ञाङ्गो यज्ञवाहनः ॥ ८९
पञ्चब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः ।
आत्मयोनिरनाद्यन्तो षड्विंशत्सप्तलोकधृक् ॥ ९०
गायत्रीवल्लभः प्रांशुर्विश्वावासः प्रभाकरः ।
शिशुर्गिरिरतः सम्राट् सुषेणः सुरशत्रुहा ॥ ९१
अमोघोऽरिष्टमथनो मुकुन्दो विगतज्वरः ।
स्वयंज्योतिरनुज्योतिरात्मज्योतिरचञ्चलः ॥ ९२
पिङ्गलः कपिलश्मश्रुः शास्त्रनेत्रत्रयोऽतनुः ।
ज्ञानस्कन्धो महाज्ञानी निरुत्पत्तिरुपप्लवः ॥ ९३
भगो विवस्वानादित्यो योगाचार्य्यो बृहस्पतिः ।
उदारकीर्त्तिरुद्योगी सद्योगी सदसन्मयः ॥ ९४
नक्षत्रमाली राकेशः साधिष्ठानः षडाश्रयः ।
पवित्रपाणिः पापारिर्मणिपूरो मनोगतिः ॥ ९५
हृत्पुण्डरीकमासीनः शुक्लः शान्तो वृषाकपिः ।
विष्णुर्ग्रहपतिः कृष्णः समर्थोऽनर्थनाशनः ॥ ९६
अधर्मशत्रुरक्षय्यः पुरुहूतः पुरुष्टुतः ।
ब्रह्मगर्भो बृहद्गर्भो धर्म्मधेनुर्धनागमः ॥ ९७
जगद्धितैषी सुगतः कुमारः कुशलागमः ।
हिरण्यवर्णो ज्योतिष्मान् नानाभूतधरो ध्वनिः ॥ ९८
अरोगो नियमाध्यक्षो विश्वामित्रो द्विजोत्तमः ।
बृहज्ज्योतिः सुधामा च महाज्योतिरनुत्तमः ॥ ९९
मातामहो मातरिश्वा नभस्वान् नागहारधृक् ।
पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ॥ १००
निरावरणधर्म्मज्ञो विरिञ्चो विष्टरश्रवाः ।
आत्मभूरनिरुद्धोऽत्रि-ज्ञानमूर्त्तिर्महायशाः ॥ १०१
लोकचूड़ामणिर्वीरः चण्डसत्यपराक्रमः ।
व्यालकल्पो महाकल्पो महावृक्षः कलाधरः ॥ १०२
अलङ्करिष्णुस्त्वचलो रोचिष्णुर्विक्रमोत्तमः ।
आशुशब्दपतिर्वेगी प्लवनः शिखिसारथिः ॥ १०३
असंसृष्टोऽतिथिः शक्रः प्रमाथी पापनाशनः ।
वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः ॥ १०४
जर्य्यो जराधिशमनो लोहितश्च तनूनपात् ।
पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ॥ १०५
निदाघस्तपनो मेघः पक्षः परपुरञ्जयः ।
मुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ॥ १०६
वसन्तो माधवो ग्रीष्मो नभस्यो वीजवाहनः ।
अङ्गिरा मुनिरात्रेयो विमलो विश्ववाहनः ॥ १०७

पावनः पुरुजिच्छक्रस्त्रिविद्यो नरवाहनः ।
मनो बुद्धिरहङ्कारः क्षेत्रज्ञः क्षेत्रपालकः ॥ १०८
तेजोनिधिर्ज्ञाननिधिर्विपाको विघ्नकारकः ।
अधरोऽनुत्तरो ज्ञेयो ज्येष्ठो निःश्रेयसालयः ॥ १०९
शैलो नगस्तनुर्देहो दानवारिररिन्दमः ।
चारुधीर्जनकश्चारु-विशल्यो लोकशल्यकृत् ॥ ११०
चतुर्व्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ।
आम्नायोऽथ समाम्नायस्तीर्थदेवशिवालयः ॥ १११
बहुरूपो महारूपः सर्व्वरूपश्चराचरः ।
न्यायनिर्व्वाहको न्यायो न्यायगम्यो निरञ्जनः ॥ ११२
सहस्रमूर्द्धा देवेन्द्रः सर्व्वशस्त्रप्रभञ्जनः ।
मुण्डो विरूपो विकृतो दण्डी दान्तो गुणोत्तमः ॥ ११३
पिङ्गलाक्षोऽथ हर्य्यक्षो नीलग्रीवो निरामयः ।
सहस्रबाहुः सर्व्वेशः शरण्यः सर्व्वलोकभृत् ॥ ११४
पद्मासनः परं ज्योतिः परावरपरं फलम् ।
पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ॥ ११५
परावरज्ञो वीजेशः सुमुखः सुमहास्वनः ।
देवासुरगुरुर्देवो देवासुरनमस्कृतः ॥ ११६
देवासुरमहामात्रो देवासुरमहाश्रयः ।
देवादिदेवो देवर्षि-देवासुरवरप्रदः ॥ ११७
देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ।
सर्व्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः ॥ ११८
ईड्योऽनीशः सुरव्याघ्रो देवसिंहो दिवाकरः ।
विबुधाग्रवरश्रेष्ठः सर्व्वदेवोत्तमोत्तमः ॥ ११९
शिवज्ञानरतः श्रीमान् शिखिश्रीपर्व्वतप्रियः ।
जयस्तम्भो विशिष्टम्भो नरसिंहनिपातनः ॥ १२०
ब्रह्मचारी लोकचारी धर्म्मचारी धनाधिपः ।
नन्दी नन्दीश्वरो नग्नो नग्नव्रतधरः शुचिः ॥ १२१
लिङ्गाध्यक्षः सुराध्यक्षो युगाध्यक्षो युगावहः ।
स्ववशः सवशः स्वर्ग-स्वरः स्वरमयःस्वनः ॥ १२२
वीजाध्यक्षो वीजकर्त्ता धनकृद्धर्म्मवर्द्धनः ।
दम्भोऽदम्भो महादम्भः सर्व्वभूतमहेश्वरः ॥ १२३
श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः ।
लोकोत्तरस्फुटा लोकस्त्र्यम्बको नागभूषणः ॥ १२४
अन्धकारिर्मखद्वेषी विष्णुकन्धरपातनः ।
वीतदोषोऽक्षयगुणो दक्षारिः पूषदन्तहृत् ॥ १२५
धूर्ज्जटिः खण्डपरशुः सकलो निष्कलोऽनघः ।

आधारः सकलाधारः पाण्डुराभो मृडो नटः ॥ १२६
पूर्णं पूरयिता पुण्यः सुकुमारः सुलोचनः।
सामगेयः प्रियकरः पुण्यकीर्त्तिरनामयः ॥ १२७
मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः।
जीवितान्तकरो नित्यो वसुरेता वसुप्रियः ॥ १२८
सद्गतिः सत्कृतिः सक्तः कालकण्ठः कलाधरः।
मानी मान्यो महाकालः सद्भूतिः सत्परायणः ॥१२९
चन्द्रसञ्जीवनः शास्ता लोकगूढ़ोऽमराधिपः।
लोकबन्धुर्लोकनाथः कृतज्ञः कृतिभूषणः ॥ १३०
अनपाय्यक्षरः कान्तः सर्व्वशास्त्रभृतां वरः।
तेजोमयो द्युतिधरो लोकमायोऽग्रणीरणुः ॥ १३१
शुचिस्मितः प्रसन्नात्मा दुर्ज्जयो दुरतिक्रमः।
ज्योतिर्म्मयो निराकारो जगन्नाथो जलेश्वरः॥१३२
तुम्बवीणी महाकायो विशोकः शोकनाशनः।
त्रिलोकात्मा त्रिलोकेशः शुद्धः शुद्धिरथाक्षजः ॥१३३
अव्यक्तलक्षणो व्यक्तो व्यक्ताव्यक्तो विशां पतिः।
वरशीलो वरतुलो मानो मानधनो मयः ॥ १३४
ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्यमः।
वेधा धाता विधाता च अत्ता हर्त्ता चतुर्म्मुखः ॥१३५
कैलासशिखरावासी सर्व्वावासी सतां गतिः।
हिरण्यगर्भो हरिणः पुरुषः पूर्व्वजः पिता ॥ १३६
भूतालयो भूतपतिर्भूतिदो भुवनेश्वरः।
संयोगी योगविद्ब्रह्मा ब्रह्मण्यो ब्राह्मणप्रियः ॥ १३७
देवप्रियो देवनाथो देवज्ञो देवचिन्तकः।
विषमाक्षः कलाध्यक्षो वृषाङ्को वृषवर्द्धनः ॥ १३८
निर्म्मदो निरहङ्कारो निर्म्मोहो निरुपद्रवः।
दर्पहा दर्पितो दृप्तः सर्व्वर्त्तुपरिवर्त्तकः ॥ १३९
सप्तजिह्वः सहस्रार्च्चिः स्निग्धः प्रकृतिदक्षिणः।
भूतभव्यभवन्नाथः प्रभवो भ्रान्तिनाशनः ॥ १४०
अर्थोऽनर्थो महाकोशः परकार्य्यैकपण्डितः।
निष्कण्टकः कृतानन्दो निर्व्व्याजो व्याजमर्द्दनः ॥१४१
सत्त्ववान् सात्त्विकः सत्यकीर्त्तिस्तुम्भकृतागमः।
अकम्पितो गुणग्राही नैकात्मा नैककर्म्मकृत् ॥ १४२
सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणोऽनलः।
स्कन्धः स्कन्धधरो धुर्य्यः प्रकटः प्रीतिवर्द्धनः ॥ १४३
अपराजितः सर्व्वसहो विदग्धः सर्व्ववाहनः।
अधृतः स्वधृतः साध्यः पूर्त्तमूर्त्तिर्यशोधरः ॥ १४४
वराहशृङ्गधृग्वायुर्बलवानेकनायकः।
श्रुतिप्रकाशः श्रुतिमानेकबन्धुरनेकधृक् ॥ १४५
श्रीवल्लभशिवारम्भः शान्तभद्रः समञ्जसः।
भूशयो भूतिकृद्भूति-भूषणो भूतवाहनः ॥ १४६
अकायो भक्तकायस्थः कालज्ञानी कलावपुः।
सत्यव्रत-महात्यागी निष्ठाशान्तिपरायणः ॥ १४७
परार्थवृत्तिर्वरदो विविक्तः श्रुतिसागरः।
अनिर्व्विण्णो गुणग्राही कलङ्काङ्कः कलङ्कहा ॥ १४८
स्वभावरुद्रो मध्यस्थः शत्रुघ्नो मध्यनाशकः।
शिखण्डी कवची शूली चण्डी मुण्डी च कुण्डली॥१४९
मेखली कवची खड्गी मायी संसारसारथिः।
अमृत्युः सर्व्वदृक् सिंहस्तेजोराशिर्महामणिः ॥ १५०
असंख्येयोऽप्रमेयात्मा वीर्य्यवान् कार्य्यकोविदः
वेद्यो वेदार्थविद्गोप्ता सर्व्वाचारो मुनीश्वरः ॥ १५१
अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः।
सुरेशः शरणं सर्व्वः शब्दब्रह्म सतांगतिः ॥ १५२
कालभक्षः कलङ्कारिः कङ्कणीकृतवासुकिः।
महेष्वासो महीभर्त्ता निष्कलङ्को विशृङ्खलः ॥१५३
द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः।
निवृत्तः संवृतः शिल्पो व्यूढ़ोरस्को महाभुजः ॥१५४
एकज्योतिर्निरातङ्को नरो नारायणप्रियः।
निर्लेपो निष्प्रपञ्चात्मा निर्व्यग्रो व्यग्रनाशनः ॥ १५५
स्तव्यः स्तवप्रियः स्तोता व्यासमूर्त्तिरनाकुलः।
निरवद्यपदोपायो विद्याराशिरविक्रमः ॥१५६
प्रशान्तबुद्धिरक्षुद्रः क्षुद्रहा नित्यसुन्दरः।
धैर्य्याग्र्यधुर्य्यो धात्रीशः शाकल्यः शर्व्वरीपतिः ॥१५७
परमार्थगुरुर्दृष्टिर्गुरुराश्रितवत्सलः।
रसो रसज्ञः सर्व्वज्ञः सर्व्वसत्त्वावलम्बनः ॥ १५८

सूत उवाच।

एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम्।
स्नापयामास च विभुः पूजयामास पङ्कजैः ॥ १५९
परीक्षार्थं हरेः पूजाकमलेषु महेश्वरः।
गोपयामास कमलं तदेकं भुवनेश्वरः ॥ १६०
हृतपुष्पो हरिस्तत्र किमिदन्त्वभ्यचिन्तयत् ॥ १६१
ज्ञात्वा स्वनेत्रमुद्धृत्य सर्व्वसत्त्वावलम्बनम्।
पूजयामास भावेन नाम्ना तेन जगद्गुरुम् ॥ १६२
ततस्तत्र विभुर्दृष्ट्वा तथाभूतं हरो हरिम्।

तस्मादवततारायु मण्डलात् पावकस्य च ॥ १६३
कोटिभास्करसङ्काशं जटामुकुटमण्डितम्।
ज्वालामालावृतं दिव्यं तीक्ष्णदंष्ट्रं भयङ्करम् ॥१६४
शूल-टङ्क-गदा-चक्र-कुन्त-पाशधरं हरम्।
वरदाभयहस्तञ्च द्वीपिचर्म्मोत्तरीयकम् ॥ १६५
इत्यद्भूतं तदा दृष्ट्वा भवं भस्मविभूषितम्।
हृष्टो नमस्कारायु देवदेवं जनार्द्दनः ॥ १६६
दुद्रुवुस्तं परिक्रम्य सेन्द्रा देवाखिललोचनम्।
चचाल ब्रह्मभुवनं चकम्पे च वसुन्धरा ॥ १६७
ददाह तेजस्तच्छम्भोः प्रान्तं वै शतयोजनम्।
अधस्ताच्चोर्द्ध्वतश्चैव हाहेत्यकृत भूतले ॥ १६८
तदा प्राह महादेवः प्रहसन्निव शङ्करः।
सम्प्रेक्ष्य प्रणयाद्विष्णुं कृताञ्जलिपुटं स्थितम् ॥ १६९
ज्ञातं मयेदमधुना देवकार्य्यं जनार्द्दन।
सुदर्शनाख्यं चक्रञ्च ददामि तव शोभनम् ॥ १७०
यद्रूपं भवता दृष्टं सर्व्वलोकभयङ्करम्।
हिताय तव यत्नेन तव भावाय सुव्रत ॥ १७१
शान्तं रणाजिरे विष्णो देवानां दुःखसाधनम्।
शान्तस्यचास्त्रं शान्तःस्याच्छान्तेनास्त्रेण किंफलम् १७२
शान्तस्य समरे चास्त्रं शान्तिरेव तपस्विनाम्।
योद्धुः शान्त्या बलच्छेदः परस्य बलवृद्धिदः ॥ १७३
देवैरशान्तैर्यद्रूपं मदीयं भावयाव्ययम्।
किमायुधेन कार्य्यं वै योद्धुं देवारिसूदन ॥ १७४
क्षमा युधि न कार्य्या वै योद्धुं देवारिसूदन।
अनागते व्यतीते च दौर्ब्बल्ये स्वजनोत्करे ॥ १७५
अकालिके त्वधर्म्मे च अनर्थे वारिसूदन।
एवमुक्त्वा ददौ चक्रं सूर्य्यायुतसमप्रभम् ॥ १७६
नेत्रञ्च नेता जगतां प्रभुर्वै पद्मसन्निभम्।
तदाप्रभृति तं प्राहुः पद्माक्षमिति सुव्रतम् ॥ १७७
दत्त्वैनं नयनं चक्रं विष्णवे नीललोहितः।
पस्पर्श च कराभ्यां वै सुशुभाभ्यामुवाच ह ॥ १७८
वरदोऽहं वरश्रेष्ठ वरान् वरय चेप्सितान्।
भक्त्या वशीकृतो नूनं त्वयाहं पुरुषोत्तम ॥ १७९
इत्युक्तो देवदेवेन देवदेवं प्रणम्य तम्।
त्वयि भक्तिर्महादेव प्रसीद वरमुत्तमम् ॥ १८०
नान्यमिच्छामि भक्तानामार्त्तयो नास्ति यत् प्रभो।
तच्छ्रुत्वा वचनं तस्य दयावान् सुतरां भवः ॥ १८१
पस्पर्श च ददौ तस्मै श्रद्धां शीतांशुभूषणः।
प्राह चैवं महादेवः परमात्मानमच्युतम् ॥ १८२
मयि भक्तश्च वन्द्यश्च पूज्यश्चैव सुरासुरैः।
भविष्यसि न सन्देहो मत्प्रसादात् सुरोत्तम ॥ १८३
यदा सती दक्षपुत्री विनिन्द्यैव सुलोचना।
मातरं पितरं दक्षं भविष्यति सुरेश्वरी ॥ १८४
दिव्या हैमवती विष्णो तदा त्वमपि सुव्रत।
भगिनीं तव कल्याणीं देवीं हैमवतीमुमाम्।
नियोगाद्ब्रह्मणः साध्वीं प्रदास्यसि ममैव ताम् ॥१८५
मत्सम्बन्धी च लोकानां मध्ये पूज्यो भविष्यसि।
मां दिव्येन च भावेन तदाप्रभृति शङ्करम् ॥ १८६
द्रक्ष्यसे च प्रसन्नेन मित्रभूतमिवात्मना।
इत्युक्त्वान्तर्द्दधे रुद्रो भगवान् नीललोहितः ॥ १८७
जनार्द्दनोऽपि भगवान् देवानामपि सन्निधौ।
अयाचत महादेवं ब्रह्मणां मुनिभिः समम् ॥ १८८
मया प्रोक्तं स्तवं दिव्यं पद्मयोने सुशोभनम्।
यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥१८९
प्रतिनाम्नि हिरण्यस्य दत्तस्य फलमाप्नुयात्।
अश्वमेधसहस्रेण फलं भवति तस्य वै ॥ १९०
घृताद्यैः स्नापयेद्रुद्रं स्थाल्या वै कलशैः शुभैः।
नाम्नां सहस्रेणानेन श्रद्धया शिवमीश्वरम् ॥ १९१
सोऽपि यज्ञसहस्रस्य फलं लब्ध्वा सुरेश्वरैः।
पूज्यो भवति रुद्रस्य प्रीतिर्भवति तस्य वै ॥ १९२
तथास्त्विति तथा प्राह पद्मयोनिर्जनार्द्दनम्।
जग्मतुः प्रणिपत्यैनं देवदेवं जगद्गुरुम् ॥ १९३
तस्मान्नाम्नां सहस्रेण पूजयेदनघो द्विजाः।
जपेन्नाम्नां सहस्रञ्च स याति परमां गतिम् ॥ १९४

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
विष्णुचक्रलाभो नामाष्टनवति-
तमोऽध्यायः ॥ ९८ ॥

---

## नवनवतितमोऽध्यायः।

ऋषय ऊचुः।

सम्भवः सूचितो देव्यास्त्वया सूत महामते।
सविस्तरं वदस्वाद्य सतीत्वं च यथातथम् ॥ १
मेनाजत्वं महादेव्या दक्षयज्ञविमर्द्दनम्।

विष्णुना च कथं दत्ता देवदेवाय शम्भवे ।
कन्यायां वा कथं तस्य वक्तुमर्हसि साम्प्रतम् ॥ २
तेषां तद्वचनं श्रुत्वा सूतः पौराणिकोत्तमः ।
सम्भवञ्च महादेव्याः प्राह तेषां महात्मनाम् ॥ ३

सूत उवाच ।

ब्रह्मणा कथितं पूर्व्वं दक्षिणे तत् सुविस्तरम् ।
युष्माभि(क)र्वै कुमाराय तेन व्यासाय धीमते ॥ ४
तस्मादहमुपश्रुत्य प्रवदामि सुविस्तरम् ।
वचनाद्वो महाभागाः प्रणम्योमां तथा भवम् ॥ ५
सा भगाख्या जगद्धात्री लिङ्गमूर्त्तेस्त्रिवेदिका ।
लिङ्गस्तु भगवान् द्वाभ्यां जगत्सृष्टिर्द्विजोत्तमाः ॥ ६
लिङ्गमूर्त्तिः शिवो ज्योतिस्तमसश्चोपरि स्थितः ।
लिङ्गवेदिसमायोगादर्द्धनारीश्वरोऽभवत् ॥ ७
ब्रह्माणं विदधे देवमग्रे पुत्त्रं चतुर्म्मुखम् ।
प्राहिणोति स्म तस्यैव ज्ञानं ज्ञानमयो हरः ॥ ८
विश्वाधिकोऽसौ भगवानर्द्धनारीश्वरो विभुः ।
हिरण्यगर्भं तं देवी जायमानमपश्यत ॥ ९
सोऽपि रुद्रं महादेवं ब्रह्मापश्यत शङ्करम् ।
तं दृष्ट्वा संस्थितं देवमर्द्धनारीश्वरं प्रभुम् ॥ १०
तुष्टाव वाग्भिरिष्टाभिर्वरदं वारिजोद्भवः ।
विभजस्वेति विश्वेशं विश्वात्मानमजो विभुः ॥ ११
ससर्ज्ज देवीं वामाङ्गात् पत्नीञ्चैवात्मनः समाम् ।
श्रद्धा ह्यस्य शुभा पत्नी ततः पुंसः पुरातनी ॥ १२
सैवाज्ञया विभोर्देवी दक्षपुत्त्री बभूव ह ॥ ।
सतीसंज्ञा तदा सा वै रुद्रमेवाश्रिता पतिम् १३
दक्षं विनिन्द्य कालेन देवी मेना ह्यभूत् पुनः ।
नारदस्यैव दक्षोऽपि शापादेवं विनिन्द्य च ॥ १४
अवज्ञादुर्म्मदो दक्षो देवदेवमुमापतिम् ।
अनादृत्य कृतिं ज्ञात्वा सती दक्षेण तत्क्षणात् ॥१५
भस्मीकृत्यात्मनो देहं योगमार्गेण सा पुनः ।
बभूव पार्व्वती देवी तपसा च गिरेः प्रभोः ॥ १६
ज्ञात्वैतद्भगवान् भर्गो ददाह रुषितः प्रभुः ।
दक्षस्य विपुलं यज्ञं च्यावनेर्वचनादपि ॥ १७
च्यवनस्य सुतो धीमान् दधीच इति विश्रुतः ।
विजित्य विष्णुं समरे प्रासादात् त्र्यम्बकस्य च ॥ १८
विष्णुना लोकपालांश्च शशाप च मुनीश्वरः ।
रुद्रस्य क्रोधजेनैव वह्निना हविषा सुराः ।
विनाशो वै क्षणादेव मायया शङ्करस्य वै ॥ १९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे देवीसम्भवो नाम नवनवतितमोऽध्यायः ॥ ९९ ॥

---

## शततमोऽध्यायः ।

ऋषय ऊचुः ।

विजित्य विष्णुना सार्द्धं भगवान् परमेश्वरः ।
सर्व्वान् दधीचवचनात् कथं भेजे महेश्वरः ॥ १

सूत उवाच ।

दक्षयज्ञे सुविपुले देवान् विष्णुपुरोगमान् ।
ददाह भगवान् रुद्रः सर्व्वान् मुनिगणानपि ॥ २
भद्रो नाम गणस्तेन प्रेषितः परमेष्ठिना ।
विप्रयोगेण देव्या वै दुःसहेनैव सुव्रताः ॥ ३
सोऽसृजद्वीरभद्रश्च गणेशान् रोमजाञ्छुभान् ॥ ४
गणेश्वरैः समारुह्य रथं भद्रः प्रतापवान् ।
गन्तुं चक्रे मतिं यस्य सारथिर्भगवानजः ॥ ५
गणेश्वराश्च ते सर्व्वे विविधायुधपाणयः ।
विमानैर्विश्वतोभद्रैस्तमन्वयुरथो सुराः ॥ ६
हिमवच्छिखरे रम्ये हेमशृङ्गे सुशोभने ।
यज्ञवाटस्तथा तस्य गङ्गाद्वारसमीपतः ॥ ७
तद्देशे चैव विख्यातं शुभं कनखलं द्विजाः ।
दग्धुं वै प्रेषितश्चासौ भगवान् परमेष्ठिना ॥ ८
तदोत्पातो बभूवाथ लोकानां भयशंसनः ।
पर्व्वताश्च व्यशीर्य्यन्त प्रचकम्पे वसुन्धरा ॥ ९
मरुतश्चाप्यघूर्णन्त चुक्षुभे मकरालयः ।
अग्नयो नैव दीप्यन्ति न च दीप्यति भास्करः ॥ १०
ग्रहाश्च न प्रकाशन्ते न देवा न च दानवाः ।
ततः क्षणात् प्रविश्यैव यज्ञवाटं महात्मनः ॥ ११
रोमजैः सहितो भद्रः कालाग्निरिव चापरः ।
उवाच भद्रो भगवान् दक्षञ्चामिततेजसम् ॥ १२
सम्पर्कादेव दक्षाद्य-मुनीन् देवान् पिनाकिना ।
दग्धुं सम्प्रेषितश्चाहं भवन्तं समुनीश्वरैः ॥ १३
इत्युक्त्वा यज्ञशालां तां ददाह गणपुङ्गवः ।
गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः ॥ १४
प्रस्तोत्रा सह होत्रा च दग्धश्चैव गणेश्वरैः ।

(क) यत् दृष्टमिति शेषः ।

गृहीत्वा गणपाः सर्व्वान् गङ्गास्रोतसि चिक्षिपुः ॥ १५
वीरभद्रो महातेजाः शक्रस्योद्यच्छतः करम् ।
व्यष्टम्भयददीनात्मा तथान्येषां दिवौकसाम् ॥ १६
भगस्य नेत्रे चोत्पाट्य करजाग्रेण लीलया ।
निहत्य मुष्टिनादं तान् पूष्णश्चैवं न्यपातयत् ॥ १७
तथा चन्द्रमसं देवं पादाङ्गुष्ठेन लीलया ।
घर्षयामास भगवान् वीरभद्रः प्रतापवान् ॥ १८
चिच्छेद च शिरस्तस्य शक्रस्य भगवान् प्रभोः ।
वह्नेर्हस्तद्वयं छित्त्वा जिह्वामुत्पाट्य लीलया ॥ १९
जघान मूर्ध्नि पादेन वीरभद्रो महाबलः ।
यमस्य दण्डं भगवान् प्रचिच्छेद स्वयं प्रभुः ॥ २०
जघान देवमीशानं त्रिशूलेन महाबलम् ।
त्रयस्त्रिंशत् सुरानेवं विनिहत्याप्रयत्नतः ॥ २१
त्रयश्च त्रिशतं तेषां त्रिसाहस्रञ्च लीलया ।
त्रयश्चैव सुरेन्द्राणां जघान च मुनीश्वरान् ॥ २२
अन्यांश्च देवान् देवोऽसौ सर्व्वान् युद्धाय संस्थितान् ।
जघान भगवान् रुद्रः खड्गमुष्ट्यादिशायकैः ॥ २३
अथ विष्णुर्महातेजाश्चक्रमुद्यम्य मूर्च्छितः ।
युयोध भगवांस्तेन रुद्रेण सह माधवः ॥ २४
तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् ।
विष्णोर्योगबलात् तस्य दिव्यदेहाः सुदारुणाः ॥ २५
शङ्ख-चक्र-गदाहस्ता असंख्यातास्च जज्ञिरे ।
तान् सर्व्वानपि देवोऽसौ नारायणसमप्रभान् ॥ २६
निहत्य गदया विष्णुं ताड़यामास मूर्द्धनि ।
ततश्चोरसि तं देवं लीलयैव रणाजिरे ॥ २७
पपात च तदा भूमौ विसंज्ञः पुरुषोत्तमः ।
पुनरुत्थाय तं हन्तुं चक्रमुद्यम्य स प्रभुः ॥ २८
क्रोधरक्तेक्षणः श्रीमानतिष्ठत् पुरुषर्षभः ।
तस्य चक्रञ्च यद्रौद्रं कालादित्यसमप्रभम् ॥ २९
व्यष्टम्भयददीनात्मा करस्थं न चचाल सः ।
अतिष्ठत् स्तम्भितस्तेन शृङ्गवानिव निश्चलः ॥ ३०
त्रिभिश्च धर्षितं शार्ङ्गं त्रिधाभूतं प्रभोस्तदा ।
शार्ङ्गकोटिप्रसङ्गाद्वै चिच्छेद च शिरः प्रभोः ॥ ३१
छिन्नञ्च निपपाताशु शिरस्तस्य रसातले ।
वायुना प्रेरितञ्चैव प्राणजेन पिनाकिना ॥ ३२
प्रविवेश तदा चैव तदीयाहवनीयकम् ।
तत् प्रविध्वस्तकलशं भग्नयूपं सतोरणम् ॥ ३३
प्रदीपितमहाशालं दृष्ट्वा यज्ञोऽपि दुद्रुवे ।
तं तदा मृगरूपेण धावन्तं गगनं प्रति ॥ ३४
वीरभद्रः समाधाय विशिरस्कमथाकरोत् ।
ततः प्रजापतिं धर्म्मं कश्यपञ्च जगद्गुरुम् ॥ ३५
अरिष्टनेमिनं वीरो बहुपुत्रं मुनीश्वरम् ।
मुनिमङ्गिरसञ्चैव कृशाश्वञ्च महाबलः ॥ ३६
जघान मूर्ध्नि पादेन दक्षञ्चैव यशस्विनम् ।
चिच्छेद च शिरस्तस्य ददाहाग्नौ द्विजोत्तमाः ॥ ३७
सरस्वत्याश्च नासाग्रं देवमातुस्तथैव च ।
निकृत्य करजाग्रेण वीरभद्रः प्रतापवान् ॥ ३८
तस्थौ श्रियावृतो मध्ये प्रेतस्थाने यथा भवः ।
एतस्मिन्नेव काले तु भगवान् पद्मसम्भवः ॥ ३९
भद्रमाह महातेजाः प्रार्थयन् प्रणतः प्रभुः ।
अलं क्रोधेन वै भद्र नष्टाश्चैव दिवौकसः ॥ ४०
प्रसीद क्षम्यतां सर्व्वं रोमजैः सह सुव्रत ।
सोऽपि भद्रः प्रभावेण ब्रह्मणः परमेष्ठिनः ॥ ४१
शमं जगाम शनकैः शान्तस्तस्थौ तदाज्ञया ।
देवोऽपि तत्र भगवानन्तरीक्षे वृषध्वजः ॥ ४२
सगणः सर्व्वदः शर्व्वः सर्व्वलोकमहेश्वरः ।
प्रार्थितश्चैव देवेन ब्रह्मणा भगवान् भवः ॥ ४३
हतानाञ्च तदा तेषां प्रददौ पूर्व्ववत् तनुम् ।
इन्द्रस्य च शिरस्तस्य विष्णोश्चैव महात्मनः ॥ ४४
दक्षस्य च मुनीन्द्रस्य तथान्येषां महेश्वरः ।
वागीश्वर्याश्चैव नासाग्रं देवमातुस्तथैव च ॥ ४५
नष्टानां जीवितञ्चैव वरांश्च विविधानि च ।
दक्षस्य ध्वस्तवक्त्रस्य शिरसा भगवान् प्रभुः ॥ ४६
कल्पयामास वै वक्त्रं लीलया च महान् भवः ।
दक्षोऽपि लब्धसंज्ञश्च समुत्थाय कृताञ्जलिः ॥ ४७
तुष्टाव देवदेवेशं शङ्करं वृषभध्वजम् ।
स्तुतस्तेन महातेजाः प्रदाय विविधान् वरान् ॥ ४८
गाणपत्यं ददौ तस्मै दक्षायाक्लिष्टकर्म्मणे ।
देवाश्च सर्व्वे देवेशं तुष्टुवुः परमेश्वरम् ॥ ४९
नारायणश्च भगवान् तुष्टाव च कृताञ्जलिः ।
ब्रह्मा च मुनयः सर्व्वे पृथक् पृथगजोद्भवम् ॥ ५०
तुष्टुवुर्देवदेवेशं नीलकण्ठं वृषध्वजम् ।
तान् देवाननुगृह्यैव भवोऽप्यन्तरधीयत ॥ ५१
इति श्रीलैङ्गे महापुराणे शततमोऽध्यायः ॥ १०० ॥

## एकाधिकशततमोऽध्यायः।

ऋषय ऊचुः।

कथं हिमवतः पुत्त्री बभूवाम्बा सती शुभा।
कथं वा देवदेवेशमवाप पतिमीश्वरम्॥ १

सूत उवाच।

सा मेनातनुमाश्रित्य स्वेच्छयैव वराङ्गना।
तदा हैमवती जज्ञे तपसा च द्विजोत्तमाः॥ २
जातकर्म्मादिकाः सर्व्वाश्चकार च गिरीश्वरः।
द्वादशे च तदा वर्षे पूर्णे हैमवती शुभा॥ ३
तपस्तेपे तया सार्द्धमनुजा च शुभानना।
अन्या च देवी ह्यनुजा सर्व्वलोकनमस्कृता॥ ४
ऋषयश्च तदा सर्व्वे सर्व्वलोकमहेश्वरीम्।
तुष्टुवुस्तपसा देवीं समावृत्य समन्ततः॥ ५
ज्येष्ठा ह्यपर्णा ह्यनुजा चैकपर्णा शुभानना।
तृतीया च वरारोहा तथा चैवैकपाटला॥ ६
तपसा च महादेव्याः पार्व्वत्याः परमेश्वरः।
वशीकृतो महादेवः सर्व्वभूतपतिर्भवः॥ ७
एतस्मिन्नेव काले तु तारको नाम दानवः।
तारात्मजो महातेजा बभूव दितिनन्दनः॥ ८
तस्य पुत्त्रास्त्रयश्चापि तारकाचो महासुरः।
विद्युन्माली च भगवान् कमलाचश्च वीर्य्यवान्॥ ९
पितामहस्तथा चैषां तारो नाम महाबलः।
तपसा लब्धवीर्य्यश्च प्रसादाद्ब्रह्मणः प्रभोः॥ १०
सोऽपि तारो महातेजास्त्रैलोक्यं सचराचरम्।
विजित्य समरे पूर्व्वं विष्णुञ्च जितवानसौ॥ ११
तयोः समभवद्युद्धं सुघोरं रोमहर्षणम्।
दिव्यं वर्षसहस्रन्तु दिवारात्रमविश्रमम्॥ १२
सरथं विष्णुमादाय चिक्षेप शतयोजनम्।
तारेण विजितः संख्ये दुद्राव गरुड़ध्वजः॥ १३
तारो वरान् शतगुणं लब्ध्वा शतगुणं बलम्।
पितामहाज्जगत् सर्व्वमवाप दितिनन्दनः॥ १४
देवेन्द्रप्रमुखान् जित्वा देवान् देवेश्वरेश्वरः।
वारयामास तैर्देवान् सर्व्वलोकेषु मायया॥ १५
देवताश्च सहेन्द्रेण तारकाद्भयपीड़िताः।
न शान्तिं लेभिरे शूराः शरणं वा भयार्द्दिताः॥ १६
तदामरपतिः श्रीमान् सन्निपत्यामरप्रभुः।
उवाचाङ्गिरसं देवो देवानामपि सन्निधौ॥ १७
भगवंस्तारको नाम तारजो दानवोत्तमः।
तेन सन्निहता युद्धे वत्सा गोपतिना यथा॥ १८
भयात् तस्मान्महाभाग बृहद्युद्धे बृहस्पते।
अनिकेता भ्रमन्त्येते शकुन्ता इव पञ्जरे॥ १९
अस्माकं यान्यमोघानि आयुधान्यङ्गिरोवर।
तानि मोघानि जायन्ते प्रभावादमरद्विषः॥ २०
दशवर्षसहस्राणि द्विगुणानि बृहस्पते।
विष्णुना योधितो युद्धे तेनापि न च सूदितः॥ २१
यस्तेनानिर्ज्जितो युद्धे विष्णुना प्रभविष्णुना।
कथमस्मद्विधस्तस्य स्थास्यते समरेऽग्रतः॥ २२
एवमुक्तास्तु शक्रेण जीवः सार्द्धं सुराधिपैः।
सहस्राक्षेण च विभुं सम्प्राप्याह कुशध्वजम्॥ २३
सोऽपि तस्य मुखाच्छ्रुत्वा प्रणयात् प्रणतार्त्तिहा।
देवैरशेषैः सेन्द्रैस्तु जीवमाह पितामहः॥ २४
जाने वोऽर्त्तिं सुरेन्द्राणां तथापि शृणु साम्प्रतम्।
विनिन्द्य दक्षं या देवी सती रुद्राङ्गसम्भवा॥ २५
उमा हैमवती जज्ञे सर्व्वलोकनमस्कृता।
तस्याश्चैव हि रूपेण यूयं देवाः सुरोत्तमाः॥ २६
विभोर्यतध्वमाकृष्टं रुद्रस्यास्य मनो महत्।
तयोर्योगेन सम्भूतः स्कन्दः शक्तिधरः प्रभुः॥ २७
षड़ास्यो द्वादशभुजः सेनानीः पावकिः प्रभुः।
स्वाहेयः कार्त्तिकेयश्च गाङ्गेयः शरधामजः॥ २८
देवः शाखो विशाखश्च नैगमेयश्च वीर्य्यवान्।
सेनापतिः कुमाराख्यः सर्व्वलोकनमस्कृतः॥ २९
लीलयैव महासेनः प्रबलं तारकासुरम्।
बालोऽपि विनिहत्यैको देवान् सन्तारयिष्यति॥ ३०
एवमुक्तस्तदा तेन ब्रह्मणा परमेष्ठिना।
बृहस्पतिस्तथा सेन्द्रैर्देवैर्देवं प्रणम्य तम्॥ ३१
मेरोः शिखरमासाद्य स्मरं सस्मार सुव्रतः।
स्मरणाद्देवदेवस्य स्मरोऽपि सह भार्य्यया॥ ३२
रत्या समं समागम्य नमस्कृत्य कृताञ्जलिः।
सप्रश्रमाह तं जीवं जगज्जीवो द्विजोत्तमाः॥ ३३
स्मृतो यद्भवता जीव सम्प्राप्तोऽहं तवान्तिकम्।
ब्रूहि यन्मे विधातव्यं तमाह सुरपूजितः॥ ३४
तमाह भगवान् शक्रः सम्भाव्य मकरध्वजम्।
शङ्करेणाम्बिकामद्य संयोजय यथासुखम्॥ ३५

तया स रमते येन भगवान् वृषभध्वजः ।
तेन मार्गेण मार्गस्व पत्न्या रत्यानया सह ॥ ३६
सोऽपि तुष्टो महादेवः प्रदास्यति शुभां गतिम् ।
विप्रयुक्तस्तया पूर्व्वं लब्धा तां गिरिजामुमाम् ॥ ३७
एवमुक्तो नमस्कृत्य देवदेवं शचीपतिम् ।
देवदेवाश्रमं गन्तुं मतिं चक्रे तया सह ॥ ३८
गत्वा तदाश्रमे शम्भोः सह रत्या महाबलः ।
वसन्तेन सहायेन देवं योक्तमनाभवत् ॥ ३९
ततः सम्प्रेक्ष्य मदनं हसन् देवस्त्रियम्बकः ।
नयनेन तृतीयेन सावज्ञं तमवैक्षत ॥ ४०
ततोऽस्य नेत्रजो वह्निः मदनं पार्श्वतः स्थितम् ।
अदहत् तत्क्षणादेव ललाप करुणं रतिः ॥ ४१
रत्याः प्रलापमाकर्ण्य देवदेवो वृषध्वजः ।
कृपया परया प्राह कामपत्नीं निरीक्ष्य च ॥ ४२
अमूर्त्तोऽपि ध्रुवं भद्रे कार्य्यं सर्व्वं पतिस्तव ।
रतिकाले ध्रुवं भद्रे करिष्यति न संशयः ॥ ४३
यदा विष्णुश्च भविता वासुदेवो महायशाः ।
शापाद्भृगोर्महातेजाः सर्व्वलोकहिताय वै ॥ ४४
तदा तस्य सुतो यश्च स पतिस्ते भविष्यति ॥ ४५
सा प्रणम्य तदा रुद्रं कामपत्नी शुचिस्मिता ।
जगाम मदनं लब्धा वसन्तेन समन्विता ॥ ४६

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे मदनदाहो नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

## द्व्यधिकशततमोऽध्यायः ।

### सूत उवाच ।

तपसा च महादेव्याः पार्व्वत्या वृषभध्वजः ।
प्रीतश्च भगवान् शर्व्वो वचनाद्ब्रह्मणस्तदा ॥ १
हिताय चाश्रमाणाञ्च क्रीड़ार्थं भगवान् भवः ।
तदा हैमवतीं देवीमुपयेमे यथाविधि ॥ २
जगाम स स्वयं ब्रह्मा मरीच्याद्यैर्महर्षिभिः ।
तपोवनं महादेव्याः पार्व्वत्याः पद्मसम्भवः ॥ ३
प्रदक्षिणीकृत्य च तां देवीं स जगतोऽरणीम् ।
किमर्थं तपसा लोकान् सन्तापयसि शैलजे ॥ ४
त्वया सृष्टं जगत् सर्व्वं मातस्त्वं मा विनाशय ।
त्वं हि सन्धारयेर्लोकानिमान् सर्व्वान् स्वतेजसा ॥ ५
सर्व्वदेवेश्वरः श्रीमान् सर्व्वलोकपतिर्भवः ।
यस्य वै देवदेवस्य वयं किङ्करवादिनः ॥ ६
स एव परमेशानः स्वयञ्च वरयिष्यति ।
वरदे येन सृष्टासि न विना यस्त्वयाम्बिके ॥ ७
वर्त्तते नात्र सन्देहस्तव भर्त्ता भविष्यति ।
इत्युक्त्वा तां नमस्कृत्य मुहुः सम्प्रेक्ष्य पार्व्वतीम् ॥ ८
गते पितामहे देवो भगवान् परमेश्वरः ।
जगामानुग्रहं कर्त्तुं द्विजरूपेण चाश्रमम् ॥ ९
सा च दृष्ट्वा महादेवं द्विजरूपेण संस्थितम् ।
प्रतिभाद्यैः प्रभुं ज्ञात्वा ननाम वृषभध्वजम् ॥ १०
सम्पूज्य वरदं देवं ब्राह्मणच्छद्मनागतम् ।
तुष्टाव परमेशानं पार्व्वती परमेश्वरम् ॥ ११
अनुगृह्य तदा देवीमुवाच प्रहसन्निव ।
कुलधर्म्माश्रयं रक्षन् भूधरस्य महात्मनः ॥ १२
क्रीड़ार्थञ्च सतां मध्ये सर्व्वदेवपतिर्भवः ।
स्वयंवरे महादेवि तव दिव्ये सुशोभने ॥ १३
आस्थाय रूपं यत् सौम्यं समेष्येऽहं सह त्वया ।
इत्युक्त्वा तां समालोक्य देवो दिव्येन चक्षुषा ॥ १४
जगामेष्टं तदा दिव्यं स्वपुरं प्रययौ च सा ।
दृष्ट्वा हृष्टस्तदा देवीं मेनया तुहिनाचलः ॥ १५
आलिङ्ग्याघ्राय सम्पूज्य पुत्त्रीं साक्षात् तपस्विनीम्
दुहितुर्देवदेवेन न जानन्नभिमन्त्रितम् ॥ १६
स्वयंवरं तदा देव्याः सर्व्वलोकेष्वघोषयत् ।
अथ ब्रह्मा च भगवान् विष्णुः साक्षाज्जनार्द्दनः ॥ १७
शक्रश्च भगवान् वह्निर्भास्करो भग एव च ।
त्वष्टार्य्यमा विवस्वांश्च यमो वरुण एव च ॥ १८
वायुः सोमस्तथेशानो रुद्राश्च मुनयस्तथा ।
अश्विनौ द्वादशादित्या गन्धर्व्वा गरुड़स्तथा ॥ १९
यक्षाः सिद्धास्तथा साध्या दैत्याः किम्पुरुषोरगाः ।
समुद्राश्च नदा वेदा मन्त्रास्तोत्रादयः क्षणाः ॥ २०
नागाश्च पर्व्वताः सर्व्वे यज्ञाः सूर्य्यादयो ग्रहाः ।
त्रयस्त्रिंशच्च देवानां त्रयश्च त्रिशतं तथा ॥ २१
त्रयश्च त्रिसहस्रञ्च तथान्ये बहवः सुराः ।
जग्मुर्गिरीन्द्रपुत्त्र्यास्तु स्वयंवरमनुत्तमम् ॥ २२
अथ शैलसुता देवी हैममारुह्य शोभनम् ।
विमानं सर्व्वतोभद्रं सर्व्वरत्नैरलङ्कृतम् ॥ २३
अप्सरोभिः प्रनृत्ताभिः सर्व्वाभरणभूषितैः ।

गन्धर्व्वसिद्धैर्विविधैः किन्नरैश्च सुशोभनैः ॥ २४
वन्दिभिः स्तूयमाना च स्थिता शैलसुता तदा।
सितातपत्रं रत्नांशु-मिश्रितञ्चावहत् तथा ॥ २५
मालिनी गिरिपुत्र्यास्तु सन्ध्यापूर्णेन्दुमण्डलम्।
चामरासक्तहस्ताभिर्दिव्यस्त्रीभिश्च संवृता ॥ २६
मालां गृह्य जया तस्थौ सुरद्रुमसमुद्भवाम्।
विजया व्यजनं गृह्य स्थिता देव्याः समीपगा ॥ २७
मालां प्रगृह्य देव्यान्तु स्थितायां देवसंसदि।
शिशुर्भूत्वा महादेवः क्रीड़ार्थं वृषभध्वजः ॥ २८
उत्सङ्गतलसंसुप्तो बभूव भगवान् भवः।
अथ दृष्ट्वा शिशुं देवास्तस्या उत्सङ्गवर्त्तिनम् ॥ २९
कोऽयमत्रेति सम्मन्त्र्य चुक्षुभुश्च समागताः।
वज्रमाहारयत् तस्य बाहुमुद्यम्य वृत्रहा ॥ ३०
स बाहुरुद्यमस्तस्य तथैव समुपस्थितः।
स्तम्भितः शिशुरूपेण देवदेवेन लीलया ॥ ३१
वज्रं क्षेप्तुं न शशाक बाहुं चालयितुं तथा।
वह्निः शक्तिं तथा क्षेप्तुं न शशाक तथा स्थितः ॥ ३२
यमोऽपि दण्डं खड्गञ्च निर्ऋतिर्मुनिपुङ्गवाः।
वरुणो नागपाशञ्च ध्वजयष्टिं समीरणः ॥ ३३
सोमो गदां धनेशश्च दण्डं दण्डभृतां वरः।
ईशानश्च तथा शूलं तीव्रमुद्यम्य संस्थितः ॥ ३४
रुद्राश्च शूलमादित्या मुषलं वसवस्तथा।
मुद्गरं स्तम्भिताः सर्व्वे देवेनाशु दिवौकसः ॥ ३५
स्तम्भिता देवदेवेन तथान्ये च दिवौकसः।
शिरः प्रकम्पयन् विष्णुश्चक्रमुद्यम्य संस्थितः ॥ ३६
तस्यापि शिरसो बालः स्थिरत्वं प्रचकार ह।
चक्रं क्षेप्तुं न शशाक बाहुञ्चालयितुं न च ॥ ३७
पूषा दन्तान् दशन् दन्तैर्बालमैक्षत मोहितः।
तस्यापि दशनाः पेतुर्दृष्टमात्रस्य शम्भुना ॥ ३८
बलं तेजश्च योगञ्च तथैवास्तम्भयद्विभुः।
अथ तेषु स्थितेष्वेव मन्यमत्सु सुरेष्वपि ॥ ३९
ब्रह्मा परमसंविग्नो ध्यानमास्थाय शङ्करम्।
बुबुधे देवमीशानमुमोत्सङ्गे तमास्थितम् ॥ ४०
स बुद्ध्वा देवमीशानं शीघ्रमुत्थाय विस्मितः।
ववन्दे चरणौ शम्भोरस्तुवच्च पितामहः ॥ ४१
पुराणैः सामसङ्गीतैः पुण्याख्यैर्गुह्यनामभिः।
स्रष्टा त्वं सर्व्वलोकानां प्रकृतेश्च प्रवर्त्तकः ॥ ४२
बुद्धिस्त्वं सर्व्वलोकानामहङ्कारस्त्वमीश्वरः।
भूतानामिन्द्रियाणाञ्च त्वमेवेश प्रवर्त्तकः ॥ ४३
तवाहं दक्षिणाद्धस्तात् सृष्टः पूर्व्वं पुरातनः।
वामहस्तान्महाबाहो देवो नारायणः प्रभुः ॥ ४४
इयञ्च प्रकृतिर्देवी सदा ते सृष्टिकारणे।
पत्नीरूपं समास्थाय जगत्कारणमागता ॥ ४५
नमस्तुभ्यं महादेव महादेव्यै नमो नमः।
प्रसादात् तव देवेश नियोगाच्च मया प्रजाः ॥ ४६
देवाद्यास्तु इमाः सृष्टा मूढ़ास्त्वद्योगमोहिताः।
कुरु प्रसादमेतेषां यथापूर्व्वं भवन्त्विमे ॥ ४७

सूत उवाच।

विज्ञाप्यैवं तदा ब्रह्मा देवदेवं महेश्वरम्।
संस्तम्भितांस्तदा तेन भगवानाह पद्मजः ॥ ४८
मूढ़ाः स्थ देवताः सर्व्वा नैव बुध्यत शङ्करम्।
देवदेवमिहायान्तं सर्व्वदेवनमस्कृतम् ॥ ४९
गच्छध्वं शरणं शीघ्रं देवाः शक्रपुरोगमाः।
सनारायणकाः सर्व्वे मुनिभिः शङ्करं प्रभुम् ॥ ५०
सार्द्धं मयैव देवेशं परमात्मानमीश्वरम्।
अनया हैमवत्या च प्रकृत्या सह सत्तमम् ॥ ५१
तत्र ते स्तम्भितास्तेन तथैव सुरसत्तमाः।
प्रणेमुर्मनसा सर्व्वे सनारायणकाः प्रभुम् ॥ ५२
अथ तेषां प्रसन्नोऽभूद्देवदेवस्त्रियम्बकः।
यथापूर्व्वं चकाराशु वचनाद्ब्रह्मणः प्रभुः ॥ ५३
तत एवं प्रसन्ने तु सर्व्वदेवनिवारणम्।
वपुश्चकार देवेशस्त्र्यक्षं परममद्भुतम् ॥ ५४
तेजसा तस्य देवास्ते सेन्द्र-चन्द्र-दिवाकराः।
सब्रह्मकाः ससाध्याश्च सनारायणकास्तथा ॥ ५५
सयमाश्च सरुद्राश्च चक्षुरप्रार्थयन् विभुम्।
तेभ्यश्च परमं चक्षुः सर्व्वदृष्टौ च शक्तिमत् ॥ ५६
ददावस्थापतिः शर्व्वो भवान्याश्चाचलस्य च।
लब्धा चक्षुस्तदा देवा इन्द्रविष्णुपुरोगमाः ॥ ५७
सब्रह्मकाः सशक्राश्च तमपश्यन् महेश्वरम्।
ब्रह्माद्या नेमिरे तूर्णं भवानी च गिरीश्वरः ॥ ५८
मुनयश्च महादेवं गणेशाः शिवसम्मताः।
ससर्ज्जुः पुष्पवृष्टिञ्च खेचराः सिद्धचारणाः ॥ ५९
देवदुन्दुभयो नेदुस्तुष्टुवुर्मुनयः प्रभुम्।
जगुर्गन्धर्व्वमुख्याश्च ननृतुश्चाप्सरोगणाः ॥ ६०

सुमुद्गणपाः सर्व्वे मुमोदाम्बा च पार्व्वती।
तस्य देवी तदा हृष्टा समर्चं त्रिदिवौकसाम् ॥ ६१
पादयोः स्थापयामास मालां दिव्यां सुगन्धिनीम्।
साधु साध्विति सम्प्रोच्य तया तत्रैव चार्च्चितम् ॥ ६२
सह देव्या नमश्चक्रुः शिरोभिर्भूतलाश्रितैः।
सर्व्वे सब्रह्मका देवाः सयक्षोरगराक्षसाः ॥ ६३

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे उमा-
स्वयंवरो नाम द्व्यधिकशत-
तमोऽध्यायः ॥१०२॥

---

## त्र्यधिकशततमोऽध्यायः।

सूत उवाच।

अथ ब्रह्मा महादेवमभिवन्द्य कृताञ्जलिः।
उद्वाहः क्रियतां देव इत्युवाच महेश्वरम् ॥ १
तस्य तद्वचनं श्रुत्वा ब्रह्मणः परमेष्ठिनः।
यथेष्टमिति लोकेशं प्राह भूतपतिः प्रभुः ॥ २
उद्वाहार्थं महेशस्य तत्क्षणादेव सुव्रताः।
ब्रह्मणा कल्पितं दिव्यं पुरं रत्नमयं शुभम् ॥ ३
अथादितिर्दितिः साक्षाद्दनुः कद्रुः सुकालिका।
पुलोमा सुरमा चैव सिंहिका विनता तथा ॥ ४
सिद्धिर्माया क्रिया दुर्गा देवी साक्षात् सुधा स्वधा।
सावित्री वेदमाता च रजनी दक्षिणा द्युतिः ॥ ५
स्वाहा स्वधा मतिर्बुद्धिरृद्धिर्वृद्धिः सरस्वती।
राका कुहूः सिनीवाली देवी अनुमती तथा ॥ ६
धरणी धारणी चैला शची नारायणी तथा।
एताश्चान्याश्च देवानां मातरः पत्नयस्तथा ॥ ७
उद्वाहः शङ्करस्येति जग्मुः सर्व्वा मुदान्विताः।
उरगा गरुडा यक्षा गन्धर्व्वाः किन्नरा गणाः ॥ ८
सागरा गिरयो मेघा मासाः संवत्सरास्तथा।
वेदा मन्त्रास्तथा यज्ञास्तोमा धर्म्माश्च सर्व्वशः ॥ ९
हुङ्कारः प्रणवश्चैव प्रतिहाराः सहस्रशः।
कोटिरप्सरसो दिव्यास्तासाञ्च परिचारिकाः ॥ १०
याश्च सर्व्वेषु द्वीपेषु देवलोकेषु निम्नगाः।
ताश्च स्त्रीविग्रहाः सर्व्वाः संजग्मुर्हृष्टमानसाः ॥ ११
गणपाश्च महाभागाः सर्व्वलोकनमस्कृताः।
उद्वाहः शङ्करस्येति तत्राजग्मुर्मुदान्विताः ॥ १२

अस्ययुः शङ्कवर्णाश्च गणकोट्यो गणेश्वराः।
दशभिः केकराक्षश्च विद्युतोऽष्टाभिरेव च ॥ १३
चतुःषष्ट्या विशाखश्च नवभिः पारयात्रिकः।
षड्भिः सर्व्वान्तकः श्रीमान् तथैव विकृताननः ॥ १४
ज्वालाकेशो द्वादशभिः कोटिभिर्गणपुङ्गवः।
सप्तभिः समदः श्रीमान् दुन्दुभोऽष्टाभिरेव च ॥ १५
पञ्चभिश्च कपालीशः षड्भिः सन्दारकः शुभः।
कोटिकोटिभिरेवेह कण्डकः कुम्भकस्तथा ॥ १६
विष्टम्भोऽष्टाभिरेवेह गणपः सर्व्वसत्तमः।
पिप्पलश्च सहस्रेण सन्नादश्च तथा द्विजाः ॥ १७
आवेष्टनस्तथाष्टाभिः सप्तभिश्चन्द्रतापनः।
महाकेशः सहस्रेण कोटीनां गणपो वृतः ॥ १८
कुण्डी द्वादशभिर्वीरस्तथा पर्व्वतकः शुभः।
कालश्च कालकश्चैव महाकालः शतेन वै ॥ १९
आग्निकः शतकोट्या वै कोट्याग्निमुख एव च।
आदित्यमूर्द्धा कोट्या च तथा चैव घनावहः ॥ २०
सन्नाभश्च शतेनैव कुमुदः कोटिभिस्तथा।
अमोघः कोकिलश्चैव कोटिकोट्या सुमन्त्रकः ॥ २१
काकपादोऽपरः षष्ट्या षष्ट्या सन्तानकः प्रभुः।
महाबलश्च नवभिर्मधुपिङ्गश्च पिङ्गलः ॥ २२
नीलो नवत्या देवेशः पूर्णभद्रस्तथैव च।
कोटीनाञ्चैव सप्तत्या चतुर्व्वक्त्रो महाबलः ॥ २३
कोटिकोटिसहस्राणां शतैर्विंशतिभिर्वृताः।
तत्राजग्मुस्तथा देवास्ते सर्व्वे शङ्करं भवम् ॥ २४
भूतकोटिसहस्रेण प्रमथः कोटिभिस्त्रिभिः।
वीरभद्रश्चतुःषष्ट्या रोमजाश्चैव कोटिभिः ॥ २५
करणश्चैव विंशत्या नवत्या केवलः शुभः।
पञ्चाक्षः शतमन्युश्च मेघमन्युस्तथैव च ॥ २६
काष्ठकूटश्चतुःषष्ट्या सुकेशो वृषभस्तथा।
विरूपाक्षश्च भगवान् चतुःषष्ट्या सनातनः ॥ २७
तालकेतुः षडास्यश्च पञ्चास्यश्च सनातनः।
संवर्त्तकस्तथा चैत्रो लकुलीशः स्वयं प्रभुः ॥ २८
लोकान्तकश्च दीप्तास्यस्तथा दैत्यान्तकः प्रभुः।
मृत्युहृत् कालहा कालो मृत्युञ्जयकरस्तथा ॥
विषादो विषदश्चैव विद्युतः कान्तकः प्रभुः।
देवो भृङ्गीरिटिः श्रीमान् देवदेवप्रियस्तथा ॥
अशनिर्भासकश्चैव चतुःषष्ट्या सहस्रपात्।

एते चान्ये च गणपा असंख्याता महाबलाः ॥ ३१
सर्व्वे सहस्रहस्ताश्च जटामुकुटधारिणः।
चन्द्ररेखावतंसाश्च नीलकण्ठास्त्रिलोचनाः ॥ ३२
हार-कुण्डल-केयूर-मुकुटाद्यैरलङ्कृताः।
ब्रह्मेन्द्रविष्णुसङ्काशा अणिमादिगुणैर्वृताः ॥ ३३
सूर्य्यकोटिप्रतीकाशास्तत्राजग्मुर्गणेश्वराः।
पातालचारिणश्चैव सर्व्वलोकनिवासिनः ॥ ३४
तुम्बुरुर्नारदो हाहा हूहूश्चैव तु सामगाः।
रत्नान्यादाय वाद्यांश्च तत्राजग्मुस्तदा पुरम् ॥ ३५
ऋषयः कृत्स्नशस्तत्र देवगीतास्तपोधनाः।
पुण्यान् वैवाहिकान् मन्त्रानजपुर्हृष्टमानसाः ॥ ३६
तत एवं प्रवृत्ते तु सर्व्वतश्च समागमे।
गिरिजां तामलङ्कृत्य स्वयमेव शुचिस्मिताम् ॥ ३७
पुरं प्रवेशयामास स्वयमादाय केशवः।
सदस्याह च देवेशं नारायणमजो हरिम् ॥ ३८
भवानग्रे समुत्पन्नो भवान्या सह दैवतैः।
वामाङ्गादस्य रुद्रस्य दक्षिणाङ्गादहं प्रभो ॥ ३९
मन्मूर्त्तिस्तुहिनाद्रीशो यच्चार्थं सृष्ट एव हि।
एषा हैमवती जज्ञे मायया परमेष्ठिनः ॥ ४०
अतोऽसौ जगतां धात्री धाता तव ममापि च।
श्रौतस्मार्त्तप्रवृत्त्यर्थमुद्वाहार्थमिहागतः ॥ ४१
अस्य देवस्य रुद्रस्य मूर्त्तिभिर्विहितं जगत्।
क्ष्मावह्निखेन्दुसूर्य्यात्म-पवनात्मा यतो भवः।
तथापि तस्मै दातव्या वचनाच्च गिरेर्मम ॥ ४२
एषा ह्यजा शुक्लकृष्णा लोहिता प्रकृतिर्भवान्।
श्रेयोऽपि शैलराजेन सम्बन्धोऽयं तवापि च ॥ ४३
तव पाद्मे समुद्भूतः कल्पे नाभ्यम्बुजादहम्।
मदंशस्यास्य शैलस्य ममापि च गुरुर्भवान् ॥ ४४

सूत उवाच।

बाढ़मित्यजमाहासौ देवदेवो जनार्द्दनः।
देवाश्च मुनयः सर्व्वे देवदेवश्च शङ्करः ॥ ४५
ततश्चोत्थाय विद्वान् स पद्मनाभः प्रणम्य ताम्।
पादौ प्रक्षाल्य देवस्य कराभ्यां कमलेक्षणः ॥ ४६
अभ्युक्षदात्मनो मूर्द्ध्नि ब्रह्मणश्च गिरेस्तथा।
त्वदीयैषा विवाहार्थं मेनजा ह्यनुजा मम ॥ ४७
इत्युक्त्वा सोदकं दत्त्वा देवीं देवेश्वराय ताम्।
आत्मानमपि देवाय सोदकं प्रददौ हरिः ॥ ४८

अथ सर्व्वे मुनिश्रेष्ठाः सर्व्ववेदार्थपारगाः।
जचुर्दाता ग्रहीता च फलं द्रव्यं विचारतः ॥ ४९
एष देवो हरो नूनं मायया हि ततो जगत्।
इत्युक्त्वा तं प्रणेमुश्च प्रीतिकण्टकितत्वचः ॥ ५०
ससृजुः पुष्पवर्षाणि खेचराः सिद्धचारणाः।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः ॥ ५१
वेदाश्च मूर्त्तिमन्तस्ते प्रणेमुस्तं महेश्वरम्।
ब्रह्मणा मुनिभिः सार्द्धं देवदेवमुमापतिम् ॥ ५२
देवोऽपि देवीमालोक्य सलज्जां हिमशैलजाम्।
न तृप्यत्यनवद्याङ्गी सा च देवं वृषध्वजम् ॥ ५३
वरदोऽस्मीति तं प्राह हरिं सोऽप्याह शङ्करम्।
त्वयि भक्तिः प्रसीदेति ब्रह्माख्याच्च ददौ तु सः ॥ ५४
ततस्तु पुनरेवाह ब्रह्मा विज्ञापयन् प्रभुम्।
हविर्जुहोमि वह्नौ तु उपाध्यायपदे स्थितः ॥ ५५
ददासि मम यद्याज्ञां कर्त्तव्यो ह्यकृतो विधिः।
तमाह शङ्करो देवं देवदेवो जगत्पतिः ॥ ५६
यद्यदिष्टं सुरश्रेष्ठ तत् कुरुष्व यथेप्सितम्।
कर्त्तास्मि वचनं सर्व्वं देवदेव पितामह ॥ ५७
ततः प्रणम्य हृष्टात्मा ब्रह्मा लोकपितामहः।
हस्तं देवस्य देव्याश्च युयोज परमं प्रभुः ॥ ५८
ज्वलनश्च स्वयं तत्र कृताञ्जलिरुपस्थितः।
श्रौतैरेतैर्महामन्त्रैर्मूर्त्तिमद्भिरुपस्थितैः ॥ ५९
यथोक्तविधिना हुत्वा लाजानपि यथाक्रमम्।
आनीतान् विष्णुना विप्रान् सम्पूज्य विविधैर्वरैः ॥ ६०
त्रिश्च तं ज्वलनं देवं कारयित्वा प्रदक्षिणम्।
मुक्त्वा हस्तसमायोगं स हि तैः सर्व्वदैवतैः ॥ ६१
सुरैश्च मानवैः सर्व्वैः प्रहृष्टेनान्तरात्मना।
ननाम भगवान् ब्रह्मा देवदेवमुमापतिम् ॥ ६२
ततः पाद्यं तयोर्दत्त्वा शम्भोराचमनं तथा।
मधुपर्कं तथा गाञ्च प्रणम्य च पुनः शिवम् ॥ ६३
अतिष्ठद्भगवान् ब्रह्मा देवैरिन्द्रपुरोगमैः।
भृग्वाद्या मुनयः सर्व्वे चाक्षतैस्तिलतण्डुलैः ॥ ६४
सूर्य्यादयः समभ्यर्च्य तुष्टुवुर्वृषभध्वजम्।
शिवः समाप्य देवोक्तं वह्निमारोप्य चात्मनि ॥ ६५
तया समागतो रुद्रः सर्व्वलोकहिताय व।
यः पठेत् शृणुयाद्वापि भवोद्वाहं शुचिस्मितः ॥ ६६
श्रावयेद्वा द्विजान् शुद्धान् वेदवेदाङ्गपारगान्।

स लब्ध्वा गाणपत्यञ्च भवेन सह मोदते ॥ ६७
यत्रायं कीर्त्त्यते विप्रैस्तावदास्ते तदा भवः।
तस्मात् सम्पूज्य विधिवत् कीर्त्तयेन्नान्यथा द्विजाः॥६८
उद्वाहे च द्विजेन्द्राणां क्षत्रियाणां द्विजोत्तमाः।
कीर्त्तनीयमिदं सर्व्वं भवोद्वाहमनुत्तमम् ॥ ६९
कृतोद्वाहस्तदा देव्या हैमवत्या वृषध्वजः।
सगणो नन्दिना सार्द्धं सर्व्वदेवगणैर्वृतः ॥ ७०
पुरीं वाराणसीं दिव्यामाजगाम महाद्युतिः।
अविमुक्ते सुखासीनं प्रणम्य वृषभध्वजम् ॥ ७१
अपृच्छत् क्षेत्रमाहात्म्यं भवानी हर्षितानना।
अथाहार्द्धेन्दुतिलकः क्षेत्रमाहात्म्यमुत्तमम् ॥ ७२
अविमुक्तस्य माहात्म्यं विस्तराच्छक्यते न, हि।
वक्तुं मया सुरेशानि ऋषिसङ्घाभिपूजितम् ॥ ७३
किं मया वर्ण्यते देवि ह्यविमुक्तफलोदयः।
पापिनां यत्र मुक्तिः स्यान्मृतानामेकजन्मना ॥ ७४
अन्यत्र तु कृतं पापं वाराणस्यां व्यपोहति।
वाराणस्यां कृतं पापं पैशाच्यनरकावहम् ॥ ७५
कृत्वा पापसहस्राणि पिशाचत्वं वरं नृणाम्।
न तु शक्रसहस्रत्वं स्वर्गे काशीपुरीं विना॥ ७६
यत्र त्रिविष्टपो देवो यत्र विश्वेश्वरो विभुः।
ओङ्कारेशः कृत्तिवासा मृतानां न पुनर्भवः ॥ ७७
उक्त्वा क्षेत्रस्य माहात्म्यं संक्षेपाच्छशिशेखरः।
दर्शयामास चोद्यानं परित्यज्य गणेश्वरान् ॥ ७८
तत्रैव भगवान् जातो गजवक्त्रो विनायकः।
दैत्यानां विघ्नरूपार्थमविघ्नाय दिवौकसाम् ॥ ७९
एतद्वः कथितं सर्व्वं कथासर्व्वस्वमुत्तमम्।
यथा श्रुतं मया सर्व्वं प्रसादाद्वः सुशोभनम् ॥ ८०

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे
त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

---

## चतुरधिकशततमोऽध्यायः।

ऋषय ऊचुः।
कथं विनायको जातो गजवक्त्रो गणेश्वरः।
कथं प्रभावस्तस्यैवं सूत वक्तुमिहार्हसि ॥ १

सूत उवाच।
एतस्मिन्नन्तरे देवाः सेन्द्रोपेन्द्राः समेत्य ते।
धर्म्मविघ्नं तदा कर्त्तुं दैत्यानामभवन्द्विजाः ॥ २
असुरा यातुधानाश्च राक्षसाः क्रूरकर्म्मिणः।
तामसाश्च तथा चान्ये राजसाश्च तथा भुवि ॥ ३
अविघ्नं यज्ञदानाद्यैः समभ्यर्च्य महेश्वरम्।
ब्रह्माणञ्च हरिं विप्रा लब्ध्वेप्सितवरा यतः॥ ४
ततोऽस्माकं सुरश्रेष्ठाः सदा विजयसम्भवः।
तेषां ततस्तु विघ्नार्थमविघ्नाय दिवौकसाम् ॥ ५
पुत्रार्थञ्चैव नारीणां नराणां कर्म्मसिद्धये।
विघ्नेशं शङ्करं स्रष्टुं गणपं स्तोतुमर्हथ ॥ ६
इत्युक्त्वान्योन्यमनघं तुष्टुवुः शिवमीश्वरम् ॥ ७
नमः सर्व्वात्मने तुभ्यं सर्व्वज्ञाय पिनाकिने।
अनघाय विरिञ्चाय देव्याः कार्य्यार्थदायिने ॥ ८
अकायायार्थकायाय हरेः कायापहारिणे।
कायान्तःस्थामृताधार-मण्डलावस्थिताय ते ॥ ९
कृतादिभेदकालाय कालवेगाय ते नमः।
कालाग्निरुद्ररूपाय धर्म्माद्यष्टपदाय च ॥ १०
कालीविशुद्धदेहाय कालिकाकारणाय ते।
कालकण्ठाय मुख्याय वाहनाय वराय ते ॥ ११
अम्बिकापतये तुभ्यं हिरण्यपतये नमः।
हिरण्यरेतसे चैव नमः शर्व्वाय शूलिने ॥ १२
कपाल-दण्ड-पाशासि-चर्म्माङ्कुशधराय च।
पतये हैमवत्याश्च हेमशुक्लाय ते नमः॥ १३
पीतशुक्लाय रक्षार्थं सुराणां कृष्णवर्त्मने।
पद्माय महापद्म-यक्षिनां फलदाय च ॥ १४
पद्मास्यफणिहाराय पञ्चाक्षरमयाय ते।
पञ्चधा पञ्चकैवल्य-देवैरर्चितमूर्त्तये ॥ १५
पञ्चाक्षरदृशे तुभ्यं परात्परतराय ते।
ओड़शस्वरवज्राङ्ग-वक्त्रायाक्षररूपिणे ॥ १६
कादिपञ्चकहस्ताय चादिहस्ताय ते नमः।
टादिपादाय रुद्राय तादिपादाय ते नमः॥ १७
पादिमेढ्राय याद्यङ्गधातुसप्तकधारिणे।
सान्तात्मरूपिणे साक्षात् क्षदन्तक्रोधिने नमः॥ १८
लवरेफहलाङ्गाय निरङ्गाय च ते नमः।
सर्व्वेषामेव भूतानां हृदि निस्वनकारिणे ॥ १९
भ्रुवोरन्ते सदा सद्भिर्दृष्टायात्यन्तभानवे।
भानुसोमाग्निनेत्राय परमात्मस्वरूपिणे ॥ २०
गुणत्रयोपरिस्थाय तीर्थपादाय ते नमः।

तीर्थतत्त्वाय साराय तस्मादपि पराय ते ॥ २१
ऋग्यजुःसामवेदाय ओङ्काराय नमो नमः।
ओङ्कारे त्रिविधं रूपमास्थायोपरिवासिने ॥ २२
पीताय कृष्णवर्णाय रक्तायात्यन्ततेजसे।
स्थानपञ्चकसंस्थाय पञ्चधाण्डवह्निःक्रमात् ॥ २३
ब्रह्मणे विष्णवे तुभ्यं कुमाराय नमो नमः।
अम्बायाः परमेशाय सर्व्वोपरिचराय ते ॥ २४
मूलसूक्ष्मस्वरूपाय स्थूलसूक्ष्माय ते नमः।
सर्व्वसङ्कल्पशून्याय सर्व्वस्मादृच्छिताय ते ॥ २५
आदिमध्यान्तशून्याय चित्संस्थाय नमो नमः।
यमाग्नि-वायु-रुद्राम्बु-सोम-शक्र-निशाचरैः ॥ २६
दिङ्मुखे दिङ्मुखे नित्यं सगणैः पूजिताय ते।
सर्व्वेषु सर्व्वदा सर्व्व-मार्गे सम्पूजिताय ते ॥ २७
रुद्राय रुद्रनीलाय कद्रुद्राय प्रचेतसे।
महेश्वराय धीराय नमः साक्षाच्छिवाय ते ॥ २८

अथ शृणु भगवंस्तवच्छलेन
कथितमजेन्द्रसुखैः सुरासुरेशैः।
मखमदनयमाग्निदक्षयज्ञ-
क्षपण विचित्रविचेष्टितं क्षमस्व ॥ २९

सूत उवाच।

यः पठेत् तु स्तवं भक्त्या शक्राग्निप्रमुखैः सुरः।
कीर्त्तितं श्रावयेद्विद्वान् स याति परमां गतिम् ॥ ३०

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे देवस्तुति-
र्नाम चतुरधिकशततमोऽध्यायः ॥१०४॥

---

## पञ्चाधिकशततमोऽध्यायः।

सूत उवाच।

यदा स्थिताः सुरेश्वराः प्रणम्य चैवमीश्वरम्।
तदाम्बिकापतिर्भवः पिनाकधृङ्महेश्वरः ॥ १
ददौ निरीक्षणं क्षणाद्भवः स तान् सुरोत्तमान्।
प्रणेमुरादराद्धरं सुरा मुदार्द्रलोचनाः ॥ २
भवः सुधामृतोपमैर्निरीक्षणैर्निरीक्षणात्।
तदाह भद्रमस्तु वः सुरेश्वरान् महेश्वरः ॥ ३
वरार्थमीश वीक्ष्यते सुरा यहं गतास्त्विमे।
प्रणम्य चाह वाक्पतिः पतिं निरीक्ष्य निर्भयः ॥ ४
सुरेतरादिभिः सदा ह्यविघ्नमर्थितो भवान्।
समस्तकर्म्मसिद्धये सुरापकारकारिभिः ॥ ५
ततः प्रसीदताद्भवान् सुविघ्नकर्म्मकारणम्।
सुरापकारकारिणामिहैष एव नो वरः ॥ ६
ततस्तदा निशम्य वै पिनाकधृक् सुरेश्वरः।
गणेश्वरं सुरेश्वरं वपुर्दधार सः शिवः ॥ ७
गणेश्वराश्च तुष्टुवुः सुरेश्वरा महेश्वरम्।
समस्तलोकसम्भवं भवार्त्तिहारिणं शुभम् ॥ ८
इभाननाश्रितं वरं त्रिशूलपाशधारिणम्।
समस्तलोकसम्भवं गजाननं तदाम्बिका ॥ ९

ववृषुः पुष्पवर्षं हि सिद्धा मुनीन्द्रा-
स्तथा खेचरा देवसङ्घास्तदानीम्।
तदा तुष्टुवुश्चेष्टदं तं सुरेशाः
प्रणेमुर्गणेशं महेशं वितन्द्राः ॥ १०

तदा तयोर्विनिर्गतः सुभैरवः स मूर्त्तिमान्।
स्थितो ननर्त्त बालकः समस्तमङ्गलालयः ॥ ११
विचित्रवस्त्रभूषणैरलङ्कृतो गजाननः।
महेश्वरस्य पुत्रकोऽभिवन्द्य तातमम्बिकाम् ॥ १२
जातमात्रं सुतं दृष्ट्वा चकार भगवान् भवः।
गजाननाय कृत्यांस्तु सर्व्वान् सर्व्वेश्वरः स्वयम् ॥१३
आदाय च कराभ्याञ्च सुसुखाभ्यां भवः स्वयम्।
आलिङ्ग्याघ्राय मूर्द्धानं महादेवो जगद्गुरुः ॥ १४
तवावतारो दैत्यानां विनाशाय ममात्मज।
देवानामुपकारार्थं द्विजानां ब्रह्मवादिनाम् ॥ १५
यज्ञश्च दक्षिणाहीनः कृतो येन महीतले।
तस्य धर्म्मस्य विघ्नञ्च कुरु स्वर्गपथे स्थितः ॥ १६
अध्यापनञ्चाध्ययनं व्याख्यानं कर्म्म एव च।
योऽन्यायतः करोत्यस्मिंस्तस्य प्राणान् सदा हर॥१७
वर्णाच्च्युतानां नारीणां नराणां नरपुङ्गव।
स्वधर्म्मरहितानाञ्च प्राणानपहर प्रभो ॥ १८
यास्त्रियस्त्वां सदा कालं पुरुषाश्च विनायक।
यजन्ति तासां तेषाञ्च त्वत्साम्यं दातुमर्हसि ॥ १९
त्वं भक्तान् सर्व्वयत्नेन रक्ष बालगणेश्वर।
यौवनस्थांश्च वृद्धांश्च इहामुत्र च पूजितः ॥ २०
जगत्त्रयेऽत्र सर्व्वत्र त्वं हि विघ्नगणेश्वरः।
सम्पूज्यो वन्दनीयश्च भविष्यसि न संशयः ॥ २१
माञ्च नारायणं वापि ब्रह्माणमपि पुत्रक।
यजन्ति यज्ञैर्वा विप्रैरग्रे पूज्यो भविष्यसि ॥ २२

आगमनश्च कल्याणं श्रौतं स्मार्त्तञ्च लौकिकम् ।
कुरुते तस्य कल्याणमकल्याणं भविष्यति ॥ २३
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैव गजानन ।
सम्पूज्यः सर्व्वसिद्ध्यर्थं भक्ष्यभोज्यादिभिः शुभैः ॥२४
त्वां गन्धपुष्पधूपाद्यैरनभ्यर्च्य जगत्त्रये ।
देवैरपि तथान्यैश्च लब्धव्यं नास्ति कुत्रचित् ॥ २५
अभ्यर्चयन्ति ये लोका मानवास्तु विनायकम् ।
ते चार्चनीयाः शक्राद्यैर्भविष्यन्ति न संशयः ॥ २६
अजं हरिञ्च मां वापि शक्रमन्यान् सुरानपि ।
विघ्नैर्बाधयसि त्वाञ्चेन्नार्चयन्ति फलार्थिनः ॥ २७
ससर्ज्ज च तदा विघ्न-गणं गणपतिः प्रभुः ।
गणैः सार्द्धं नमस्कृत्वाप्यतिष्ठत् तस्य चाग्रतः ॥ २८
तदाप्रभृति लोकेऽस्मिन् पूजयन्ति गणेश्वरम् ।
दैत्यानां धर्म्मविघ्नञ्च चकारासौ गणेश्वरः ॥ २९
एतद्वः कथितं सर्व्वं स्कन्दाग्रजसमुद्भवम् ।
यः पठेच्छृणुयाद्वापि श्रावयेद्वा सुखी भवेत् ॥ ३०

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे विनायकोत्पत्तिर्नाम पञ्चाधिकशततमोऽध्यायः ॥१०५॥

---

## षड़धिकशततमोऽध्यायः ।

ऋषय ऊचुः ।

नृत्यारम्भः कथं शम्भोः किमर्थं वा यथातथम् ।
वक्तुमर्हसि चास्माकं सूत स्कन्दाग्रजोद्भवः ॥ १

सूत उवाच ।

दारुकोऽसुरसम्भूतस्तपसा लब्धविक्रमः ।
सूदयामास कालाग्निरिव देवान् द्विजोत्तमान् ॥ २
दारुकेण तदा देवास्ताड़िताः पीड़िता भृशम् ।
ब्रह्माणञ्च तथेशानं कुमारं विष्णुमेव च ॥ ३
यममिन्द्रमनुप्राप्य स्त्रीवध्य इति चासुरः ।
स्त्रीरूपधारिभिः स्तुत्यैर्ब्रह्माद्यैर्युधि संस्थितैः ॥ ४
बाधितास्तेन ते सर्व्वे ब्रह्माणं प्राप्य वै द्विजाः ।
विज्ञाप्य तस्मै तत् सर्व्वं तेन सार्द्धमुमापतिम् ॥ ५
सम्प्राप्य तुष्टुवुः सर्व्वे पितामहपुरोगमाः ।
ब्रह्मा प्राप्य च देवेशं प्रणम्य बहुधा नतः ॥ ६
दारुणो भगवन् दासः पूर्व्वं तेन विनिर्ज्जिताः ।
निहत्य दारुकं दैत्यं स्त्रीवध्यं त्रातुमर्हसि ॥ ७
विज्ञप्तिं ब्रह्मणः श्रुत्वा भगवान् भगनेत्रहा ।
देवीमुवाच देवेशो गिरिजां प्रहसन्निव ॥ ८
भवतीं प्रार्थयाम्यद्य हिताय जगतां शुभे ।
वधार्थं दारुकस्यास्य स्त्रीवध्यस्य वरानने ॥ ९
अथ सा तस्य वचनं निशम्य जगतोऽरणिः ।
विवेश देहं देवस्य देवेशी जन्मतत्परा ॥ १०
एकेनांशेन देवेशं प्रविष्टा देवसत्तमम् ।
न विवेद तदा ब्रह्मा देवाश्चेन्द्रपुरोगमाः ॥ ११
गिरिजां पूर्व्ववच्छम्भोर्दृष्ट्वा पार्श्वस्थितां शुभाम् ।
मायया मोहितस्तस्याः सर्व्वज्ञोऽपि चतुर्मुखः ॥१२
सा प्रविष्टा तनुं तस्य देवदेवस्य पार्व्वती ।
कण्ठस्थेन विषेणास्य तनुं चक्रे तदात्मनः ॥ १३
तां च ज्ञात्वा तथाभूतां तृतीयेनेक्षणेन वै ।
ससर्ज्ज कालीं कामारिः कालकण्ठीं कपर्द्दिनीम् ॥१४

जाता यदा कालिमकालकण्ठी
जाता तदानीं विपुला जयश्रीः ।
देवेतराणामजयस्त्वसिद्धा
तुष्टिर्भवान्याः परमेश्वरस्य ॥ १५
जातां तदानीं सुरसिद्धसङ्घा
दृष्ट्वा भयाद्दुद्रुवुरग्निकल्पाम् ।
कालीं गरालङ्कृतकालकण्ठी-
मुपेन्द्रपद्मोद्भवशक्रमुख्याः ॥ १६
तथैव जातं नयनं ललाटे
सितांशुलेखा च शिरस्युदग्रा ।
कण्ठे करालं निशितं त्रिशूलं
करे करालञ्च विभूषणानि ॥ १७

सार्द्धं दिव्याम्बरा देव्याः सर्व्वाभरणभूषिताः ।
सिद्धेन्द्रसिद्धाश्च तथा पिशाचा जज्ञिरे पुनः ॥ १८
आज्ञया दारुकं तस्याः पार्व्वत्याः परमेश्वरी ।
दानवं सूदयामास सूदयन्तं सुराधिपान् ॥ १९
संरम्भातिप्रसङ्गाद्वै तस्याः सर्व्वमिदं जगत् ।
क्रोधाग्निना च विप्रेन्द्राः सम्बभूव तदातुरम् ॥ २०
भवोऽपि बालरूपेण श्मशाने प्रेतसङ्कुले ।
रुरोद मायया तस्याः क्रोधाग्निं पातुमीश्वरः ॥ २१
तं दृष्ट्वा बालमीशानं मायया तस्य मोहिता ।
उत्थाप्याघ्राय वक्षोजं स्तनं सा प्रददौ द्विजाः ॥ २२
स्तनजेन तदा सार्द्धं कोपमस्याः पपौ पुनः ।

क्रोधेनानेन वै बालः क्षीराणां रक्षकोऽभवत् ॥ २३
मूर्त्तयोऽष्टौ च तस्यापि क्षेत्रपालस्य धीमतः ।
एवं वै तेन बालेन कृता सा क्रोधमूर्च्छिता ॥ २४
कृतमस्याः प्रसादार्थं देवदेवेन ताण्डवम् ।
सन्ध्यायां सर्व्वभूतेन्द्रैः प्रेतैः प्रीतेन शूलिना ॥ २५
पीत्वा नृत्यामृतं शम्भोराकण्ठं परमेश्वरी ।
ननर्त्त सा च योगिन्यः प्रेतस्थाने यथासुखम् ॥ २६
तत्र सब्रह्मका देवाः सेन्द्रोपेन्द्राः समन्ततः ।
प्रणेमुस्तुष्टुवुः कालीं पुनर्देवीञ्च पार्व्वतीम् ॥ २७
एवं संक्षेपतः प्रोक्तं ताण्डवं शूलिनः प्रभोः ।
योगानन्देन च विभोस्ताण्डवञ्चेति चापरे ॥ २८

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे शिवताण्डवकथनं नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥

---

## सप्ताधिकशततमोऽध्यायः ।

ऋषय ऊचुः ।

पुरोपमन्युना सूत गाणपत्यं महेश्वरात् ।
क्षीरार्णवः कथं लब्धो वक्तुमर्हसि साम्प्रतम् ॥ १

सूत उवाच ।

एवं कालीमुपालभ्य गते देवे त्रियम्बके ।
उपमन्युः समभ्यर्च्य तपसा लब्धवान् फलम् ॥ २
उपमन्युरिति ख्यातो मुनिश्च द्विजसत्तमाः ।
कुमार इव तेजस्वी क्रीड़मानो यदृच्छया ॥ ३
कदाचित् क्षीरमल्पञ्च पीतवान् मातुलाश्रमे ।
ईर्ष्यया मातुलसुतो ह्यपिबत् क्षीरमुत्तमम् ॥ ४
पीत्वा स्थितं यथाकामं दृष्ट्वा प्रोवाच मातरम् ।
मातर्मातर्महाभागे मम देहि तपस्विनि ।
गव्यं क्षीरमतिस्वादु नाल्पमुष्णं नमाम्यहम् ॥ ५

सूत उवाच ।

उपलालितैवं पुत्रेण पुत्रमालिङ्ग्य सादरम् ।
दुःखिता विललापार्त्ता स्मृत्वा नैर्द्धन्यमात्मनः ॥ ६
स्मृत्वा स्मृत्वा पुनः क्षीरमुपमन्युरपि द्विजाः ।
देहि देहीति तामाह रोदमानो महाद्युतिः ॥ ७
उञ्छवृत्त्यार्ज्जितान् वीजान् स्वयं पिष्ट्वा च सा तदा ।
वीजपिष्टं तदालोड्य तोयेन कलभाषिणी ॥ ८
एह्येहि मम पुत्रेति सामपूर्व्वं ततः सुतम् ।
आलिङ्ग्यादाय दुःखार्त्ता प्रददौ कृत्रिमं पयः ॥ ९
पीत्वा च कृत्रिमं क्षीरं मात्रा दत्तं द्विजोत्तमाः ।
नैतत् क्षीरमिति प्राह मातरञ्चातिविह्वलः ॥ १०
दुःखिता सा तदा प्राह सम्प्रेक्ष्याघ्राय मूर्द्धनि ।
सम्मार्ज्य नेत्रे पुत्रस्य कराभ्यां कमलायते ॥ ११
तटिनी रत्नपूर्णास्ते स्वर्गपातालगोचराः ।
भाग्यहीना न पश्यन्ति भक्तिहीनाश्च ये शिवे ॥ १२
राज्यं स्वर्गञ्च मोक्षञ्च भोजनं क्षीरसम्भवम् ।
न लभन्ते प्रियाण्येषां नो तुष्यति सदा भवः ॥ १३
भवप्रसादजं सर्व्वं नान्यदेव प्रसादजम् ।
अन्यदेवेषु निरता दुःखार्त्ता विभ्रमन्ति च ॥ १४
क्षीरं तत्र कुतोऽस्माकं महादेवो न पूजितः ।
पूर्व्वजन्मनि यद्दत्तं शिवमुद्दिश्य वै सुत ।
तदेव लभ्यं नान्यत् तु विष्णुमुद्दिश्य वा प्रभुम् ॥ १५
निशम्य वचनं मातुरुपमन्युर्महाद्युतिः ।
बालोऽपि मातरं प्राह प्रणिपत्य तपस्विनीम् ॥ १६
त्यज शोकं महाभागे महादेवोऽस्ति चेत् क्वचित् ।
चिराद्वा ह्यचिराद्वापि क्षीरोदं साधयाम्यहम् ॥ १७

सूत उवाच ।

तां प्रणम्यैवमुक्त्वा स तपः कर्त्तुं प्रचक्रमे ।
तमाह माता सुशुभं कुर्व्विति सुतरां सुतम् ॥ १८
अनुज्ञातस्तया तत्र तपस्तेपे सुदुस्तरम् ।
हिमवत्पर्व्वतं प्राप्य वायुभक्षः समाहितः ॥ १९
तपसा तस्य विप्रस्य विधूपितमभूज्जगत् ।
प्रणम्याहुस्तु तत् सर्व्वं हरये देवसत्तमाः ॥ २०
श्रुत्वा तेषां तदा वाक्यं भगवान् पुरुषोत्तमः ।
किमिदन्त्विति सञ्चिन्त्य ज्ञात्वा तत्कारणञ्च सः ॥ २१
जगाम मन्दरं तूर्णं महेश्वरदिदृक्षया ।
दृष्ट्वा देवं प्रणम्यैवं प्रोवाचेदं कृताञ्जलिः ॥ २२
भगवन् ब्राह्मणः कश्चिदुपमन्युरिति श्रुतः ।
क्षीरार्थमदहत् सर्व्वं तपसा तं निवारय ॥ २३
एतस्मिन्नन्तरे देवः पिनाकी परमेश्वरः ।
शक्ररूपं समास्थाय गन्तुं चक्रे मतिं तदा ॥ २४
अथ जगाम मुनेस्तु तपोवनं
गजवरेण सितेन सदाशिवः ।

सह सुरासुरसिद्धमहोरगै-
रमरराजतनुं स्वयमास्थितः॥ २५
सहैव चारुह्य तदा द्विपं तं
प्रगृह्य बालव्यजनं विवस्वान्।
वामेन शच्या सहितं सुरेन्द्रं
करेण चान्येन सितातपत्रम्॥ २६
रराज भगवान् सोमः शक्ररूपी सदाशिवः।
सितातपत्रेण यथा चन्द्रबिम्बेन मन्दरः॥ २७
आस्थायैवं हि शक्रस्य स्वरूपं परमेश्वरः।
जगामानुग्रहं कर्त्तुमुपमन्योस्तदाश्रमम्॥ २८
तं दृष्ट्वा परमेशानं शक्ररूपधरं शिवम्।
प्रणम्य शिरसा प्राह मुनिर्मुनिवराः स्वयम्॥ २९
पावितश्चाश्रमश्चायं मम देवेश्वरः स्वयम्।
प्राप्तः शक्रो जगन्नाथो भगवान् भानुना प्रभुः॥ ३०
एवमुक्त्वा स्थितं वीक्ष्य कृताञ्जलिपुटं द्विजम्।
प्राह गम्भीरया वाचा शक्ररूपधरो हरः॥ ३१
तुष्टोऽस्मि ते वरं ब्रूहि तपसानेन सुव्रत।
ददामि चेप्सितान् सर्व्वान् धौम्याग्रज महामते॥३२
एवमुक्तस्तदा तेन शक्रेण मुनिसत्तमः।
वरयामि शिवे भक्तिमित्युवाच कृताञ्जलिः॥ ३३
ततो निशम्य वचनं मुनेः कुपितवत् प्रभुः।
प्राह स व्यग्रमीशानः शक्ररूपधरः स्वयम्॥ ३४
मां न जानासि देवर्षे देवराजानमीश्वरम्।
त्रैलोक्याधिपतिं शक्रं सर्व्वदेवनमस्कृतम्॥ ३५
मद्भक्तो भव विप्रर्षे मामेवार्च्चय सर्व्वदा।
ददामि सर्व्वं भद्रं ते त्यज रुद्रञ्च निर्गुणम्॥ ३६
ततः शक्रस्य वचनं श्रुत्वा श्रोत्रविदारणम्।
उपमन्युरिदं प्राह जपन् पञ्चाक्षरं शुभम्॥ ३७
मन्ये शक्रस्य रूपेण नूनमत्रागतः स्वयम्।
कर्त्तुं दैत्याधमः कश्चिद्धर्म्मविघ्नञ्च नान्यथा॥ ३८
त्वयैव कथितं सर्व्वं भवनिन्दारतेन वै।
प्रसङ्गाद्देवदेवस्य निर्गुणत्वं महात्मनः॥ ३९
बहुनात्र किमुक्तेन मयाद्यानुमितं महत्।
भवान्तरकृतं पापं श्रुता निन्दा भवस्य तु॥ ४०
श्रुत्वा निन्दां भवस्याथ तत्क्षणादेव सन्त्यजेत्।
स्वदेहं तं निहत्याशु शिवलोकं स गच्छति॥ ४१
यो वा चोत्पाटयेज्जिह्वां शिवनिन्दारतस्य तु।
त्रिःसप्तकुलमुद्धृत्य शिवलोकं स गच्छति॥ ४२
आस्तां तावन्ममेच्छा या चौरं प्रति सुराधमम्।
निहत्य त्वां शिवास्त्रेण त्यजाम्येतत् कलेवरम्॥ ४३
पुरा मात्रा तु कथितं तथ्यमेव न संशयः।
पूर्व्वजन्मनि चास्माभिरपूजित इति प्रभुः॥ ४४
एवमुक्त्वा तु तं देवमुपमन्युरभीतवत्।
शक्रं चक्रे मतिं हन्तुं अथर्व्वास्त्रेण मन्त्रवित्॥ ४५
भस्माधारान्महातेजा भस्ममुष्टिं प्रगृह्य च।
अथर्व्वास्त्रं ततस्तस्मै ससर्ज्ज च ननाद च॥ ४६
दग्धं स्वदेहमाग्नेयीं ध्यात्वा व धारणां तदा।
अतिष्ठच्च महातेजाः शुष्कोन्धनमिवाव्ययः॥ ४७
एवं व्यवसिते विप्रे भगवान् भगनेत्रहा।
वारयामास सौम्येन धारणां तस्य योगिनः॥ ४८
अथर्व्वास्त्रं तदा तस्य संहृतं चन्द्रकेण तु।
कालाग्निसदृशञ्चेदं नियोगान्नन्दिनस्तथा॥ ४९
स्वरूपमेव भगवानास्थाय परमेश्वरः।
दर्शयामास विप्राय बालेन्दुकृतशेखरम्॥ ५०
क्षीरधारासहस्रञ्च क्षीरोदार्णवमेव च।
दध्यादिरर्णवञ्चैव घृतोदार्णवमेव च॥ ५१
फलार्णवञ्च बालस्य भक्ष्यभोज्यार्णवं तथा।
अपूपगिरयश्चैव तथातिष्ठन् समन्ततः॥ ५२
उपमन्युमुवाच सस्मितो
भगवान् बन्धुजनैः समावृतम्।
गिरिजामवलोक्य सस्मितां
सघृणं प्रेक्ष्य तु तं तदा घृणी॥ ५३
भुङ्क्ष्व भोगान् यथाकामं बान्धवैः पश्य वत्स मे।
उपमन्यो महाभाग तवाम्बैषा हि पार्व्वती॥ ५४
मया पुत्रीकृतोऽस्यद्य दत्तः क्षीरोदधिस्तथा।
मधुनश्चार्णवश्चैव दध्नश्चार्णव एव च॥ ५५
आज्योदनार्णवश्चैव फललेह्यार्णवस्तथा।
अपूपगिरयश्चैव भक्ष्यभोज्यार्णवः पुनः॥ ५६
पिता तव महादेवः पिता वै जगतां मुने।
माता तव महाभागा जगन्माता न संशयः॥ ५७
अमरत्वं मया दत्तं गाणपत्यञ्च शाश्वतम्।
वरान् वरय दास्यामि नात्र कार्य्या विचारणा॥५८
एवमुक्त्वा महादेवः कराभ्यामुपगृह्य तम्।
आघ्राय मूर्द्धनि विभुददौ देव्यास्तदा भवः॥ ५९

देवी तनयमालोक्य ददौ तस्मै गिरीन्द्रजा।
योगैश्वर्यं तदा तुष्टा ब्रह्मविद्यां द्विजोत्तमाः॥ ६०
सोऽपि लब्ध्वा वरं तस्याः कुमारत्वञ्च सर्व्वदा।
तुष्टाव च महादेवं हर्षगद्गदया गिरा॥ ६१
वरयामास च तदा वरेण्यं विरजेक्षणम्।
कृताञ्जलिपुटो भूत्वा प्रणिपत्य पुनः पुनः॥ ६२
प्रसीद देवदेवेश त्वयि चाव्यभिचारिणी।
श्रद्धा चैव महादेव सान्निध्यञ्चैव सर्व्वदा॥ ६३
एवमुक्तस्तदा तेन प्रहसन्निव शङ्करः।
दत्तेप्सितं हि विप्राय तत्रैवान्तरधीयत॥ ६४

इति श्रीलैङ्गे महापुराणे पूर्व्वभागे उपमन्युचरितं नाम सप्ताधिकशततमोऽध्यायः॥ १०७॥

---

## अष्टाधिकशततमोऽध्यायः।

ऋषय ऊचुः।

दृष्टोऽसौ वासुदेवेन कृष्णेनाक्लिष्टकर्म्मणा।
धौम्याग्रजस्ततो लब्धं दिव्यं पाशुपतं व्रतम्॥ १
कथं लब्धं तदा ज्ञानं तस्मात् कृष्णेन धीमता।
वक्तुमर्हसि तां सूत कथां पातकनाशिनीम्॥ २

सूत उवाच।

स्वेच्छया ह्यवतीर्णोऽपि वासुदेवः सनातनः।
निन्दयन्नेव मानुष्यं देहशुद्धिं चकार सः॥ ३
पुत्रार्थं भगवांस्तत्र तपस्तप्तुं जगाम च।
आश्रमञ्चोपमन्योर्वै दृष्टवांस्तत्र तं मुनिम्॥ ४
नमश्चकार तं दृष्ट्वा धौम्याग्रजमहो द्विजाः।
बहुमानेन वै कृष्णस्त्रिः कृत्वा वै प्रदक्षिणम्॥ ५
तस्यावलोकनादेव मुनेः कृष्णस्य धीमतः।
नष्टमेव मलं सर्व्वं कायजं कर्म्मजं तथा॥ ६
भस्मनोद्धूलनं कृत्वा उपमन्युर्महाद्युतिः।
तमग्निरिति विप्रेन्द्रा वायुरित्यादिभिः क्रमात्॥ ७
दिव्यं पाशुपतं ज्ञानं प्रददौ प्रीतमानसः।
मुनेः प्रसादान्मान्योऽसौ कृष्णः पाशुपते द्विजाः॥ ८
तपसा लेकवर्षान्ते दृष्ट्वा देवं महेश्वरम्।
साम्बं सगणमव्यग्रं लब्धवान् पुत्रमात्मनः॥ ९
तदाप्रभृति तं कृष्णं मुनयः शंसितव्रताः।
दिव्याः पाशुपताः सर्व्वे तस्थुः संवृत्य सर्व्वदा॥ १०
अन्यच्च कथयिष्यामि मुक्त्यर्थं प्राणिनां सदा।
सौवर्णीं मेखलां कृत्वा आधारं दण्डधारणम्॥ ११
सौवर्णं पिच्छिकञ्चापि व्यजनं दण्डमेव च।
नरैः स्त्रियाथवा कार्य्यं मषीभाजनलेखनीम्॥ १२
छुरा कर्त्तरिका चापि अथ पात्रमथापि वा।
पाशुपताय दातव्यं भस्मोद्धूलितविग्रहैः॥ १३
सौवर्णं राजतं वापि ताम्रं वाथ निवेदयेत्।
आत्मवित्तानुसारेण योगिनं पूजयेद्बुधः॥ १४
ते सर्व्वे पापनिर्म्मुक्ताः समस्तकुलसंयुताः।
यान्ति रुद्रपदं दिव्यं नात्र कार्य्या विचारणा॥ १५
तस्मादनेन दानेन गृहस्थो मुच्यते भवात्।
योगिनां सम्प्रदानेन शिवः क्षिप्रं प्रसीदति॥ १६
राज्यं पुत्रं धनं भव्यमश्वं यानमथापि वा।
सर्व्वस्वं वापि दातव्यं यदीच्छेन्मोक्षमुत्तमम्॥ १७
अशुचिना शरीरेण ध्रुवं साध्यं प्रयत्नतः।
भव्यं पाशुपतं नित्यं संसारार्णवतारकम्॥ १८
एतद्वः कथितं सर्व्वं संक्षेपान्न च संशयः।
यः पठेच्छृणुयाद्वापि शिवलोकं स गच्छति॥ १९

इति श्रीलैङ्गे महापुराणे पूर्व्वभागेऽष्टाधिकशततमोऽध्यायः॥ १०८॥

---

समाप्तोऽयं पूर्व्वभागः।

# लिङ्गपुराणम् ।

## उपरिभागः ।

### प्रथमोऽध्यायः ।

ऋषय ऊचुः ।
कृष्णस्तुष्यति केनेह सर्व्वदेवेश्वरेश्वरः ।
वक्तुमर्हसि चास्माकं सूत सर्व्वार्थविद्भवान् ॥ १
सूत उवाच ।
पुरा पृष्टो महातेजा मार्कण्डेयो महामुनिः ।
अम्बरीषेण विप्रेन्द्रास्तद्वदामि यथातथम् ॥ २
अम्बरीष उवाच ।
मुने समस्तधर्म्माणां पारगस्त्वं महामते ।
मार्कण्डेय पुराणोऽसि पुराणार्थविशारदः ॥ ३
नारायणानां दिव्यानां धर्म्माणां श्रेष्ठमुत्तमम् ।
तत् किं ब्रूहि महाप्राज्ञ भक्तानामिह सुव्रत ॥ ४
तस्य तद्वचनं श्रुत्वा समुत्थाय कृताञ्जलिः ।
स्मरन् नारायणं देवं कृष्णमच्युतमव्ययम् ॥ ५
मार्कण्डेय उवाच ।
शृणु भूप यथान्यायं पुण्यं नारायणात्मकम् ।
स्मरणं पूजनञ्चैव प्रणामो भक्तिपूर्व्वकम् ॥ ६
प्रत्येकमश्वमेधस्य यज्ञस्य समसुच्यते ।
य एकः पुरुषः श्रेष्ठः परमात्मा जनार्द्दनः ॥ ७
यस्माद्ब्रह्मा ततः सर्व्वं समाश्रित्यैवमुच्यते ।
धर्म्ममेकं प्रवक्ष्यामि यद्दृष्टं विदितं मया ॥ ८
पुरा त्रेतायुगे कश्चित् कौशिको नाम वै द्विजः ।
वासुदेवपरो नित्यं सामगानरतः सदा ॥ ९
भोजनासनशय्यासु सदा तद्गतमानसः ।
उदारचरितं विष्णोर्गायमानः पुनः पुनः ॥ १०
विष्णोः स्थलं समासाद्य हरेः क्षेत्रमनुत्तमम् ।
अगायत हरिं तत्र तालवर्णलयान्वितम् ॥ ११
मूर्च्छनास्वरयोगेन श्रुतिभेदेन भेदितम् ।
भक्तियोगं समापन्नो भिक्षामात्रं हि तत्र वै ॥ १२
तत्रैनं गायमानञ्च दृष्ट्वा कश्चिद्द्विजस्तदा ।
पद्माक्ष इति विख्यातस्तस्मै चान्नं ददौ तदा ॥ १३
सकुटुम्बो महातेजा क्षुधामन्नं हि तत्र वै ।
कौशिको हि तदा हृष्टो गायनास्ते हरिं प्रभुम् ॥ १४
शृण्वन्नास्ते स पद्माक्षः काले काले विनिर्गतः ।
कालयोगेन सम्प्राप्ताः शिष्या वै कौशिकस्य च ॥ १५
सप्त राजन्यवैश्यानां विप्राणां कुलसम्भवाः ।
ज्ञानविद्याधिकाः शुद्धा वासुदेवपरायणाः ॥ १६
तेषामपि तथान्नाद्यं पद्माक्षः प्रददौ स्वयम् ।
शिष्यैश्च सहितो नित्यं कौशिको हृष्टमानसः ॥ १७
विष्णुस्थले हरिं तत्र आस्ते गायन् यथाविधि ।
तत्रैव मालवो नाम वैश्यो विष्णुपरायणः ॥ १८
दीपमालां हरेर्नित्यं करोति प्रीतिमानसः ।
मालवी नाम भार्य्या च तस्य नित्यं पतिव्रता ॥ १९
गोमयेन समालिप्य हरेः क्षेत्रं समन्ततः ।
भर्त्रा सहास्ते सुप्रीता शृण्वती गानमुत्तमम् ॥ २०

कुशस्थलात् समापन्ना ब्राह्मणाः शंसितव्रताः ।
पञ्चाशद्वै समापन्ना हरेर्गानार्थमुत्तमाः ॥ २१
श्लाघयन्तो हि कार्य्याणि कौशिकस्य महात्मनः ।
ज्ञानविद्यार्थतत्त्वज्ञाः शृण्वन्तो ह्यवसंस्तु ते ॥ २२
ख्यातमासीत् तदा तस्य गानं वै कौशिकस्य तत् ।
श्रुत्वा राजा समभ्येत्य कलिङ्गो वाक्यमब्रवीत् ॥ २३
कौशिकाद्य गणैः सार्द्धं गायस्वेह च मां पुनः ।
शृणुध्वञ्च तथा यूयं कुशस्थलजना अपि ॥ २४
तच्छ्रुत्वा कौशिकः प्राह राजानं सान्त्वया गिरा ।
न जिह्वा मे महाराज वाणी च मम सर्व्वदा ॥ २५
हरेरन्यमपीन्द्रं वा स्तौति नैव च वक्ष्यति ।
एवमुक्ते तु तच्छिष्यो वाशिष्ठो गौतमो हरिः ॥ २६
सारस्वतस्तथा चित्रश्चित्रमाल्यस्तथा शिशुः ।
ऊचुस्ते पार्थिवं तद्वद्यथा प्राह च कौशिकः ॥ २७
श्रावकास्ते तथा प्रोचुः पार्थिवं विष्णुतत्पराः ।
श्रोत्राणीमानि शृण्वन्ति हरेरन्यं न पार्थिव ॥ २८
गानकीर्त्तिं वयं तस्य शृणुमोऽन्यां न च स्तुतिम् ।
तच्छ्रुत्वा पार्थिवो रुष्टो गायतामिति चाब्रवीत् ॥ २९
स्वभृत्यान् ब्राह्मणा ह्येते कीर्त्तिं शृण्वन्ति मे यथा ।
न शृण्वन्ति कथं तस्माद्गायमाने समन्ततः ॥ ३०
एवमुक्तास्तदा भृत्या जगुः पार्थिवमुत्तमम् ।
निरुद्धमार्गा विप्रास्ते गाने वृत्ते तु दुःखिताः ॥ ३१
काष्ठशङ्कुभिरन्योन्यं श्रोत्राणि पिदधुर्द्विजाः ।
कौशिकाद्याश्च तां ज्ञात्वा मनोवृत्तिं नृपस्य वै ॥ ३२
प्रसह्यास्मांस्तु गायेत स्वगानेऽसौ नृपः स्थितः ।
इति विप्राः सुनियता जिह्वाग्रं चिच्छिदुः करैः ॥ ३३
ततो राजा सुसंक्रुद्धः स्वदेशात् तान् न्यवासयत् ।
आदाय सर्व्वं वित्तञ्च ततस्ते जग्मुरुत्तराम् ॥ ३४
दिशमासाद्य कालेन कालधर्म्मेण योजिताः ।
तानागतान् यमो दृष्ट्वा किं कर्त्तव्यमिति स्म ह ॥ ३५
चेष्टितं तत्क्षणे राजन् ब्रह्मा प्राह सुराधिपान् ।
कौशिकादीन् द्विजानद्य वासयध्वं यथासुखम् ॥ ३६
गानयोगेन ये नित्यं पूजयन्ति जनार्द्दनम् ।
तानानयत भद्रं वो यदि देवत्वमिच्छथ ॥ ३७
इत्युक्ता लोकपालास्ते कौशिकेति पुनः पुनः ।
मालवेति तथा केचित् पद्माक्षेति तथा परे ॥ ३८
क्रोशमानाः समभ्येत्य तानादाय विहायसा ।
ब्रह्मलोकं गताः शीघ्रं मुहूर्त्तेनैव ते सुराः ॥ ३९
कौशिकादींस्ततो दृष्ट्वा ब्रह्मा लोकपितामहः ।
प्रत्युद्गम्य यथान्यायं स्वागतेनाभ्यपूजयत् ॥ ४०
ततः कोलाहलमभूदतिगौरवमुल्बणम् ।
ब्रह्मणाचरितं दृष्ट्वा देवानां नृपसत्तम ॥ ४१
हिरण्यगर्भो भगवांस्तान् निवार्य्य सुरोत्तमान् ।
कौशिकादीन् समादाय मुनीन् देवैः समावृतः ।
विष्णुलोकं ययौ शीघ्रं वासुदेवपरायणः ।
तत्र नारायणो देवः श्वेतद्वीपनिवासिभिः ॥ ४३
ज्ञानयोगेश्वरैः सिद्धैर्विष्णुभक्तैः समाहितैः ।
नारायणसमैर्दिव्यैश्चतुर्बाहुधरैः शुभैः ॥ ४४
विष्णुचिह्नसमापन्नैर्दीप्यमानैरकल्मषैः ।
अष्टाशीतिसहस्रैश्च सेव्यमानो महाजनैः ॥ ४५
अस्माभिर्नारदाद्यैश्च सनकाद्यैरकल्मषैः ।
भूतैर्नानाविधैश्चैव दिव्यस्त्रीभिः समन्ततः ॥ ४६
सेव्यमानोऽथ मध्ये वै सहस्रद्वारसंवृते ।
सहस्रयोजनायामे दिव्ये मणिमये शुभे ॥ ४७
विमाने विमले चित्रे भद्रपीठासने हरिः ।
लोककार्य्ये प्रसक्तानां दत्तदृष्टिश्च माधवः ॥ ४८
तस्मिन् कालेऽथ भगवान् कौशिकाद्यैश्च संवृतः ।
आगम्य प्रणिपत्याग्रे तुष्टाव गरुड़ध्वजम् ॥ ४९
ततो विलोक्य भगवान् हरिर्नारायणः प्रभुः ।
कौशिकेत्याह सम्प्रीत्या तान् सर्व्वांश्च यथाक्रमम् ॥ ५०
जयघोषो महानासीन्महाश्चर्य्ये समागते ।
ब्रह्माणमाह विश्वात्मा शृणु ब्रह्मन् मयोदितम् ॥ ५१
कौशिकस्य इमे विप्राः साध्यसाधनतत्पराः ।
हिताय सम्प्रवृत्ता वै कुशस्थलनिवासिनः ॥ ५२
मत्कीर्त्तिश्रवणे युक्ता ज्ञानतत्त्वार्थकोविदाः ।
अनन्यदेवताभक्ताः साध्या देवा भवन्त्विमे ॥ ५३
मत्समीपे तथान्यत्र प्रवेशं देहि सर्व्वदा ।
एवमुक्त्वा पुनर्देवः कौशिकं प्राह माधवः ॥ ५४
स्वशिष्यैस्त्वं महाप्राज्ञ दिग्बन्धो भव मे सदा ।
गणाधिपत्यमापन्नो यत्राहं त्वं समास्स्व वै ॥ ५५
मालवं मालवीञ्चैवं प्राह दामोदरो हरिः ।
मम लोके यथाकामं भार्य्यया सह मालव ॥ ५६
दिव्यरूपधरः श्रीमान् शृण्वन् गानमिहाधिपः ।
आस्स्व नित्यं यथाकामं यावल्लोका भवन्ति वै ॥ ५७

पश्चाचमाह भगवान् धनदो भव माधवः।
धनानामीश्वरो भूत्वा यथाकालं हि मां पुनः॥ ५८
आगत्य दृष्ट्वा मां नित्यं कुरु राज्यं यथासुखम्।
एवमुक्त्वा हरिर्विष्णुर्ब्रह्माणमिदमब्रवीत्॥ ५९
कौशिकस्यास्य गानेन योगनिद्रा च मे गता।
विष्णुस्थले च मां स्तौति शिष्यैरेष समन्ततः॥ ६०
राज्ञा निरस्तः क्रूरेण कलिङ्गेन महीयसा।
न जिह्वाच्छेदनं कृत्वा हरेरन्यं कथञ्चन॥ ६१
न स्तोष्यामीति नियतः प्राप्तोऽसौ मम लोकताम्।
एते च विप्रा नियता मम भक्ता यशस्विनः॥ ६२
जीवच्छिद्रमथाहत्य शङ्कुभिर्वै परस्परम्।
श्रोष्यामो नैव चान्यद्वै हरेः कीर्त्तिमिति स्म ह॥ ६३
एते विप्राश्च देवलं मम सान्निध्यमेव च।
मालवो भार्य्यया सार्द्धं मत्क्षेत्रं परिसृज्य वै॥ ६४
दीपमालादिभिर्नित्यमभ्यच्य सततं हि माम्।
गानं शृणोति नियतो मत्कीर्त्तिरचितान्वितम्॥ ६५
तेनासौ प्राप्तवान् लोकं मम ब्रह्म सनातनम्।
पद्माचोऽसौ ददौ भोज्यं कौशिकस्य महात्मनः॥ ६६
धनेशत्वमवाप्तोऽसौ मम सान्निध्यमेव च।
एवमुक्त्वा हरिस्तत्र समाजे लोकपूजितः॥ ६७
तस्मिन् क्षणे समापन्ना मधुराक्षरपेशलैः।
विपञ्चीगुणतत्त्वज्ञैर्वाद्यविद्याविशारदैः॥ ६८
मन्दं मन्दस्मिता देवी विचित्राभरणान्विता।
गायमाना समायाता लक्ष्मीर्विष्णुपरिग्रहा॥ ६९
वृता सहस्रकोटीभिरङ्गनाभिः समन्ततः॥ ७०
ततो गणाधिपा दृष्ट्वा भुशुण्डीपरिघायुधाः।
ब्रह्मादींस्तर्ज्जयन्तस्ते मुनीन् देवान् समन्ततः॥ ७१
उत्सारयन्तः संहृष्टा धिष्ठिताः पर्व्वतोपमाः।
सर्व्वे वयं हि निर्याताः सार्द्धं वै ब्रह्मणा सुरैः॥ ७२
तस्मिन् क्षणे समाहूतस्तुम्बुरुर्मुनिसत्तमः।
प्रविवेश समीपं वै देव्या देवस्य चैव हि॥ ७३
तत्रासीनो यथायोगं नानामूर्च्छासमन्वितम्।
जगौ कलपदं हृष्टो विपञ्चीञ्चाप्यवादयत्॥ ७४
नानारत्नसमायुक्तैर्दिव्यैराभरणोत्तमैः।
दिव्यमाल्यैस्तथा शुभ्रैः पूजितो मुनिसत्तमः॥ ७५
निर्गुणस्तुम्बुरुर्हृष्टो अन्ये च ऋषयः सुराः।
दृष्ट्वा सम्पूजितं यान्तं यथायोगमरिन्दम॥ ७६
नारदोऽथ मुनिर्दृष्ट्वा तुम्बुरोः सत्क्रियां हरेः।
शोकाविष्टेन मनसा सन्तप्तहृदयेक्षणः॥ ७७
चिन्तामापेदिवांस्तत्र शोकमूर्च्छाकुलात्मकः।
केनाहं हि हरेर्यास्ये योगं देवीसमीपतः॥ ७८
अहो तुम्बुरुणा प्राप्तं धिङ्मां मूढं विचेतसम्।
योऽहं हरेः सन्निकाशं भूतैर्निर्यातितः कथम्॥ ७९
जीवन् यास्यामि कुत्राहमहो तुम्बुरुणा कृतम्।
इति सञ्चिन्तयन् विप्रस्तप आस्थितवान् मुनिः॥ ८०
दिव्यं वर्षसहस्रन्तु निरुच्छ्वाससमन्वितः।
ध्यायन् विष्णुमथाध्यास्ते तुम्बुरोः सत्क्रियां स्मरन्॥ ८१
रोदमानो मुहुर्विद्वान् धिङ्मामिति च चिन्तयन्।
तत्र यत् कृतवान् विष्णुस्तच्छृणुष्व नराधिप॥ ८२

इति श्रीलैङ्गे महापुराणे उपरिभागे कौशिकवृत्तकथनं नाम प्रथमोऽध्यायः॥१॥

---

## द्वितीयोऽध्यायः।

मार्कण्डेय उवाच।

ततो नारायणो देवस्तस्मै सर्व्वं प्रदाय वै।
कालयोगेन विश्वात्मा समं चक्रेऽथ तुम्बुरोः॥ १
नारदं मुनिशार्दूलमेवं वृत्तमभूत् पुरा।
नारायणस्य गीतानां गानं श्रेष्ठं पुनः पुनः॥ २
गानेनाराधितो विष्णुः सत्कीर्त्तिं ज्ञानवर्च्चसी।
ददाति तुष्टिं स्थानञ्च यथासौ कौशिकस्य वै॥ ३
पद्माक्षप्रभृतीनाञ्च संसिद्धिं प्रददौ हरिः।
तस्मात् त्वया महाराज विष्णुक्षेत्रे विशेषतः॥ ४
अर्च्चनं गाननृत्याद्यं वाद्योत्सवसमन्वितम्।
कर्त्तव्यं विष्णुभक्तैर्हि पुरुषैरनिशं नृप॥ ५
श्रोतव्यञ्च सदा नित्यं श्रोतव्योऽसौ हरिस्तथा॥ ६
विष्णुक्षेत्रे तु यो विद्वान् कारयेद्भक्तिसंयुतः।
गाननृत्यादिकञ्चैव विष्वाख्यानं कथां तथा॥ ७
जातिस्मृतिञ्च मेधाञ्च तथैवोपरमे स्मृतिम्।
प्राप्नोति विष्णुसायुज्यं सत्यमेतन्नृपाधिप॥ ८
एतत् ते कथितं राजन् यन्मां त्वं परिपृच्छसि।
किं वदामि च ते भूयो वद धर्म्मभृतां वर॥ ९

इति श्रीलैङ्गे महापुराणे उपरिभागे विष्णुमाहात्म्यं नाम द्वितीयोऽध्यायः॥ २॥

## तृतीयोऽध्यायः।

अम्बरीष उवाच।

मार्कण्डेय महाप्राज्ञ केन योगेन लब्धवान्।
गानविद्यां महाभाग नारदो भगवान् मुनिः ॥ १
तुम्बुरोश्च समानत्वं कस्मिन् काले उपेयिवान्।
एतदाचक्ष्व मे सर्व्वं सर्वज्ञोऽसि महामते ॥ २

मार्कण्डेय उवाच।

श्रुतो मयायमर्थो वै नारदाद्देवदर्शनात्।
स्वयमाह महातेजा नारदोऽसौ महामतिः ॥ ३
सन्तप्यमानो भगवान् दिव्यं वर्षसहस्रकम्।
निरुच्छ्वासेन संयुक्तस्तुम्बुरोर्गौरवं स्मरन्।
तताप च महाघोरं तपोराशिस्तपः परम् ॥ ४
अथान्तरीक्षे शुश्राव नारदोऽसौ महामुनिः।
वाणीं दिव्यां महाघोषामद्भुतामशरीरिणीम् ॥ ५
किमर्थं मुनिशार्दूल तपस्तपसि दुश्चरम्।
उलूकं पश्य गत्वा त्वं यदि गाने रता मतिः ॥ ६
मानसोत्तरशैले तु गानबन्धुरिति स्मृतः।
गच्छ शीघ्रञ्च पश्यैनं गानवित् त्वं भविष्यसि ॥ ७
इत्युक्तो विस्मयाविष्टो नारदो वाग्विदां वरः।
मानसोत्तरशैले तु गानबन्धुं जगाम वै ॥ ८
गन्धर्व्वाः किन्नरा यक्षास्तथा चाप्सरसां गणाः।
समासीनास्तु परितो गानबन्धुं ततस्ततः ॥ ९
गानविद्यां समापन्नाः शिक्षितास्तेन पक्षिणा।
स्निग्धकण्ठस्वरास्तत्र समासीना मुदान्विताः ॥ १०
ततो नारदमालोक्य गानबन्धुरुवाच ह।
प्रणिपत्य यथान्यायं स्वागतेनाभ्यपूजयत् ॥ ११
किमर्थं भगवानत्र चागतोऽसि महामते।
किं कार्य्यं हि मया ब्रह्मन् ब्रूहि किं करवाणि ते ॥ १२

नारद उवाच।

उलूकेन्द्र महाप्राज्ञ शृणु सर्व्वं यथातथम्।
मम वृत्तं प्रवक्ष्यामि पुरा भूतं महाद्भुतम् ॥ १३
अतीते हि युगे विद्वन् नारायणसमीपगम्।
मां विनिर्द्धूय संहृष्टः समाहूय च तुम्बुरुम् ॥ १४
लक्ष्मीसमन्वितो विष्णुरशृणोद्गानमुत्तमम्।
ब्रह्मादयः सुराः सर्व्वे निरस्ताः स्थानतोऽच्युताः ॥ १५
कौशिकायाः समासीना गानयोगेन वै हरिम्।
एवमाराध्य सम्प्राप्ता गाणपत्यं यथासुखम् ॥ १६
तेनाहमतिदुःखार्त्तस्तपस्तप्तुमिहागतः ॥ १७
यद्वृत्तं यद्धुतञ्चैव यथा वा श्रुतमेव च।
यदधीतं मया सर्व्वं कलां नार्हति षोडशीम् ॥ १८
विष्णोर्माहात्म्ययुक्तस्य गानयोगस्य वै ततः।
सञ्चिन्त्याहं तपो घोरं तदर्थं तप्तवान् द्विज ॥ १९
दिव्यवर्षसहस्रं वै ततो ह्यशृणवं पुनः।
वाणीमाकाशसम्भूतां त्वामुद्दिश्य विहङ्गम ॥ २०
उलूकं गच्छ देवर्षे गानबन्धुं मतिर्यदि।
गाने चेद्वर्त्तते ब्रह्मन् तत्र त्वं वेत्स्यसेऽचिरात् ॥ २१
इत्यहं प्रेरितस्तेन त्वत्समीपमिहागतः।
किं करिष्यामि शिष्योऽहं तव मां पालयाव्यय ॥ २२

गानबन्धुरुवाच।

शृणु नारद यद्वृत्तं पुरा मम महामते।
अत्याश्चर्य्यसमायुक्तं सर्व्वपापहरं शुभम् ॥ २३
भुवनेश इति ख्यातो राजाभूद्धार्म्मिकः पुरा।
अश्वमेधसहस्रैश्च वाजपेयायुतेन च ॥ २४
गवां कोट्यर्ब्बुदं चैव सुवर्णस्य तथैव च।
वाससां रथहस्तीनां कन्याश्वानां तथैव च ॥ २५
दत्त्वा स राजा विप्रेभ्यो मेदिनीं प्रतिपालयन्।
निवारयन् स्वके राज्ये गेययोगेन केशवम् ॥ २६
अन्यं वा गेययोगेन गायन् यदि स मे भवेत्।
वध्यः सर्व्वात्मना तस्माद्देदैरीत्यः परः पुमान् ॥ २७
गानयोगेन सर्व्वत्र स्त्रियो गायन्तु नित्यशः।
सूतमागधसङ्घाश्च गीतं ते कारयन्तु वै ॥ २८
इत्याज्ञाप्य महातेजा राज्यं वै पर्य्यपालयत्।
तस्य राज्ञः पुराभ्यासे हरिमित्र इति श्रुतः ॥ २९
ब्राह्मणो विष्णुभक्तश्च सर्व्वद्वन्द्वविवर्ज्जितः।
नदीपुलिनमासाद्य प्रतिमाञ्च हरेः शुभाम् ॥ ३०
अभ्यर्च्य च यथान्यायं घृतदध्युत्तरं बहु।
मिष्टान्नं पायसं दत्त्वा हरेराविद्य पूपकम् ॥ ३१
प्रणिपत्य यथान्यायं तत्र विन्यस्तमानसः।
अगायत हरिं तत्र तालवर्णलयान्वितम् ॥ ३२
अतीव स्नेहसंयुक्तस्तद्गतेनान्तरात्मना।
ततो राज्ञः समादिष्टाचारास्तत्र समागताः ॥ ३३
तदर्च्चनादिसकलं निर्द्धूय च समन्ततः।
ब्राह्मणं तं गृहीत्वा ते राज्ञे सम्यङ्न्यवेदयन् ॥ ३४

ततो राजा द्विजश्रेष्ठं परिभत्स्य सुदुर्मतिः।
राज्यान्निर्य्यातयामास हृत्वा सर्व्वं धनादिकम् ॥ ३५
प्रतिमाश्च हरेस्त्वेव स्वेच्छया हृत्वा ययुः पुनः।
ततः कालेन महता कालधर्ममुपेयिवान् ॥ ३६
स राजा सर्व्वलोकेषु पूज्यमानः समन्ततः।
क्षुधार्त्तश्च तथा खिन्नो यममाह सुदुःखितः ॥ ३७
क्षुत् तृट् च वर्त्तते देव स्वर्गतस्यापि मे सदा।
मया पापं कृतं किं वा किं करिष्यामि व यम ॥ ३८
यम उवाच।
त्वया हि सुमहत् पापं कृतमज्ञानमोहतः।
हरिमित्रं प्रति तदा वासुदेवपरायणम् ॥ ३९
हरिमित्रे कृतं पापं वासुदेवार्चनादिषु।
तेन पापेन सम्प्राप्तः क्षुद्रोगस्त्वां सदा नृप।
दानयज्ञादिकं सर्व्वं प्रनष्टं ते नराधिप ॥ ४०
गीतवाद्यसमोपेतं गायमानं महामतिम्।
हरिमित्रं समाहूय हृतवानसि तद्धनम् ॥ ४१
उपहारादिकं सर्व्वं वासुदेवस्य सन्निधौ।
तव भृत्यैस्तदा लुप्तं पापं चक्रुस्त्वदाज्ञया ॥ ४२
हरेः कीर्त्तिं विना चान्यद्ब्राह्मणेन नृपोत्तम।
न गेययोगे गातव्यं तस्मात् पापं कृतं त्वया ॥ ४३
नष्टस्ते सर्व्वलोकोऽद्य गच्छ पर्व्वतकोटरम्।
पूर्व्वोत्सृष्टं स्वदेहं तं खादन् नित्यं निकृत्य वै ॥ ४४
तस्मिन् काले लिमं देहं खादन्नित्यं क्षुधान्वितः।
महानिरयसंस्थस्त्वं यावन्मन्वन्तरं भवेत् ॥ ४५
मन्वन्तरे ततोऽतीते भूम्यां लब्ध भविष्यसि।
ततः कालेन सम्प्राप्य मानुष्यमवगच्छसि ॥ ४६
गानबन्धुरुवाच।
एवमुक्त्वा यमो विद्वांस्तत्रैवान्तरधीयत।
हरिमित्रो विमानेन स्तूयमानो गणाधिपैः ॥ ४७
विष्णुलोकं गतः श्रीमान् संगृह्य गणबान्धवान्।
भुवनेशो नृपो ह्यस्मिन् कोटरे पर्व्वतस्य वै ॥ ४८
खादमानः शवं नित्यमास्ते क्षुत्तृट्समन्वितः।
अद्राक्षं तं नृपं तत्र सर्व्वमेतदमोक्तवान् ॥ ४९
समालोक्याहमाज्ञाय हरिमित्रं समेयिवान्।
विमानेनार्कवर्णेन गच्छन्तममरैर्वृतम् ॥ ५०
इन्द्रद्युम्नप्रसादेन प्राप्तं मे ह्यायुरुत्तमम्।
तेनाहं हरिमित्रं वै दृष्टवानस्मि सुव्रत ॥ ५१
तदैश्वर्य्यप्रभावेण मनो मे समुपागतम्।
गानविद्यां प्रति तदा किन्नरैः समुपाविशम् ॥ ५२
षष्टिं वर्षसहस्राणां गानयोगेन मे मुने।
जिह्वा प्रसादिता सृष्टा ततो गानमभ्यसत् ॥ ५३
ततस्तु द्विगुणेनैव कालेनाभूदियं मम।
गानयोगसमायुक्ता गता मन्वन्तरा दश ॥ ५४
गानाचार्य्योऽभवं तत्र गन्धर्व्वाद्याः समागताः।
एते किन्नरसङ्घा वै मामाचार्य्यमुपागताः ॥ ५५
तपसा नैव शक्या वै गानविद्या तपोधन।
तस्माच्छ्रुतेन संयुक्तो मत्तस्त्वं गानमाप्नुहि ॥ ५६
एवमुक्तो मुनिस्तं वै प्रणिपत्य जगौ तदा।
तच्छृणुष्व मुनिश्रेष्ठा वासुदेवं नमस्य तु ॥ ५७
मार्कण्डेय उवाच।
उलूकेनैवमुक्तस्तु नारदो मुनिसत्तमः।
शिक्षाक्रमेण संयुक्तस्तत्र गानमभ्यसयत्।
गानबन्धुस्तदाहेदं त्यक्तलज्जो भवाधुना ॥ ५८
उलूक उवाच।
स्त्रीसङ्गमे तथा गीते द्यूते व्याख्यानसङ्गमे।
व्यवहारे तथाहारे त्वर्थानाञ्च समागमे ॥ ५९
आये व्यये तथा नित्यं त्यक्तलज्जस्तु वै भवेत्।
न कुञ्चितेन गूढेन नित्यं प्रावरणादिभिः ॥ ६०
हस्तविक्षेपभावेन व्यादितास्येन चव हि।
निर्यातजिह्वायोगेन न गेयं हि कथञ्चन ॥ ६१
न गायेदूर्ध्वबाहुर्वा नोर्ध्वदृष्टिः कथञ्चन।
स्वाङ्गं निरीक्षमाणेन परं सम्प्रेक्षता तथा ॥ ६२
सङ्कटे च तथोत्थाने कटिस्थाने न शस्यते।
हासो रोषस्तथा कम्पस्तथान्यत्र स्मृतिः पुनः ॥ ६३
नैतानि शस्तरूपाणि गानयोगे महामते ॥ ६४
नैकहस्तेन शक्यं स्यात् तालसङ्घट्टनं मुने।
क्षुधार्त्तेन भयार्त्तेन तृषार्त्तेन तथव च ॥ ६५
गानयोगो न कर्त्तव्यो नान्धकारे कथञ्चन।
एवमादीनि चान्यानि न कर्त्तव्यानि गायता ॥ ६६
मार्कण्डेय उवाच।
एवमुक्तः स भगवांस्तेनोक्तैर्विविधलक्षणः।
अभ्यसयत् तथा गीतं दिव्यं वर्षसहस्रकम् ॥ ६७
ततः समस्तसम्पन्नो गीतप्रस्तारकादिषु।
विपञ्च्यादिषु सम्पन्नः सर्व्वस्वरविभागवित् ॥ ६८

अयुतानि च षट्त्रिंशत्सहस्राणि शतानि च ।
स्वराणां भेदयोगेन ज्ञातवान् मुनिसत्तमः ॥ ६९
ततो गन्धर्व्वसङ्घाश्च किन्नराणां तथैव च ।
मुनिना सह संयुक्ता प्रीतियुक्ता भवन्ति ते ॥ ७०
गानबन्धुं मुनिः प्राह प्राप्य गानमनुत्तमम् ।
त्वां समासाद्य सम्पन्नस्त्वं हि गीतविशारदः ।
आज्ञापयतो महाप्राज्ञ किमाचार्य्यं करोमि ते ॥ ७१

गानबन्धुरुवाच ।

ब्रह्मणो दिवसे ब्रह्मन् मनवस्तु चतुर्द्दश ।
ततस्त्रैलोक्यसंप्लावो भविष्यति महामुने ॥ ७२
तावन्मे त्वायुषो भावस्तावन्मे परमं शुभम् ।
मनसाध्याहितं मे स्याद्द्रुहिणा मुनिसत्तम ॥ ७३

नारद उवाच ।

अतीतकल्पसंयोगे गरुड़स्त्वं भविष्यसि ।
स्वस्ति तेऽस्तु महाप्राज्ञ गमिष्यामि प्रसीद माम् ॥ ७४

मार्कण्डेय उवाच ।

एवमुक्त्वा जगामाथ नारदोऽपि जनार्द्दनम् ।
श्वेतद्वीपे हृषीकेशं गापयामास गीतकान् ॥ ७५
तत्र श्रुत्वा तु भगवान् नारदं प्राह माधवः ।
तुम्बुरोर्न विशिष्टोऽसि गीतैरद्यापि नारद ॥ ७६
यदा विशिष्टो भविता तं कालं प्रवदाम्यहम् ।
गानबन्धुं समासाद्य गानार्थज्ञो भवानसि ॥ ७७
मनोर्वैवस्वतस्याहमष्टाविंशतिमे युगे ।
द्वापरान्ते भविष्यामि यदुवंशकुलोद्भवः ॥ ७८
देवक्यां वसुदेवस्य कृष्णो नाम्ना महामते ।
तदानीं मां समासाद्य स्मारयेथा यथातथम् ॥ ७९
तत्र त्वां गीतसम्पन्नं करिष्यामि महाव्रतम् ।
तुम्बुरोश्च समञ्चैव तथातिशयसंयुतम् ॥ ८०
तावत्कालं यथायोगं देवगन्धर्व्वयोनिषु ।
शिक्षयस्व यथान्यायमित्युक्त्वान्तरधीयत ॥ ८१
ततो मुनिः प्रणम्यैनं वीणावादनतत्परः ।
देवर्षिर्देवसङ्घाद्यः सर्व्वाभरणभूषितः ॥ ८२
तपसां निधिरत्यन्तं वासुदेवपरायणः ।
स्कन्धे विपञ्चीमासाद्य सर्व्वलोकांश्चचार सः ॥ ८३
वारुणं याम्यमाग्नेयमैन्द्रं कौबेरमेव च ।
वायव्यञ्च तथेशानं संसदं प्राप्य धर्म्मवित् ॥ ८४
गायमानो हरिं सम्यग्वीणावादविचक्षणः ।
गन्धर्व्वाप्सरसां सङ्घैः पूज्यमानस्ततस्ततः ॥ ८५
ब्रह्मलोकं समासाद्य कस्मिंश्चित् कालपर्य्यये ।
हाहा हूहूश्च गन्धर्व्वौ गीतवाद्यविशारदौ ॥ ८६
ब्रह्मणो गायकौ दिव्यौ नित्यौ गन्धर्व्वसत्तमौ ।
तत्र ताभ्यां समासाद्य गायमानो हरिं प्रभुम् ॥ ८७
ब्रह्मणा च महातेजाः पूजितो मुनिसत्तमः ।
तं प्रणम्य महात्मानं सर्व्वलोकपितामहम् ॥ ८८
चचार च यथाकामं सर्व्वलोकेषु नारदः ।
ततः कालेन महता गृहं प्राप्य च तुम्बुरोः ॥ ८९
वीणामादाय तत्रस्थो ह्यगायत महामुनिः ।
स्वरकन्यास्तु तत्रस्थाः षड्जाद्याः सप्त वै मताः ॥ ९०
क्रीड़तो भगवान् दृष्ट्वा निर्गतश्च सुसत्वरम् ।
शिक्षयामास बहुशस्तत्र तत्र महामतिः ॥ ९१
श्रमयोगेण संयुक्तो नारदोऽपि महामुनिः ।
सप्त स्वराङ्गनाः पश्यन् गानविद्याविशारदः ॥ ९२
आसीद्वीणासमायोगे न तास्तन्त्रः प्रपेदिरे ।
ततो रैवतके कृष्णं प्रणिपत्य महामुनिः ॥ ९३
विज्ञापयदशेषन्तु श्वेतद्वीपे तु यत् पुरा ।
नारायणेन कथितं गानयोगमनुत्तमम् ॥ ९४
तच्छ्रुत्वा प्राहसन् कृष्णः प्राह जाम्बवतीं मुदा ।
एवं मुनिवरं भद्रे शिक्षयस्व यथाविधि ॥ ९५
वीणागानसमायोगे तथेत्युक्त्वा च सा हरिम् ।
प्रहसन्ती यथायोगं शिक्षयामास तं मुनिम् ॥ ९६
ततः संवत्सरे पूर्णे पुनरागम्य माधवम् ।
प्रणिपत्याग्रतस्तस्थौ पुनराह स केशवः ॥ ९७
सत्यासमीपमागच्छ शिक्षयस्व यथाविधि ।
तथेत्युक्त्वा सत्यभामां प्रणिपत्य जगौ मुनिः ॥ ९८
तया स शिक्षितो विद्वान् पूर्णे संवत्सरे पुनः ।
वासुदेवनियुक्तोऽसौ रुक्मिणीसदनं गतः ॥ ९९
अङ्गनाभिस्ततस्ताभिर्दासीभिर्मुनिसत्तमः ।
उक्तोऽसौ गायमानोऽपि न स्वरं वेत्सि वै मुने ॥ १००
ततः श्रमेण महता वत्सरत्रयसंयुतम् ।
शिक्षितोऽसौ तदा देव्या रुक्मिण्यापि जगौ मुनिः ॥ १०१
ततः स्वराङ्गनाः प्राप्य तन्त्रीयोगं महामुने ।
आहूय कृष्णो भगवान् स्वयमेव महामुनिम् ॥ १०२
अशिक्षयदमेयात्मा गानयोगमनुत्तमम् ।
ततोऽतिशयमापन्नस्तुम्बुरोर्मुनिसत्तमः ॥ १०३

ततो ननर्त्त देवर्षिः प्रणिपत्य जनार्द्दनम् ।
उवाच च हृषीकेशः सर्व्वशास्त्रं महामुने ॥ १०४
ग्रहस्य ज्ञानयोगेन गायस्व मम सन्निधौ ।
एतत् ते प्रार्थितं प्राप्तं मम लोके तथैव च ॥ १०५
नित्यं तुम्बरुणा सार्द्धं गायस्व च यथातथम् ।
एवमुक्तो मुनिस्तत्र यथायोगं चचार सः ॥ १०६
यदा सम्पूजयन् कृष्णो रुद्रं भुवननायकम् ।
तदा जगौ हरेस्तस्य नियोगाच्छङ्कराय वै ॥ १०७
रुक्मिण्या सह सत्या च जाम्बवत्या महामुनिः ।
कृष्णेन च नृपश्रेष्ठ श्रुतिजातिविशारदः ॥ १०८
एष वो मुनिशार्द्दूलाः प्रोक्तो गीतक्रमो मुनेः ।
ब्राह्मणो वासुदेवाख्यां गायमानो भृशं नृप ॥ १०९
हरेः सालोक्यमाप्नोति रुद्रगानोऽधिको भवेत् ।
अन्यथा नरकं गच्छेद्गायमानोऽन्यदेव हि ॥ ११०
कर्म्मणा मनसा वाचा वासुदेवपरायणः ।
गायन् शृण्वंस्तमाप्नोति तस्माद्गेयं परं विदुः ॥ १११

इति श्रीलिङ्गे उपरिभागे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

ऋषय ऊचुः ।

वैष्णवा इति ये प्रोक्ता वासुदेवपरायणाः ।
कानि चिह्नानि तेषां वै तन्नो ब्रूहि महामते ॥ १
तेषां वा किं करोत्येष भगवान् भूतभावनः ।
एतन्नो सर्व्वमाचक्ष्व सूत सर्व्वार्थवित्तम ॥ २

सूत उवाच ।

अम्बरीषेण वै पृष्टो मार्कण्डेयः पुरा मुनिः ।
युष्माभिरद्य यत् प्रोक्तं तद्वदामि यथातथम् ॥ ३

मार्कण्डेय उवाच ।

शृणु राजन् यथान्यायं यन्मां त्वं परिपृच्छसि ।
यत्रास्ते विष्णुभक्तस्तु तत्र नारायणः स्थितः ॥ ४
विष्णुरेव हि सर्व्वत्र येषां वै देवता स्मृता ।
कीर्त्त्यमाने हरौ नित्यं रोमाञ्चो यस्य वर्त्तते ॥ ५
कम्पः स्वेदस्तथाक्षेषु दृश्यन्ते जलबिन्दवः ।
विष्णुभक्तिसमायुक्तान् श्रौतस्मार्त्तप्रवर्त्तकान् ॥ ६
प्रीतो भवति यो दृष्ट्वा वैष्णवोऽसौ प्रकीर्त्तितः ।
नान्यदाच्छादयेद्वस्त्रं वैष्णवो जगती रवे ॥ ७
विष्णुभक्तमथायान्तं यो दृष्ट्वा सम्मुखस्थितः ।
प्रणामादि करोत्येवं वासुदेवे यथा तथा ॥ ८
स वै भक्त इति ज्ञेयः स जयी स्याज्जगत्त्रये ।
स्वच्छाक्षराणि शृण्वन् वै तथा भागवतेरितः ॥ ९
प्रणामपूर्व्वं क्षान्त्या वै यो वदेद्वैष्णवो हि सः ।
गन्धपुष्पादिकं सर्व्वं शिरसा यो हि धारयेत् ॥ १०
हरेः सर्व्वमितीत्येवं मत्वासौ वैष्णवः स्मृतः ।
विष्णुक्षेत्रे शुभान्येव करोति स्नेहसंयुतः ॥ ११
प्रतिमाञ्च हरेर्नित्यं पूजयेत् प्रयतात्मवान् ।
विष्णुभक्तः स विज्ञेयः कर्म्मणा मनसा गिरा ॥ १२
नारायणपरो नित्यं महाभागवतो हि सः ।
भोजनाराधनं सर्व्वं यथाशक्त्या करोति यः ॥ १३
विष्णुभक्तस्य च सदा यथान्यायं हि कथ्यते ।
नारायणपरो विद्वान् यस्यान्नं प्रीतमानसः ॥ १४
अश्नाति तद्धरेरास्यं गतमन्नं न संशयः ।
स्वार्च्चनादपि विश्वात्मा प्रीतो भवति माधवः ॥ १५
महाभागवते तत्र दृष्ट्वासौ भक्तवत्सलः ।
वासुदेवपरं दृष्ट्वा वैष्णवं दग्धकिल्बिषम् ॥ १६
देवापि भीतास्तं यान्ति प्रणिपत्य यथागतम् ।
श्रूयतां हि पुरावृत्तं विष्णुभक्तस्य वैभवम् ॥ १७
दृष्ट्वा यमोऽपि वै भक्तं वैष्णवं दग्धकिल्बिषम् ।
उत्थाय प्राञ्जलिर्भूत्वा ननाम भृगुनन्दनम् ॥ १८
तस्मात् सम्पूजयेद्भक्त्या वैष्णवान् विष्णुवन्नरः ।
स याति विष्णुसामीप्यं नात्र कार्य्या विचारणा ॥ १९
अन्यभक्तसहस्रेभ्यो विष्णुभक्तो विशिष्यते ।
विष्णुभक्तसहस्रेभ्यो रुद्रभक्तो विशिष्यते ।
रुद्रभक्तात् परतरो नास्ति लोके न संशयः ॥ २०
तस्मात् तु वैष्णवञ्चापि रुद्रभक्तमथापि वा ।
पूजयेत् सर्व्वयत्नेन धर्म्मकामार्थमुक्तये ॥ २१

इति श्रीलिङ्गे महापुराणे उपरिभागे विष्णुभक्त-
कथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

ऋषय ऊचुः ।

ऐक्ष्वाकुरम्बरीषो वै वासुदेवपरायणः ।
पालयामास पृथिवीं विष्णोराज्ञापुरःसरः ॥ १

श्रुतमेतन्महाबुद्धे तत् सर्व्वं वक्तुमर्हसि ।
नित्यं तस्य हरेश्चक्रं शत्रु-रोग-भयादिकम् ॥ २
हन्तीति श्रूयते लोके धार्म्मिकस्य महात्मनः ।
अम्बरीषस्य चरितं तत् सर्व्वं ब्रूहि सत्तम ॥ ३
माहात्म्यमनुभावञ्च भक्तियोगमनुत्तमम् ।
यथावच्छ्रोतुमिच्छामः सूत वक्तुं त्वमर्हसि ॥ ४

सूत उवाच ।

श्रूयतां मुनिशार्दूलाश्चरितं तस्य धीमतः ।
अम्बरीषस्य माहात्म्यं सर्व्वं पापहरं परम् ॥ ५
त्रिशङ्कोर्दयिता भार्य्या सर्व्वलक्षणशोभिता ।
अम्बरीषस्य जननी नित्यं शौचसमन्विता ॥ ६
योगनिद्रासमारूढं शेषपर्य्यङ्कशायिनम् ।
नारायणं महात्मानं ब्रह्माण्डकमलोद्भवम् ॥ ७
तमसा कालरुद्राख्यं रजसा कनकाण्डजम् ।
सत्त्वेन सर्व्वगं विष्णुं सर्व्वदेवनमस्कृतम् ।
अर्च्चयामास सततं वाङ्मनःकायकर्म्मभिः ॥ ८
माल्यदानादिकं सर्व्वं स्वयमेवमचीकरत् ।
गन्धादिपेषणञ्चैव धूपद्रव्यादिकं तथा ॥ ९
भूमेरालेपनादीनि हविषां पचनं तथा ।
तत्कौतुकसमाविष्टा स्वयमेव चकार सा ॥ १०
शुभा पद्मावती नित्यं वाचा नारायणेति वै ।
अनन्तेत्येव सा नित्यं भाषमाणा पतिव्रता ॥ ११
दश वर्षसहस्राणि तत्परेणान्तरात्मना ।
अर्च्चयामास गोविन्दं गन्धपुष्पादिभिः शुचिः ॥ १२
विष्णुभक्तान् महाभागान् सर्व्वपापविवर्ज्जितान् ।
दानमानार्च्चनैर्नित्यं धनै रत्नैरतोषयत् ॥ १३
ततः कदाचित् सा देवी द्वादशीं समुपोष्य वै ।
हरेरग्रे महाभागा सुष्वाप पतिना सह ॥ १४
तत्र नारायणो देवस्तामाह पुरुषोत्तमः ।
किमिच्छसि वरं भद्रे मत्तस्त्वं ब्रूहि भामिनि ॥ १५
सा दृष्ट्वा तु वरं वव्रे पुत्रो मे वैष्णवो भवेत् ।
सार्व्वभौमो महातेजाः स्वकर्म्मनिरतः शुचिः ॥ १६
तथेत्युक्त्वा ददौ तस्यै फलमेकं जनार्द्दनः ।
सा प्रबुद्धा फलं दृष्ट्वा भर्त्त्रे सर्व्वं न्यवेदयत् ॥ १७
भक्षयामास संहृष्टा फलं तद्गतमानसा ।
ततः कालेन सा देवी पुत्रं कुलविवर्द्धनम् ॥ १८
असूत सा सदाचारं वासुदेवपरायणम् ।
शुभलक्षणसम्पन्नं चक्राङ्किततनूरुहम् ॥ १९
जातं दृष्ट्वा पिता पुत्रं क्रियाः सर्व्वाश्चकार वै ।
अम्बरीष इति ख्यातो लोके समभवत् प्रभुः ॥ २०
पितर्य्युपरते श्रीमानभिषिक्तो महामुनिः ।
मन्त्रिष्वाधाय राज्यञ्च तप उग्रं चकार सः ॥ २१
स संवत्सरसहस्रं वै जपन् नारायणं प्रभुम् ।
हृत्पुण्डरीकमध्यस्थं सूर्य्यमण्डलमध्यतः ॥ २२
शङ्ख-चक्र-गदा-पद्मं धारयन्तं चतुर्भुजम् ।
शुद्धजाम्बूनदनिभं ब्रह्म-विष्णु-शिवात्मकम् ॥ २३
सर्व्वाभरणसंयुक्तं पीताम्बरधरं प्रभुम् ।
श्रीवत्सवक्षसं देवं पुरुषं पुरुषोत्तमम् ॥ २४
ततो गरुड़मारुह्य सर्व्वदेवैरभिष्टुतः ।
आजगाम स विश्वात्मा सर्व्वलोकनमस्कृतः ॥ २५
ऐरावतमिवाचिन्त्यं कृत्वा वै गरुड़ं हरिः ।
स्वयं शक्र इवासीनस्तमाह नृपसत्तमम् ॥ २६
इन्द्रोऽहमस्मि भद्रं ते किं ददामि वरञ्च ते ।
सर्व्वलोकेश्वरोऽहं त्वां रक्षितुं समुपागतः ॥ २७

अम्बरीष उवाच ।

नाहं त्वामभिसन्धाय तप आस्थितवानिह ।
त्वया दत्तञ्च नेष्यामि गच्छ शक्र यथासुखम् ॥ २८
मम नारायणो नाथस्तं नमामि जगत्पतिम् ।
गच्छेन्द्र मा कृथास्त्वत्र मम बुद्धिविलोपनम् ॥ २९
ततः प्रहस्य भगवान् स्वरूपमकरोद्धरिः ।
शार्ङ्ग-चक्र-गदा-पाणिः खड्गहस्तो जनार्द्दनः ॥ ३०
गरुड़ोपरि सर्व्वात्मा नीलाचल इवापरः ।
देवगन्धर्व्वसङ्घैश्च स्तूयमानः समन्ततः ॥ ३१
प्रणम्य स च सन्तुष्टस्तुष्टाव गरुड़ध्वजम् ।
प्रसीद लोकनाथेश मम नाथ जनार्द्दन ॥ ३२
कृष्ण विष्णो जगन्नाथ सर्व्वलोकनमस्कृत ।
त्वमादिस्त्वमनादिस्त्वमनन्तः पुरुषः प्रभुः ॥ ३३
अप्रमेयो विभुर्विष्णुर्गोविन्दः कमलेक्षणः ।
महेश्वराङ्गजो मध्ये पुष्करः खगमः खगः ॥ ३४
कव्यवाहः कपाली त्वं हव्यवाहः प्रभञ्जनः ।
आदिदेवः क्रियानन्दः परमात्मात्मनि स्थितः ॥ ३५
त्वां प्रपन्नोऽस्मि गोविन्द जय देवकिनन्दन ।
जय देव जगन्नाथ पाहि मां पुष्करेक्षण ॥ ३६
नान्या गतिस्त्वदन्या मे त्वमेव शरणं मम ॥ ३७

सूत उवाच।

तमाह भगवान् विष्णुः किं ते हृदि चिकीर्षितम्।
तत् सर्व्वं ते प्रदास्यामि भक्तोऽसि मम सुव्रत।
भक्तिप्रियोऽहं सततं तस्माद्दातुमिहागतः॥ ३८

अम्बरीष उवाच।

लोकनाथ परानन्द नित्यं मे वर्त्तते मतिः।
वासुदेवपरो नित्यं वाङ्मनःकायकर्म्मभिः॥ ३९
यथा त्वं देवदेवस्य भवस्य परमात्मनः।
तथा भवाम्यहं विष्णो तव देव जनार्द्दन॥ ४०
पालयिष्यामि पृथिवीं कृत्वा वै वैष्णवं जगत्।
यज्ञहोमार्च्चनैश्चैव तर्पयामि सुरोत्तमान्॥ ४१
वैष्णवान् पालयिष्यामि निहनिष्यामि शात्रवान्।
लोकतापभये भीत इति मे धीयते मतिः॥ ४२

श्रीभगवानुवाच।

एवमस्तु यथेच्छं वै चक्रमेतत् सुदर्शनम्।
पुरा रुद्रप्रसादेन लब्धं वै दुर्लभं मया॥ ४३
ऋषिशापादिकं दुःखं शत्रुरोगादिकं तथा।
निहनिष्यति ते नित्यमित्युक्तान्तरधीयत॥ ४४

सूत उवाच।

ततः प्रणम्य मुदितो राजा नारायणं प्रभुम्।
प्रविश्य नगरीं रम्यामयोध्यां पर्य्यपालयत्॥ ४५
ब्राह्मणादींश्च वर्णांश्च स्वस्वकर्म्मण्य योजयत्।
नारायणपरो नित्यं विष्णुभक्तानकल्मषान्॥ ४६
पालयामास हृष्टात्मा विशेषेण जनाधिपः।
अश्वमेधशतैरिष्ट्वा वाजपेयशतेन च॥ ४७
पालयामास पृथिवीं सागरावरणामिमाम्।
गृहे गृहे हरिस्तस्थौ वेदघोषो गृहे गृहे॥ ४८
नामघोषो हरेश्चैव यज्ञघोषस्तथैव च।
अभवन् नृपशार्दूले तस्मिन् राज्यं प्रशासति॥ ४९
नासस्या नावृणा भूमिर्न दुर्भिक्षादिभिर्युता।
रोगहीनाः प्रजा नित्यं सर्व्वोपद्रववर्ज्जिताः॥ ५०
अम्बरीषो महातेजाः पालयामास मेदिनीम्।
तस्यैवं वर्त्तमानस्य कन्या कमललोचना॥ ५१
श्रीमती नाम विख्याता सर्व्वलक्षणसंयुता।
प्रदानसमयं प्राप्ता देवमायेव शोभना॥ ५२
तस्मिन् काले मुनिः श्रीमान् नारदोऽभ्यागतश्च वै।
अम्बरीषस्य राज्ञो वै पर्व्वतश्च महामतिः॥ ५३
तावुभावागतौ दृष्ट्वा प्रणिपत्य यथाविधि।
अम्बरीषो महातेजाः पूजयामास तावृषी॥ ५४
कन्यां तां रममाणां वै मेघमध्ये शतह्रदाम्।
प्राह तां प्रेक्ष्य भगवान् नारदः सस्मितस्तदा॥ ५५
केयं राजन् महाभाग कन्या सुरसुतोपमा।
ब्रूहि धर्म्मभृतां श्रेष्ठ सर्व्वलक्षणशोभिता॥ ५६

राजोवाच।

दुहितेयं मम विभो श्रीमती नाम नामतः।
प्रदानसमयं प्राप्ता वरमन्वेषते शुभा॥ ५७
इत्युक्तो मुनिशार्दूलस्तामैच्छन्नारदो द्विजाः।
पर्व्वतोऽपि मुनिस्तां वै चकमे मुनिसत्तमाः॥ ५८
अनुज्ञाप्य च राजानं नारदो वाक्यमब्रवीत्।
रहस्याहूय धर्म्मात्मा मम देहि सुतामिमाम्॥ ५९
पर्व्वतो हि तथा प्राह राजानं रहसि प्रभुः।
तावुभौ स च धर्म्मात्मा प्रणिपत्य भयार्द्दितः॥ ६०
उभौ भवन्तौ कन्यां मे प्रार्थयानौ कथन्त्वहम्।
करिष्यामि महाप्राज्ञ शृणु नारद मे वचः॥ ६१
त्वञ्च पर्व्वत मे वाक्यं शृणु वक्ष्यामि यत् प्रभो।
कन्येयं युवयोरेकं वरयिष्यति चेच्छुभा॥ ६२
तस्मै कन्यां प्रयच्छामि नान्यथा शक्तिरस्ति मे।
तथेत्युक्त्वा ततो भूयः श्वो यास्याव इति स्म ह॥ ६३
इत्युक्त्वा मुनिशार्दूलौ जग्मतुः प्रीतिमानसौ।
वासुदेवपरौ नित्यमुभौ ज्ञानविदां वरौ॥ ६४
विष्णुलोकं ततो गत्वा नारदो मुनिसत्तमः।
प्रणिपत्य हृषीकेशं वाक्यमेतदुवाच ह॥ ६५
श्रोतव्यमस्ति भगवन् नाथ नारायण प्रभो।
रहसि त्वां प्रवक्ष्यामि नमस्ते भुवनेश्वर॥ ६६
ततः प्रहस्य गोविन्दः सर्व्वानुत्सार्य्य तं मुनिम्।
ब्रूहीत्याह च विश्वात्मा मुनिराह च केशवम्॥ ६७
त्वदीयो नृपतिः श्रीमानम्बरीषो महीपतिः।
तस्य कन्या विशालाक्षी श्रीमती नाम नामतः॥ ६८
परिणेतुमनास्तत्र गतोऽस्मि वचनं शृणु।
पर्व्वतोऽयं मुनिः श्रीमांस्तव भृत्यस्तपोनिधिः॥ ६९
तामैच्छत् सोऽपि भगवन्नावामाह जनाधिपः।
अम्बरीषो महातेजाः कन्येयं युवयोर्वरम्॥ ७०
लावण्ययुक्तं वृणुयाद्यदि तस्मै ददाम्यहम्।
इत्याहवान् नृपस्तत्र तथेत्युक्त्वाहमागतः॥ ७१

आगमिष्यामि ते राजन् श्वः प्रभाते व्रजन्त्विति ।
आगतोऽहं जगन्नाथ कर्त्तुमर्हसि मे प्रियम् ॥ ७२
वानराननवद्भाति पर्व्वतस्य मुखं यथा ।
तथा कुरु जगन्नाथ मम चेदिच्छसि प्रियम् ॥ ७३
तथेत्युक्त्वा स गोविन्दः प्रहस्य मधुसूदनः ।
त्वयोक्तञ्च करिष्यामि गच्छ सौम्य यथागतम् ॥ ७४
एवमुक्त्वा मुनिर्हृष्टः प्रणिपत्य जनार्द्दनम् ।
मन्यमानः कृतात्मानं तथायोध्यां जगाम सः ॥ ७५
गते मुनिवरे तस्मिन् पर्व्वतोऽपि महामुनिः ।
प्रणम्य माधवं हृष्टो रहस्येनमुवाच ह ॥ ७६
वृत्तं तस्य निवेद्याग्रे नारदस्य जगत्पते ।
गोलाङ्गूलमुखं यद्वन्मुखं भाति तथा कुरु ॥ ७७
तच्छ्रुत्वा भगवान् विष्णुस्त्वयोक्तञ्च करोमि वै ।
गच्छ शीघ्रमयोध्यां वै मावेदीर्नारदस्य वै ॥ ७८
त्वया मे संविदं तत्र तथेत्युक्त्वा जगाम सः ।
ततो राजा समाज्ञाय प्राप्तौ मुनिवरौ तदा ॥ ७९
माङ्गल्यैर्विविधैः सर्व्वामयोध्यां ध्वजमालिनीम् ।
मण्डयामास पुष्पैश्च लाजैश्चैव समन्ततः ॥ ८०
अम्बुसिक्तगृहद्वारां सिक्तापणमहापथाम् ।
दिव्यगन्धरसोपेतां धूपितां दिव्यधूपकैः ॥ ८१
कृत्वा च नगरीं राजा मण्डयामास तां सभाम् ।
दिव्यैर्गन्धैस्तथा धूपै रत्नैश्च विविधैस्तथा ॥ ८२
अलङ्कृतां मणिस्तम्भैर्नानामाल्योपशोभिताम् ।
परार्घ्यास्तरणोपेतैर्दिव्यैर्भद्रासनैर्वृताम् ॥ ८३
कृत्वा नृपेन्द्रस्तां कन्यामादाय प्रविवेश ह ।
सर्व्वाभरणसम्पन्नां श्रीरिवायतलोचनाम् ॥ ८४
करसम्मितमध्याङ्गीं पञ्चस्निग्धां शुभाननाम् ।
स्त्रीभिः परिवृतां दिव्यां श्रीमतीं संश्रितां तदा ॥ ८५

सभा च सा भूमिपतेः समृद्धा
मणिप्रवेकोत्तमरत्नचित्रा ।
न्यस्तासना माल्यवती सुबद्धा
तामाययुस्तेन रराज वर्गाः ॥ ८६
अथापरो ब्रह्मवरात्मजो हि
त्रैविद्यविद्यो भगवान् महात्मा ।
स पर्व्वतो ब्रह्मविदां वरिष्ठो
महामुनिर्नारद आजगाम ॥ ८७

तावागतौ समीक्ष्याथ राजा सम्भ्रान्तमानसः ।
दिव्यमासनमादाय पूजयामास तावुभौ ॥ ८८
उभौ देवर्षिसिद्धौ तावुभौ ज्ञानविदां वरौ ।
समासीनौ महात्मानौ कन्यार्थं मुनिसत्तमौ ॥ ८९
तावुभौ प्रणिपत्याग्रे कन्यां तां श्रीमतीं शुभाम् ।
सुतां कमलपत्राक्षीं प्राह राजा यशस्विनीम् ॥ ९०
अनयोर्यं वरं भद्रे मनसा त्वमिहेच्छसि ।
तस्मै मालामिमां देहि प्रणिपत्य यथाविधि ॥ ९१
एवमुक्ता तु सा कन्या स्त्रीभिः परिवृता तदा ।
मालां हिरण्मयीं दिव्यामादाय शुभलोचना ॥ ९२
यत्रासीनौ महात्मानौ तत्रागम्य स्थिता तदा ।
वीक्षमाणा मुनिश्रेष्ठौ पर्व्वतं नारदं तथा ॥ ९३
शाखामृगाननं दृष्ट्वा नारदं पर्व्वतं तथा ।
गोलाङ्गूलमुखं कन्या किञ्चित् त्रासमन्विता ॥ ९४
सम्भ्रान्तमानसा तत्र प्रवातकदली यथा ।
तस्थौ तामाह राजासौ वत्से किं त्वं करिष्यसि ॥ ९५
अनयोरेकमुद्दिश्य देहि मालामिमां शुभे ।
सा प्राह पितरं त्रस्ता इमौ तौ नरवानरौ ॥ ९६
मुनिश्रेष्ठं न पश्यामि नारदं पर्व्वतं तथा ।
अनयोर्मध्यतस्त्वेकमूनषोड़शवार्षिकम् ॥ ९७
सर्व्वाभरणसम्पन्नमतसीपुष्पसन्निभम् ।
दीर्घबाहुं विशालाक्षं तुङ्गोरःस्थलमुत्तमम् ॥ ९८
रेखाङ्कितकटिग्रीवं रक्तान्तायतलोचनम् ।
नम्रचापानुकरण-पटुभ्रूयुगशोभितम् ॥ ९९
विभक्तत्रिवलीव्यक्तं नाभिव्यक्तशुभोदरम् ।
हिरण्याम्बरसंवीतं तुङ्गरत्ननखं शुभम् ।
पद्माकारकरन्त्वेनं पद्मास्यं पद्मलोचनम् ॥ १००
सुनासं पद्महृदयं पद्मनाभं श्रियावृतम् ।
दन्तपङ्क्तिभिरत्यर्थं कुन्दकुड्मलसन्निभैः ॥ १०१
हसन्तं मां समालोक्य दक्षिणञ्च प्रसार्य्य वै ।
पाणिं स्थितममुं तत्र पश्यामि शुभमूर्द्धजम् ॥ १०२
सम्भ्रान्तमानसां तत्र वेपतीं कदलीमिव ।
स्थितां तामाह राजासौ वत्से किं त्वं करिष्यसि ॥ १०३
एवमुक्ते मुनिः प्राह नारदः संशयं गतः ।
कियन्तो बाहवस्तस्य कन्ये ब्रूहि यथातथम् ॥ १०४
बाहुद्वयञ्च पश्यामीत्याह कन्या शुचिस्मिता ।
प्राह तां पर्व्वतस्तत्र तस्य वक्षःस्थले शुभे ॥ १०५
किं पश्यसि च मे ब्रूहि करे किं वास्य पश्यसि ।

कन्यां तमाह मालां वै पञ्चरूपामनुत्तमाम् ॥ १०६
वक्षःस्थलेऽस्य पश्यामि करे कार्मुकसायकान् ।
एवमुक्तौ मुनिश्रेष्ठौ परस्परमनुत्तमौ ॥ १०७
मनसा चिन्तयन्तौ तौ मायेयं कस्यचिद्भवेत् ।
मायावी तस्करो नूनं स्वयमेव जनार्द्दनः ॥ १०८
आगतो न यथा कुर्य्यात् कथमस्मन्मुखन्त्विदम् ।
गोलाङ्गूलत्वमित्येवं चिन्तयामास नारदः ॥ १०९
पर्व्वतोऽपि यथान्यायं वानरत्वं कथं मम ।
प्राप्तमित्येव मनसा चिन्तामापेदिवांस्तथा ॥ ११०
ततो राजा प्रणम्यासौ नारदं पर्व्वतं तथा ।
भवद्भ्यां किमिदं तत्र कृतं बुद्धिविमोहजम् ॥ १११
स्वस्थौ भवन्तौ तिष्ठेतां यथा कन्यार्थमुद्यतौ ।
एवमुक्तौ मुनिश्रेष्ठौ नृपमूचतुरुल्वणौ ॥ ११२
त्वमेव मोहं कुरुषे नावामिह कथञ्चन ।
आवयोरेकमेषा ते वरयत्वेव मा चिरम् ॥ ११३
ततः सा कन्यका भूयः प्रणिपत्येष्टदेवताम् ।
मायामादाय तिष्ठन्तं तयोर्मध्ये समाहितम् ॥ ११४
सर्व्वाभरणसंयुक्तमतसीपुष्पसन्निभम् ।
दीर्घबाहुं सपुष्टाङ्गं कर्णान्तायतलोचनम् ॥ ११५
पूर्व्ववत् पुरुषं दृष्ट्वा मालां तस्मै ददौ हि सा ।
अनन्तरं हि सा कन्या न दृष्टा मनुजैः पुनः ॥ ११६
ततो नादः समभवत् किमेतदिति विस्मितौ ।
तामादाय गतो विष्णुः स्वस्थानं पुरुषोत्तमः ॥ ११७
पुरा तदर्थमनिशं तपस्तप्त्वा वराङ्गना ।
श्रीमती सा समुत्पन्ना सा गता च तथा हरिम्॥११८
तावुभौ मुनिशार्दूलौ धिक्कृतावतिदुःखितौ ।
वासुदेवं प्रति तदा जग्मतुर्भवनं हरेः ॥ ११९
तावागतौ समीक्ष्याह श्रीमतीं भगवान् हरिः ।
मुनिश्रेष्ठौ समायातौ गूहस्वात्मानमत्र वै ॥ १२०
तथेत्युक्त्वा च सा देवी प्रहसन्ती चकार ह ।
नारदः प्रणिपत्याग्रे प्राह दामोदरं हरिम् ॥ १२१
प्रियं हि कृतवानद्य मम त्वं पर्व्वतस्य हि ।
त्वमेव नूनं गोविन्द कन्यां तां हृतवानसि ॥ १२२
विमोह्यावां स्वयं बुद्ध्या प्रतार्य्य सुरसत्तम ।
इत्युक्तः पुरुषो विष्णुः पिधाय श्रोत्रमच्युतः ।
पाणिभ्यां प्राह भगवान् भवद्भ्यां किमुदीरितम्॥१२३
कामवानपि भावोऽयं मुनिवृत्तिरहो किल ।

एवमुक्तो मुनिः प्राह वासुदेवं स नारदः ॥ १२४
कर्णमूले मम कथं गोलाङ्गूलमुखन्त्विति ।
कर्णमूले तमाहेदं वानरत्वं कृतं मया ॥ १२५
पर्व्वतस्य मया विद्वन् गोलाङ्गूलमुखं तव ।
मया तव कृतं तत्र प्रियार्थं नान्यथा त्विति ॥ १२६
पर्व्वतोऽपि तथा प्राह तस्याप्येवं जगाद सः ।
शृण्वतोरुभयोस्तत्र प्राह दामोदरो वचः ॥ १२७
प्रियं भवद्भ्यां कृतवान् सत्येनात्मानमालभे ।
नारदः प्राह धर्म्मात्मा आवयोर्मध्यतः स्थितः ॥ १२८
धनुष्मान् पुरुषः कोऽत्र तां हृत्वा गतवान् किल ।
तच्छ्रुत्वा वासुदेवोऽसौ प्राह तौ मुनिसत्तमौ ॥ १२९
मायाविनो महात्मानो बहवः सन्ति सत्तमाः ।
तत्र सा श्रीमती नूनमदृष्टा मुनिसत्तमौ ॥ १३०
चक्रपाणिरहं नित्यं चतुर्ब्बाहुरिति स्थितः ।
तां तथा नाहमेच्छं वै भवद्भ्यां विदितं हि तत्॥१३१
इत्युक्तौ प्रणिपत्यैनमूचतुः प्रीतिमानसौ ।
कोऽत्र दोषस्तव विभो नारायण जगत्पते ॥ १३२
दौरात्म्यं तन्नृपस्यैव मायां हि कृतवानसौ ।
इत्युक्त्वा जग्मतुस्तस्मान्मुनी नारद-पर्व्वतौ ॥ १३३
अम्बरीषं समासाद्य शापेनैनमयोजयत् ।
नारदः पर्व्वतश्चैव यस्मादावामिहागतौ ॥ १३४
आहूय पश्चादन्यस्मै कन्यां त्वं दत्तवानसि ।
मायायोगेन तस्मात् त्वां तमो ह्यभिभविष्यति ॥ १३५
तेन चात्मानमत्यर्थं यथावत् त्वं न वेत्स्यसि ।
एवं शापे प्रदत्ते तु तमोराशिरथोत्थितः ॥ १३६
नृपं प्रति ततश्चक्रं विष्णोः प्रादुरभूत् क्षणात् ।
चक्रवित्रासितं घोरं तावुभौ तम अभ्यगात् ॥ १३७
ततः सन्त्रस्तसर्व्वाङ्गौ धावमानौ महामुनी ।
पृष्ठतश्चक्रमालोक्य तमोराशिं दुरासदम् ॥ १३८
कन्यासिद्धिरहो प्राप्ता ह्यावयोरिति वेगितौ ।
लोकालोकान्तमनिशं धावमानौ भयार्द्दितौ ॥ १३९
त्राहि त्राहीति गोविन्दं भाषमाणौ भयार्द्दितौ ॥
विष्णुलोकं ततो गत्वा नारायण जगत्पते ॥ १४०
वासुदेव हृषीकेश पद्मनाभ जनार्द्दन ।
त्राह्यावां पुण्डरीकाक्ष नाथोऽसि पुरुषोत्तम ॥ १४१
ततो नारायणश्चिन्त्यः श्रीमान् श्रीवत्सलाञ्छनः ।
निवार्य्य चक्रं ध्वान्तञ्च भक्तानुग्रहकाम्यया ॥ १४२

अम्बरीषस्य मद्भक्तास्तथैतौ मुनिसत्तमौ।
अनयोरस्य च तथा हितं कार्य्यं मयाधुना ॥ १४३
आहूय तत् तमः श्रीमान् गिरा प्रह्लादयन् हरिः।
प्रोवाच भगवान् विष्णुः श्रूयतां मे इदं वचः ॥ १४४
ऋषिशापो न चैवासीदन्यथा च वरो मम।
दत्तो नृपाय रक्षार्थं नास्ति तस्यान्यथा पुनः ॥ १४५
अम्बरीषस्य पुत्रस्य नप्तुः पुत्रो महायशाः।
श्रीमान् दशरथो नाम राजा भवति धार्म्मिकः॥१४६
तस्याहमग्रजः पुत्रो रामनामा भवाम्यहम्।
तत्र मे दक्षिणो बाहुर्भरतो नाम वै भवेत् ॥१४७
शत्रुघ्नो नाम सव्यश्च शेषोऽसौ लक्ष्मणः स्मृतः।
तत्र मां समुपागच्छ गच्छेदानीं नृपं विना ॥ १४८
मुनिश्रेष्ठौ च हित्वा त्वमिति स्माह च माधवः।
एवमुक्तं तमो नाशं तत्क्षणाच्च जगाम वै ॥ १४९
निवारितं हरेश्चक्रं यथापूर्व्वमतिष्ठत।
मुनिश्रेष्ठौ भयान्मुक्तौ प्रणिपत्य जनार्द्दनम् ॥ १५०
निर्गतौ शोकसन्तप्तावूचतुस्तौ परस्परम्।
अद्यप्रभृति देहान्तमावां कन्यापरिग्रहम् ॥ १५१
न करिष्याव इत्युक्त्वा प्रतिज्ञाय च तावृषी।
योगध्यानपरौ शुद्धौ यथापूर्व्वं व्यवस्थितौ ॥ १५२
अम्बरीषश्च राजासौ परिपाल्य च मेदिनीम्।
सभृत्यज्ञातिसम्पन्नो विष्णुलोकं जगाम वै ॥ १५३
मानार्थमम्बरीषस्य तथैव मुनिसिंहयोः।
रामो दाशरथिर्भूत्वा नात्मवेदीश्वरोऽभवत् ॥ १५४
मुनयश्च तथा सर्व्वे भृग्वाद्या मुनिसत्तमाः।
माया न कार्य्या विद्वद्भिरित्याहुः प्रेक्ष्य तं हरिम्१५५
नारदः पर्व्वतश्चैव चिरं ज्ञात्वा विचेष्टितम्।
मायां विष्णोर्विनिन्द्यैव रुद्रभक्तौ बभूवतुः ॥ १५६
एतद्धि कथितं सर्व्वं मया युष्माकमद्य वै।
अम्बरीषस्य माहात्म्यं मायावित्वञ्च वै हरेः ॥१५७
यः पठेच्छृणुयाद्वापि श्रावयेद्वापि मानवः।
मायां विसृज्य पुण्यात्मा रुद्रलोकं स गच्छति १५८
इदं पवित्रं परमं पुण्यं वेदैरुदीरितम्।
सायं प्रातः पठेन्नित्यं विष्णोः सायुज्यमाप्नुयात् १५९

इति श्रीलैङ्गे महापुराणे उपरिभागे श्रीमत्याख्यानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः।

ऋषय ऊचुः।

मायाविलं श्रुतं विष्णोर्देवदेवस्य धीमतः।
कथं ज्येष्ठासमुत्पत्तिर्देवदेवाज्जनार्द्दनात्।
वक्तुमर्हसि चास्माकं लोमहर्षण तत्त्वतः ॥ १

सूत उवाच।

अनादिनिधनः श्रीमान् धाता नारायणः प्रभुः।
जगद्द्वैधमिदं चक्रे मोहनाय जगत्पतिः ॥ २
विष्णुर्वै ब्राह्मणान् वेदान् वेदधर्म्मान् सनातनान्।
श्रियं पद्मां तथा श्रेष्ठां भागमेकमकारयत् ॥ ३
ज्येष्ठामलक्ष्मीमशुभां वेदबाह्यान् नराधमान्।
अधर्म्मञ्च महातेजा भागमेकमकल्पयत् ॥ ४
अलक्ष्मीमग्रतः सृष्ट्वा पश्चात् पद्मां जनार्द्दनः।
ज्येष्ठा तेन समाख्याता अलक्ष्मीर्द्विजसत्तमाः ॥ ५
अमृतोद्भववेलायां विषानन्तरसम्भवात्।
अशुभा सा ततोत्पन्ना ज्येष्ठा इति च वै श्रुतम् ॥ ६
ततः श्रीश्च समुत्पन्ना पद्मा विष्णुपरिग्रहः।
दुःसहो नाम विप्रर्षिरुपयेमे शुभां तदा ॥ ७
ज्येष्ठां तां परिपूर्णोऽसौ मनसा वीक्ष्य धिष्ठिताम्।
लोकं चचार हृष्टात्मा तया सह मुनिस्तदा ॥ ८
यस्मिन् घोषो हरेश्चैव हरस्य च महात्मनः।
वेदघोषस्तथा विप्रा होमधूमस्तथैव च ॥ ९
भस्माङ्गिनो वा यत्रासंस्तत्र तत्र भयाद्धिता।
पिधाय कर्णौ संयाति धावमाना इतस्ततः ॥ १०
ज्येष्ठामेवंविधां दृष्ट्वा दुःसहो मोहमागतः।
तया सह वनं गत्वा चचार स महामुनिः ॥ ११
तपो महद्वने घोरे याति कन्या प्रतिग्रहम्।
न करिष्यामि चेत्युक्त्वा प्रतिज्ञाय च तामृषिः ॥ १२
योगज्ञानपरः शुद्धो यत्र योगीश्वरो मुनिः।
तत्रायान्तं महात्मानं मार्कण्डेयमपश्यत ॥ १३
प्रणिपत्य महात्मानं दुःसहो मुनिमब्रवीत्।
भार्य्येयं भगवन् मह्यं न स्थास्यति कथञ्चन ॥ १४
किं करोमीति विप्रर्षे ह्यनया सह भार्य्यया।
प्रविशामि तथा कुत्र कुतो न प्रविशाम्यहम् ॥ १५

मार्कण्डेय उवाच।

शृणु दुःसह सर्व्वत्र अकीर्त्तिरशुभान्विता।

अलक्ष्मीरतुला चेयं ज्येष्ठा दूत्यभिशब्दिता ॥ १६
नारायणपरा यत्र वेदमार्गानुसारिणः ।
रुद्रभक्ता महात्मानो भस्मोद्धूलितविग्रहाः ॥ १७
स्थिता यत्र जना नित्यं मा विशेथाः कथञ्चन ।
नारायण हृषीकेश पुण्डरीकाक्ष माधव ॥ १८
अच्युतानन्तगोविन्द वासुदेव जनार्द्दन ।
रुद्र रुद्रेति रुद्रेति शिवाय च नमो नमः ॥ १९
नमः शिवतरायेति शङ्करायेति सर्व्वदा ।
महादेव महादेव महादेवेति कीर्त्तयेत् ॥ २०
उमायाः पतये चैव हिरण्यपतये सदा ।
हिरण्यबाहवे तुभ्यं वृषाङ्काय नमो नमः ॥ २१
नृसिंह वामनाचिन्त्य माधवेति च ये जनाः ।
वदन्ति सततं हृष्टा ब्राह्मणाः क्षत्रियास्तथा ॥ २२
वैश्याः शूद्राश्च ये नित्यं तेषां धनगृहादिषु ।
आरामे चैव गोष्ठेषु न विशेथाः कथञ्चन ॥ २३
ज्वालामालाकरालञ्च सहस्रादित्यसन्निभम् ।
चक्रं विष्णोरतीवोग्रं तेषां हन्ति सदाऽशुभम् ॥ २४
स्वाहाकारो वषट्कारो गृहे यस्मिन् हि वर्त्तते ।
तद्धित्वा चान्यदागच्छ सामघोषोऽथ यत्र वा ॥ २५
वेदाभ्यासरता नित्यं नित्यकर्म्मपरायणाः ।
वासुदेवार्च्चनरता दूरतस्तान् विसर्ज्जयेत् ॥ २६
अग्निहोत्रं गृहे येषां लिङ्गार्च्चा वा गृहेषु च ।
वासुदेवतनुर्वापि चण्डिका यत्र तिष्ठति ।
दूरतो व्रज तान् हित्वा सर्व्वपापविवर्ज्जितान् ॥ २७
नित्यनैमित्तिकैर्यज्ञैर्यजन्ति च महेश्वरम् ।
तान् हित्वा व्रज चान्यत्र दुःसह त्वं सहानया ॥ २८
श्रोत्रिया ब्राह्मणा गावो गुरवोऽतिथयः सदा ।
रुद्रभक्ताश्च पूज्यन्ते यैर्नित्यं तान् विवर्ज्जयेत् ॥ २९

दुःसह उवाच ।

यस्मिन् प्रवेशो योग्यो मे तद्ब्रूहि मुनिसत्तम ।
त्वद्वाक्याद्भयनिर्म्मुक्तो विशाम्येषां गृहे सदा ॥ ३०

मार्कण्डेय उवाच ।

न श्रोत्रिया द्विजा गावो गुरवोऽतिथयः सदा ।
यत्र भर्त्ता च भार्य्या च परस्परविरोधिनौ ॥ ३१
सभार्य्यस्त्वं गृहं तस्य विशेथा भयवर्ज्जितः ।
देवदेवो महादेवो रुद्रस्त्रिभुवनेश्वरः ॥ ३२
विनिन्द्यो यत्र भगवान् विशस्व भयवर्ज्जितः ।
वासुदेवरतिर्नास्ति यत्र नास्ति सदाशिवः ॥ ३३
जपहोमादिकं नास्ति भस्म नास्ति गृहे नृणाम् ।
पर्व्वण्यभ्यर्च्चनं नास्ति चतुर्द्दश्यां विशेषतः ॥ ३४
कृष्णाष्टम्याञ्च रुद्रस्य सन्ध्यायां भस्मवर्ज्जिताः ।
चतुर्द्दश्यां महादेवं न यजन्ति च यत्र वै ॥ ३५
विष्णोर्नामविहीना ये सङ्गताश्च दुरात्मभिः ।
नमः कृष्णाय शर्व्वाय शिवाय परमेष्ठिने ॥ ३६
ब्राह्मणाश्च नरा मूढा न वदन्ति दुरात्मकाः ।
तत्रैव सततं वत्स सभार्य्यस्त्वं समाविश ॥ ३७
वेदघोषो न यत्रास्ति गुरुपूजादयो न च ।
पितृकर्म्मविहीनास्तु सभार्य्यस्त्वं समाविश ॥ ३८
रात्रौ रात्रौ गृहे यस्मिन् कलहो वर्त्तते मिथः ।
अनया सार्द्धमनिशं विश त्वं भयवर्ज्जितः ॥ ३९
लिङ्गार्च्चनं यस्य नास्ति यस्य नास्ति जपादिकम् ।
रुद्रभक्तिविनिन्दा च तत्रैव विश निर्भयः ॥ ४०
अतिथिः श्रोत्रियो वापि गुरुर्वा वैष्णवोऽपि वा ।
न सन्ति यद्गृहे गावः सभार्य्यस्त्वं समाविश ॥ ४१
बालानां प्रेक्षमाणानां यत्रादत्त्वा त्वभक्षयन् ।
भक्ष्याणि तत्र संहृष्टः सभार्य्यस्त्वं समाविश ॥ ४२
अनभ्यर्च्य महादेवं वासुदेवमथापि वा ।
अश्नन्ति विधिवद्यत्र तत्र नित्यं समाविश ॥ ४३
पापकर्म्मरता मूढा दयाहीनाः परस्परम् ।
गृहे यस्मिन् समासन्ते देशे वा तत्र संविश ॥ ४५
प्राकारागारविध्वंसा न चैवेज्या कुटुम्बिनी ।
तद्गृहन्तु समासाद्य वस नित्यं हि हृष्टधीः ॥ ४०
यत्र कण्टकिनो वृक्षा यत्र निष्पाववल्लरी ।
ब्रह्मवृक्षश्च यत्रास्ति सभार्य्यस्त्वं समाविश ॥ ४६
अगस्त्यार्कादयो वापि बन्धुजीवो गृहेषु वै ।
करवीरो विशेषेण नन्द्यावर्त्तमथापि वा ।
मल्लिका वा गृहे येषां सभार्य्यस्त्वं समाविश ॥ ४७
कन्या च यत्र वै वल्ली द्रोणी वा च जटी गृहे ।
बहुला कदली यत्र सभार्य्यस्त्वं समाविश ॥ ४८
तालं तमालं भल्लातं तिन्तिड़ीखण्डमेव च ।
कदम्बखादिरं वापि सभार्य्यस्त्वं समाविश ॥ ४९
न्यग्रोधं वा गृहे येषामश्वत्थं चूतमेव वा ।
उदुम्बरं वा पनसं सभार्य्यस्त्वं समाविश ॥ ५०
यस्य काकगृहं निम्बे आरामे वा गृहेऽपि वा ।

दण्डिनी मुण्डिनी वापि सभार्य्यस्त्वं समाविश ॥५१
एका दासी गृहे यत्र त्रिगवं पञ्चमाहिषम्।
षडश्वं सप्तमातङ्गं सभार्य्यस्त्वं समाविश ॥ ५२
यस्य काली गृहे देवी प्रेतरूपा च डाकिनी।
क्षेत्रपालोऽथ वा यत्र सभार्य्यस्त्वं समाविश ॥ ५३
भिक्षुविम्बश्च वै यस्य गृहे क्षपणकं तथा।
बौद्धं वा विम्बमासाद्य तत्र पूर्णं समाविश ॥ ५४
शयनासनकालेषु भोजनाटनवृत्तिषु।
येषां वदति नो वाणी नामानि च हरेः सदा ॥५५
तद्गृहं ते समाख्यातं सभार्य्यस्य निवेशितुम्।
पाषण्डाचारनिरताः श्रौतस्मार्त्तबहिष्कृताः ॥ ५६
विष्णुभक्तिविनिर्म्मुक्ता महादेवविनिन्दकाः।
नास्तिकाश्च शठा यत्र सभार्य्यस्त्वं समाविश ॥ ५७
सर्व्वस्मादधिकत्वं ये न वदन्ति पिनाकिनः।
साधारणं स्मरन्त्येनं सभार्य्यस्त्वं समाविश ॥ ५८
ब्रह्मा च भगवान् विष्णुः शर्व्वः सर्व्वसुरेश्वरः।
रुद्रप्रसादजाश्चेति न वदन्ति दुरात्मकाः ॥ ५९
ब्रह्मा च भगवान् विष्णुः शर्व्वश्च सम एव च।
वदन्ति मूढा खद्योतं भानुं वा मूढ़चेतसः ॥ ६०
तेषां गृहे तथा क्षेत्रे आवासे वा सदानया।
विश भुङ्क्ष्व गृहं तेषामपि पूर्णमनन्यधीः ॥ ६१
येऽश्नन्ति केवलं मूढाः पक्वमन्नं विचेतसः।
स्नानमङ्गलहीनाश्च तेषां त्वं गृहमाविश ॥ ६२
या नारी शौचविभ्रष्टा देहसंस्कारवर्ज्जिता।
सर्व्वभक्ष्यरता नित्यं तस्याः स्थाने समाविश ॥ ६३
मलिनास्याः स्वयं मर्त्त्या मलिनाम्बरधारिणः।
मलदन्ता गृहस्थाश्च गृहे तेषां समाविश ॥ ६४
पादशौचविनिर्म्मुक्ता सन्ध्याकाले च शायिनः।
सन्ध्यायामश्नुते ये वै गृहं तेषां समाविश ॥ ६५
अत्याशनरता मर्त्त्या अतिपानरता नराः।
द्यूतवादक्रिया मूढा गृहे तेषां समाविश ॥ ६६
ब्रह्मस्वहारिणो ये चायोग्यांश्चैव यजन्ति वा।
शूद्रान्नभोजिनो वापि गृहं तेषां समाविश ॥ ६७
मद्यपानरताः पापा मांसभक्षणतत्पराः।
परदाररता मर्त्त्या गृहं तेषां समाविश ॥ ६८
पर्व्वस्वनर्त्तेभिरता मैथुने वा दिवा रताः।
सन्ध्यायां मैथुनं येषां गृहे तेषां समाविश ॥ ६९
पृष्ठतो मैथुनं येषां श्वानवन्मृगवच्च वा।
जले वा मैथुनं कुर्य्यात् सभार्य्यस्त्वं समाविश ॥ ७०
रजस्वलां स्त्रियं गच्छेच्चाण्डालीं वा नराधमः।
कन्यां वा गोगृहे वापि गृहं तेषां समाविश ॥ ७१
बहुना किं प्रलापेन नित्यकर्म्मबहिष्कृताः।
रुद्रभक्तिविहीना ये गृहं तेषां समाविश ॥ ७२
शृङ्गैर्द्दिव्यौषधैः क्षुद्रैः शेफमालिप्य गच्छति।
भगद्रावं करोत्यस्मात् सभार्य्यस्त्वं समाविश ॥ ७३

सूत उवाच।

इत्युक्त्वा स मुनिः श्रीमान् निर्म्मार्ज्य नयने तदा।
ब्रह्मर्षिर्ब्रह्मसङ्काशस्तत्रैवान्तरधीयत ॥ ७४
दुःसहश्च तथोक्तानि स्थानानि च समेयिवान्।
विशेषाद्देवदेवस्य विष्णोर्निन्दारतात्मनाम् ॥ ७५
सभार्य्यौ मुनिशार्दूलः सैशा ज्येष्ठा इति स्मृता ॥७६
दुःसहस्तामुवाचेदं तड़ागाश्रममन्तरे।
आस्स्व त्वमत्र चाहं वै प्रवेक्ष्यामि रसातलम् ॥ ७७
आवयोः स्थानमालोक्य निवासार्थं ततः पुनः।
आगमिष्यामि ते पार्श्वमित्युक्ता तमुवाच सा ॥ ७८
किमश्नामि महाभाग को मे दास्यति वै बलिम्।
इत्युक्तस्तां मुनिः प्राह यास्त्रियस्त्वां यजन्ति वै ॥७९
बलिभिः पुष्पधूपैश्च न तासाञ्च गृहं विश।
इत्युक्त्वा त्वाविशत् तत्र पातालं विलयोगतः ॥ ८०
अद्यापि च विनिर्म्मग्नो मुनिः सजलसंस्तरे।
ग्रामपर्व्वतवाक्षेषु नित्यमास्ते शुभा पुनः ॥ ८१
प्रसङ्गाद्देवदेवेशो विष्णुस्त्रिभुवनेश्वरः।
लक्ष्म्या दृष्टस्तयालक्ष्मीः सा तमाह जनार्द्दनम् ॥८२
भर्त्ता गतो महाबाहो विलं त्यक्त्वा स मां प्रभो।
अनाथाहं जगन्नाथ वृत्तिं देहि नमोऽस्तु ते ॥ ८३

सूत उवाच।

इत्युक्तो भगवान् विष्णुः प्रहस्याह जनार्द्दनः।
ज्येष्ठामलक्ष्मीं देवेशो माधवो मधुसूदनः ॥ ८४

श्रीविष्णुरुवाच।

ये रुद्रमनघं शर्व्वं शङ्करं नीललोहितम्।
अम्बां हैमवतीं वापि जनित्रीं जगतामपि।
भक्तान् निन्दयन्त्यत्र तेषां वित्तं तवैव हि ॥ ८५
येऽपि चैव महादेवं विनिन्द्यैव यजन्ति माम्।
मूढा ह्यभाग्या मद्भक्ता अपि तेषां धनं तव ॥ ८६

यस्यास्त्वया ग्टहं ब्रह्मा प्रसादाद्वर्त्तते सदा।
ये यजन्ति विनिन्द्यैव मम विद्वेषकारकाः॥ ८७
मद्भक्ता नैव तेऽभक्ता इव वर्त्तन्ति दुर्म्मदाः।
तेषां ग्टहं धनं चेत्रमिष्टापूर्त्तं तवैव हि॥ ८८

सूत उवाच।

इत्युक्त्वा तां परित्यज्य लक्ष्म्याऽलक्ष्मीं जनार्द्दनः।
जजाप भगवान् रुद्रमलक्ष्मीचयसिद्धये॥ ८९
तस्मात् प्रदेयं तस्यैव बलिं नित्यं मुनीश्वराः।
विष्णुभक्तैन सन्देहः सर्व्वयत्नेन सर्व्वदा॥ ९०
अङ्गनाभिः सदा पूज्या बलिभिर्विविधैर्द्विजाः॥ ९१
यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान्।
अलक्ष्मीवृत्तमनघो लक्ष्मीवान् लभते गतिम्॥ ९२

इति श्रीलैङ्गे महापुराणे उपरिभागे अलक्ष्मी-
वृत्तं नाम षष्ठोऽध्यायः॥ ६॥

---

## सप्तमोऽध्यायः।

ऋषय ऊचुः।

किं जपन् मुच्यते जन्तुः सर्व्वलोकभयादिभिः।
सर्व्वपापविनिर्म्मुक्तः प्राप्नोति परमां गतिम्॥ १
अलक्ष्मीं वाथ सन्त्यज्य गमिष्यति जपेन वै।
लक्ष्मीवासो भवेन्मर्त्त्यः सूत वक्तुमिहार्हसि॥ २

सूत उवाच।

पुरा पितामहेनोक्तं वशिष्ठाय महात्मने।
वक्ष्ये संक्षेपतः सर्व्वं सर्व्वलोकहिताय वै॥ ३
शृण्वन्तु वचनं सर्व्वे प्रणिपत्य जनार्द्दनम्।
देवदेवमजं विष्णुं कृष्णमच्युतमव्ययम्।
सर्व्वपापहरं शुद्धं मोक्षदं ब्रह्मवादिनाम्॥ ४
मनसा कर्म्मणा वाचा यो विद्वान् पुण्यकर्म्मकृत्।
नारायणं जपेन्नित्यं प्रणम्य पुरुषोत्तमम्॥ ५
स्वपन् नारायणं देवं गच्छन् नारायणं तथा।
भुञ्जन् नारायणं विप्रास्तिष्ठन् जाग्रन् सनातनम्॥ ६
उन्मिषन् निमिषन् वापि नमो नारायणेति वै।
भोज्यं पेयञ्च लेह्यञ्च नमो नारायणेति च॥ ७
अभिमन्त्र्य स्पृशन् भुङ्क्ते स याति परमां गतिम्।
सर्व्वपापविनिर्म्मुक्तः प्राप्नोति च सतां गतिम्॥ ८
अलक्ष्मी च मया प्रोक्ता पत्नी या दुःसहस्य च।
नारायणपदं श्रुत्वा गच्छत्येव न संशयः॥ ९
या लक्ष्मीर्द्देवदेवस्य हरेः कृष्णस्य वल्लभा।
गृहे चेत्रे तथा वासे तनौ वसति सुव्रताः॥ १०
आलोड्य सर्व्वशास्त्राणि विचार्य्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा॥ ११
किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिर्व्रतैः।
नमो नारायणायेति मन्त्रः सर्व्वार्थसाधकः॥ १२
तस्मात् सर्व्वेषु कालेषु नमो नारायणेति च।
जपन् स याति विप्रेन्द्रा विष्णुलोकं सबान्धवः॥ १३
अन्यच्च देवदेवस्य शृण्वन्तु मुनिसत्तमाः।
मन्त्रो मया पुराभ्यस्तः सर्व्ववेदार्थसाधकः॥ १४
द्वादशाक्षरसंयुक्तो द्वादशात्मा पुरातनः।
तस्यैवेह च माहात्म्यं संक्षेपात् प्रवदामि वः॥ १५
कश्चिद्द्विजो महाप्राज्ञस्तपस्तप्त्वा कथञ्चन।
पुत्रमेकं तथोत्पाद्य संस्कारैश्च यथाक्रमम्॥ १६
योजयित्वा यथाकालं कृतोपनयनं पुनः।
अध्यापयामास तदा स च नोवाच किञ्चन॥ १७
न जिह्वा स्पन्दते तस्य दुःखितोऽभूद्द्विजोत्तमः।
वासुदेवेति नियतमैतरेयो वदत्यसौ॥ १८
पिता तस्य तथा चान्यां परिणीय यथाविधि।
पुत्रानुत्पादयामास तथैव विधिपूर्व्वकम्॥ १९
वेदानधीत्य सम्पन्ना बभूवुः सर्व्वसम्मताः।
ऐतरेयस्य सा माता दुःखिता शोकमूर्च्छिता॥ २०
उवाच पुत्राः सम्पन्ना वेदवेदाङ्गपारगाः।
ब्राह्मणैः पूज्यमाना वै मोदयन्ति च मातरम्॥ २१
मम त्वं भाग्यहीनायाः पुत्रो जातो निराकृतिः॥
ममात्र निधनं श्रेयो न कथञ्चन जीवितम्॥ २२
इत्युक्तः स च निर्गम्य यज्ञवाटं जगाम वै।
तस्मिन् याते द्विजानान्तु न मन्त्राः प्रतिपेदिरे॥ २३
ऐतरेये स्थिते तत्र ब्राह्मणा मोहितास्तदा।
ततो वाणी समुद्भूता वासुदेवेति कीर्त्तनात्॥ २४
ऐतरेयस्य ते विप्राः प्रणिपत्य यथातथम्।
पूजां चक्रुस्ततो यज्ञं स्वयमेव जगाम वै॥ २५
ततः समाप्य तं यज्ञमैतरेयो धनादिभिः।
सर्व्ववेदान् सदस्याह षडङ्गान् स समाहितः॥ २६
तुष्टुवुश्च तथा विप्रा ब्रह्माद्याश्च तथा द्विजाः।
ससर्ज्जुः पुष्पवर्षाणि खेचराः सिद्धचारणाः॥ २७

एवं समाप्य व यज्ञमैतरेयो द्विजोत्तमाः ।
मातरं पूजयित्वा तु विष्णोः स्थानं जगाम ह ॥ २८
एतद्व कथितं सर्व्वं द्वादशाक्षरवैभवम् ।
पठतां शृण्वतां नित्यं महापातकनाशनम् ॥ २९
जपन् यः पुरुषो नित्यं द्वादशाक्षरमव्ययम् ।
स याति दिव्यमतुलं विष्णोस्तत् परमं पदम् ॥ ३०
अपि पापसमाचारो द्वादशाक्षरतत्परः ।
प्राप्नोति परमं स्थानं नात्र कार्य्या विचारणा ॥ ३१
किं पुनर्ये स्वधर्म्मस्था वासुदेवपरायणाः ।
दिव्यं स्थानं महात्मानः प्राप्नुवन्तीति सुव्रताः ॥ ३२

इति श्रीलैङ्गे महापुराणे उपरिभागे द्वादशाक्षरप्रशंसा नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

सूत उवाच ।

अष्टाक्षरो द्विजश्रेष्ठा नमो नारायणेति च ।
द्वादशाक्षरमन्त्रश्च परमः परमात्मनः ॥ १
मन्त्रः षडक्षरो विप्राः सर्व्ववेदार्थसञ्चयः ।
अथों नमः शिवायेति मन्त्रः सर्व्वार्थसाधकः ॥ २
तथा शिवतरायेति दिव्यः पञ्चाक्षरः शुभः ।
मयस्कराय चेत्येवं नमस्ते शङ्कराय च ॥ ३
सप्ताक्षरोऽयं रुद्रस्य प्रधानपुरुषस्य वै ।
ब्रह्मा च भगवान् विष्णुः सर्व्वे देवाः सवासवाः ॥४
मन्त्रैरेतैर्द्विजश्रेष्ठा मुनयश्च यजन्ति तम् ।
शङ्करं देवदेवेशं मयस्करमजोद्भवम् ॥ ५
शिवञ्च शङ्करं रुद्रं देवदेवमुमापतिम् ।
आङ्गर्नमः शिवायेति नमस्ते शङ्कराय च ॥ ६
मयस्कराय रुद्राय तथा शिवतराय च ।
जप्त्वा मुच्येत वै विप्रो ब्रह्महत्यादिभिः क्षणात् ॥ ७
पुरा कश्चिद्द्विजः शक्तो धुन्धुमूक इति श्रुतः ।
आसीत् तृतीये त्रेतायामावर्त्ते च मनोः प्रभोः ॥ ८
मेघवाहनकल्पे वै ब्रह्मणः परमात्मनः ।
मेघो भूत्वा महादेवं कृत्तिवाससमीश्वरम् ॥ ९
बहुमानेन वै रुद्रं देवदेवो जनार्द्दनः ।
खिन्नोऽतिभाराद्रुद्रस्य निश्वासोच्छ्वासवर्ज्जितः ॥ १०
विज्ञाप्य शितिकण्ठाय तपश्चक्रेऽम्बुजेक्षणः ।
तपसा परमैश्वर्य्यं बलञ्चैव तथाद्भुतम् ॥ ११
लब्धवान् परमेशानाच्छङ्करात् परमात्मनः ।
तस्मात् कल्पस्तदा चासीन्मेघवाहनसंज्ञया ॥ १२
तस्मिन् कल्पे मुनेः शापाद्धुन्धुमूकसमुद्भवः ।
धुन्धुमूकात्मजस्तेन दुरात्मा च बभूव सः ॥ १३
धुन्धुमूकः पुरासक्तो भार्य्यया सह मोहितः ।
तस्यां वै स्थापितो गर्भः कामासक्तेन चेतसा ।
अमावास्यामहन्येव मुहूर्त्ते रुद्रदैवते ॥ १४
अन्तर्व्वत्नी तदा भार्य्या मुक्ता तेन यथासुखम् ।
असूत सा च तनयं विशल्याख्या प्रयत्नतः ॥ १५
रुद्रे मुहूर्त्ते मन्देन वीक्षिते मुनिसत्तमाः ।
मातुः पितुस्तथारिष्टं स सञ्जातस्तथात्मनः ॥ १६
ऋषी तमूचतुर्विप्रा धुन्धुमूकं मिथस्तदा ।
मित्रावरुणनामानौ दुष्पुत्त्र इति सत्तमौ ॥ १७
वशिष्ठः प्राह नीचोऽपि प्रभावाद्वै बृहस्पतेः ।
पुत्त्रस्तवासौ दुर्ब्बुद्धिरपि मुच्यति किल्बिषात् ॥ १८
दुःखितो धुन्धुमूकोऽसौ दृष्ट्वा पुत्त्रमवस्थितम् ।
जातकर्म्मादिकं कृत्वा विधिवत् स्वयमेव च ॥ १९
अध्यापयामास च तं विधिनैव द्विजोत्तमाः ।
तेनाधीतं यथान्यायं धौन्धुमूकेन सुव्रताः ॥ २०
कृतोद्वाहस्तदा गत्वा गुरुशुश्रूषणे रतः ।
अनेनैव मुनिश्रेष्ठा धौन्धुमूकेन दुर्म्मदात् ॥ २१
भुक्त्वान्यां वृषलीं दृष्ट्वा स्वभार्य्यावद्दिवानिशम् ।
एकशय्यासनगतो धौन्धुमूको द्विजाधमः ॥ २२
तथा चचार दुर्ब्बुद्धिस्त्यक्त्वा धर्म्मगतिं पराम् ।
माध्वी पीता तया सार्द्धं तेन रागविवृद्धये ॥ २३
केनापि कारणात् तेन तामुद्दिश्य द्विजोत्तमाः ।
निहता सा च पापेन वृषली गतमङ्गला ॥ २४
ततस्तस्यास्तदा तस्य भ्रातृभिर्निहतः पिता ।
माता च तस्य दुर्ब्बुद्धेर्धौन्धुमूकस्य शोभना ॥ २५
भार्य्या च तस्य दुर्ब्बुद्धेः श्यालास्ते चापि सुव्रताः ।
राज्ञा क्षणाद्द्विजो नष्टं कुलं तस्याश्च तस्य च ॥ २६
गत्वासौ धौन्धुमूकश्च येन केनापि लीलया ।
दृष्ट्वा तु तं मुनिश्रेष्ठं रुद्रजाप्यपरायणम् ॥ २७
लब्ध्वा पाशुपतं तद्वै पुरा देवान्महेश्वरात् ।
लब्ध्वा पञ्चाक्षरञ्चैव षडक्षरमनुत्तमम् ॥ २८
पुनः पञ्चाक्षरञ्चैव जप्त्वा लक्षं पृथक् पृथक् ।

व्रतं कृत्वा च विधिना दिव्यं द्वादशमासिकम् ॥ २९
कालधर्मं गतः काले पूजितश्च यमेन वै।
उद्धृता च तथा माता पिता श्यालाश्च सुव्रताः ॥ ३०
पत्नी च सुभगा जाता सुस्मिता च पतिव्रता।
तामिर्विमानमारुह्य देवैः सेन्द्रैरभिष्टुतः ॥ ३१
गाणपत्यमनुप्राप्य रुद्रस्य दयितोऽभवत्।
तस्मादष्टाचराज्जन्मात् तथा वै द्वादशाक्षरात् ॥ ३२
भवेत् कोटिगुणं पुण्यं नात्र कार्य्या विचारणा।
तस्माज्जपेद्धि यो नित्यं प्रागुक्तेन विधानतः ॥ ३३
शक्तिवीजसमायुक्तं स याति परमां गतिम्।
एतद्वः कथितं सर्व्वं कथासर्व्वस्वमुत्तमम् ॥ ३४
यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान्।
स याति ब्रह्मलोकन्तु रुद्रजाप्यमनुत्तमम् ॥ ३५

इति श्रीलिङ्गे महापुराणे उपरिभागे
अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः।

ऋषय ऊचुः।

देवः पुरा कृतं दिव्यं व्रतं पाशुपतं शुभम्।
ब्रह्मणा च स्वयं सूत कृष्णेनाक्लिष्टकर्म्मणा ॥ १
पतितेन च विप्रेण धौम्यमूकेन वै तथा।
कृत्वा जन्मा गतिः प्राप्ता कथं पाशुपतं व्रतम् ॥ २
कथं पशुपतिर्द्देवः शङ्करः परमेश्वरः।
वक्तुमर्हसि चास्माकं परं कौतूहलं हि नः ॥ ३

सूत उवाच।

पुरा शापाद्विनिर्म्मुक्तो ब्रह्मपुत्रो महायशाः।
रुद्रस्य देवदेवस्य मरुद्देशादिहागतः ॥ ४
त्यक्त्वा प्रसादाद्रुद्रस्य उष्ट्रदेहमजाज्ञया।
शिलादपुत्त्रमासाद्य नमस्कृत्य विधानतः ॥ ५
मेरुपृष्ठे मुनिवरः श्रुत्वा धर्म्ममनुत्तमम्।
माहेश्वरं मुनिश्रेष्ठा ह्यपृच्छच्च पुनः पुनः ॥ ६
नन्दिनं प्रणिपत्यैनं कथं पशुपतिः प्रभुः।
वक्तुमर्हसि चास्माकं तत् सर्व्वं तदाह सः ॥ ७
तत् सर्व्वं श्रुतवान् व्यासः कृष्णद्वैपायनः प्रभुः।
तस्मादहमुपश्रुत्य युष्माकं प्रवदामि वः।
सर्व्वं शृण्वन्तु वचनं नमस्कृत्वा महेश्वरम् ॥ ८

सनत्कुमार उवाच।

कथं पशुपतिर्द्देवः पशवः के प्रकीर्त्तिताः।
कैः पाशैस्ते निबध्यन्ते विमुच्यन्ते च ते कथम् ॥ ९

शैलादिरुवाच।

सनत्कुमार वक्ष्यामि सर्व्वमेतद्यथातथम्।
रुद्रभक्तस्य शान्तस्य तव कल्याणचेतसः ॥ १०
ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य धीमतः।
पशवः परिकीर्त्त्यन्ते संसारवशवर्त्तिनः ॥ ११
तेषां पतित्वाद्भगवान् रुद्रः पशुपतिः स्मृतः।
अनादिनिधनो धाता भगवान् विष्णुरव्ययः ॥ १२
मायापाशेन बध्नाति पशुवत् परमेश्वरः।
स एव मोचकस्तेषां ज्ञानयोगेन सेवितः ॥ १३
अविद्यापाशबद्धानां नान्यो मोचक इष्यते।
तमृते परमात्मानं शङ्करं परमेश्वरम् ॥ १४
चतुर्व्विंशतितत्त्वानि पाशा हि परमेष्ठिनः।
तैः पाशैर्मोचयत्येकः शिवो जीवैरुपासितः ॥ १५
निबध्नाति पशूनेकश्चतुर्व्विंशतिपाशकैः।
स एव भगवान् रुद्रो मोचयत्यपि सेवितः ॥ १६
दशेन्द्रियमयैः पाशैरन्तःकरणसम्भवैः।
भूततन्मात्रपाशैश्च पशून् मोचयति प्रभुः ॥ १७
इन्द्रियार्थमयैः पाशैर्बद्ध्वा विषयिणः प्रभुः।
आशु भक्त्या भवन्त्येव परमेश्वरसेवया ॥ १८
भज इत्येष धातुर्वै सेवायां परिकीर्त्तितः।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी ॥ १९
ब्रह्मादिस्तम्बपर्य्यन्तं पशून् बद्ध्वा महेश्वरः।
त्रिभिर्गुणमयैः पाशैः कार्य्यं कारयति स्वयम् ॥ २०
दृढेन भक्तियोगेन पशुभिः समुपासितः।
मोचयत्येव तान् सद्यः शङ्करः परमेश्वरः ॥ २१
भजनं भक्तिरित्युक्ता वाङ्मनःकायकर्म्मभिः।
सर्व्वकार्य्येण हेतुत्वात् पाशच्छेदपटीयसी ॥ २२
सत्यः सर्व्वग इत्यादि शिवस्य गुणचिन्तनम्।
रूपोपादानचिन्ता च मानसं भजनं विदुः ॥ २३
वाचिकं भजनं धीराः प्रणवादिजपं विदुः।
कायिकं भजनं सद्भिः प्राणायामादि कथ्यते ॥ २४
धर्म्माधर्म्ममयैः पाशैर्बन्धनं देहिनामिदम्।
मोचकः शिव एवैको भगवान् परमेश्वरः ॥ २५
चतुर्व्विंशतितत्त्वानि मायाकर्म्मगुणा इति।

कथ्यन्ते विषयाश्चेति पाशा जीवनिबन्धनात् ॥ २६
वैर्बद्धाः शिवभक्त्यैव मुच्यन्ते सर्व्वदेहिनः ॥ २७
पञ्चक्लेशमयैः पाशैः पशून् बध्नाति शङ्करः ।
स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ॥ २८
अविद्यामस्मितां रागं द्वेषञ्च द्विपदां वराः ।
वदन्त्यभिनिवेशञ्च क्लेशान् पाशत्वमागतान् ॥ २९
तमो मोहो महामोहस्तामिस्र इति पण्डिताः ।
अन्धतामिस्र इत्याहुरविद्यां पञ्चधा स्थिताम् ॥ ३०
तान् जीवान् मुनिशार्दूलाः सर्व्वांश्चैवाप्यविद्यया ।
शिवो मोचयति श्रीमान् नान्यः कश्चिद्विमोचकः ॥३१
अविद्या तम इत्याहुरस्मितां मोह इत्यपि ।
महामोह इति प्राज्ञा रागं योगपरायणाः ॥ ३२
द्वेषं तामिस्र इत्याहुरन्धतामिस्र इत्यपि ।
तथैवाभिनिवेशञ्च मिथ्याज्ञानं विवेकिनः ॥ ३३
तमसोऽष्टविधा भेदा मोहश्चाष्टविधः स्मृतः ।
महामोहप्रभेदाश्च बुधैर्दश विचिन्तिताः ॥ ३४
अष्टादशविधञ्चाहुस्तामिस्रञ्च विचक्षणाः ।
अन्धतामिस्रभेदाश्च तथाष्टादशधा स्मृताः ॥ ३५
अविद्ययास्य सम्बन्धो नातीतो नास्य नागतः ।
अवेद्रागेण देवस्य शम्भोरङ्गनिवासिनः ॥ ३६
कालेषु त्रिषु सम्बन्धस्तस्य द्वेषेण नो भवेत् ।
मायातीतस्य देवस्य स्थाणोः पशुपतेर्विभोः ॥ ३७
तथैवाभिनिवेशेन सम्बन्धो न कदाचन ।
शङ्करस्य शरण्यस्य शिवस्य परमात्मनः ॥ ३८
कुशलाकुशलैस्तस्य सम्बन्धो नैव कर्म्मभिः ।
भवेत् कालत्रये शम्भोरविद्यामतिवर्त्तिनः ॥ ३९
विपाकैः कर्म्मणां वापि न भवेदेव सङ्गमः ।
कालेषु त्रिषु सर्व्वस्य शिवस्य शिवदायिनः ॥ ४०
सुखदुःखैरसंस्पृष्टः कालत्रितयवर्त्तिभिः ।
तैर्विनश्वरैः शम्भुर्बोधानन्दात्मकः परः ॥ ४१
आशयैरपरामृष्टः कालत्रितयगोचरैः ।
शिवां पतिः स्वभूरेष महादेवो महेश्वरः ॥ ४२
अस्पृश्यः कर्म्मसंस्कारैः कालत्रितयवर्त्तिभिः ।
तथैव भोगसंस्कारैर्भगवानन्तकान्तकः ॥ ४३
पुंविशेषपरो देवो भगवान् परमेश्वरः ।
चेतनाचेतनायुक्तप्रपञ्चादखिलात् परः ॥ ४४
लोके सातिशयत्वेन ज्ञानैश्वर्य्यं विलोक्यते ।
शिवेनातिशयत्वेन शिवं प्राहुर्मनीषिणः ॥ ४५
प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् ।
उपदेष्टा स एवादौ कालावच्छेदवर्त्तिनाम् ॥ ४६
कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ।
सर्व्वेषामेव सर्व्वशः कालावच्छेदवर्ज्जितः ॥ ४७
अनादिरेष सम्बन्धो विज्ञानोत्कर्षयोः परः ।
स्थितयोरीदृशः सर्व्वः परिशुद्धः स्वभावतः ॥ ४८
आत्मप्रयोजनाभावे परानुग्रह एव हि ।
प्रयोजनं समस्तानां कार्य्याणां परमेश्वरः ॥ ४९
प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ।
शिवरुद्रादिशब्दानां प्रणवोऽपि परः स्मृतः ॥ ५०
शम्भोः प्रणववाच्यस्य भावना तज्जपादपि ।
या सिद्धिः स्वपरा प्राप्या भवत्येव न संशयः ॥ ५१
ज्ञानतत्त्वं प्रयत्नेन योगं पाशुपतं परम् ।
उक्तान्तु देवदेवेन सर्व्वेषामनुकम्पया ॥ ५२

स होवाचैव याज्ञवल्क्यो यदक्षरं गार्ग्यं योगिनः अभिवदन्ति स्थूलमनन्तं महाश्चर्य्यमदीर्घमलोहित-
मस्नेहमच्छायमतमोऽवायुनाकाशमसङ्गमगन्धमरस-
मचक्षुष्कमश्रोत्रमवाङ्मनोऽतेजस्कमप्रमाणमनुसुख-
मनामगोत्रममरमजरमनामयममृतमोंशब्दममृत-
मसंवृतमपूर्व्वमनपरमनन्तमवाह्यं तदश्नाति किञ्चन
न तदश्नाति किञ्चन ॥ ५३

एतत् कालत्रये ज्ञात्वा परं पाशुपतं प्रभुम् ।
योगी पाशुपते चास्मिन् यस्यार्थः किल उत्तमे ॥५४

कृत्वोङ्कारप्रदीपं मृगय गृहपतिं
सूक्ष्ममाद्यन्तरस्थं
संयम्य द्वारवासं पवनपटुतरं
नायकञ्चेन्द्रियाणाम् ।
वाग्जालैः कस्य हेतोर्विभटसि तु भयं
दृश्यते नैव किञ्चिद्-
देहस्थं पश्य शम्भुं भ्रमसि किमु परे
शास्त्रजालेऽन्धकारे ॥ ५५

एवं सम्यग्बुधैर्ज्ञात्वा मुनीनामर्थश्चोक्तं शिवेन ।
असमरसं पञ्चधा कृत्वा भयञ्चात्मनि योजयेत् ॥ ५६

इति श्रीलैङ्गे महापुराणे उपरिभागे
नवमोऽध्यायः ॥ ९ ॥

---

# दशमोऽध्यायः।

सनत्कुमार उवाच।
भूय एव ममाचक्ष्व महिमानमुमापतेः।
भवभक्त महाप्राज्ञ भगवन् नन्दिकेश्वर ॥ १
शैलादिरुवाच।
सनत्कुमार संक्षेपात् तव वक्ष्याम्यशेषतः।
महिमानं महेशस्य भवस्य परमेष्ठिनः ॥ २
नास्य प्रकृतिबन्धोऽभूद्बुद्धिबन्धो न कश्चन।
न चाहङ्कारबन्धश्च मनोबन्धश्च नोऽभवत् ॥ ३
चित्तबन्धो न तस्याभूच्छ्रोत्रबन्धो न चाभवत्।
न त्वचां चक्षुषां वापि बन्धो जज्ञे कदाचन ॥ ४
जिह्वाबन्धो न तस्याभूद्घ्राणबन्धो न कश्चन।
पादबन्धः पाणिबन्धो वाग्बन्धश्चैव सुव्रत ॥ ५
उपस्थेन्द्रियबन्धश्च भूततन्मात्रबन्धनम्।
नित्यशुद्धः स्वभावेन नित्यबुद्धो निसर्गतः ॥ ६
नित्यमुक्त इति प्रोक्तो मुनिभिस्तत्त्ववेदिभिः।
अनादिमध्यनिष्ठस्य शिवस्य परमेष्ठिनः ॥ ७
बुद्धिं सूते नियोगेन प्रकृतिः पुरुषस्य च।
अहङ्कारं प्रसूतेऽस्या बुद्धिस्तस्य नियोगतः ॥ ८
अन्तर्यामीति देवेषु प्रसिद्धस्य स्वयम्भुवः।
इन्द्रियाणि दशैकञ्च तन्मात्राणि च शासनात् ॥ ९
अहङ्कारोऽतिसंसूते शिवस्य परमेष्ठिनः।
तन्मात्राणि नियोगेन तस्य संसुवते प्रभोः ॥ १०
महाभूतान्यशेषेण महादेवस्य धीमतः।
ब्रह्मादीनां तृणान्तं हि देहिनां देहसङ्गतिम् ॥ ११
महाभूतान्यशेषाणि जनयन्ति शिवाज्ञया।
अध्यवस्यति सर्व्वार्थान् बुद्धिस्तस्याज्ञया विभोः ॥१२
अन्तर्यामीति देहेषु प्रसिद्धस्य स्वयम्भुवः।
स्वभावसिद्धमैश्वर्यं स्वभावादेव भूतयः ॥ १३
तस्याज्ञया समस्तार्थानहङ्कारोऽतिमन्यते।
चित्तं चेतयते चापि मनः सङ्कल्पयत्यपि ॥ १४
श्रोत्रं शृणोति तच्छक्त्या शब्दस्पर्शादिकञ्च यत्।
शश्वोराज्ञाबलेनैव भवस्य परमेष्ठिनः ॥ १५
वचनं कुरुते वाक्यं नादानादि कदाचन।
शरीराणामशेषाणां तस्य देवस्य शासनात् ॥ १६
करोति पाणिरादानं न गत्यादि कदाचन।
सर्व्वेषामेव जन्तूनां नियमादेव वेधसः ॥ १७
विहारं कुरुते पादो नोत्सर्गादि कदाचन।
समस्तदेहिवृन्दानां शिवस्यैव नियोगतः ॥ १८
उत्सर्गं कुरुते पायुर्न वदेत कदाचन।
जन्तोर्जातस्य सर्व्वस्य परमेश्वरशासनात् ॥ १९
आनन्दं कुरुते शश्वदुपस्थं वचनाद्विभोः।
सर्व्वेषामेव भूतानामीश्वरस्यैव शासनात् ॥ २०
अवकाशमशेषाणां भूतानां सम्प्रयच्छति।
आकाशं सर्व्वदा तस्य परमस्यैव शासनात् ॥ २१
निर्द्देशेन शिवस्यैव भेदैः प्राणादिभिर्निजैः।
बिभर्त्ति सर्व्वभूतानां शरीराणि प्रभञ्जनः ॥ २२
निर्द्देशाद्देवदेवस्य सप्तस्कन्धगतो मरुत्।
लोकयात्रां वहत्येव भेदैः खेरावहादिभिः ॥ २३
नागाद्यैः पञ्चभिर्भेदैः शरीरेषु प्रवर्त्तते।
आदेशेन देवस्य परमस्य समीरणः ॥ २४
हव्यं वहति देवानां कव्यं कव्याशिनामपि।
पाकञ्च कुरुते वह्निः शङ्करस्यैव शासनात् ॥ २५
भक्तमाहारजातं यत् पचते देहिनां तथा।
उदरस्थः सदा वह्निर्विश्वेश्वरनियोगतः ॥ २६
सञ्जीवयन्त्यशेषाणि भूतान्यापस्तदाज्ञया।
अविलङ्घ्या हि सर्व्वेषामाज्ञा तस्य गरीयसी ॥ २७
चराचराणि भूतानि बिभर्त्त्येव तदाज्ञया।
आज्ञया तस्य देवस्य देवदेवः पुरन्दरः ॥ २८
जीवतां व्याधिभिः पीड़ां मृतानां यातनाशतैः।
त्रिदशम्भरः सदा कालं लोकैः सर्व्वैरलङ्घ्यया ॥ २९
देवान् पालयसुरान् हन्ति त्रैलोक्यमखिलं स्थितः।
अधार्म्मिकाणां वैनाशं करोति शिवशासनात् ॥ ३०
वरुणः सलिलैर्लोकान् सम्भावयति शासनात्।
मज्जयत्याज्ञया तस्य पाशैर्बध्नाति चासुरान् ॥ ३१
पुण्यानुरूपं सर्व्वेषां प्राणिनां सम्प्रयच्छति।
वित्तं वित्तेश्वरस्तस्य शासनात् परमेष्ठिनः ॥ ३२
उदयास्तमये कुर्व्वन् कुरुते कालमाज्ञया।
आदित्यस्तस्य नित्यस्य सत्यस्य परमात्मनः ॥ ३३
पुष्पाण्योषधिजातानि प्रह्लादयति च प्रजाः।
अमृतांशुः कलाधारः कालकालस्य शासनात् ॥ ३४
आदित्या वसवो रुद्रा अश्विनौ मरुतस्तथा।
अन्याश्च देवताः सर्व्वास्तच्छासनविनिर्म्मिताः ॥ ३५

गन्धर्व्वा देवसङ्घाश्च सिद्धाः साध्याश्च चारणाः ।
यक्ष-रक्षः-पिशाचाश्च स्थिताः शास्त्रेषु वेधसः ॥३६
ग्रह-नक्षत्र-ताराश्च यज्ञा वेदास्तपांसि च ।
ऋषीणाञ्च गणाः सर्व्वे शासनं तस्य धिष्ठिताः ॥ ३७
कश्याशिनां गणाः सप्त समुद्रा गिरि-सिन्धवः ।
शासने तस्य वर्त्तन्ते काननानि सरांसि च ॥ ३८
कलाः काष्ठा निमेषाश्च मुहूर्त्ता दिवसाः क्षपाः ।
ऋत्वब्द-पक्ष-मासाश्च नियोगात् तस्य धिष्ठिताः ॥३९
युग-मन्वन्तराण्यस्य शम्भोस्तिष्ठति शासनात् ।
पराश्चैव परार्द्धाश्च कालभेदास्तथा परे ॥ ४०
देवानां जातयश्चाष्टौ तिरश्चां पञ्च जातयः ।
मनुष्याश्च प्रवर्त्तन्ते देवदेवस्य धीमतः ॥ ४१
जातानि भूतवृन्दानि चतुर्द्दशसु योनिषु ।
सर्व्वलोकनिषण्णानि तिष्ठन्त्यस्यैव शासनात् ॥ ४२
चतुर्द्दशसु लोकेषु स्थिता जाताः प्रजाः प्रभोः ।
सर्व्वेश्वरस्य तस्यैव नियोगवशवर्त्तिनः ॥ ४३
पातालानि समस्तानि भुवनान्यस्य शासनात् ।
ब्रह्माण्डानि च शेषाणि तथा सावरणानि च ॥ ४४
वर्त्तमानानि सर्व्वाणि ब्रह्माण्डानि तदाज्ञया ।
वर्त्तन्ते सर्व्वभूताद्यैः समेतानि समन्ततः ॥ ४५
अतीतान्यप्यसंख्यानि ब्रह्माण्डानि तदाज्ञया ।
प्रवृत्तानि पदार्थौघैः सहितानि समन्ततः ॥ ४६
ब्रह्माण्डानि भविष्यन्ति सह वस्तुभिरात्मकैः ।
करिष्यन्ति शिवस्याज्ञां सर्व्वैरावरणैः सह ॥ ४७

इति श्रीलैङ्गे महापुराणे उपरिभागे
दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

सनत्कुमार उवाच ।

विभूतीः शिवयोर्मह्यमाचक्ष्व त्वं गणाधिप ।
परापरविदां श्रेष्ठ परमेश्वरभावित ॥ १

नन्दिकेश्वर उवाच ।

हन्त ते कथयिष्यामि विभूतीः शिवयोरहम् ।
सनत्कुमार योगीन्द्र ब्रह्मणस्तनयोत्तम ॥ २
परमात्मा शिवः प्रोक्तः शिवा सा च प्रकीर्त्तिता ।
शिवमेवेश्वरं प्राहुर्मायां गौरीं विदुर्बुधाः ॥ ३
पुरुषं शङ्करं प्राहुर्गौरीञ्च प्रकृतिं द्विजाः ।
अर्थः शम्भुः शिवा वाणी दिवसोऽजः शिवा निशा ॥ ४
सप्ततन्तुर्महादेवो रुद्राणी दक्षिणा स्मृता ।
आकाशं शङ्करो देवः पृथिवी शङ्करप्रिया ॥ ५
समुद्रो भगवान् रुद्रो वेला शैलेन्द्रकन्यका ।
वृक्षः शूलायुधो देवः शूलपाणिप्रिया लता ॥ ६
ब्रह्मा हरोऽपि सावित्री शङ्करार्द्धशरीरिणी ।
विष्णुर्महेश्वरो लक्ष्मीर्भवानी परमेश्वरी ॥ ७
वज्रपाणिर्महादेवः शची शैलेन्द्रकन्यका ।
जातवेदाः स्वयं रुद्रः स्वाहा शर्व्वार्द्धकायिनी ॥ ८
यमस्त्रियम्बको देवस्तत्प्रिया गिरिकन्यका ।
वरुणो भगवान् रुद्रो गौरी सर्व्वार्थदायिनी ॥ ९
बालेन्दुशेखरो वायुः शिवा शिवमनोरमा ।
चन्द्रार्द्धमौलिर्यक्षेन्द्रः स्वयमृद्धिः शिवा स्मृता ॥ १०
चन्द्रार्द्धशेखरश्चन्द्रो रोहिणी रुद्रवल्लभा ।
सप्तसप्तिः शिवः कान्ता उमा देवी सुवर्चला ॥ ११
षण्मुखस्त्रिपुरध्वंसी देवसेना हरप्रिया ।
उमा प्रसूतिर्विज्ञेया दक्षो देवो महेश्वरः ॥ १२
पुरुषाख्यो मनुः शम्भुः शतरूपा शिवप्रिया ।
विदुर्भवानीमाकूतिं रुचिञ्च परमेश्वरम् ॥ १३
भृगुर्भगाक्षिहा देवः ख्यातिस्त्रिनयनप्रिया ।
मरीचिर्भगवान् रुद्रः सम्भूतिर्वल्लभा विभोः ॥ १४
विदुर्भवानीं रुचिरां कविञ्च परमेश्वरम् ।
गङ्गाधरोऽङ्गिरा ज्ञेयः स्मृतिः साक्षादुमा स्मृता ॥१५
पुलस्त्यः शशभृन्मौलिः प्रीतिः कान्ता पिनाकिनः ।
पुलहस्त्रिपुरध्वंसी दया कालरिपुप्रिया ॥ १६
क्रतुर्दक्षक्रतुध्वंसी सन्नतिर्दयिता विभोः ।
त्रिनेत्रोऽत्रिरुमा साक्षादनसूया स्मृता बुधैः ॥ १७
ऊर्ज्जामाहुरुमां वृद्धां वशिष्ठञ्च महेश्वरम् ।
शङ्करः पुरुषाः सर्व्वे स्त्रियः सर्व्वा महेश्वरी ॥ १८
पुंलिङ्गशब्दवाच्या ये ते च रुद्राः प्रकीर्त्तिताः ।
स्त्रीलिङ्गशब्दवाच्या याः सर्व्वा गौर्य्या विभूतयः ॥१९
सर्व्वे स्त्रीपुरुषाः प्रोक्तास्तयोरेव विभूतयः ।
पदार्थशक्तयो या यास्ता गौरीति विदुर्बुधाः ॥ २०
सा सा विश्वेश्वरी देवी स च सर्व्वो महेश्वरः ।
शक्तिमन्तः पदार्था ये स च सर्व्वो महेश्वरः ॥ २१
अष्टौ प्रकृतयो देव्या मूर्त्तयः परिकीर्त्तिताः ।

तथा विकृतयस्तस्या देहवद्धविभूतयः ॥ २२
विस्फुलिङ्गा यथा तावदग्नौ च बहुधा स्मृताः।
जीवाः सर्व्वे तथा शर्व्वौ द्वन्द्वसत्त्वमुपागतः ॥ २३
गौरीरूपाणि सर्व्वाणि शरीराणि शरीरिणाम्।
शरीरिणस्तथा सर्व्वे शङ्करांशा व्यवस्थिताः ॥ २४
श्राव्यं सर्व्वमुमारूपं श्रोता देवो महेश्वरः।
विषयित्वं विभुर्धत्ते विषयात्मकतामुमा ॥ २५
स्प्रष्टव्यं वस्तुजातन्तु धत्ते शङ्करवल्लभा।
स्प्रष्टा स एव विश्वात्मा बालचन्द्रार्द्धशेखरः ॥ २६
दृश्यवस्तु प्रजारूपं विभर्त्ति भुवनेश्वरी।
द्रष्टा विश्वेश्वरो देवः शशिखण्डशिखामणिः ॥ २७
रसजातमुमारूपं घ्रेयजातञ्च सर्व्वशः।
देवो रसयिता शम्भुर्घ्राता च भुवनेश्वरः ॥ २८
मन्तव्यवस्तुतां धत्ते महादेवी महेश्वरी।
मन्ता स एव विश्वात्मा महादेवो महेश्वरः ॥ २९
बोद्धव्यं वस्तुरूपञ्च बिभर्त्ति भववल्लभा।
देवः स एव भगवान् बोद्धा बालेन्दुशेखरः ॥ ३०
पीठाकृतिरुमा देवी लिङ्गरूपश्च शङ्करः।
प्रतिष्ठाप्य प्रयत्नेन पूजयन्ति सुरासुराः ॥ ३१
ये ये पदार्था लिङ्गाङ्कास्ते ते शर्व्वविभूतयः।
अर्था भगाङ्किता ये ये ते ते गौर्य्या विभूतयः ॥ ३२
स्वर्गपाताललोकान्त-ब्रह्माण्डावरणाष्टकम्।
ज्ञेयं सर्व्वमुमारूपं ज्ञाता देवो महेश्वरः ॥ ३३
विभर्त्ति क्षेत्रतां देवी त्रिपुरान्तकवल्लभा।
क्षेत्रज्ञत्वमथो धत्ते भगवानन्धकान्तकः ॥ ३४
शिवलिङ्गं समुत्सृज्य यजन्ते चान्यदेवताः।
स नृपः सह देशेन रौरवं नरकं व्रजेत् ॥ ३५
शिवभक्तो न यो राजा भक्तोऽन्येषु सुरेषु यः।
स्वपतिं युवतिस्त्यक्त्वा यथा जारेषु राजते ॥ ३६
ब्रह्मादयः सुराः सर्व्वे राजानश्च महर्द्धिकाः।
मानवा मुनयश्चैव सर्व्वे लिङ्गं यजन्ति च ॥ ३७
विष्णुना रावणं हत्वा ससैन्यं ब्रह्मणः सुतम्।
स्थापितं विधिवद्भक्त्या लिङ्गं तीरे नदीपतेः ॥ ३८
कृत्वा पापसहस्राणि हत्वा विप्रशतं तथा।
भावात् समाश्रितो रुद्रं मुच्यते नात्र संशयः ॥ ३९
सर्व्वे लिङ्गमया लोकाः सर्व्वे लिङ्गे प्रतिष्ठिताः।
तस्मादभ्यर्च्चयेल्लिङ्गं यदीच्छेच्छाश्वतं पदम् ॥ ४०
सर्व्वाकारौ स्थितावेतौ नरैः श्रेयोऽर्थिभिः शिवौ।
पूजनीयौ नमस्कार्य्यौ चिन्तनीयौ च सर्व्वदा ॥ ४१

इति श्रीलैङ्गे महापुराणे उपरिभागे
एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः।

सनत्कुमार उवाच।

मूर्त्तयोऽष्टौ समाचक्ष्व शङ्करस्य महात्मनः।
विश्वरूपस्य देवस्य गणेश्वर महामते ॥ १
नन्दिकेश्वर उवाच।
हन्त ते कथयिष्यामि महिमानमुमापतेः।
विश्वरूपस्य देवस्य सरोजभवसम्भव ॥ २
भूरापोऽग्निर्मरुद्व्योम भास्करो दीक्षितः शशी।
भवस्य मूर्त्तयः प्रोक्ताः शिवस्य परमेष्ठिनः ॥ ३
खात्मेन्दुवह्निसूर्य्याम्भो-धरा पवन इत्यपि।
तस्याष्ट मूर्त्तयः प्रोक्ता देवदेवस्य धीमतः ॥ ४
अग्निहोत्रेऽर्पितं तेन सूर्य्यात्मनि महात्मनि।
तद्विभूतीस्तथा सर्व्वे देवास्तृप्यन्ति सर्व्वदा ॥ ५
वृक्षस्य मूलसेकेन यथा शाखोपशाखिकाः।
तथा तस्यार्च्चया देवास्तथा स्युस्तद्विभूतयः ॥ ६
तस्य द्वादशधा भिन्नं रूपं सूर्य्यात्मकं प्रभोः।
सर्व्वदेवात्मकं याज्यं यजन्ति मुनिपुङ्गवाः ॥ ७
अमृताख्या कला तस्य सर्व्वस्यादित्यरूपिणः।
भूतसञ्जीवनी चेष्टा लोकेऽस्मिन् पीयते सदा ॥ ८
चन्द्राख्यकिरणास्तस्य धूर्जटेर्भास्करात्मनः।
ओषधीनां विवृद्ध्यर्थं हिमवृष्टिं वितन्यते ॥ ९
शुक्लाख्या रश्मयस्तस्य शम्भोर्मार्त्तण्डरूपिणः।
घर्म्मं वितन्यते लोके शस्यपाकादिकारणम् ॥ १०
दिवाकरात्मनस्तस्य हरिकेशाह्वयः करः।
नक्षत्रपोषकश्चैव प्रसिद्धः परमेष्ठिनः ॥ ११
विश्वकर्म्माह्वयस्तस्य किरणो बुधपोषकः।
सर्व्वेश्वरस्य देवस्य सप्तसप्तिस्वरूपिणः ॥ १२
विश्वव्यचा इति ख्यातः किरणस्तस्य शूलिनः।
शुक्रपोषकभावेन प्रतीतः सूर्य्यरूपिणः ॥ १३
संयद्वसुरिति ख्यातो यस्य रश्मिस्त्रिशूलिनः।
लोहिताङ्गं प्रपुष्णाति सहस्रकिरणात्मनः ॥ १४

सर्व्वावसुरिति ख्यातो रश्मिस्तस्य पिनाकिनः ।
बृहस्पतिं प्रपुष्णाति सर्व्वदा तपनात्मनः ॥ १५
स्वराड़िति समाख्यातः शिवस्यांशुः शनैश्चरम् ।
हरिदश्वात्मनस्तस्य प्रपुष्णाति दिवानिशम् ॥ १६
सूर्य्यात्मकस्य देवस्य विश्वयोनेरुमापतेः ।
सुषुम्णाख्यः सदा रश्मिः पुष्णाति शिशिरद्युतिम्॥१७
सौम्यानां वस्तुजातानां प्रकृतित्वमुपागता ।
तस्य सोमाह्वया मूर्त्तिः शङ्करस्य जगद्गुरोः ॥ १८
तस्य सोमात्मकं रूपं शुक्लत्वेन व्यवस्थितम् ।
शरीरभाजां सर्व्वेषां देवस्यान्तकशासिनः ॥ १९
शरीरिणामशेषाणां मनस्येव व्यवस्थितम् ।
वपुः सोमात्मकं शम्भोस्तस्य सर्व्वजगद्गुरोः ॥ २०
शम्भोः षोड़शधा भिन्ना स्थितामृतकलात्मनः ।
सर्व्वभूतशरीरेषु सोमाख्या मूर्त्तिरुत्तमा ॥ २१
देवान् पितॄंश्च पुष्णाति सुधयामृतया सदा ।
मूर्त्तिः सोमाह्वया तस्य देवदेवस्य शासितुः ॥ २२
पुष्णात्योषधिजातानि देहिनामात्मशुद्धये ।
सोमाह्वया तनुस्तस्य भवानीमिति निर्द्दिशेत् ॥ २३
यज्ञानां पतिभावेन जीवानां तपसामपि ।
शिवरूपमेतद्धि सोमात्मकमुमापतेः ॥ २४
जलानामोषधीनाञ्च पतिभावेन विश्रुतम् ।
सोमात्मकं वपुस्तस्य शम्भोर्भगवतः प्रभोः ॥ २५
देवी हिरण्मयी सृष्टः परस्परविवेकिनः ।
करणानामशेषाणां देवतानां निराकृतिः ॥ २६
जीवत्वेन स्थिते तस्मिन् शिवे सोमात्मके प्रभौ ।
मधुरा विलयं याति सर्व्वलोकैकरक्षिणी ॥ २७
यजमानाह्वया मूर्त्तिः शैवी हव्यैरहर्निशम् ।
पुष्णाति देवताः सर्व्वाः कव्यैः पितृगणानपि ॥ २८
यजमानाह्वया या सा तनुश्च हुतिजातया ।
वृष्ट्या भावयति स्पष्टं सर्व्वमेव परापरम् ॥ २९
अन्तःस्थञ्च वहिःस्थञ्च ब्रह्माण्डानां स्थितं जलम् ।
भूतानाञ्च शरीरस्थं शम्भोर्मूर्त्तिर्गरीयसी ॥ ३०
नदीनाममृतं साक्षान्नदानामपि सर्व्वदा ।
समुद्राणाञ्च सर्व्वत्र व्यापी सर्व्वमुमापतिः ॥ ३१
सञ्जीवनी समस्तानां भूतानामेव पावनी ।
अम्बिका प्राणसंस्था या मूर्त्तिरम्बुमयी परा ॥ ३२
अन्तःस्थश्च वहिःस्थश्च ब्रह्माण्डानां विभावसुः ।
यज्ञानाञ्च शरीरस्थः शम्भोर्मूर्त्तिर्गरीयसी ॥ ३३
शरीरस्था च भूतानां श्रेयसी मूर्त्तिरीश्वरी ।
मूर्त्तिः पावकसंस्था या शम्भोरत्यन्तपूजिता ॥ ३४
भेदा एकोनपञ्चाशद्वेदविद्भिरुदाहृताः ।
हव्यं वहति देवानां शम्भोर्यज्ञात्मकं वपुः ।
कव्यं पितृगणानाञ्च हूयमानं द्विजातिभिः ॥ ३५
सर्व्वदेवमयं शम्भोः श्रेष्ठमग्न्यात्मकं वपुः ।
वदन्ति वेदशास्त्रज्ञा यजन्ति च यथाविधि ॥ ३६
अन्तःस्थो जगदण्डानां वहिःस्थश्च समीरणः ।
शरीरस्थश्च भूतानां शैवी मूर्त्तिः पटीयसी ॥ ३७
प्राणाद्या नागकूर्म्माद्या आवहाद्याश्च वायवः ।
ईशानमूर्त्तेरेकस्य भेदाः सर्व्वे प्रकीर्त्तिताः ॥ ३८
अन्तःस्थं जगदण्डानां वहिःस्थञ्च वियद्विभोः ।
शरीरस्थञ्च भूतानां शम्भोर्मूर्त्तिर्गरीयसी ॥ ३९
शम्भोर्विश्वम्भरा मूर्त्तिः सर्व्वब्रह्माधिदेवता ।
चराचराणां भूतानां सर्व्वेषां धारणी मता ॥ ४०
चराचराणां भूतानां शरीराणि विदुर्बुधाः ।
पञ्चकेनेशमूर्त्तीनां समारब्धानि सर्व्वथा ॥ ४१
पञ्चभूतानि चन्द्रार्कावात्मेति मुनिपुङ्गवाः ।
मूर्त्तयोऽष्टौ शिवस्याहुर्देवदेवस्य धीमतः ॥ ४२
आत्मा तस्याष्टमी मूर्त्तिर्यजमानाह्वया परा ।
चराचरशरीरेषु सर्व्वेष्वेव स्थिता तदा ॥ ४३
दीक्षितं ब्राह्मणं प्राहुरात्मानञ्च मुनीश्वराः ।
यजमानाह्वया मूर्त्तिः शिवस्य शिवदायिनः ॥ ४४
मूर्त्तयोऽष्टौ शिवस्यैता वन्दनीयाः प्रयत्नतः ।
श्रेयोऽर्थिभिर्नरैर्नित्यं श्रेयसामेकहेतवः ॥ ४५

इति श्रीलैङ्गे महापुराणे उपरिभागे
द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

सनत्कुमार उवाच ।

भूयोऽपि वद मे नन्दिन् महिमानमुमापतेः ।
अष्टमूर्त्तेर्महेशस्य शिवस्य परमेष्ठिनः ॥ १

नन्दिकेश्वर उवाच ।

वक्ष्यामि ते महेशस्य महिमानमुमापतेः ।
अष्टमूर्त्तेर्जगद्व्याप्य स्थितस्य परमेष्ठिनः ॥ २

चराचराणां भूतानां धाता विश्वम्भरात्मकः ।
शर्व्व इत्युच्यते देवः सर्व्वशास्त्रार्थपारगैः ॥ ३
विश्वम्भरात्मनस्तस्य शर्व्वस्य परमेष्ठिनः ।
विकेशी कथ्यते पत्नी तनयोऽङ्गारकः स्मृतः ॥ ४
भव इत्युच्यते देवो भगवान् वेदवादिभिः ।
सञ्जीवनस्य लोकानां भवस्य परमात्मनः ॥ ५
उमा संकीर्त्तिता देवी सुतः शुक्रश्च सूरिभिः ।
सप्तलोकाण्डकव्यापी सर्व्वलोकैकरक्षिता ॥ ६
वह्न्यात्मा भगवान् देवः स्मृतः पशुपतिर्बुधैः ।
स्वाहा पत्न्यात्मनस्तस्य प्रोक्ता पशुपतेः प्रिया ॥ ७
षण्मुखो भगवान् देवो बुधैः पुत्र उदाहृतः ।
समस्तभुवनव्यापी भर्त्ता सर्व्वशरीरिणाम् ॥ ८
पवनात्मा बुधैर्द्देव ईशान इति कीर्त्यते ।
ईशानस्य जगत्कर्त्तुर्द्देवस्य पवनात्मनः ॥ ९
शिवा देवी बुधैरुक्ता पुत्रश्चास्य मनोजवः ।
चराचराणां भूतानां सर्व्वेषां सर्व्वकामदः ॥ १०
व्योमात्मा भगवान् देवो भीम इत्युच्यते बुधैः ।
महामहिम्नो देवस्य भीमस्य गगनात्मनः ॥ ११
दिशो दश स्मृता देव्यः सुतः सर्गश्च सूरिभिः ।
सूर्य्यात्मा भगवान् देवः सर्व्वेषाञ्च विभूतिदः ॥ १२
रुद्र इत्युच्यते देवैर्भगवान् भुक्तिमुक्तिदः ।
सूर्य्यात्मकस्य रुद्रस्य भक्तानां भक्तिदायिनः ॥ १३
सुवर्च्चला स्मृता देवी सुतश्चास्य शनैश्चरः ।
समस्तसौम्यवस्तूनां प्रकृतित्वेन विश्रुतः ॥ १४
सोमात्मको बुधैर्द्देवो महादेव इति स्मृतः ।
सोमात्मकस्य देवस्य महादेवस्य सूरिभिः ॥ १५
दयिता रोहिणी प्रोक्ता बुधश्चैव शरीरजः ।
हव्यकव्यस्थितिं कुर्व्वन् हव्यकव्याशिनां तदा ॥ १६
यजमानात्मको देवो महादेवो बुधैः प्रभुः ।
उग्र इत्युच्यते सद्भिरीशानश्चेति चापरैः ॥ १७
उग्राह्वयस्य देवस्य यजमानात्मनः प्रभोः ।
दीक्षा पत्नी बुधैरुक्ता सन्तानाख्यः सुतस्तथा ॥ १८
शरीरिणां शरीरेषु कठिनं कोङ्कणादिवत् ।
पार्थिवं तद्वपुर्ज्ञेयं शर्व्वतत्त्वं बुभुत्सुभिः ॥ १९
देहे देहे तु देवेशो देहभाजां यदव्ययम् ।
वस्तुद्रव्यात्मकं तस्य भवस्य परमात्मनः ।
ज्ञेयञ्च तत्त्वविद्भिर्वै सर्व्ववेदार्थपारगैः ॥ २०

आग्नेयः परिणामो यो विग्रहेषु शरीरिणाम् ।
मूर्त्तिः पशुपतिर्ज्ञेया सा तत्त्वं वेत्तुमिच्छुभिः ॥ २१
वायव्यः परिणामो यः शरीरेषु शरीरिणाम् ।
बुधैरीशेति सा तस्य तनुर्ज्ञेया न संशयः ॥ २२
सुषिरं यच्छरीरस्थमशेषाणां शरीरिणाम् ।
भीमस्य सा तनुर्ज्ञेया तत्त्वविज्ञानकाङ्क्षिभिः ॥ २३
चक्षुरादिगतं तेजो यच्छरीरस्थमङ्गिनाम् ।
रुद्रस्यापि तनुर्ज्ञेया परमार्थं बुभुत्सुभिः ॥ २४
सर्व्वभूतशरीरेषु मनश्चन्द्रात्मकं हि यत् ।
महादेवस्य सा मूर्त्तिर्बोद्धव्या तत्त्वचिन्तकैः ॥ २५
आत्मा यो यजमानाख्यः सर्व्वभूतशरीरगः ।
मूर्त्तिरुग्रस्य सा ज्ञेया परमात्मबुभुत्सुभिः ॥ २६
जातानां सर्व्वभूतानां चतुर्द्दशसु योनिषु ।
अष्टमूर्त्तेरनन्यत्वं वदन्ति परमर्षयः ॥ २७
सप्तमूर्त्तिमयान्याहुरीशस्याङ्गानि देहिनाम् ।
आत्मा तस्याष्टमी मूर्त्तिः सर्व्वभूतशरीरगा ॥ २८
अष्टमूर्त्तिममुं देवं सर्व्वलोकात्मकं विभुम् ।
भजस्व सर्व्वभावेन श्रेयः प्राप्तं यदीच्छसि ॥ २९
प्राणिनो यस्य कस्यापि क्रियते यदनुग्रहः ।
अष्टमूर्त्तेर्महेशस्य कृतमाराधनं भवेत् ॥ ३०
निग्रहश्चेत् कृतो लोके देहिनो यस्य कस्यचित् ।
अष्टमूर्त्तेर्महेशस्य स एव विहितो भवेत् ॥ ३१
यद्यवज्ञा कृता लोके यस्य कस्यचिदङ्गिनः ।
अष्टमूर्त्तेर्महेशस्य विहिता सा भवेद्विभोः ॥ ३२
अभयं यत् प्रदत्तं स्यादङ्गिनो यस्य कस्यचित् ।
आराधनं कृतं तस्मादष्टमूर्त्तेर्न संशयः ॥ ३३
सर्व्वोपकारकरणं प्रदानमभयस्य च ।
आराधनन्तु देवस्य अष्टमूर्त्तेर्न संशयः ॥ ३४
सर्व्वोपकारकरणं सर्व्वानुग्रह एव च ।
तदर्च्चनं परं प्राहुरष्टमूर्त्तेर्मुनीश्वराः ॥ ३५
अनुग्रहणमन्येषां विधातव्यं त्वयाङ्गिनाम् ।
सर्व्वाभयप्रदानञ्च शिवाराधनमिच्छता ॥ ३६

इति श्रीलैङ्गे महापुराणे उपरिभागे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्द्दशोऽध्यायः।

सनत्कुमार उवाच।

पञ्च ब्रह्माणि मे नन्दिन्नाचक्ष्व गणसत्तम।
श्रेयःकारणभूतानि पवित्राणि शरीरिणाम् ॥ १

नन्दिकेश्वर उवाच।

शिवस्यैव स्वरूपाणि पञ्चब्रह्माह्वयाणि ते।
कथयामि यथातत्त्वं पद्मयोनेः सुतोत्तम ॥ २
सर्व्वलोकैकसंहर्त्ता सर्व्वलोकैकरक्षिता।
सर्व्वलोकैकनिर्म्माता पञ्चब्रह्मात्मकः शिवः ॥ ३
सर्व्वेषामेव लोकानां यदुपादानकारणम्।
निमित्तकारणञ्चाहुः स शिवः पञ्चधा स्मृतः ॥ ४
मूर्त्तयः पञ्च विख्याताः पञ्चब्रह्माह्वयाः पराः।
सर्व्वलोकशरण्यस्य शिवस्य परमात्मनः ॥ ५
क्षेत्रज्ञः प्रथमा मूर्त्तिः शिवस्य परमेष्ठिनः।
भोक्ता प्रकृतिवर्गस्य भोग्यस्येशानसंज्ञितः ॥ ६
स्थाणोस्तत्पुरुषाख्या च द्वितीया मूर्त्तिरुच्यते।
प्रकृतिः सा हि विज्ञेया परमात्मगुणात्मिका ॥ ७
अघोराख्या तृतीया च शम्भोर्मूर्त्तिर्गरीयसी।
बुद्धः सा मूर्त्तिरित्युक्ता धर्म्माद्यष्टाङ्गसंयुता ॥ ८
चतुर्थी वामदेवाख्या मूर्त्तिः शम्भोर्गरीयसी।
अहङ्कारात्मकत्वेन व्याप्य सर्व्वं व्यवस्थिता ॥ ९
सद्योजाताह्वया शम्भोः पञ्चमी मूर्त्तिरुच्यते।
मनस्तत्त्वात्मकत्वेन स्थिता सर्व्वशरीरिषु ॥ १०
ईशानः परमो देवः परमेष्ठी सनातनः।
श्रोत्रेन्द्रियात्मकत्वेन सर्व्वभूतेष्ववस्थितः ॥ ११
स्थितस्तत्पुरुषो देवः शरीरेषु शरीरिणाम्।
त्वगिन्द्रियात्मकत्वेन तत्त्वविद्भिरुदाहृतः ॥ १२
अघोरोऽपि महादेवश्चक्षुरात्मतया बुधैः।
कीर्त्तितः सर्व्वभूतानां शरीरेषु व्यवस्थितः ॥ १३
जिह्वेन्द्रियात्मकत्वेन वामदेवोऽपि विश्रुतः।
अङ्गभाजामशेषाणामङ्गेषु परिनिष्ठितः ॥ १४
घ्राणेन्द्रियात्मकत्वेन सद्योजातः स्मृतो बुधैः।
प्राणभाजां समस्तानां विग्रहेषु व्यवस्थितः ॥ १५
सर्व्वेष्वेव शरीरेषु प्राणभाजां प्रतिष्ठितः।
वागिन्द्रियात्मकत्वेन बुधैरीशान उच्यते ॥ १६
पाणीन्द्रियात्मकत्वेन स्थितस्तत्पुरुषो बुधैः।
उच्यते विग्रहेष्वेव सर्व्वविग्रहधारिणाम् ॥ १७
सर्व्वविग्रहिणां देहे अघोरोऽपि व्यवस्थितः।
पादेन्द्रियात्मकत्वेन कीर्त्तितस्तत्त्ववेदिभिः ॥ १८
पाय्विन्द्रियात्मकत्वेन वामदेवो व्यवस्थितः।
सर्व्वभूतनिकायानां कायेषु मुनिभिः स्मृतः ॥ १९
उपस्थात्मतया देवः सद्योजातः स्थितः प्रभुः।
दृश्यते वेदशास्त्रज्ञैर्देहेषु प्राणधारिणाम् ॥ २०
ईशानं प्राणिनां देवं शब्दतन्मात्ररूपिणम्।
आकाशजनकं प्राहुर्मुनिवृन्दारकप्रजाः ॥ २१
प्राहुस्तत्पुरुषं देवं स्पर्शतन्मात्रकात्मकम्।
समीरजनकं प्राहुर्भगवन्तं मुनीश्वराः ॥ २२
रूपतन्मात्रकं देवमघोरमपि घोरकम्।
प्राहुर्वेदविदो मुख्या जनकं जातवेदसः ॥ २३
रसतन्मात्ररूपत्वात् प्रथितं तत्त्ववेदिनः।
वामदेवमपां प्राहुर्जनकत्वेन संस्थितम् ॥ २४
सद्योजातं महादेवं गन्धतन्मात्ररूपिणम्।
भूम्याज्ञानं प्रशंसन्ति सर्व्वतत्त्वार्थवेदिनः ॥ २५
आकाशात्मानमीशानं आदिदेवं मुनीश्वराः।
परमेण महत्त्वेन सम्भूतं प्राहुरद्भुतम् ॥ २६
प्रभुं तत्पुरुषं देवं पवनं पवनात्मकम्।
समस्तलोकव्यापित्वात् प्रथितं सूरयो विदुः ॥ २७
अथार्च्चिततया ख्यातमघोरं दहनात्मकम्।
कथयन्ति महात्मानं वेदवाक्यार्थवेदिनः ॥ २८
तोयात्मकं महादेवं वामदेवं मनोरमम्।
जगत्सञ्जीवनत्वेन कथितं मुनयो विदुः ॥ २९
विश्वम्भरात्मकं देवं सद्योजातं जगद्गुरुम्।
चराचरैकभर्त्तारं परं कविवरा विदुः ॥ ३०
पञ्चब्रह्मात्मकं सर्व्वं जगत् स्थावरजङ्गमम्।
शिवानन्दं तदित्याहुर्मुनयस्तत्त्वदर्शिनः ॥ ३१
पञ्चविंशतितत्त्वात्मा प्रपञ्चे यः प्रदृश्यते।
पञ्चब्रह्मात्मकत्वेन स शिवो नान्यतां गतः ॥ ३२
पञ्चविंशतितत्त्वात्मा पञ्चब्रह्मात्मकः शिवः।
श्रेयोऽर्थिभिरतो नित्यं चिन्तनीयः प्रयत्नतः ॥ ३३

इति श्रीलैङ्गे महापुराणे उपरिभागे पञ्चब्रह्मकथनं नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः।

सनत्कुमार उवाच।

भूयोऽपि शिवमाहात्म्यं समाचक्ष्व महामते।
सर्वज्ञो ह्यसि भूतानामधिनाथ महाद्युते॥ १

शैलादिरुवाच।

शिवमाहात्म्यमेकाग्रः शृणु वक्ष्यामि ते मुने।
बहुभिर्बहुधा शब्दैः कीर्त्तितं मुनिसत्तमैः॥ २
सदसद्रूपमित्याहुः सदसत्पतिरित्यपि।
तं शिवं मुनयः केचित् प्रवदन्ति च सूरयः॥ ३
भूतभावविकारेण द्वितीयेन स उच्यते।
व्यक्तं तेन विहीनत्वादव्यक्तमसदित्यपि॥ ४
उभे ते शिवरूपे हि शिवादन्यं न विद्यते।
तयोः पतित्वाच्च शिवः सदसत्पतिरुच्यते॥ ५
चराचरात्मकं प्राहुः चराचरपरं तथा।
शिवं महेश्वरं केचिन्मुनयस्तत्त्वचिन्तकाः॥ ६
उत्तमाचरमव्यक्तं व्यक्तं चरमुदाहृतम्।
रूपे ते शङ्करस्यैव तस्मान्न पर उच्यते॥ ७
तयोः परः शिवः शान्तः चराचरपरो बुधैः।
उच्यते परमार्थेन महादेवो महेश्वरः।
समस्तव्यस्तरूपन्तु ततः स्मृत्वा स मुच्यते॥ ८
समष्टिव्यष्टिरूपन्तु समष्टिव्यष्टिकारणम्।
वदन्ति केचिदाचार्य्याः शिवं परमकारणम्॥ ९
समष्टिं विदुरव्यक्तं व्यष्टिं व्यक्तं मुनीश्वराः।
रूपे ते गदिते शम्भोर्नास्त्यन्यद्वस्तुसम्भवम्॥ १०
तयोः कारणभावेन शिवो हि परमेश्वरः।
उच्यते योगशास्त्रज्ञैः समष्टिव्यष्टिकारणम्॥ ११
क्षेत्र-क्षेत्रज्ञरूपी च शिवः कैश्चिदुदाहृतः।
परमात्मा परंज्योतिर्भगवान् परमेश्वरः॥ १२
चतुर्व्विंशतितत्त्वानि क्षेत्रशब्देन सूरयः।
प्राहुः क्षेत्रज्ञशब्देन भोक्तारं पुरुषं तथा॥ १३
क्षेत्र-क्षेत्रविदावेते रूपे तस्य स्वयम्भुवः।
न किञ्चिच्च शिवादन्यदिति प्राहुर्मनीषिणः॥ १४
अपरब्रह्मरूपं तं परंब्रह्मात्मकं शिवम्।
केचिदाहुर्महादेवमनादिनिधनं प्रभुम्॥ १५
भूतेन्द्रियान्तःकरण-प्रधानविषयात्मकम्।
अपरब्रह्म निर्द्दिष्टं परंब्रह्म चिदात्मकम्॥ १६
ब्रह्मणी ते महेशस्य शिवस्यास्य स्वयम्भुवः।
शङ्करस्य परस्यैव शिवादन्यन्न विद्यते॥ १७
विद्याविद्यास्वरूपी च शङ्करः कैश्चिदुच्यते।
धाता विधाता लोकानामादिदेवो महेश्वरः॥ १८
विद्येति च तमेवाहुरविद्येति मुनीश्वराः।
प्रपञ्चजातमखिलं ते स्वरूपे स्वयम्भुवः॥ १९
भ्रान्तिर्विद्या परञ्चेति शिवरूपमनुत्तमम्।
अवापुर्मुनयो योगात् केचिदागमवेदिनः॥ २०
अर्थेषु बहुरूपेषु विज्ञानं भ्रान्तिरुच्यते।
आत्माकारेण संवित्तिर्बुधैर्विद्येति कीर्त्यते॥ २१
विकल्परहितं तत्त्वं परमित्यभिधीयते।
तृतीयरूपमीशस्य नान्यत् किञ्चन सर्व्वतः॥ २२
व्यक्ताव्यक्तज्ञरूपीति शिवः कैश्चिन्निगद्यते।
विधाता सर्व्वलोकानां धाता च परमेश्वरः॥ २३
त्रयोविंशतितत्त्वानि व्यक्तशब्देन सूरयः।
वदन्त्यव्यक्तशब्देन प्रकृतिञ्च परां तथा॥ २४
कथयन्ति ज्ञशब्देन पुरुषं गुणभोगिनम्।
तत् त्रयं शाङ्करं रूपं नान्यत् किञ्चिदशाङ्करम्॥ २५

इति श्रीलैङ्गे महापुराणे उपरिभागे
पञ्चदशोऽध्यायः॥ १५॥

---

## षोड़शोऽध्यायः।

सनत्कुमार उवाच।

पुनरेव महाबुद्धे श्रोतुमिच्छामि तत्त्वतः।
बहुभिर्बहुधा शब्दैः शब्दितानि मुनीश्वरैः॥ १

शैलादिरुवाच।

पुनः पुनः प्रवक्ष्यामि शिवरूपाणि ते मुने।
बहुभिर्बहुधा शब्दैः शब्दितानि मुनीश्वरः॥ २
क्षेत्रज्ञः प्रकृतिर्व्यक्तं कालात्मेति मुनीश्वरः।
उच्यते कैश्चिदाचार्य्यैरागमार्णवपारगैः॥ ३
क्षेत्रज्ञं पुरुषं प्राहुः प्रधानं प्रकृतिं बुधाः।
विकारजातं निःशेषं प्रकृतेर्व्यक्तमित्यपि॥ ४
प्रधान-व्यक्तयोः कालः परिणामैककारणम्।
तच्चतुष्टयमीशस्य रूपाणां हि चतुष्टयम्॥ ५
हिरण्यगर्भं पुरुषं प्रधानं व्यक्तरूपिणम्।
कथयन्ति शिवं कैचिदाचार्य्याः परमेश्वरम्॥ ६

हिरण्यगर्भः कर्त्तास्य भोक्ता विश्वस्य पूरुषः।
विकारजातं व्यक्ताख्यं प्रधानं कारणं परम् ॥ ७
तेषां चतुष्टयं बुद्धेः शिवरूपचतुष्टयम्।
प्रोच्यते शङ्करादन्यदस्ति वस्तु न किञ्चन ॥ ८
पिण्डजातिस्वरूपी तु कथ्यते कैश्चिदीश्वरः।
चराचरशरीराणि पिण्डाख्यान्यखिलान्यपि ॥ ९
सामान्यानि समस्तानि महासामान्यमेव च।
कथ्यन्ते जातिशब्देन तानि रूपाणि धीमतः ॥ १०
विराड्हिरण्यगर्भात्मा कैश्चिदीशो निगद्यते।
हिरण्यगर्भो लोकानां हेतुर्लोकात्मको विराट् ॥ ११
सूत्राव्याकृतरूपं तं शिवं शंसन्ति केचन।
अव्याकृतं प्रधानं हि तद्रूपं परमेष्ठिनः ॥ १२
लोका येनैव तिष्ठन्ति सूत्रे मणिगणा इव।
तत् सूत्रमिति विज्ञेयं रूपमद्भुतविक्रमम् ॥ १३
अन्तर्यामी परः कैश्चित् कैश्चिदीशः प्रकीर्त्यते।
स्वयंज्योतिः स्वयंवेद्यः शिवः शम्भुर्महेश्वरः ॥ १४
सर्व्वेषामेव भूतानामन्तर्यामी शिवः स्मृतः।
सर्व्वेषामेव भूतानां परत्वात् पर उच्यते ॥ १५
परमात्मा शिवः शम्भुः शङ्करः परमेश्वरः।
प्राज्ञ-तैजस-विश्वाख्यं तस्य रूपत्रयं विदुः ॥ १६
सुषुप्ति-स्वप्न-जाग्रन्तमवस्थात्रयमेव तत्।
विराड्हिरण्यगर्भाख्यमव्याकृतपदद्वयम् ॥ १७
तुरीयस्य शिवस्यास्य अवस्थात्रयगामिणः।
हिरण्यगर्भः पुरुषः काल इत्येव कीर्त्तितः ॥ १८
तिस्रोऽवस्था जगत्सृष्टि-स्थिति-संहारहेतवः।
भव-विष्णु-विरिञ्चाख्यमवस्थात्रयमीशितुः।
आराध्य भक्त्या मुक्तिञ्च प्राप्नुवन्ति शरीरिणः ॥ १९
कर्त्ता क्रिया च कार्य्यञ्च करणञ्चेति सूरिभिः।
शम्भोश्चत्वारि रूपाणि कीर्त्यन्ते परमेष्ठिनः ॥ २०
प्रमाता च प्रमाणञ्च प्रमेयं प्रमितिस्तथा।
चत्वार्य्येतानि रूपाणि शिवस्यैव न संशयः ॥ २१
ईश्वराव्याकृत-प्राण-विराड्भूतेन्द्रियात्मकम्।
शिवस्यैव विकारोऽयं समुद्रस्यैव वीचयः ॥ २२
ईश्वरं जगतामाहुर्निमित्तं कारणं तथा।
अव्याकृतं प्रधानं हि तदुक्तं वेदवादिभिः ॥ २३
हिरण्यगर्भः प्राणाख्यो विराड्लोकात्मकः स्मृतः।
महाभूतानि भूतानि कार्य्याणि इन्द्रियाणि च ॥ २४
शिवस्यैतानि रूपाणि शंसन्ति मुनिसत्तमाः।
परमात्मा शिवादन्यो नास्तीति कवयो विदुः ॥ २५
शिवजातानि तत्त्वानि पञ्चविंशन्मनीषिभिः।
उक्तानि न तदन्यानि सलिलादूर्म्मिवृन्दवत् ॥ २६
पञ्चविंशत्पदार्थेभ्यः शिवतत्त्वं परं विदुः।
तानि तस्मादनन्यानि सुवर्णकटकादिवत् ॥ २७
सदाशिवेश्वराद्यानि तत्त्वानि शिवतत्त्वतः।
जातानि न तदन्यानि मृद्द्रव्यं कुम्भभेदवत् ॥ २८
मायाविद्या क्रियाशक्तिर्ज्ञानशक्तिः क्रियामयी।
जाता शिवान्न सन्देहः किरणा इव सूर्य्यतः ॥ २९
सर्व्वात्मकं शिवं देवं सर्व्वाश्रयविधायिनम्।
भजस्व सर्व्वभावेन श्रेयश्चेत् प्राप्तुमिच्छसि ॥ ३०

इति श्रीलैङ्गे महापुराणे उपरिभागे
षोड़शोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः।

सनत्कुमार उवाच।

भूयो देवगणश्रेष्ठ शिवमाहात्म्यमुत्तमम्।
शृण्वतो नास्ति मे तृप्तिस्त्वद्वाक्यामृतपानतः ॥ १
कथं शरीरी भगवान् कस्माद्रुद्रः प्रतापवान्।
सर्व्वात्मा च कथं शम्भुः कथं पाशुपतं व्रतम्।
कथं वा देवमुख्यैश्च श्रुतो दृष्टश्च शङ्करः ॥ २

शैलादिरुवाच।

अव्यक्तादभवत् स्थाणुः शिवः परमकारणम्।
स सर्व्वकारणोपेत ऋषिर्विश्वाधिकः प्रभुः ॥ ३
देवानां प्रथमं देवं जायमानं मुखाम्बुजात्।
ददर्श चाग्रे ब्रह्माणञ्चाज्ञया तमवैक्षत ॥ ४
दृष्टो रुद्रेण देवेशः ससर्ज्ज सकलञ्च सः।
वर्णाश्रमव्यवस्थाश्च स्थापयामास वै विराट् ॥ ५
सोमं ससर्ज्ज यज्ञार्थं सोमादिदमजायत।
चरुश्च वह्निर्यज्ञश्च वज्रपाणिः शचीपतिः ॥ ६
विष्णुर्नारायणः श्रीमान् सर्व्वं सोममयं जगत्।
रुद्राध्यायेन ते देवा रुद्रं तुष्टुवुरीश्वरम् ॥ ७
प्रसन्नवदनस्तस्थौ देवानां मध्यतः प्रभुः।
अपहृत्य च विज्ञानमेषामेव महेश्वरः ॥ ८
देवा ह्यपृच्छंस्तं देवं को भवानिति शङ्करम्।

अब्रवीद्भगवान् रुद्रो ह्यहमेकः पुरातनः ॥ ९
आसं प्रथम एवाहं वर्त्तामि च सुरोत्तमाः।
भविष्यामि च लोकेऽस्मिन् मत्तो नान्यः कुतश्चन॥१०
व्यतिरिक्तं न मत्तोऽस्ति नान्यत् किञ्चित् सुरोत्तमाः।
नित्योऽनित्योऽहमनघो ब्रह्माहं ब्रह्मणस्पतिः ॥ ११
दिशश्च विदिशश्चाहं प्रकृतिश्च पुमानहम्।
त्रिष्टुब्जगत्यनुष्टुप् च च्छन्दोऽहं तन्मयः शिवः ॥ १२
सत्योऽहं सर्व्वगः शान्तस्त्रेताग्निर्गौरवं गुरुः।
गौरहं गह्वरश्चाहं नित्यं गहनगोचरः ॥ १३
ज्येष्ठोऽहं सर्व्वतत्त्वानां वरिष्ठोऽहमपां पतिः।
आपोऽहं भगवानीशस्तेजोऽहं वेदिरप्यहम् ॥ १४
ऋग्वेदोऽहं यजुर्वेदः सामवेदोऽहमात्मभूः।
अथर्व्वणोऽहं मन्त्रोऽहं तथा चाङ्गिरसां वरः ॥ १५
इतिहासपुराणानि कल्पोऽहं कल्पनाप्यहम्।
अक्षरञ्च क्षरश्चाहं क्षान्तिः शान्तिरहं क्षमा ॥ १६
गुह्योऽहं सर्व्ववेदेषु वरेण्योऽहमजोऽप्यहम्।
पुष्करञ्च पवित्रञ्च मध्यञ्चाहं ततः परम् ॥ १७
बहिश्चाहं तथा चान्तः पुरस्तादहमव्ययः।
ज्योतिश्चाहं तमश्चाहं ब्रह्मा विष्णुर्महेश्वरः ॥ १८
बुद्धिश्चाहमहङ्कारस्तन्मात्राणीन्द्रियाणि च।
एवं सर्व्वञ्च मामेव यो वेद सुरसत्तमाः ॥ १९
स एव सर्व्ववित् सर्व्वं सर्व्वात्मा परमेश्वरः ॥ २०
गां गोभिर्ब्राह्मणान् सर्व्वान् ब्राह्मण्येन हवींषि च।
आयुषायुस्तथा सत्यं सत्येन सुरसत्तमाः ॥ २१
धर्म्मं धर्म्मेण सर्व्वांश्च तर्पयामि स्वतेजसा।
इत्यादौ भगवानुक्त्वा तत्रैवान्तरधीयत ॥ २२
नापश्यन्त ततो देवं रुद्रं परमकारणम्।
ते देवाः परमात्मानं रुद्रं ध्यायन्ति शङ्करम् ॥ २३
सनारायणका देवाः सेन्द्राश्च मुनयस्तथा।
तथोर्द्ध्वबाहवो देवा रुद्रं तन्वन्ति शङ्करम् ॥ २४

इति श्रीलैङ्गे महापुराणे उपरिभागे
सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः।

देवा ऊचुः।

य एष भगवान् रुद्रो ब्रह्मा-विष्णु-महेश्वराः।
स्कन्दश्चापि तथा चेन्द्रो भुवनानि चतुर्द्दश।
अश्विनौ ग्रहतारश्च नक्षत्राणि च खं दिशः ॥ १
भूतानि च यथा सूर्य्यः सोमश्चाष्टौ ग्रहास्तथा।
प्राणः कालो यमो मृत्युरमृतः परमेश्वरः ॥ २
भूतं भव्यं भविष्यञ्च वर्त्तमानं महेश्वरः।
विश्वं कृत्स्नं जगत् सर्व्वं सत्यं तस्मै नमो नमः ॥ ३
त्वमादौ च तथाभूतो भूर्भुवः स्वस्तथैव च।
अन्ते त्वं विश्वरूपोऽसि शीर्षन्तु जगतः सदा ॥ ४
ब्रह्मैकस्त्वं द्विविधार्थमधश्च त्वं सुरेश्वरः।
शान्तिश्च त्वं तथा पुष्टिस्तुष्टिश्चाप्यहुतं हुतम् ॥ ५
विश्वञ्चैव तथाविश्वं दत्तं वादत्तमीश्वरम्।
कृतञ्चाप्यकृतं देवं परमप्यपरं ध्रुवम्।
परायणं सताञ्चैव असतामपि शङ्करम् ॥ ६

अपाम सोमममृता अभूमा-
गन्म ज्योतिरविदाम देवान्।
किं नूनमस्मान् कृणवदरातिः
किमु धूर्त्तिरमृतं मर्त्यस्य ॥ ७

एतज्जगद्धितं दिव्यमक्षरं सूक्ष्ममव्ययम् ॥ ८
प्राजापत्यं पवित्रञ्च सौम्यमग्राह्यमव्ययम्।
अग्राह्येणापि वाग्राह्यं वायव्येन समीरणम् ॥ ९
सौम्येन सौम्यं ग्रसति तेजसा स्वेन लीलया।
तस्मै नमोपसंहर्त्रे महाग्रासाय शूलिने ॥ १०
हृदिस्था देवताः सर्व्वा हृदि प्राणे प्रतिष्ठिताः।
हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः ॥ ११
शिरश्चोत्तरतश्चैव पादौ दक्षिणतस्तथा।
यो वै चोत्तरतः साक्षात् स ओङ्कारः सनातनः ॥ १२
ओङ्कारो यः स एवेह प्रणवो व्याप्य तिष्ठति।
अनन्तस्तारसूक्ष्मञ्च शुक्लं वैद्युतमेव च ॥ १३
परं ब्रह्म स ईशान एको रुद्रः स एव च।
भवान् महेश्वरः साक्षान्महादेवो न संशयः ॥ १४
ऊर्द्ध्वमुन्नामयत्येव स ओङ्कारः प्रकीर्त्तितः।
प्राणानवति यस्तस्मात् प्रणवः परिकीर्त्तितः ॥ १५
सर्व्वं व्याप्नोति यस्तस्मात् सर्व्वव्यापी सनातनः।
ब्रह्मा हरिश्च भगवानाद्यन्तं नोपलब्धवान् ॥ १६
तथान्ये च ततोऽनन्तो रुद्रः परमकारणम्।
यस्तारयन्ति संसारात् तार इत्यभिधीयते ॥ १७
सूक्ष्मो भूत्वा शरीराणि सर्व्वदा ह्यधितिष्ठति।
तस्मात् सूक्ष्मः समाख्यातो भगवान् नीललोहितः ॥ १८

नीलश्च लोहितश्चैव प्रधानपुरुषान्वयात् ।
स्कन्दतेऽस्य यतः शुक्रं तथा शुक्रमपैति च ॥ १९
विद्योतयति यस्तस्माद्वैद्युतः परिगीयते ।
बृहत्त्वाद्बृंहणत्वाच्च बृहते च परापरे ॥ २०
तस्माद्बृंहति यस्माद्धि परं ब्रह्मेति कीर्त्तितम् ।
अद्वितीयोऽथ भगवान् तुरीयः परमेश्वरः ॥ २१
ईशानमस्य जगतः स्वदृशं चक्षुरीश्वरम् ।
ईशानमिन्द्रसूरयः सर्व्वेषामपि सर्व्वदा ॥ २२
ईशानः सर्व्वविद्यानां यत् तदीशान उच्यते ।
यदीक्षते च भगवान् निरीक्ष्यमिति चाज्ञया ॥ २३
आत्मज्ञानं महादेवो योगं गमयति स्वयम् ।
भगवांश्चोच्यते देवो देवदेवो महेश्वरः ॥ २४
सर्व्वान् लोकान् क्रमेणैव यो गृह्णाति महेश्वरः ।
विसृजत्येष देवेशो वासयत्यपि लीलया ॥ २५

एषो हि देवः प्रदिशोऽनु सर्व्वाः
पूर्व्वो हि जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः
प्रत्यङ्मुखस्तिष्ठति सर्व्वतोमुखः ॥ २६

उपासितव्यं यत्नेन तदेतत् सद्भिरव्ययम् ।
यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ॥ २७
तदग्रहणमेवेह यद्वाग्वदति यत्नतः ।
अपरञ्च परं वेति परायणमिति स्वयम् ॥ २८
वदन्ति वाचः सर्व्वज्ञं शङ्करं नीललोहितम् ।
एष सर्व्वो नमस्तस्मै पुरुषः पिङ्गलः शिवः ॥ २९
स एव स महारुद्रो विश्वभूतं भविष्यति ।
भुवनं बहुधा जातं जायमानमितस्ततः ॥ ३०
हिरण्यबाहुर्भगवान् हिरण्यपतिरीश्वरः ।
अम्बिकापतिरीशानो हेमरेता वृषध्वजः ॥ ३१
उमापतिर्विरूपाक्षो विश्वसृग्विश्ववाहनः ।
ब्रह्माणं विदधे योऽसौ पुत्त्रमग्रे सनातनम् ॥ ३२
प्रहिणोति स्म तस्यैव ज्ञानमात्मप्रकाशकम् ।
तमेकं पुरुषं रुद्रं पुरुहूतं पुरुष्टुतम् ॥ ३३

बालाग्रमात्रं हृदयस्य मध्ये
विश्वं देवं वह्निरूपं वरेण्यम् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ३४

महतो यो महीयांश्च अणोरप्यणुरव्ययः ।
गुहायां निहितश्चात्मा जन्तोरस्य महेश्वरः ॥ ३५
वेश्मभूतोऽस्य विश्वस्य कमलस्थो हृदि स्वयम् ।
गह्वरं गहनं तत्स्थं तस्यान्तश्चोर्द्ध्वतः स्थितम् ॥ ३६
तत्रापि दहरं गगनमोङ्कारं परमेश्वरम् ।
बालाग्रमात्रं तन्मध्ये ऋतं परमकारणम् ॥ ३७
सत्यं ब्रह्म महादेवं पुरुषं कृष्णपिङ्गलम् ।
ऊर्द्ध्वरेतसमीशानं विरूपाक्षमजोद्भवम् ॥ ३८
अधितिष्ठति योनिं योऽयोनिं वा चैक ईश्वरः ।
देहं पञ्चविधं येन तमीशानं पुरातनम् ॥ ३९

प्राणेष्वन्तर्मनसो लिङ्गमाहु-
र्यस्मिन् क्रोधो या च तृष्णा क्षमा च ।
तृष्णां छित्त्वा हेतुजालस्य मूलं
बुद्ध्या चिन्त्यं स्थापयित्वा च रुद्रे ॥ ४०

एकं तमाहुर्वै रुद्रं शाश्वतं परमेश्वरम् ।
परात्परतरं वापि परात्परतरं ध्रुवम् ॥ ४१
ब्रह्मणो जनकं विष्णोर्वह्नेर्वायोः सदाशिवम् ।
ध्यात्वाग्निना च शोध्याङ्गे विशोध्य च पृथक् पृथक् ॥ ४२
पञ्चभूतानि संयम्य मात्राविधिगुणक्रमात् ।
मात्राः पञ्च चतस्रश्च त्रिमात्रा द्विस्ततः परम् ॥ ४३
एकमात्रममात्रं हि द्वादशान्ते व्यवस्थितम् ।
स्थित्वा स्थाप्यामृतो भूत्वा व्रतं पाशुपतं चरेत् ॥ ४४
एतद्व्रतं पाशुपतं चरिष्यामि समासतः ।
अग्निमाधाय विधिवदृग्यजुःसामसम्भवैः ॥ ४५
उपोषितः शुचिः स्नातः शुक्लाम्बरधरः स्वयम् ।
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥ ४६
जुहुयाद्विरजो विद्वान् विरजाश्च भविष्यति ।
वायवः पञ्च शुध्यन्तां वाङ्मनश्चरणादयः ॥ ४७
श्रोत्रजिह्वा ततः प्राणं ततो बुद्धिस्तथैव च ।
शिरः पाणिस्तथा पार्श्वं पृष्ठोदरमनन्तरम् ॥ ४८
जङ्घे शिश्नमुपस्थञ्च पायुर्मेढ्रं तथैव च ।
त्वचं मांसञ्च रुधिरं मेदोऽस्थीनि तथव च ॥ ४९
शब्दस्पर्शञ्च रूपञ्च रसो गन्धस्तथैव च ।
भूतानि चैव शुध्यन्तां देहे मेदादयस्तथा ॥ ५०
अन्नप्राणं मनो ज्ञानं शुध्यन्तां वै शिवेच्छया ।
हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् ॥ ५१
उपसंहृत्य रुद्राग्निं गृहीत्वा भस्म यत्नतः ।
अग्निरित्यादिना धीमान् विमृज्याङ्गानि संस्पृशेत् ॥ ५२

एतत् पाशुपतं दिव्यं व्रतं पाशविमोचनम्।
ब्राह्मणानां हितं प्रोक्तं क्षत्रियाणां तथैव च ॥ ५३
वस्थानामपि योग्यानां यतीनान्तु विशेषतः।
वानप्रस्थाश्रमस्थानां गृहस्थानां सतामपि ॥ ५४
विमुक्तिर्विधिनानेन दृष्टा वै ब्रह्मचारिणाम्।
अग्निरित्यादिना भस्म गृहीत्वा ह्यग्निहोत्रजम् ॥ ५५
सोऽपि पाशुपतो विप्रो विमृज्याङ्गानि संस्पृशेत्।
भस्मच्छन्नो द्विजो विद्वान् महापातकसम्भवैः ॥ ५६
पापैर्विमुच्यते सद्यो मुच्यते च न संशयः।
वीर्य्यमग्नेर्यतो भस्म वीर्य्यवान् भस्मसंयुतः ॥ ५७
भस्मस्नानरतो विप्रो भस्मशायी जितेन्द्रियः।
सर्व्वपापविनिर्म्मुक्तः शिवसायुज्यमाप्नुयात्।
तस्मात् सर्व्वप्रयत्नेन भूत्यङ्गं पूजयेद्बुधः ॥ ५८
दैवकारो न कर्त्तव्यस्तुन्तुङ्कारस्तथैव च।
न तत् क्षमति देवेशो ब्रह्मा वा यदि केशवः ॥ ५९
मम पुत्रो भस्मधारी गणेशश्च वरानने।
तेषां विरुद्धं यत् त्याज्यं स याति नरकार्णवम् ॥ ६०
गृहस्थो ब्रह्मचीनोऽपि त्रिपुण्ड्रं यो न कारयेत्।
पूजा कर्म्मक्रिया तस्य दानं स्नानं तथैव च ॥ ६१
निष्फलं जायते सर्व्वं यथा भस्मनि वै हुतम्।
तस्माच्च सर्व्वकार्य्येषु त्रिपुण्ड्रं धारयेद्बुधः ॥ ६२
इत्युक्त्वा भगवान् ब्रह्मा स्तुत्वा देवैः समं प्रभुः।
भस्मच्छन्नैः स्वयं छन्नो विरराम विशाम्पते ॥ ६३
अथ तेषां प्रसादार्थं पशूनां पतिरीश्वरः।
सगणश्चाम्बया सार्द्धं सान्निध्यमकरोत् प्रभुः ॥ ६४
अथ सन्निहितं रुद्रं तुष्टुवुः सुरपुङ्गवम्।
रुद्राध्यायेन सर्व्वेशं देवदेवमुमापतिम् ॥ ६५
देवोऽपि देवानालोक्य घृणया वृषभध्वजः।
तुष्टोऽस्मीत्याह देवेभ्यो वरं दातुं सुरारिहा ॥ ६६

इति श्रीलैङ्गे महापुराणे उपरिभागे
अष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः।

ऋषादिरुवाच।

तं प्रभुं प्रीतमनसं प्रणिपत्य वृषध्वजम्।
अपृच्छन्मुनयो देवाः प्रीतिकण्टकितत्वचः ॥ १

देवा ऊचुः।

भगवन् केन मार्गेण पूजनीयो द्विजातिभिः।
कुत्र वा केन रूपेण वक्तुमर्हसि शङ्कर ॥ २
कस्याधिकारः पूजायां ब्राह्मणस्य कथं प्रभो।
क्षत्रियाणां कथं देव वैश्यानां वृषभध्वज ॥ ३
स्त्रीशूद्राणां कथं वापि कुण्डगोलादिनान्तु वा
हिताय जगतां सर्व्वमस्माकं वक्तुमर्हसि ॥ ४

सूत उवाच।

तेषां भावं समालोक्य मुनीनां नीललोहितः।
प्राह गम्भीरया वाचा मण्डलस्थः सदाशिवः ॥ ५
मण्डले चाग्रतो पश्यन् देवदेव सहोमया।
देवाश्च मुनयः सर्व्वे विद्युत्कोटिसमप्रभम् ॥ ६
अष्टबाहुं चतुर्व्वक्त्रं द्वादशाक्षं महाभुजम्।
अर्द्धनारीश्वरं देवं जटामुकुटधारिणम् ॥ ७
सर्व्वाभरणसंयुक्तं रक्तमाल्यानुलेपनम्।
रक्ताम्बरधरं सृष्टि-स्थिति-संहारकारकम् ॥ ८
तस्य पूर्व्वमुखं पीतं प्रसन्नं पुरुषात्मकम्।
अघोरं दक्षिणं वक्त्रं नीलाञ्जनचयोपमम् ॥ ९
दंष्ट्राकरालमत्युग्रं ज्वालामालासमावृतम्।
रक्तश्मश्रु जटायुक्तमुत्तरे विद्रुमप्रभम् ॥ १०
प्रसन्नं वामदेवाख्यं वरदं विश्वरूपिणम्।
पश्चिमं वदनं तस्य गोक्षीरधवलं शुभम् ॥ ११
मुक्ताफलमयैर्हारैर्भूषितं तिलकोज्ज्वलम्।
सद्योजातमुखं दिव्यं भास्करस्य स्मरारिणः ॥ १२
आदित्यमग्रतोऽपश्यन् पूर्व्ववच्चतुराननम्।
भास्करं पुरतो देवं चतुर्व्वक्त्रञ्च पूर्व्ववत् ॥ १३
भानुं दक्षिणतो देवं चतुर्वक्त्रञ्च पूर्व्ववत्।
रविमुत्तरतोऽपश्यन् पूर्व्ववच्चतुराननम् ॥ १४
विस्तारां मण्डले पूर्व्वे उत्तरां दक्षिणे स्थिताम्।
बोधनीं पश्चिमे भागे मण्डलस्य प्रजापतेः ॥ १५
आप्यायनीञ्च कौबेर्य्यामेकवक्त्रां चतुर्भुजाम्।
सर्व्वाभरणसम्पन्नाः शक्तयः सर्व्वसम्मताः ॥ १६
ब्रह्माणं दक्षिणे भागे विष्णुं वामे जनार्द्दनम्।
ऋग्यजुःसाममार्गेण मूर्त्तित्रयमयं शिवम् ॥ १७
ईशानं वरदं देवमीशानं परमेश्वरम्।
ब्रह्मासनस्थं वरदं धर्म्मज्ञानासनोपरि ॥ १८
वैराग्यैश्वर्य्यसंयुक्ते प्रभूते विमले तथा।

सारे सर्व्वेश्वरं देवमाराध्ये परमे सुखे ॥ १९
सितपङ्कजमध्यस्थं दीप्ताद्यैरभिसंवृतम् ।
दीप्तां दीप्तशिखाकारां सूक्ष्मां विद्युत्प्रभां शुभाम् २०
जयामग्निशिखाकारां प्रभां कनकसप्रभाम् ।
विभूतिं विद्रुमप्रख्यां विमलां पद्मसन्निभाम् ॥ २१
अमोघां कर्णिकाकारां विद्युतं विश्ववर्णिनीम् ।
चतुर्व्वक्त्रां चतुर्व्वर्णां देवीं वै सर्व्वतोमुखीम् ॥ २२
सोममङ्गारकं देवं बुधं बुद्धिमतां वरम् ।
वृहस्पतिं वृहद्बुद्धिं भार्गवं तेजसां निधिम् ॥ २३
मन्दं मन्दगतिञ्चैव समन्तात् तस्य ते सदा ।
सूर्य्यः शिवो जगन्नाथः सोमः साक्षादुमा स्वयम् ॥ २४
पञ्चभूतानि शेषाणि तन्मयञ्च चराचरम् ।
दृष्ट्वैव मुनयः सर्व्वे देवदेवमुमापतिम् ॥ २५
कृताञ्जलिपुटाः सर्व्वे मुनयो देवतास्तथा ।
अस्तुवन् वाग्भिरिष्टाभिर्वरदं नीललोहितम् ॥ २६

ऋषय ऊचुः ।

नमः शिवाय रुद्राय कद्रुद्राय प्रचेतसे ।
मीढ़ष्टमाय सर्व्वाय शिपिविष्टाय रंहसे ॥ २७
प्रभूते विमले सारे आधारे परमे सुखे ।
नवशक्त्यावृतं देवं पद्मस्थं भास्करं प्रभुम् ॥ २८
आदित्यं भास्करं भानुं रविं देवं दिवाकरम् ।
उमां प्रभां तथा प्रज्ञां सन्ध्यां सावित्रीमेव च ॥ २९
विस्तारामुत्तरां देवीं बोधनीं प्रणमाम्यहम् ।
आप्यायनीञ्च वरदां ब्रह्माणं केशवं हरम् ॥ ३०

सोमादिवृन्दञ्च यथाक्रमेण
सम्पूज्य मन्त्रैर्विहितक्रमेण ।
स्मरामि देवं रविमण्डलस्थं
सदाशिवं शङ्करमादिदेवम् ॥ ३१
इन्द्रादिदेवांश्च तथेश्वरांश्च
नारायणं पद्मजमादिदेवम् ।
प्रागाद्यधोर्द्धञ्च यथाक्रमेण
वज्रादिपद्मञ्च तथा स्मरामि ॥ ३२
सिन्दूरवर्णाय समण्डलाय
सुवर्णवज्राभरणाय तुभ्यम् ।
पद्माभनेत्राय सपङ्कजाय
ब्रह्मेन्द्रनारायणकारणाय ॥ ३३
रथञ्च सप्ताश्वमनूरुवीरं
गणं तथा सप्तविधं क्रमेण ।
ऋतुप्रवाहेण च वालखिल्यान्
स्मरामि मन्देहगणक्षयञ्च ॥ ३४
हुत्वा तिलाद्यैर्विविधैस्तथाग्नौ
पुनः समाप्यैव तथैव सर्व्वम् ।
उद्वास्य हृत्पङ्कजमध्यसंस्थं
स्मरामि विम्बं तव देवदेव ॥ ३५
स्मरामि विम्बानि यथाक्रमेण
रक्तानि पद्मामललोचनानि ।
पद्मञ्च सव्ये वरदञ्च वामे
करे तथा भूषितभूषणानि ॥ ३६
दंष्ट्राकरालं तव दिव्यवक्त्रं
विद्युत्प्रभं दैत्यभयङ्करञ्च ।
स्मरामि रक्षाभिरतं द्विजानां
मन्देहरक्षोगणभर्त्सनञ्च ॥ ३७
सोमं सितं भूमिजमग्निवर्णं
चामीकराभं बुधमिन्दुसूनुम् ।
वृहस्पतिं काञ्चनसन्निकाशं
शुक्रं सितं कृष्णतरञ्च मन्दम् ॥ ३८

स्मरामि सव्यमभयं वाममूरुगतं करम् ।
सर्व्वेषां मन्त्रपर्य्यन्तं महादेवञ्च भास्करम् ॥ ३९

पूर्णेन्दुवर्णेन च पुष्पगन्ध-
प्रस्थेन तोयेन शुभेन पूर्णम् ।
पात्रं दृढ़ं ताम्रमयं प्रकल्प्य
दास्ये तवार्घ्यं भगवन् प्रसीद ॥ ४०

नमः शिवाय देवाय ईश्वराय कपर्द्दिने ।
रुद्राय विष्णवे तुभ्यं ब्रह्मणे सूर्य्यमूर्त्तये ॥ ४१

सूत उवाच ।

यः शिवं मण्डले देवं सम्पूज्यैवं समाहितः ।
प्रातर्मध्याह्नसायाह्ने पठेत् स्तवमनुत्तमम् ॥ ४२
इत्थं शिवेन सायुज्यं लभते नात्र संशयः ॥ ४३

इति श्रीलैङ्गे महापुराणे उपरिभागे
एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः।

सूत उवाच।

अथ रुद्रो महादेवो मण्डलस्थः पितामहः।
पूज्यो वै ब्राह्मणानाञ्च क्षत्रियाणां विशेषतः॥ १
वैश्यानां नैव शूद्राणां शुश्रूषा पूजकस्य च (क)।
स्त्रीणां नवाधिकारोऽस्ति पूजादिषु न संशयः॥ २
स्त्रीशूद्राणां द्विजेन्द्रैश्च पूजया तत् फलं भवेत्।
नृपाणामुपकारार्थं ब्रह्मणाद्यैर्विशेषतः॥ ३
एवं सम्पूजयेयुर्वै ब्राह्मणाद्याः सदाशिवम्।
इत्युक्त्वा भगवान् रुद्रस्तत्रैवान्तरधीयत॥ ४
ते देवा मुनयः सर्व्वे शिवमुद्दिश्य शङ्करम्।
प्रणेमुश्च महात्मानो रुद्रध्यानेन विह्वलाः॥ ५
जग्मुर्यथागतं देवा मुनयश्च तपोधनाः॥ ६
तस्मादभ्यर्च्चयेन्नित्यमादित्यं शिवरूपिणम्।
धर्म्मकामार्थमुक्त्यर्थं मनसा कर्म्मणा गिरा॥ ७

ऋषय ऊचुः।

रोमहर्षण सर्व्वज्ञ सर्व्वशास्त्रभृतां वर।
व्यासशिष्य महाभाग वाक्यं वद साम्प्रतम्॥ ८
शिवेन देवदेवेन भक्तानां हितकाम्यया।
वेदात् षडङ्गादुद्धृत्य सांख्ययोगाच्च सर्व्वतः॥ ९
तपश्च विपुलं तप्त्वा देवदानवदुश्चरम्।
अर्थैर्दशादिसंयुक्तं गूढ़मज्ञाननिन्दितम्॥ १०
वर्णाश्रमकृतैर्धर्म्मैर्विपरीतं क्वचित् समम्।
शिवेन कथितं शास्त्रं धर्म्मकामार्थमुक्तये॥ ११
शतकोटिप्रमाणेन तत्र पूजा कथं विभोः।
ज्ञानयोगादयो वापि श्रोतुं कौतूहलं हि नः॥ १२

सूत उवाच।

पुरा सनत्कुमारेण मेरुपृष्ठे सुशोभने।
पृष्टो नन्दीश्वरो देवः शैलादिः शिवसम्मतः॥ १३
पृष्टोऽयं प्रणिपत्यैवं मुनिमुख्यैश्च सर्व्वतः।
तस्मै सनत्कुमाराय नन्दिना कुलनन्दिना॥ १४
कथितं यच्छिवज्ञानं शृण्वन्तु मुनिपुङ्गवाः।
शैवं संक्षिप्य वेदोक्तं शिवेन परिभाषितम्॥ १५
स्तुतिनिन्दादिरहितं सद्यः प्रत्ययकारकम्।
गुरुप्रसादजं दिव्यमनायासेन मुक्तिदम्॥ १६

सनत्कुमार उवाच।

भगवन् सर्व्वभूतेश नन्दीश्वर महेश्वर।
कथं पूजादयः शम्भोर्धर्म्मकामार्थमुक्तये।
वक्तुमर्हसि शैलादे विनयेनागताय मे॥ १७

सूत उवाच।

समेक्ष्य भगवान् नन्दी निशम्य वचनं पुनः।
कालवेलाधिकारादमवदद्वदतां वरः॥ १८

शैलादिरुवाच।

गुरुतः शास्त्रतश्चैवमधिकारं ब्रवीम्यहम्।
गौरवादेव संश्रेष्ठा शिवाचार्य्यस्य नान्यथा॥ १९
स्वयमाचरते यस्तु आचारे स्थापयत्यपि।
आचिनोति च शास्त्रार्थानाचार्य्यस्तेन चोच्यते॥ २०
तस्माद्वेदार्थतत्त्वज्ञमाचार्य्यं भस्मशायिनम्।
गुरुमन्वेषयेद्भक्तः सुभगं प्रियदर्शनम्॥ २१
प्रतिपन्नं जनानन्दं श्रुतिस्मृतिपथानुगम्।
विद्ययाभयदातारं लौल्यचापल्यवर्ज्जितम्॥ २२
आचारपालकं धीरं समयेषु कृतास्पदम्।
तं दृष्ट्वा सर्व्वभावेन पूजयेच्छिववद्गुरुम्॥ २३
आत्मना च धनेनैव श्रद्धावित्तानुसारतः।
तावदाराधयेच्छिष्यः प्रसन्नोऽसौ यथा भवेत्॥ २४
सुप्रसन्ने महाभागे सद्यः पाशक्षयो भवेत्।
गुरुर्मान्यो गुरुः पूज्यो गुरुरेव सदाशिवः॥ २५
संवत्सरत्रयं वाथ शिष्यान् विप्रान् परीक्षयेत्।
प्राणद्रव्यप्रदानेन आदेशैश्च हृतस्ततः॥ २६
उत्तमश्चाधमे योज्यो नीच उत्तमवस्तुषु।
आक्रुष्टास्ताड़िता वापि ये विषादं न यान्ति वै॥ २७
ते योग्याः शिवधर्म्मिष्ठाः शिवधर्म्मपरायणाः।
संयता धर्म्मसम्पन्नाः श्रुतिस्मृतिपथानुगाः॥ २८
सर्व्वद्वन्द्वसहा धीरा नित्यमुद्युक्तचेतसः।
परोपकारनिरता गुरुशुश्रूषणे रताः॥ २९
आर्ज्जवा मार्द्दवाः स्वस्था अनुकूलाः प्रियंवदाः।
अमानिनो बुद्धिमन्तस्त्यक्तास्पर्द्धा गतस्पृहाः॥ ३०
शौचाचारगुणोपेता दम्भमात्सर्य्यवर्ज्जिताः।
योग्या एवं द्विजाः सर्व्वे शिवभक्तिपरायणाः॥ ३१
एवं वृत्तसमोपेता वाङ्मनःकायकर्म्मभिः।
शोध्या एवंविधाश्चैव तत्त्वानाञ्च विशुद्धये॥ ३२

(क) वैश्यानामिति पूर्व्वेणान्वयः। शूद्राणां नैव पूज्यः किन्तु तत्पूजकस्य पूजा कर्त्तव्या इत्यर्थः।

शुद्धो विनयसम्पन्नो मिथ्याकटुकवर्ज्जितः।
गुर्व्वाज्ञापालकश्चैव शिष्योऽनुग्रहमर्हति ॥ ३३
गुरुश्च शास्त्रवित् प्राज्ञस्तपस्वी जनवत्सलः।
लोकाचाररतो ह्येवं तत्त्ववित्मोचदः स्मृतः ॥ ३४
सर्व्वलक्षणसम्पन्नः सर्व्वशास्त्रविशारदः।
सर्व्वोपायविधानज्ञस्तत्त्वहीनस्य निष्फलम् ॥ ३५
स्वसंवेद्ये परे तत्त्वे निश्चयो यस्य नात्मनि।
आत्मनोऽनुग्रहो नास्ति परस्यानुग्रहः कथम् ॥ ३६
प्रबुद्धस्तु द्विजो यस्तु स शुद्धः साधयत्यपि।
तत्त्वहीने कुतो बोधः कुतो ह्यात्मपरिग्रहः ॥ ३७
परिग्रहविनिर्म्मुक्तास्ते सर्व्वे पशवोदिताः (क)।
पशुभिः प्रेरिता ये तु सर्व्वे ते पशवः स्मृताः ॥ ३८
तस्मात् तत्त्वविदो ये तु ते मुक्ता मोचयन्त्यपि।
संवित्तिजननं तत्त्वं परानन्दसमुद्भवम् ॥ ३९
तत्त्वन्तु विदितं येन स एवानन्ददर्शकः।
न पुनर्नाममात्रेण संवित्तिरहितस्तु यः ॥ ४०
अन्योन्यं तारयेन्नैव किं शिला तारयेच्छिलाम्।
येषां तन्नाममात्रेण मुक्तिर्वै नाममात्रिका ॥ ४१
योगिनां दर्शनाद्वापि स्पर्शनाद्भाषणादपि।
सद्यः सञ्जायते चाज्ञा पाशोपक्षयकारिणी ॥ ४२
अथवा योगमार्गेण शिष्यदेहं प्रविश्य च।
बोधयेदेव योगेन सर्व्वतत्त्वानि शोध्य च ॥ ४३
षड्‌ध्वशुद्धिर्विहिता ज्ञानयोगेन योगिनाम्।
शिष्यं परीक्ष्य धर्म्मज्ञं धार्म्मिकं वेदपारगम् ॥ ४४
ब्राह्मणं क्षत्रियं वैश्यं बहुदोषविवर्ज्जितम्।
ज्ञानेन ज्ञेयमालोक्य कर्णात् कर्णागतेन तु ॥ ४५
दीपाद्दीपो यथा चान्यः सञ्चरेद्विधिवद्गुरुः।
भौवनञ्च पदञ्चैव वर्णाख्यं मात्रमुत्तमम् ॥ ४६
कालाध्वरं महाभाग तत्त्वाख्यं सर्व्वसम्मतम्।
भिद्यते यस्य सामर्थ्यादाज्ञामात्रेण सर्व्वतः ॥ ४७
तस्य सिद्धिश्च मुक्तिश्च गुरुकारुण्यसम्भवा।
पृथिव्यादीनि भूतानि आविशन्ति च भौवने ॥ ४८
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च भावतः।
पदं वर्णाख्यकं विप्र बुद्धीन्द्रियविकल्पनम् ॥ ४९
कर्म्मेन्द्रियाणि मात्रं हि मनो बुद्धिरतः परम्।
अहङ्कारमथाव्यक्तं कालाध्वरमिति स्मृतम् ॥ ५०
पुरुषादि-विरिञ्च्यन्तमुन्मनत्वं परात्परम्।
तथेशत्वमिति प्रोक्तं सर्व्वतत्त्वार्थबोधकम् ॥ ५१
अयोगी नैव जानाति तत्त्वशुद्धिं शिवात्मिकाम् ॥ ५२

इति श्रीलैङ्गे उपरिभागे विंशोऽध्यायः ॥२०॥

---

## एकविंशोऽध्यायः।

### सूत उवाच।

परीक्ष्य भूमिं विधिवद्गन्ध-वर्ण-रसादिभिः।
अलङ्कृत्य वितानाद्यैरीश्वरावाहनक्षमाम् ॥ १
एकहस्तप्रमाणेन मण्डलं परिकल्पयेत्।
आलिखेत् कमलं मध्ये पञ्चरत्नसमन्वितम् ॥ २
चर्णैरष्टदलं वृत्तं सितं वा रक्तमेव च।
परिवारेण संयुक्तं बहुशोभासमन्वितम् ॥ ३
आवाह्य कर्णिकायान्तु शिवं परमकारणम्।
अर्च्चयेत् सर्व्वयत्नेन यथाविभवविस्तरम् ॥ ४
दलेषु सिद्धयः प्रोक्ताः कर्णिकायां महामुने।
वैराग्यज्ञाननालञ्च धर्म्मकन्दं मनोरमम् ॥ ५
वामा ज्येष्ठा च रौद्री च काली विकरणी तथा।
बलविकरणी चैव बलप्रमथिनी क्रमात् ॥ ६
सर्व्वभूतस्य दमनी केशरेषु च शक्तयः।
मनोन्मनी महामाया कर्णिकायां शिवासने ॥ ७
वामदेवादिभिः सार्द्धं हृन्न्यायेन विन्यसेत्।
मनोन्मनं महादेवं मनोन्मन्याथ मध्यतः ॥ ८
सूर्य्यसोमाग्निसम्बन्धात् प्रणवाख्यं शिवात्मकम्।
पुरुषं विन्यसेदक्रं पूर्व्वे पत्रे रविप्रभम् ॥ ९
अघोरं दक्षिणे पत्रे नीलाञ्जनचयोपमम्।
उत्तरे वामदेवाख्यं जवाकुसुमसन्निभम् ॥ १०
सद्यः पश्चिमपत्रे तु गोक्षीरधवलं न्यसेत्।
ईशानं कर्णिकायान्तु शुद्धस्फटिकसन्निभम् ॥ ११
चन्द्रमण्डलसङ्काशं हृदयायेति मन्त्रतः।
वाह्नेये रुद्रदिग्भागे शिरसे धूम्रवर्च्चसे ॥ १२
शिखायैव नमश्चेति रक्ताभे नैर्ऋते दले।
कवचायाञ्जनाभाय इति वायुदले न्यसेत् ॥ १३
अस्त्रायाग्निशिखाभाय इति दिक्षु प्रविन्यसेत्।
नेत्रेभ्यश्चेति चैशान्यां पिङ्गलेभ्यः प्रविन्यसेत् ॥ १४
शिवं सदाशिवं देवं महेश्वरमतः परम्।

(क) सन्धिरचार्षः।

रुद्रं विष्णुं विरिञ्चिञ्च सृष्टिन्यायेन भावयेत् ॥ १५
शिवाय रुद्ररूपाय शान्त्यतीताय शम्भवे।
शान्ताय शान्तदैत्याय नमश्चन्द्रमसे तथा ॥ १६
विद्याय विद्याधाराय वह्नये वह्निवर्चसे।
ज्वालायै च प्रतिष्ठायै तारकायान्तकाय च ॥ १७
निवृत्त्यै धनदेवाय धारायै धारणाय च।
मन्त्रैरेतैर्महाभूतविग्रहञ्च सदाशिवम् ॥ १८
ईशानमुकुटं देवं पुरुषाख्यं पुरातनम्।
अघोरहृदयं हृष्टं वामगुह्यं महेश्वरम् ॥ १९
सद्यमूर्त्तिं स्मरेद्देवं सदसद्व्यक्तिकारणम्।
पञ्चवक्त्रं दशभुजमष्टत्रिंशत्कलामयम् ॥ २०
सद्यमष्टप्रकारेण प्रभिद्य च कलामयम्।
वामं त्रयोदशविधैर्विभिद्य विततं प्रभुम् ॥ २१
अघोरमष्टधा कृत्वा कलारूपेण संस्थितम्।
पुरुषञ्च चतुर्द्धा वै विभज्य च कलामयम् ॥ २२
ईशानं पञ्चधा कृत्वा पञ्चमूर्त्त्या व्यवस्थितम्।
हंसहंसेति मन्त्रेण शिवभक्त्या समन्वितम् ॥ २३
ओङ्कारमात्रमोङ्कारमकारं समरूपिणम्।
आ ई ऊ ए तथा अम्बानुक्रमेणात्मरूपिणम् ॥ २४
प्रधानसहितं देवं प्रलयोत्पत्तिवर्ज्जितम्।
अणोरणीयांसमजं महतोऽपि महत्तमम् ॥ २५
ऊर्द्ध्वरेतसमीशानं विरूपाक्षमुमापतिम्।
सहस्रशिरसं देवं सहस्राक्षं सनातनम् ॥ २६
सहस्रहस्तचरणं नादान्तं नादविग्रहम्।
खद्योतसदृशाकारं चन्द्ररेखाकृतिं प्रभुम् ॥ २७
द्वादशान्ते भ्रुवोर्मध्ये तालुमध्ये गले क्रमात्।
हृद्देशेऽवस्थितं देवं स्वानन्दममृतं शिवम् ॥ २८
विद्युद्वलयसङ्काशं विद्युत्कोटिसमप्रभम्।
श्यामं रक्तं कलाकारं शक्तित्रयकृतासनम् ॥ २९
सदाशिवं स्मरेद्देवं तत्त्वत्रयसमन्वितम्।
विद्यामूर्त्तिमयं देवं पूजयेच्च यथाक्रमात् ॥ ३०
लोकपालांस्तथास्त्रेण पूर्व्वाद्यान् पूजयेत् पृथक्।
चरुञ्च विधिनासाद्य शिवाय विनिवेदयेत् ॥ ३१
अर्द्धं शिवाय दत्त्वैव शेषार्द्धेन तु होमयेत्।
अघोरेणाथ शिष्याय दापयेद्भोक्तुमुत्तमम् ॥ ३२
उपस्पृश्य शुचिर्भूत्वा पुरुषं विधिना यजेत्।
पञ्चगव्यं ततः प्राश्य ईशानेनाभिमन्त्रितम् ॥ ३३
वामदेवेन भस्माङ्गी भस्मनोद्धूलयेत् क्रमात्।
कर्णयोश्च जपेद्देवीं गायत्रीं रुद्रदेवताम् ॥ ३४
ससूत्रं सपिधानञ्च वस्त्रयुग्मेण वेष्टितम्।
तत्पूर्व्वं हेमरत्नौघैर्वासितं वै हिरण्मयम् ॥ ३५
कलशान् विन्यसेत् पञ्च पञ्चभिर्ब्राह्मणैस्ततः।
होमञ्च चरुणा कुर्य्याद्दुयथाविभवविस्तरम् ॥ ३६
शिष्यञ्च वासयेद्भक्तं दक्षिणे मण्डलस्य तु।
दर्भशय्यासमारूढं शिवध्यानपरायणम् ॥ ३७
अघोरेण यथान्यायमष्टोत्तरशतं पुनः।
घृतेन हुत्वा दुःस्वप्नं प्रभाते शोधयेन्मलम् ॥ ३८
एवञ्चोपोषितं शिष्यं स्नातं भूषितविग्रहम्।
नववस्त्रोत्तरीयञ्च सोष्णीषकृतमङ्गलम् ॥ ३९
दुकूलाद्येन वस्त्रेण नेत्रं बद्ध्वा प्रवेशयेत्।
सुवर्णपुष्पसंमिश्रं यथाविभवविस्तरम् ॥ ४०
ईशानेन च मन्त्रेण कुर्य्यात् पुष्पाञ्जलिं प्रभोः।
प्रदक्षिणत्रयं कृत्वा रुद्राध्यायेन वा पुनः ॥ ४१
केवलं प्रणवेनाथ शिवध्यानपरायणः।
ध्यात्वा तु देवदेवेशमीशाने संक्षिपेत् स्वयम् ॥ ४२
यस्मिन् मन्त्रे पतेत् पुष्पं तन्मन्त्रस्तस्य सिध्यति।
शिवाम्भसा तु संस्पृश्य अघोरेण च भस्मना ॥ ४३
शिष्यमूर्द्धनि विन्यस्य गन्धाद्यैः शिष्यमर्च्चयेत्।
वारुणं परमं श्रेष्ठं द्वारं वै सर्व्ववर्णिनाम् ॥ ४४
क्षत्रियाणां विशेषेण द्वारं वै पश्चिमं स्मृतम्।
नेत्रावरणमुन्मुच्य मण्डलं दर्शयेत् ततः ॥ ४५
कुशासने तु संस्थाप्य दक्षिणामूर्त्तिमास्थितः।
तत्त्वशुद्धिं ततः कुर्य्यात् पञ्चतत्त्वप्रकारतः ॥ ४६
निवृत्त्या रुद्रपर्य्यन्तमण्डमण्डोद्भवात्मज।
प्रतिष्ठया तदूर्द्ध्वञ्च यावदव्यक्तगोचरम् ॥ ४७
विश्वेश्वरान्तं वै विद्या-कलामात्रेण सुव्रत।
तदूर्द्ध्वमार्गं संशोध्य शिवभक्त्या शिवं नयेत् ॥ ४८
समर्च्चनाय तत्त्वस्य तस्य भोगेश्वरस्य वै।
तत्त्वत्रयप्रभेदेन चतुर्भिरुत वा तथा ॥ ४९
होमयेदङ्गमन्त्रेण शान्त्यतीतं सदाशिवम्।
सद्यादिभिस्तु शान्त्यन्तं चतुर्भिः कलया पृथक् ॥ ५०
शान्त्यतीतं मुनिश्रेष्ठ ईशानेनाथ वा पुनः।
प्रत्येकमष्टोत्तरशतं दिशाहोमन्तु कारयेत् ॥ ५१
ईशान्यां पञ्चमेनाथ प्रधानं परिगीयते।

अग्निराज्यचरून् लाजान् सर्षपांश्च यवांस्तिलान्॥५२
द्रव्याणि सप्त होतव्यं स्वाहान्तं प्रणवादिकम्।
तेषां पूर्णाहुतिर्विप्र ईशानेन विधीयते॥ ५३
अहंसेन यथान्यायं प्रणवाद्येन सुव्रत।
अघोरेण च मन्त्रेण प्रायश्चित्तं विधीयते॥ ५४
जयादिस्विष्टपर्यन्तमग्निकार्यं क्रमेण तु।
गुणसंख्याप्रकारेण प्रधानेन च योजयेत्॥ ५५
भूतानि ब्रह्मभिर्वापि मौनी बीजादिभिस्तथा।
अथ प्रधानमात्रेण प्राणापानौ नियम्य च॥ ५६
षष्ठेन भेदयेदात्मप्रणवान्तं कुलाकुलम्।
अन्योन्यमुपसंहृत्य ब्रह्माणं केशवं हरम्॥ ५७
रुद्रे रुद्रं तमीशाने शिवे देवं महेश्वरम्।
तस्मात् सृष्टिप्रकारेण भावयेद्भवनाशनम्॥ ५८
आप्याययानमसुं जीवं ताड़नं द्वारदर्शनम्।
दीपनं ग्रहणञ्चैव बन्धनं पूजया सह॥ ५९
अमृतीकरणञ्चैव कारयेद्विधिपूर्व्वकम्।
अष्टान्तं सद्यसंयुक्तं तृतीयेन समन्वितम्॥ ६०
षड़न्तं संहृतिः प्रोक्ता पञ्चभूतप्रकारतः।
अद्याद्य षष्ठसहितं शिवान्तं सफड़न्तकम्॥ ६१
ताड़नं कथितं द्वारं तत्त्वानामपि योगिनः।
प्रधानं सम्पुटीकृत्य तृतीयेन च दीपनम्॥ ६२
आद्येन सम्पुटीकृत्य प्रधानं ग्रहणं स्मृतम्।
प्रधानं प्रथमेनैव सम्पुटीकृत्य पूर्व्ववत्॥ ६३
बन्धनं परिपूर्णेन प्लावनञ्चामृतेन च।
शान्त्यतीता ततः शान्तिर्विद्या नाम कलामला॥६४
प्रतिष्ठा च निवृत्तिश्च कलासंक्रमणं स्मृता।
तत्त्ववर्णकलायुक्तं भुवनेन यथाक्रमम्॥ ६५
मन्त्रैः पादैः स्तवं कुर्य्याद्विशोध्य च यथाविधि।
आद्येन योनिबीजेन कल्पयित्वा च पूर्व्ववत्॥ ६६
पूजासम्प्रोक्षणं विद्धि ताड़नं हरणं तथा।
संहृतस्य च संयोगं विक्षेपञ्च यथाक्रमम्॥ ६७
अर्च्चना च तथा गर्भ-धारणं जननं पुनः।
अधिकारो भवेद्भानोर्लयश्चैव विशेषतः॥ ६८
उत्तमाद्यं तथान्त्येन योनिबीजेन सुव्रत।
उद्धारे प्रोक्षणे चैव ताड़ने च महामुने॥ ६९
अघोरेण फड़न्तेन संहृतिश्च न संशयः।
प्रतितत्त्वं क्रमो ह्येष योगमार्गेण सुव्रत॥ ७०
मुष्टिना चैव यावच्च तावत्कालं नयेत् क्रमात्।
विषुवेण तु योगेन निवृत्त्यादिशिवान्तिकम्॥ ७१
एकत्र समतां याति नान्यथा तु पृथक् पृथक्।
नासाग्रे द्वादशान्तेन षष्ठेन सह योगिनाम्॥ ७२
चन्तव्यमिति विप्रेन्द्र देवदेवस्य शासनम्।
हेम-राजत-ताम्राद्यैर्विधिना कल्पितेन च॥ ७३
सकूर्च्चेन सवस्त्रेण तन्तुना वेष्टितेन च।
तीर्थाम्बुपूरितेनैव रत्नगर्भेण सुव्रत॥ ७४
संहितामन्त्रितेनैव रुद्राध्यायस्तु तेन च।
सेचयेच्च ततः शिष्यं शिवभक्तञ्च धार्म्मिकम्॥ ७५
सोऽपि शिष्यः शिवस्याग्रे गुरोरग्रे च सादरः।
वह्नेश्च दीक्षां कुर्व्वीत दीक्षितश्च तथा चरेत्॥ ७६
वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा।
न त्वनभ्यर्च्य भुञ्जीयाद्भगवन्तं सदाशिवम्॥ ७७
एवं दीक्षा प्रकर्त्तव्या पूजा चैव यथाक्रमम्।
त्रिकालमेककालं वा पूजयेत् परमेश्वरम्॥ ७८
अग्निहोत्रञ्च वेदाश्च यज्ञाश्च बहुदक्षिणाः।
शिवलिङ्गार्च्चनस्यैते कलांशेनापि नो समाः॥ ७९
सदा यजति यज्ञेन सदा दानं प्रयच्छति।
सदा च वायुभक्षश्च सकृद्यो़ऽभ्यर्च्चयेत् शिवम्॥ ८०
एककालं द्विकालं वा त्रिकालं नित्यमेव वा।
येऽर्च्चयन्ति महादेवं ते रुद्रा नात्र संशयः॥ ८१
नारुद्रस्तु स्पृशेद्रुद्रं नारुद्रो रुद्रमर्च्चयेत्।
नारुद्रः कीर्त्तयेद्रुद्रं नारुद्रो रुद्रमाप्नुयात्॥ ८२
एवं संक्षेपतः प्रोक्तो ह्यधिकारिविधिक्रमः।
शिवार्च्चनार्थं धर्म्मार्थ-काम-मोक्षफलप्रदः॥ ८३

इति श्रीलैङ्गे महापुराणे उपरिभागे दीक्षा-
विधिर्नामैकविंशोऽध्यायः॥ २१॥

---

## द्वाविंशोऽध्यायः।

शैलादिरुवाच।

स्नानयागादिकर्म्माणि कृत्वा वै भास्करस्य च।
शिवस्नानं ततः कुर्य्याद्भस्मस्नानं शिवार्च्चनम्॥ १
षष्ठेन मृदमादाय भक्त्या भूमौ न्यसेन्मृदम्।
द्वितीयेन तथाभ्युक्ष्य तृतीयेन च शोधयेत्॥ २
चतुर्थेनैव विभजेन्मलमेकेन शोधयेत्।

[कृ]त्वा षष्ठेन तच्छेषं मृदं हस्तगतां पुनः ॥ ३
[त्रि]धा विभज्य सर्व्वञ्च चतुर्भिर्मध्यमं पुनः।
[ष]ष्ठेन सप्त वाराणि वामं मूलेन चालभेत्।
[स]प्तवारञ्च षष्ठेन दिशां बन्धः प्रकीर्त्तितः ॥ ४
[मू]लेन तीर्थं सव्येन शरीरमनुलिप्य च।
[कृ]त्वा सर्व्वैः स्मरन् भानुमभिषेकं समाचरेत् ॥ ५
[प्र]क्षेप्य पर्णपुटकैः पालाशेन दलेन वा।
[सौ]रैरेभिश्च विविधैः सर्व्वसिद्धिकरैः शुभैः ॥ ६
[सौ]राणि च प्रवक्ष्यामि वाष्कलाद्यानि सुव्रत।
[म]न्त्राणि सर्व्वदेवेषु सारभूतानि सर्व्वतः ॥ ७
ओँ भूः ओँ भुवः ओँ स्वः ओँ महः ओँ जनः
[ओँ] तपः ओँ सत्यं ओँ ऋतं ओँ ब्रह्म।
[न]वाक्षरमयं मन्त्रं वाष्कलं परिकीर्त्तितम्।
[न] क्षरन्तीति लोकानि ऋतमक्षरमुच्यते।
[प]रममक्षरमित्युक्तं प्रणवादिनमोऽन्तकम् ॥ ८
ओँ भूर्भुवः स्वः
तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात् ओँ ॥
नमः सूर्य्याय खखोल्काय नमः ॥
[मू]लमन्त्रमिमं प्रोक्तं भास्करस्य महात्मनः।
[नव]ाक्षरेण दीप्तास्यं मूलमन्त्रेण भास्करम् ॥ ९
[पू]जयेदङ्गमन्त्राणि कथयामि यथाक्रमम्।
[वे]दादिभिः प्रभूताद्यं प्रणवेन च मध्यमम् ॥ १०
[ओँ] भूः ब्रह्महृदयाय ओँ भुवः विष्णुशिरसे ओँ
[स्व]ः रुद्रशिखायै ओँ भूर्भुवः स्वः ज्वालामालिनी-
[शि]खाय ओँ महः महेश्वराय कवचाय ओँ जनः
[शि]वाय नेत्रेभ्यः ओँ तपः तापकाय अस्त्राय फट्।
[मन्त्र]ाणि कथितान्येवं सौराणि विविधानि च।
[ए]तैः शृङ्गादिभिः पात्रैः स्वात्मानमभिषिञ्चयेत् ॥ ११
[ता]म्रकुम्भेण वा विप्रः क्षत्रियो वैश्य एव च।
[प]द्मेन सपुष्पेण मन्त्रैः सर्व्वैः समाहितः ॥ १२
[शु]क्लवस्त्रपरीधानः स्वाचामेद्विधिपूर्व्वकम्।
[सू]र्य्यश्चेति दिवा रात्रौ चाग्निश्चेति द्विजोत्तम ॥ १३
[आ]पः पुनन्तु मध्याह्ने मन्त्राचमनमुच्यते।
[ष]ष्ठेन शुद्धिं कृत्वैवं जपेदाद्यमनुत्तमम् ॥ १४
[शी]षडन्तं तथा मूलं नवाक्षरमनुत्तमम्।
[त]र्ज्जन्याख्यां तथाङ्गुष्ठमध्यमानामिकां न्यसेत् ॥ १५

तले च तर्ज्जन्यङ्गुष्ठं मुष्टिभागानि विन्यसेत्।
नवाक्षरमयं देहं कृत्वाङ्गैरपि पावितम् ॥ १६
सूर्य्योऽहमिति सञ्चिन्त्य मन्त्रैरेतैर्यथाक्रमम्।
वामहस्तगतैरद्भिर्गन्धसिद्धार्थकान्वितैः ॥ १७
कुशपुञ्जेन चाभ्युक्ष्य मूलाग्रैरष्टधा स्थितैः।
आपोहिष्ठादिभिश्चैव शेषमाघ्राय वै जलम् ॥ १८
वामनासापुटेनैव देहे सम्भावयेच्छिवम्।
अर्घ्यमादाय देहस्थं सव्यनासापुटेन च ॥ १९
कृष्णवर्णेन वाह्यस्थं भावयेच्च शिलागतम्।
तर्पयेत् सर्व्वदेवेभ्य ऋषिभ्यश्च विशेषतः ॥ २०
भूतेभ्यश्च पितृभ्यश्च विधिनार्घ्यञ्च दापयेत्।
व्यापिनीञ्च परां ज्योत्स्नां सन्ध्यां सम्यगुपासयेत् ॥ २१
प्रातर्मध्याह्नसायाह्ने अर्घ्यञ्चैव निवेदयेत्।
रक्तचन्दनतोयेन हस्तमात्रेण मण्डलम् ॥ २२
सुवृत्तं कल्पयेद्भूमौ प्रार्थयेत द्विजोत्तमाः।
प्राङ्मुखस्ताम्रपात्रञ्च सगन्धं प्रस्थपूरितम् ॥ २३
पूरयेद्गन्धतोयेन रक्तचन्दनकेन च।
रक्तपुष्पैस्तिलैश्चैव कुशाक्षतसमन्वितैः ॥ २४
दूर्व्वापामार्गगव्येण केवलेन घृतेन च।
आपूर्य्य मूलमन्त्रेण नवाक्षरमयेण च ॥ २५
जानुभ्यां धरणीं गत्वा देवदेवं नमस्य च।
कृत्वा शिरसि तत् पात्रमर्घ्यं मूलेन दापयेत् ॥ २६
अश्वमेधायुतं कृत्वा यत् फलं परिकीर्त्तितम्।
तत् फलं लभते दत्त्वा सौरार्घ्यं सर्व्वसम्मतम् ॥ २७
दत्त्वैवार्घ्यं यजेद्भक्त्या देवदेवं त्रियम्बकम्।
अथवा भास्करञ्चेष्टा आग्नेयं स्नानमाचरेत् ॥ २८
पूर्व्ववद्धे शिवस्नानं मन्त्रमात्रेण भेदितम्।
दन्तधावनपूर्व्वञ्च स्नानं सौरञ्च शाङ्करम् ॥ २९
विन्निर्म्मं वसनञ्चैव शुद्धं तीर्थं समर्च्चयेत्।
बद्धा पद्मासनं तीर्थं तथा तीर्थं समर्च्चयेत् ॥ ३०
तीर्थं संगृह्य विधिना पूजास्थानं प्रविश्य च।
मार्ज्जनार्घ्यपवित्रेण तदाक्रम्य च पादुकम् ॥ ३१
पूर्व्ववत् करविन्यासं देहविन्यासमाचरेत्।
अघ्यस्य सादनञ्चैव समासात् परिकीर्त्तितम् ॥ ३२
बद्धा पद्मासनं योगी प्राणायामं समभ्यसेत्।
रक्तपुष्पाणि संगृह्य कमलाद्यानि भावयेत् ॥ ३३
आत्मनो दक्षिणे स्थाप्य जलभाण्डञ्च वामतः।

तान्मपात्राणि सौराणि सर्व्वकामार्थसिद्धये ॥ ३४
अर्घ्यपात्रं समादाय प्रक्षाल्य च यथाविधि ।
पूर्व्वोक्तेनाम्बुना सार्द्धं जलभाण्डे तथैव च ॥ ३५
अस्त्रोदकेन चैवार्घ्यमर्घ्यद्रव्यसमन्वितम् ।
संहितामन्त्रितं कृत्वा सम्पूज्य प्रथमेन च ॥ ३६
तुरीयेणावगुण्ठ्यैव स्थापयेदात्मनोपरि ।
पाद्यमाचमनीयञ्च गन्धपुष्पसमन्वितम् ॥ ३७
अम्भसा शोधिते पात्रे स्थापयेत् पूर्व्ववत् पृथक् ।
संहिताञ्चैव विन्यस्य कवचेनावगुण्ठ्य च ॥ ३८
अर्घ्याम्बुना समभ्युक्ष्य द्रव्याणि च विशेषतः ।
आदित्यञ्च जपेद्देवं सर्व्वदेवनमस्कृतम् ॥ ३९
आदित्यो वै तत्र जर्ज्जो बलं यशो विवर्द्धति ।
इत्यादिना नमस्कृत्य कल्पयेदासनं प्रभोः ॥ ४०
प्रभूतं विमलं सारमाराध्यं परमं सुखम् ।
आग्नेय्यादिषु कोणेषु मध्यमान्तं क्रमात् न्यसेत् ॥ ४१
अङ्गं प्रविन्यसेच्चैव वीजमङ्कुरमेव च ।
नालं सुषिरसंयुक्तं सूत्रकण्टकसंयुतम् ॥ ४२
दलं दलाग्रं सुश्वेतं हेमाभं रक्तमेव च ।
कर्णिकाकेशरोपेतं दीप्ताद्यैः शक्तिभिर्वृतम् ॥ ४३
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला क्रमात् ।
अघोरा विकृता चैव दीप्ताद्याश्चाष्टशक्तयः ॥ ४४
भास्कराभिमुखाः सर्व्वाः कृताञ्जलिपुटाः शुभाः ।
अथवा पद्महस्ता वा सर्व्वाभरणभूषिताः ॥ ४५
मध्यतो वरदां देवीं स्थापयेत् सर्व्वतोमुखीम् ।
आवाहयेत् ततो देवीं भास्करं परमेश्वरम् ॥ ४६
नवाक्षरेण मन्त्रेण वाष्कलोक्तेन भास्करम् ।
आवाहनञ्च सान्निध्यमनेनैव विधीयते ॥ ४७
मुद्रा च पद्ममुद्राख्या भास्करस्य महात्मनः ।
मूलेनार्घ्यं ततो दद्यात् पाद्यमाचमनं पृथक् ॥ ४८
पुनरर्घ्यप्रदानेन वाष्कलेन यथाविधि ।
रक्तपद्मानि पुष्पाणि रक्तचन्दनमेव च ॥ ४९
दीपधूपादिनैवेद्यं मुखवासादिरेव च ।
ताम्बूलवर्त्तिदीपाद्यं वाष्कलेन विधीयते ॥ ५०
आग्नेय्याञ्च तथैशान्यां नैरृत्यां वायुगोचरे ।
पूर्व्वस्यां पश्चिमे चैव षट्प्रकारं विधीयते ॥ ५१
नेत्रान्तं विधिनाभ्यर्च्य प्रणवादि-नमोऽन्तकम् ।
कर्णिकायां प्रविन्यस्य रूपकध्यानमाचरेत् ॥ ५२
सर्व्वं विद्युत्प्रभाः शान्ता रौद्रमस्त्रं प्रकीर्त्तितम् ।
दंष्ट्राकरालवदनं त्वष्टमूर्त्तिं भयङ्करम् ॥ ५३
वरदं दक्षिणं हस्तं वामं पद्मविभूषितम् ।
सर्व्वाभरणसम्पन्ना रक्तास्रगनुलेपनाः ॥ ५४
रक्ताम्बरधराः सर्व्वा मूर्त्तयस्तस्य संस्थिताः ।
समण्डलो महादेवः सिन्दूरारुणविग्रहः ॥ ५५
पद्महस्तोऽमृतास्यश्च द्विहस्तनयनः प्रभुः ।
रक्ताभरणसंयुक्तो रक्तास्रगनुलेपनः ॥ ५६
इत्थं रूपधरं ध्यायेद्भास्करं भुवनेश्वरम् ।
पद्मवाह्ये शुभश्चात्र मण्डलेषु समन्ततः ॥ ५७
सोममङ्गारकञ्चैव बुधं बुद्धिमतां वरम् ।
बृहस्पतिं महद्बुद्धिं सुरपुत्रञ्च भार्गवम् ॥ ५८
शनैश्चरं तथा राहुं केतुं धूम्रं प्रकीर्त्तितम् ।
सर्व्वे द्विनेत्रा द्विभुजा राहुश्चोर्द्ध्वशरीरधृक् ॥ ५९
विवृत्तास्योऽञ्जलिं कृत्वा भ्रुकुटीकुटिलेक्षणः ।
शनैश्चरश्च दंष्ट्रास्यो वरदाभयहस्तधृक् ॥ ६०
स्वैः स्वैर्भावैः स्वनाम्ना च प्रणवादि-नमोऽन्तकम् ।
पूजनीयाः प्रयत्नेन धर्म्मकामार्थसिद्धये ॥ ६१
सप्त सप्त गणांश्चैव वहिर्देवस्य पूजयेत् ।
ऋषयो देवगन्धर्व्वाः पन्नगाप्सरसां गणाः ॥ ६२
ग्रामण्यो यातुधानाश्च तथा यक्षाश्च मुख्यतः ।
सप्ताश्वान् पूजयेदग्रे सप्तच्छन्दोमयान् विभोः ॥ ६३
बालखिल्यगणाञ्चैव निर्म्माल्यग्रहणं विभोः ।
पूजयेदासनं मूर्त्तेर्देवतामपि पूजयेत् ॥ ६४
अर्द्धञ्च दापयेत् तेषां पृथगेव विधानतः ।
आवाहने च पूजान्ते तेषामुद्वासने तथा ॥ ६५
सहस्रं वा तदर्द्धं वा शतमष्टोत्तरन्तु वा ।
वाष्कलञ्च जपेदग्रे दशांशेन च योजयेत् ॥ ६६
कुण्डञ्च पश्चिमे कुर्य्याद्वर्त्तुलञ्चैव मेखलम् ।
चतुरङ्गुलमानेन चोत्सेधाद्विस्तरादपि ॥ ६७
एकहस्तप्रमाणेन नित्ये नैमित्तिके तथा ।
कृत्वाश्वत्थदलाकारं नाभिकुण्डे दशाङ्गुलम् ॥ ६८
तदर्द्धेन पुरस्तात् तु गजोष्ठसदृशं स्मृतम् ।
गलमेकाङ्गुलञ्चैव शेषं द्विगुणविस्तरम् ॥ ६९
तत्प्रमाणेन कुण्डस्य त्यक्त्वा कुर्व्वीत मेखलाम् ।
यत्नेन साधयित्वैव पश्चाद्धोमञ्च कारयेत् ॥ ७०
षष्ठेनोल्लेखनं कुर्य्यात् प्रोक्षयेद्वारिणा पुनः ।

आसनं कल्पयेत्मध्ये प्रथमेन समाहितः ॥ ७१
प्रभावतीं ततः शक्तिमाद्येनैव तु विन्यसेत्।
वाष्कलेनव सम्पूज्य गन्धपुष्पादिभिः क्रमात् ॥ ७२
वाष्कलेनव मन्त्रेण क्रियां प्रति यजेत् पृथक्।
मूलमन्त्रेण विधिना पश्चात् पूर्णाहुतिर्भवेत् ॥ ७३
क्रमादेवं विधानेन सूर्य्याग्निर्जनितो भवेत्।
पूर्व्वोक्तेन विधानेन प्रागुक्तं कमलं न्यसेत् ॥ ७४
मुखोपरि समभ्यर्च्य पूर्व्ववद्भास्करं प्रभुम्।
दशैवाहुतयो देया वाष्कलेन महामुने ॥ ७५
अङ्गानाञ्च तथैकैकं संहिताभिः पृथक् पुनः।
जयादिस्विष्टपर्य्यन्तमिध्मप्रक्षेपमेव च ॥ ७६
सामान्यं सर्व्वमार्गेषु पारम्पर्य्यक्रमेण च।
निवेद्य देवदेवाय भास्करायामितात्मने ॥ ७७
पूजाहोमादिकं सर्व्वं दत्त्वार्घ्यञ्च प्रदक्षिणम्।
अङ्गैः सम्पूज्य संक्षिप्य हृद्युद्वास्य नमस्य च ॥ ७८
शिवपूजां ततः कुर्य्याद्धर्म्मकामार्थसिद्धये।
एवं संक्षेपतः प्रोक्तं यजनं भास्करस्य च ॥ ७९
यः सकृद्वा यजेद्देवं देवदेवं जगद्गुरुम्।
भास्करं परमात्मानं स याति परमां गतिम् ॥ ८०
सर्व्वपापविनिर्म्मुक्तः सर्व्वपापविवर्ज्जितः।
सर्व्वैश्वर्य्यसमोपेतस्तेजसाप्रतिमश्च सः ॥ ८१
पुत्रपौत्रादिभिश्चैव बान्धवैश्च समन्ततः।
भुक्त्वैव विपुलान् भोगानिहैव धनधान्यवान् ॥ ८२
यानवाहनसम्पन्नो भूषणैर्विविधैरपि।
कालं गतोऽपि सूर्य्येण मोदते कालमक्षयम् ॥ ८३
पुनस्तस्मादिहागत्य राजा भवति धार्म्मिकः।
वेदवेदाङ्गसम्पन्नो ब्राह्मणो वाल्न जायते ॥ ८४
पुनः प्राग्वासनायोगाद्धार्म्मिको वेदपारगः।
सूर्य्यमेव समभ्यर्च्य सूर्य्यसायुज्यमाप्नुयात् ॥ ८५
इति श्रीलैङ्गे उपरिभागे द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः।

शैलादिरुवाच।

अथ ते सम्प्रवक्ष्यामि शिवार्च्चनमनुत्तमम्।
त्रिसन्ध्यमर्च्चयेदीशमग्निकार्य्यञ्च शक्तितः ॥ १
शिवस्नानं पुरा कृत्वा तत्त्वशुद्धिञ्च पूर्व्ववत्।
पुष्पहस्तः प्रविश्याथ पूजास्थानं समाहितः ॥ २
प्राणायामत्रयं कृत्वा दहनाप्लावनानि च।
गन्धादिवासितकरो महामुद्रां प्रविन्यसेत् ॥ ३
विद्यानेन तनुं कृत्वा ब्रह्माङ्गैरपि यत्नतः।
अव्यक्त-बुद्ध्यहङ्कार-तन्मात्रसम्भवां तनुम् ॥ ४
शिवामृतेन सम्भूतं शिवस्य च यथातथम्।
अधोदृष्ट्या वितस्त्यान्तु नाभ्यामुपरि तिष्ठति ॥ ५
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्।
हृत्पद्मकर्णिकायान्तु देवं साक्षात् सदाशिवम् ॥ ६
पञ्चवक्त्रं दशभुजं सर्व्वाभरणभूषितम्।
प्रतिवक्त्रं त्रिनेत्रञ्च शशाङ्ककृतशेखरम् ॥ ७
बद्धपद्मासनासीनं शुद्धस्फटिकसन्निभम्।
ऊर्द्धं वक्त्रं सितं ध्यायेत् पूर्व्वं कुङ्कुमसन्निभम् ॥ ८
नीलाभं दक्षिणं वक्त्रमतिरक्तं तथोत्तरम्।
गोक्षीरधवलं दिव्यं पश्चिमं परमेष्ठिनः ॥ ९
शूलं परशुखड्गञ्च वज्रं शक्तिञ्च दक्षिणे।
वामे पाशाङ्कुशं घण्टां नागं नाराचमुत्तमम् ॥ १०
वरदाभयहस्तं वा शेषं पूर्व्ववदेव तु।
सर्व्वाभरणसंयुक्तं चित्राम्बरधरं शिवम् ॥ ११
ब्रह्माङ्गविग्रहं देवं सर्व्वदेवोत्तमोत्तमम्।
पूजयेत् सर्व्वभावेन ब्रह्माङ्गैर्ब्रह्मणः पतिम् ॥ १२
उक्तानि पञ्चब्रह्माणि शिवाङ्गानि शृणुष्व मे।
शक्तिभूतानि च तथा हृदयादीनि सुव्रत ॥ १३
ओँ ईशानः सर्व्वविद्यानां हृदयाय शक्तिबीजाय नमः। ओँ ईश्वरः सर्व्वभूतानाममृताय शिरसे नमः ओँ ब्रह्माधिपतये कालाग्निरूपाय शिखायै नमः। ओँ ब्रह्मणोऽधिपतये कालचण्डमारुताय कवचाय नमः। ओँ ब्रह्मणे बृंहणाय ज्ञान-मूर्त्तये नेत्राय नमः। ओँ शिवाय सदाशिवाय पाशुपतास्त्राय अप्रतिहताय फट् फट्। ओँ सद्योजाताय भवेनातिभवे भवस्व मां भवोद्भवाय शिव-मूर्त्तये नमः। ओँ हंसशिखाय विद्यादेहाय आत्मस्वरूपाय परापराय शिवाय शिवतमाय नमः ॥ १
कथितानि शिवाङ्गानि मूर्त्तिविद्या च तस्य वै।
ब्रह्माङ्गमूर्त्तिं विद्याङ्गसहितां शिवशासने ॥ १५
सौराणि च प्रवक्ष्यामि वाष्कलाद्यानि सुव्रत।
अङ्गानि सर्व्ववेदेषु सारभूतानि सुव्रत ॥ १६

ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः
ओं तपः ओं सत्यं ओं ऋतं ओं ब्रह्म।
नवाक्षरमयं मन्त्रं वाष्कलं परिकीर्त्तितम्।
न क्षरतीति लोकेऽस्मिन् ततो ह्यक्षरमुच्यते।
सत्यमक्षरमित्युक्तं प्रणवादिनमोऽन्तकम्॥ १७

ओं भूर्भुवः स्वः
तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो योनः प्रचोदयात् ओं।
नमः सूर्य्याय खखोल्काय नमः।

मूलमन्त्रमिति प्रोक्तं भास्करस्य महात्मनः।
नवाक्षरेण दीप्ताद्या मूलमन्त्रेण भास्करम्॥ १८
पूजयेदङ्गमन्त्राणि कथयामि समासतः।
वेदादिभिः प्रभूताद्यं प्रणवेन तु मध्यमम्॥ १९

ओं भूर्ब्रह्मणे हृदयाय नमः। ओं भुवः विष्णवे शिरसे नमः। ओं स्वः रुद्राय शिखायै नमः। ओं भूर्भुवः स्वः ज्वालामालिन्यै देवाय नमः। ओं महः महेश्वराय कवचाय नमः। ओं जनः शिवाय नेत्रेभ्यो नमः। ओं तपस्तापनाय अस्त्राय नमः।

एवं प्रसङ्गादेवेह सौराणि कथितानि ह।
शैवानि च समासेन न्यासयोगेन सुव्रत॥ २०
इत्थं मन्त्रमयं देवं पूजयेद्धृदयाम्बुजे।
नाभौ होमन्तु कर्त्तव्यं जनयित्वा यथाक्रमम्॥ २१
मनसा सर्व्वकार्य्याणि शिवाग्नौ देवमीश्वरम्।
पञ्चब्रह्माङ्गसम्भूतं शिवमूर्त्तिं सदाशिवम्॥ २२
रक्तपद्मासनासीनं सकलीकृत्य यत्नतः।
मूलेन मूर्त्तिमन्त्रेण ब्रह्माङ्गाद्यैस्तु सुव्रत॥ २३
समिदाज्याहुतीर्हुत्वा मनसा चन्द्रमण्डलात्।
चन्द्रस्थानात् समुत्पन्नां पूर्णधारामनुस्मरेत्॥ २४
पूर्णाहुतिविधानेन ज्ञानिनां शिवशासने।
शिवं वक्त्रगतं ध्यायेत् तेजोमात्रञ्च शाङ्करम्॥ २५
ललाटे देवदेवेशं भ्रूमध्ये वा स्मरेत् पुनः।
यच्च हृत्कमले सर्व्वं समाप्य विधिविस्तरम्॥ २६
शुद्धदीपशिखाकारं भावयेद्भवनाशनम्।
लिङ्गे च पूजयेद्देवं स्थण्डिले वा सदाशिवम्॥ २७

इति श्रीलैङ्गे महापुराणे उपरिभागे
त्रयोविंशोऽध्यायः॥ २३॥

---

## चतुर्व्विंशोऽध्यायः।

शैलादिरुवाच।

व्याख्यां पूजाविधानस्य प्रवक्ष्यामि समासतः।
शिवशास्त्रोक्तमार्गेण शिवेन कथितं पुरा॥ १

अथोभौ चन्दनचर्च्चितौ हस्तौ वौषडन्तेनाद्यञ्जलिं कृत्वा मूर्त्तिविद्याशिवादीनि जप्त्वा अङ्गुष्ठादि-कनिष्ठिकान्त ईशानाद्यं- कनिष्ठिकादि-मध्यमान्तं हृदयादितृतीयान्ततुरीयमङ्गुष्ठेनानामिकया पञ्चमं तलद्वयेन षष्ठं तर्ज्जन्यङ्गुष्ठाभ्यां नाराचास्त्रप्रयोगेण पुनरपि मूलं जप्त्वा तुरीयेणावगुण्ठ्य शिवहस्तामित्युच्यते॥ २

शिवार्च्चना तेन हस्तेन कार्य्या॥ ३

तत्त्वगतमात्मानं व्यवस्थाप्य तत्त्वशुद्धिं पूर्व्ववत्॥ ४
क्ष्माम्भोऽग्निवायुव्योमान्तं पञ्चचतुःशुद्धकोद्धन्ते
धारासहितेन व्यवस्थाप्य तत्त्वशुद्धिं पूर्व्वं कुर्य्यात्॥ ५

तत्त्वशुद्धिः षष्ठेन सद्येन तृतीयेन
फडन्ताद्धराशुद्धिः॥ ६
षष्ठसहितेन सद्येन तृतीयेन
फडन्तेन वारितत्त्वशुद्धिः॥ ७
वाह्नेयतृतीयेन फडन्तेनाग्निशुद्धिः॥ ८
वायव्यचतुर्थेन षष्ठसहितेन फडन्तेन वायुशुद्धिः॥ ९
षष्ठेन ससद्येन तृतीयेन फडन्तेनाकाशशुद्धिः॥ १०

उपसंहृत्यैवं सद्यः षष्ठेन तृतीयेन मूलेन फडन्तेन ताडनं तृतीयेन सम्पुटीकृत्वा ग्रहणं मूलमेव योनिवीजेन सम्पुटीकृत्वा बन्धनं बन्धः॥ ११

एवं शान्तातीतादिनिवृत्तिपर्य्यन्तं पूर्व्ववत् कृत्वा प्रणवेन तत्त्वत्रयकमनुध्यात्वा आत्मानं दीपशिखाकारं पुर्य्यष्टकसहितं त्रयातीतं शक्तिक्षोभेणामृतधारां सुषम्णायां ध्यात्वा॥ १२

शान्त्यतीतादिनिवृत्तिपर्य्यन्तानश्चान्तर्नादविन्दु अकार-उकार-मकारान्तं शिवं सदाशिवं रुद्रविष्णु-ब्रह्मान्तं सृष्टिक्रमेणामृतीकरणं ब्रह्मन्यासं कृत्वा पञ्चवक्त्रेषु पञ्चदशनयनं विन्यस्य मूलेन पादादिकेशान्तं महामुद्रामपि बद्ध्वा शिवोऽहमिति ध्यात्वा शक्त्यादीनि विन्यस्य हृदि शक्त्या वीजाङ्कुरानन्तरात् ससुषिरसूत्र-कण्टक-पत्र-केसर-धर्म्मः ज्ञानः

वैराग्यैश्वर्य्य-सूर्य्यसोमाग्निवामा ज्येष्ठा रौद्री-काली कलविकरणी बलविकरणी बलप्रमथनी सर्व्वभूतदमनी केशरेषु कर्णिकायां मनोन्मनीमपि-ध्यात्वा ॥ १३

आसनं परिकल्प्यैवं सर्व्वोपचारसहितं वह्नि-योगोपचारेणान्तःकरणं कृत्वा नाभौ वह्निकुण्डे पूर्व्ववदासनं परिकल्प्य सदाशिवं ध्यात्वा विन्दुतो-ऽमृतधारां शिवमण्डले निपतितां ध्यात्वा ललाटे महेश्वरं दीपशिखाकारं ध्यात्वा आत्म-शुद्धिरित्थं प्राणापानौ संयम्य सुषुम्णया वायुं व्यव-स्थाप्य षष्ठेन तालुमुद्रां कृत्वा दिग्बन्धं कृत्वा षष्ठेन स्थानशुद्धिर्वस्त्रादिपूतान्तरर्घ्यपात्रादिषु प्रणवेन तत्त्वत्रयं विन्यस्य तदुपरि विन्दुं ध्यात्वा लब्धसा विपूर्य्य द्रव्याणि च विधाय अमृतप्लावनं कृत्वा पाद्यपात्रादिषु तेषामप्यवदासनं परिकल्प्य संहित-याभिमन्त्र्याद्येनाभ्यर्च्य द्वितीयेनामृतीकृत्वा तृती-येन विशोध्य चतुर्थेनावगुण्ठ्य पञ्चमेनावलोक्य षष्ठेन रक्षां विधाय चतुर्थेन कुशपुञ्जेनार्घ्याम्भसा-ऽभ्युक्ष्य आत्मानमपि द्रव्याणि पुनरर्घ्याम्भसाभ्युक्ष्य सपुष्पेण सर्व्वद्रव्याणि पृथक् पृथक् शोधयेत् ॥ १४

सद्येन गन्धं वामेन वस्त्रम् अघोरेण आभरणं पुरुषेण नैवेद्यम् ईशानेन पुष्पाणि अथाभ्यमन्त्रयेत्॥१५

शिवगायत्र्या शेषं प्रोक्षयेत् ॥ १६

पञ्चामृत-पञ्चगव्यादीनि ब्रह्माङ्गमूलाद्यैरभि-मन्त्रयेत् ॥ १७

पृथक् पृथक् मूलेनार्घ्यं धूपं दत्त्वाचमनीयञ्च तेषामपि धेनुमुद्राञ्च दर्शयित्वा कवचेनावगुण्ठ्या-स्त्रेण रक्षाञ्च विधाय द्रव्यशुद्धिं कुर्य्यात् ॥ १८

अर्घ्योदकमग्रे कृत्वा गन्धमादायास्त्रेण विशोध्य मूलाप्रभृतिकरणं रक्षान्तं कृत्वैवं द्रव्यशुद्धिं पूजा-समर्पणान्तं मौनमास्थाय पुष्पाञ्जलिं दत्त्वा सर्व्वमन्त्राणि प्रणवादिर्नमोऽन्तं जप्त्वा पुष्पाञ्जलिं त्यजेन्मन्त्रशुद्धिरित्थम् ॥ १९

अग्रे सामान्यार्घ्यपात्रं पयसापूर्य्य गन्धपुष्पादिना संहितयाभिमन्त्र्य धेनुमुद्रां दत्त्वा कवचेनाव-गुण्ठ्यास्त्रेण रक्षयेत् पूजां पर्य्युषितां गायत्र्या सम्भ्यर्च्य सामान्यार्घ्यं दत्त्वा गन्धपुष्पधूपाचमनीयं स्वधान्तं नमोऽन्तं वा दत्त्वा ब्रह्मभिः पृथक् पृथक् पुष्पाञ्जलिं दत्त्वा फड़न्तास्त्रेण निर्म्माल्यं व्यपोह्य ईशान्यां चण्डमभ्यर्च्यासनमूर्त्तिं चण्डं सामान्या-स्त्रेण लिङ्गपीठं शिवं पाशुपतास्त्रेण विशोध्य मूर्द्ध्नि पुष्पं निधाय पूजयेल्लिङ्गशुद्धिः ॥ २०

आसनं कूर्म्मशिलायां वीजाङ्कुरं तदुपरि ब्रह्म-शिलायामनन्तनालसुषिरे सूत्र-पत्र-कण्टक-कर्णिका-केसर-धर्म्म-ज्ञान-वैराग्यैश्वर्य्य-सोमाग्नि-केसरशक्तिं मनोन्मनीं कर्णिकायां मनोन्मनेना-नन्तासनायेति समासेनासनं परिकल्प्य तदुपरि निवृत्त्यादिकलामयं षड्विंशसहितं कर्म्मकलाङ्ग-देहं सदाशिवं भावयेत् ॥ २१

उभाभ्यां सुपुष्पाभ्यां हस्ताभ्यामङ्गुष्ठेन पुष्प-मापीड्य आवाहनमुद्रया शनैः शनैर्हृदयादि-मस्तकान्तमारोप्य हृदा सह मूलं प्लुतमुच्चार्य्य सद्येन बिन्दुस्थानादभ्यधिकं दीपशिखाकारं सर्व्वतोमुखहस्तं व्याप्यव्यापकमावाह्य स्थापयेत्॥२२

पूर्व्वहृदा शिवशक्तिसमवायेन परमीकरण-ममृतीकरणं हृदयादिमूलेन सद्येनावाहनं हृदा मूलोपरि वामेन स्थापनं हृदा मूलोपरि अघो-रेण सन्निरोधं हृदा मूलोपरि पुरुषेण सान्निध्यं हृदा मूलेन ईशानेन पूजयेदिति उपदेशः ॥ २३

पञ्चमन्त्रसहितेन यथा पूर्व्वमात्मनो देह-निर्म्माणं तथा देवस्यापि वक्ष्येवसुपदेशः ॥ २४

रूपकध्यानं कृत्वा मूलेन नमस्कारान्तमापाद्य स्वधान्तमाचमनीयं सर्व्वं नमस्कारान्तं वा स्वाहा-कारान्तमर्घ्यं मूलेन पुष्पाञ्जलिं वौषड़न्तेन सर्व्वं नमस्कारान्तं हृदा वा ईशानेन वा रुद्र-गायत्र्या ओँ नमः शिवायेति मूलमन्त्रेण वा पूजयेत् ॥ २५

पुष्पाञ्जलिं दत्त्वा पुनर्धूपाचमनीयं षष्ठेन पुष्पा-वसरणं विसर्ज्जनं मन्त्रोदकेन मूलेन स्नाप्य सर्व्व-द्रव्याभिषिक्तमीशानेन प्रतिद्रव्यमष्टपुष्पं दत्त्वैवमर्घ्यञ्च गन्धपुष्पधूपाचमनीयं फड़न्तास्त्रेण पूजापसरणं शुद्धोदकेन मूलेन स्नाप्य पिष्टामलकादिभिः ॥ २६

उष्णोदकेन हरिद्राद्येन लिङ्गमूर्त्तिं पीठसहितां विशोध्य गन्धोदक-क्षीरक्षोदक-मन्त्रोदकेन रुद्रा-

ध्यायं पठमानो नीलरुद्र-त्वरितरुद्र-पञ्चब्रह्मादिभि-र्नमः शिवायेति स्नापयेत् ॥ २७

मूर्द्ध्नि पुष्पं निधायैवं न शून्यं लिङ्गमस्तकं कुर्य्यादत्र श्लोकः ॥ २८

यस्य राष्ट्रे तु लिङ्गस्य मस्तकं शून्यलक्षणम् ।
तस्यालक्ष्मीर्महारोगो दुर्भिक्षं वाहनक्षयः ॥ २९
तस्मात् परिहरेद्राजा धर्म्मकामार्थमुक्तये ।
शून्ये लिङ्गे स्वयं राजा राष्ट्रञ्चैव प्रणश्यति ॥ ३०

एवं स्नाप्यार्घ्यञ्च दत्त्वा संमृज्य वस्त्रेण गन्ध-पुष्पवस्त्रालङ्कारादींश्च मूलेन दद्यात् ॥ ३१

धूपाचमनीयदीपनैवेद्यादींश्च मूलेन । प्रधाने-नोपरि पूजनं पवित्रीकरणमित्युक्तम् ॥ ३२

आरार्त्तिदीपादींश्चैव धेनुमुद्रामुद्रितानि कवचे-नावगुण्ठितानि षष्ठेन रक्षितानि लिङ्गोपरि लिङ्गे च लिङ्गस्याधः साधारणञ्च दर्शयेत् ॥ ३३

मूलेन नमस्कारं विज्ञाप्यावाहन-स्थापन-सन्निरोध-सान्निध्य-पाद्याचमनीयार्घ्यगन्धपुष्पधूप-नैवेद्याचमनीय-हस्तोद्वर्त्तन-मुखवासाद्युपचार-युक्तं ब्रह्माङ्ग-भोगमार्गेण पूजयेत् ॥ ३४

सकलध्यानं निष्कलस्मरणं परावरध्यानं मूल-मन्त्रजपो दशांशं ब्रह्माङ्गजपसमर्पणमात्मनिवेदन-स्तुति-नमस्कारादयश्च गुरुपूजा च पूर्व्वतो दक्षिणे विनायकस्य ॥ ३५

आदौ चान्ते च सम्पूज्यो विघ्नेशो जगदीश्वरः ।
दैवतैश्च द्विजैश्चैव सर्व्वकामार्थसिद्धये ॥ ३६
यः शिवं पूजयेद्देवं लिङ्गे वा स्थण्डिलेऽपि वा ।
स याति शिवसायुज्यं वर्षमात्रेण कर्म्मणा ॥ ३७
लिङ्गार्च्चकश्च षण्मासान्नात्र कार्य्या विचारणा ।
सप्त प्रदक्षिणाः कृत्वा दण्डवत् प्रणमेद्बुधः ॥ ३८
प्रदक्षिणक्रमपादेनाश्वमेधफलं शतम् ।
तस्मात् सम्पूजयेन्नित्यं सर्व्वकामार्थसिद्धये ॥ ३९
भोगार्थी भोगमाप्नोति राज्यार्थी राज्यमाप्नुयात् ।
पुत्त्रार्थी तनयं श्रेष्ठं रोगी रोगात् प्रमुच्यते ॥ ४०
यान् यांश्चिन्तयतेकामांस्तांस्तान् प्राप्नोतिमानवः॥४१

इति श्रीलैङ्गे महापुराणे उपरिभागे चतुर्व्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ।

शैलादिरुवाच ।

शिवाग्निकार्य्यं वक्ष्यामि शिवेन परिभाषितम् ।
जनयित्वाग्रतः प्राचीं शुभे देशे सुसंस्कृते ॥ १
पूर्व्वाग्रमुत्तराग्रञ्च कुर्य्यात् सूत्रत्रयं शुभम् ।
चतुरस्रीकृते क्षेत्रे कुर्य्यात् कुण्डानि यत्नतः ॥ २
नित्यहोमाग्निकुण्डञ्च त्रिमेखलसमायुतम् ।
चतुस्त्रिद्व्यङ्गुलायामा मेखला हस्तमात्रतः ॥ ३
हस्तमात्रं भवेत् कुण्डं योनिः प्रादेशमात्रतः ।
अश्वत्थपत्रवद्योनिं मेखलोपरि कल्पयेत् ॥ ४
कुण्डमध्ये तु नाभिः स्यादष्टपत्रं सकर्णिकम् ।
प्रादेशमात्रं विधिना कारयेद्ब्रह्मणः सुतः ॥ ५
षष्ठेनोल्लेखनं प्रोक्तं प्रोक्षणं वर्म्मणा स्मृतम् ।
नेत्रेणालोक्य वै कुण्डं षड्रेखाः कारयेद्बुधः ॥ ६
प्रागायतेन विप्रेन्द्र ब्रह्म-विष्णु-महेश्वराः ।
उत्तराग्राः शिवा रेखाः प्रोक्षयेद्वर्म्मणा पुनः ॥ ७
शमीपिप्पलसम्भूतामरणीं षोड़शाङ्गुलाम् ।
मथित्वा वह्निबीजेन शक्तिन्यासं हृदैव तु ॥ ८
प्रक्षिपेद्विधिना वह्निमन्वाधाय यथाविधि ।
तूष्णीं प्रादेशमात्रैस्तु याज्ञिकैः शकलैः शुभैः ॥ ९
परिसम्मोहनं कुर्य्याज्जलेनाष्टसु दिक्षु वै ।
परिस्तीर्य्य विधानेन प्रागाद्येवमनुक्रमात् ॥ १०
उत्तराग्रं पुरस्ताद्धि प्रागग्रं दक्षिणे पुनः ।
पश्चिमे चोत्तराग्रन्तु सौम्ये पूर्व्वाग्रमेव तु ॥ ११
ऐन्द्रे चैन्द्राग्नमावाह्य याम्य एवं विधीयते ।
सौम्यस्योपरि चान्द्राग्नं वारुणाग्नमधस्ततः ॥ १२
द्वन्द्वरूपेण पात्राणि वर्हिष्यासाद्य सुव्रत ।
अधोमुखानि सर्व्वाणि द्रव्याणि च तथोत्तरे ॥ १३
तस्योपरि न्यसेद्दर्भान् शिवं दक्षिणतो न्यसेत् ।
पूजयेन्मूलमन्त्रेण पश्चाद्धोमं समाचरेत् ॥ १४
प्रोक्षणीपात्रमादाय पूरयेदम्बुना पुनः ।
प्रादेशमात्रौ तु कुशौ स्थापयेदुदकोपरि ॥ १५
प्लावयेच्च कुशाग्रन्तु वसोः सूर्य्यस्य रश्मिभिः ।
विकीर्य्य सर्व्वपात्राणि सुसम्प्रोक्ष्य विधानतः ॥ १६
प्रणीतापात्रमादाय पूरयेदम्बुना पुनः ।
अन्योदककुशाग्रैस्तु सम्यगाच्छाद्य सुव्रत ॥ १७

हस्ताभ्यां नासिकं पात्रमैशान्यां दिशि विन्यसेत्।
आज्याधिश्रयणं कुर्य्यात् पश्चिमोत्तरतः शुभम्॥ १८
भस्ममिश्रांस्तथाङ्गारान् ग्राहयेच्छकलेन वै।
पश्चिमोत्तरतो नीत्वा तत्र चाज्यं प्रतापयेत्॥ १९
कुशानग्नौ तु प्रज्वाल्य पर्य्यग्निं त्रिभिराचरेत्।
तान् सर्व्वांस्तत्र निक्षिप्य चाग्रे चाज्यं निधापयेत्॥२०
अङ्गुष्ठमात्रौ तु कुशौ प्रक्षाल्य विधिनैव तु।
पर्य्यग्निञ्च ततः कुर्य्यात् तैरेव नवभिः पुनः॥ २१
पर्य्यग्निञ्च पुनः कुर्य्यात् तदाज्यमवरोपयेत्।
अथापकर्षयेत् पात्रं क्रमेणोत्तरपश्चिमे॥ २२
संयुज्य चाग्निं काष्ठेन प्रक्षाल्यारोप्य पश्चिमे।
आज्यस्योत्पवनं कुर्य्यात् पवित्राभ्यां सहैव तु॥ २३
पृथगादाय हस्ताभ्यां प्रवाहेण यथाक्रमम्।
अङ्गुष्ठानामिकाभ्यान्तु उभाभ्यां मूलविद्यया॥ २४
अभ्युक्ष्य दापयेदग्नौ पवित्रे घृतपङ्किते।
सौवर्णं स्रुक्स्रुवं कुर्य्याद्रत्निमात्रेण सुव्रत॥ २५
राजतं वा यथान्यायं सर्व्वलक्षणसंयुतम्।
अथवा याज्ञिकैर्वृक्षैः कर्त्तव्यौ स्रुक्स्रुवावुभौ॥ २६
अरत्निमात्रमायामं तत्पोत्रे तु विलं भवेत्।
षडङ्गुलपरीणाहं दण्डमूलं महामुने॥ २७
तदर्द्धं कण्ठनालं स्यात् पुष्करं मूलवद्भवेत्।
गोवालसदृशं दण्डं स्रुवाग्रं नासिकासमम्॥ २८
पुटद्वयसमायुक्तं मुक्ताद्येन प्रपूरितम्।
षट्त्रिंशदङ्गुलायाममष्टाङ्गुलसविस्तरम्॥ २९
उत्सेधस्तु तदर्द्धं स्यात् सूत्रेण समितं ततः।
सप्ताङ्गुलं भवेदास्यं विस्तरायामतः पुनः॥ ३०
त्रिभागैकं भवेदग्रं कृत्वा शेषं परित्यजेत्।
कण्ठञ्च द्व्यङ्गुलायामं विस्तारं चतुरङ्गुलम्॥ ३१
वेदिरष्टाङ्गुलायामा विस्तारस्तत्प्रमाणतः।
तस्य मध्ये विलं कुर्य्याच्चतुरङ्गुलमानतः॥ ३२
विलं सुवर्त्तितं कुर्य्यादष्टपत्रं सुकर्णिकम्।
परितो विलवाह्ये तु पट्टिकार्द्धाङ्गुलेन तु॥ ३३
तद्वाह्ये च विनिद्रन्तु पद्मपत्रविचित्रितम्।
यवद्वयप्रमाणेन तद्वाह्ये पट्टिका भवेत्॥ ३४
वेदिकामध्यतो रन्ध्रं कनिष्ठाङ्गुलमानतः।
खातं यावन्मुखान्तः स्याद्विलमानन्तु निम्नगम्॥ ३५
दण्डं षडङ्गुलं नालं दण्डाग्रे दण्डिकात्रयम्।

अर्द्धाङ्गुलविवृद्धा तु कर्त्तव्यं चतुरङ्गुलम्॥ ३६
त्रयोदशाङ्गुलायामं दण्डमूले घटं भवेत्।
द्व्यङ्गुलन्तु भवेत् कुम्भं नाभिं विद्याद्दशाङ्गुलम्।
वेदिमध्ये तथा कृत्वा पादं कुर्य्याच्च द्व्यङ्गुलम्॥ ३७
पद्मपृष्ठसमाकारं पादं वै कर्णिकाकृतिम्।
गजोष्ठसदृशाकारं तस्य पृष्ठाकृतिर्भवेत्॥ ३८
अभिचारादिकार्य्येषु कुर्य्यात् कृष्णायसेन तु।
पञ्चविंशत्कुशेनैव स्रुक्स्रुवौ मार्ज्जयेत् पुनः॥ ३९
अग्रमग्रेण संशोध्य मध्यं मध्येन सुव्रत।
मूलं मूलेन विधिना अग्नौ ताप्य हृदा पुनः॥ ४०
आज्यस्थाली प्रणीता च प्रोक्षणी तिस्र एव च।
सौवर्णी राजती वापि ताम्री वा मृण्मयी तु वा॥४१
अन्यथा नैव कर्त्तव्यं शान्तिके पौष्टिके शुभे।
आयसी त्वभिचारे तु शान्तिके मृण्मयी तु वा॥ ४२
षडङ्गुलं सुविस्तीर्णं पात्राणां मुखमुच्यते।
प्रोक्षणी द्व्यङ्गुलोत्सेधा प्रणीता द्व्यङ्गुलाधिका॥ ४३
आज्यस्थाली ततस्तस्या उत्सेधाद्द्व्यङ्गुलाधिका।
यैः समिद्भिर्हुतं प्रोक्तं तैरेव परिधिर्भवेत्॥ ४४
मध्याङ्गुलपरीणाहा अवक्रा निर्व्रणाः समाः।
द्वात्रिंशदङ्गुलायामास्तिस्रः परिधयः स्मृताः॥ ४५
द्वात्रिंशदङ्गुलायामैस्त्रिंशद्दर्भैः परिस्तरेत्।
चतुरङ्गुलमध्ये तु ग्रथितन्तु प्रदक्षिणम्॥ ४६
अभिचारादिकार्य्येषु शिवाग्न्याधानवर्ज्जितम्।
अकोमलाः स्थिरा विप्र संग्राह्यास्त्वाभिचारिके॥४७
समग्राः सुषमाः स्थूलाः कनिष्ठाङ्गुलसम्मिताः।
अवक्रा निर्व्रणाः स्निग्धा द्वादशाङ्गुलसम्मिताः॥ ४८
समिधस्थं प्रमाणं हि सर्व्वकार्य्येषु सुव्रत।
गव्यं घृतं ततः श्रेष्ठं कापिलन्तु ततोऽधिकम्॥ ४९
आहुतीनां प्रमाणन्तु स्रुवं पूर्णं यथा भवेत्।
अन्नभक्षप्रमाणं स्याच्छुक्तिमात्रेण वै तिलम्॥ ५०
यवानाञ्च तदर्द्धं स्यात् फलानां स्वप्रमाणतः।
क्षीरस्य मधुनो दध्नः प्रमाणं घृतवद्भवेत्॥ ५१
चतुःस्रुवप्रमाणेन स्रुचा पूर्णाहुतिर्भवेत्।
तदर्द्धं स्विष्टकृत् प्रोक्तं शेषं सर्व्वमथापि वा॥ ५२
शान्तिकं पौष्टिकञ्चैव शिवाग्नौ जुहुयात् सदा।
लौकिकाग्नौ महाभाग मोहनोच्चाटनादयः॥ ५३
शिवाग्निं जनयित्वा तु सर्व्वकर्म्मणि सुव्रत।

सप्तजिह्वाः प्रकल्प्यैव सर्व्वकार्य्याणि कारयेत् ॥ ५४
अथवा सर्व्वकार्य्याणि जिह्वामात्रेण सिध्यति ।
शिवाग्निरिति विप्रेन्द्रा जिह्वामात्रेण साधकः ॥ ५५

ओं बहुरूपायै मध्यजिह्वायै अनेकवर्णायै दक्षिणोत्तरमध्यगायै शान्तिकपौष्टिकमोक्षादिफलप्रदायै स्वाहा ॥ ५६

ओं हिरण्यायै चामीकराभायै ईशानजिह्वायै ज्ञानप्रदायै स्वाहा ॥ ५७

ओं कनकायै कनकनिभायै रम्यायै ऐन्द्रजिह्वायै स्वाहा ॥ ५८

ओं रक्तायै रक्तवर्णायै आग्नेयजिह्वायै अनेकवर्णायै विद्वेषणमोहनायै स्वाहा ॥ ५९

ओं कृष्णायै नैर्ऋतजिह्वायै मारणायै स्वाहा ॥ ६०

ओं सुप्रभायै पश्चिमजिह्वायै मुक्ताफलायै शान्तिकायै पौष्टिकायै स्वाहा ॥ ६१

ओं अभिव्यक्तायै वायव्यजिह्वायै शत्रूचाटनायै स्वाहा ॥ ६२

ओं वह्नये तेजस्विने स्वाहा ॥ ६३

एतावदग्निसंस्कारमथवा वह्निकर्म्मसु ।
नैमित्तिके च विधिना शिवाग्निं कारयेत् पुनः ॥ ६४

निरीक्षणं प्रोक्षणं ताड़नञ्च षष्ठेन फड़न्तेन अभ्युक्षणं चतुर्थेन खननोत्किरणं षष्ठेन पूरणं समीकरणमाद्येन सेचनं वौषड़न्तेन कुट्टनं षष्ठेन सम्मार्ज्जनोपलेपनं तुरीयेण कुण्डपरिकल्पनं निवृत्त्या त्रिभिरेव कुण्डपरिधानं चतुर्थेन कुण्डार्चनमाद्येन रेखाचतुष्टयसम्पादनं षष्ठेन फड़न्तेन वज्रीकरणं चतुष्पदापादनमाद्येन एवं कुण्डसंस्कारमष्टादशविधम् ॥ ६५

कुण्डसंस्कारानन्तरमक्षपाटनं षष्ठेन विष्टरन्यासमाद्येन वज्रासने वागीश्वर्य्यावाहनम् ॥ ६६

ओं ह्रीं वागीश्वरीं श्यामवर्णां विशालाक्षीं यौवनोन्मत्तविग्रहामृतुमतीं वागीश्वरशक्तिमावाहयामि ॥ ६७

वागीश्वरीं पूजयामि ॥ ६८

पुनर्वागीश्वरावाहनम् ॥ ६९

शुक्लवर्णं चतुर्भुजं शुद्धस्फटिकाभं वरदाभयहस्तं परशुमृगधरं जटामुकुटमण्डितं सर्व्वाभरणभूषितमावाहयामि ॥ ७०

ओं ईं वागीश्वराय नमः आवाहन-स्थापन-सन्निधान-सन्निरोधपूजान्तं वागीश्वरीं सम्भाव्य गर्भाधानवह्निसंस्कारम् ॥ ७१

अरणीजनितं कान्तोद्भवं वा अग्निहोत्रजं वा ताम्रपात्रे शरावे वा आनीय निरीक्षण-ताड़नाभ्युक्षण-प्रक्षालनमाद्येन क्रव्यादा शिवपरित्यागोऽपि प्रथमेन वह्नेस्त्रैकारणं जठरभूमध्यादावाद्याग्निं वैकारणमूर्त्तावाग्नेयेन उद्दीपमाद्येन पुरुषेण संहितया धारणा धेनुमुद्रा तुरीयेणावगुण्ठ्य जानुभ्यामवनिं गत्वा शरावोत्थापनं कुण्डोपरि निधाय प्रदक्षिणमावर्त्त्य तुरीयेणात्मसम्मुखां वागीश्वरीं गर्भनाड्यां गर्भाधानान्तरीयेण कमलप्रदानमाद्येन वौषड़न्तेन कुशार्घ्यं दत्त्वा इन्धनप्रदानमाद्येन प्रज्वालनं गर्भाधानञ्च सद्येनानाद्येन पूजनं पुंसवनं वामेन पूजनं द्वितीयेन सीमन्तोन्नयनमघोरेण तृतीयेन पूजनम् ॥ ७२

अवयवव्याप्तिर्वह्नेर्द्वाटनं वह्निनिष्कृतिरितित्वतीयेन गर्भजातकर्म्म पुरुषेण पूजनं तुरीयेण षष्ठेन प्रोक्षणं सूतकशुद्धये चाग्निसूतुरक्षाकुशास्त्रेण वह्नेर्णाग्निमूलमीशाग्रं नैर्ऋतिमूलं वायव्यमूलमीशाग्रमिति कुशास्तरणमिति पूर्व्वोक्तं दक्षमग्रमूलघृताक्तं लालापनोदाय षष्ठेन जुहुयात् ॥ ७३

पञ्चपूर्व्वातिक्रमेण परिधिविष्टरन्यासोऽपि आद्येन विष्टरोपरि हिरण्यगर्भ-हर-नारायणानपि पूजयेत् ॥ ७४

इन्द्रादिलोकपालांश्च पूजयेत् ॥ ७५

वज्रावर्त्तपर्य्यन्तानपि पूजयेत् ॥ ७६

वागीश्वर-वागीश्वरी-पूजाद्येन सुहास्यञ्चैतं विसर्ज्जयेत् ॥ ७७

स्रुक्स्रुवसंस्कारमथो निरीक्षणप्रोक्षणताड़नाभ्युक्षणादीनि पूर्व्ववत् स्रुक्स्रुवञ्च हस्तद्वये गृहीत्वा संस्थापनमाद्येन ताड़नमपि स्रुक्स्रुवोपरि दर्भानुलेखनमूलमध्यमग्रेण त्रितेन स्रुक्शक्तिं स्रुवमपि शम्भुदक्षिणपार्श्वे कुशोपरि शक्तये नमः शम्भवे नमः ॥ ७८

ततो ध्वन्तिसूत्रेण स्रुक्स्रुवौ तुरीयेण वेष्टये-द्वयेच्च ॥ ७९

धेनुमुद्रां प्रदर्शयित्वा तुरीयेणावगुण्ठ्य षष्ठेन रक्षां विधाय स्रुक्स्रुवसंस्कारः पूर्व्वमेवोक्तः ॥ ८०

पुनराज्यसंस्कारः पूर्व्वमेवोक्तः निरीक्षण-प्रोक्षणताड़नाभ्युक्षणादीनि पूर्व्ववत् ॥ ८१

आज्यप्रतापनमैशान्यां वा षष्ठेन वेद्युपरि विन्यस्य घृतपात्रं वितस्तिमात्रं कुशपवित्रं वाम-हस्ताङ्गुष्ठानामिकाग्रं गृहीत्वा दक्षिणाङ्गुष्ठा-नामिकामूलं गृहीत्वाग्निज्वालोत्प्लवनं स्वाहा-न्तेन तुरीयेण पुनः षड्दर्भान् गृहीत्वा पूर्व्ववत् स्वात्मसंप्लवनं स्वाहान्तेनाद्येन कुशद्वयपवित्र-बन्धनञ्चाद्येन घृते न्यसेदिति पवित्रीकरणम् ॥ ८२

दर्भद्वयं गृह्याग्निप्रज्वालनं घृतं त्रिधावर्त्तयेत्। सम्प्रोक्ष्याग्नौ निधापयेदिति नीराजनम् ॥ ८३

पुनर्दर्भान् गृहीत्वा कीटकादिनिरीक्षणार्थेण सम्प्रोक्ष्य दर्भानग्नौ निधाय द्व्यवद्योतनम् ॥ ८४

दर्भद्वयं गृहीत्वाग्निज्वालया घृतं निरीक्षयेत् ॥ ८५

दर्भेण गृहीत्वा तेनाग्रद्वयेन शुक्लपक्षद्वयेनाद्ये-नेति कृष्णपक्षसम्पातनं घृतं त्रिभागेण विभज्य स्रुवेणैकभागेनाज्येनाग्नये स्वाहा द्वितीयेनाज्येन सोमाय स्वाहा आज्येन ओं अग्नीषोमाभ्यां स्वाहा आज्येनाग्नये स्विष्टकृते स्वाहा ॥ ८६

पुनः कुशेन गृहीत्वा संहिताभिमन्त्रेण नमो-ऽन्तेनाभिमन्त्रयेत् ॥ ८७

अभिमन्त्र्य धेनुमुद्राप्रदर्शनकवचावगुण्ठनास्त्रेण रक्षा अथ संस्कृते निधापयेत्। आज्यसंस्कारः ॥ ८८

आज्येन स्रुवदनेन वक्त्राभिघारणं शक्ति-वीजादीशानमूर्त्तये स्वाहा पूर्व्ववत् पुरुषवक्त्राय स्वाहा अघोरहृदयाय स्वाहा वामदेवाय गुह्याय स्वाहा सद्योजातमूर्त्तये स्वाहा इति वक्त्रोद्घाटनम् ॥ ८९

ईशानमूर्त्तये तत्पुरुषवक्त्राय स्वाहा तत्पुरुष-वक्त्राय अघोरहृदयाय स्वाहा अघोरहृद-याय वामगुह्याय सद्योजातमूर्त्तये स्वाहा इति वक्त्रसन्धानम् ॥ ९०

ईशानमूर्त्ते तत्पुरुषाय वक्त्राय अघोरहृदयाय वामदेवाय गुह्याय सद्योजाताय स्वाहा इति वक्त्रैक्यकरणम् ॥ ९१

शिवाग्निं जनयित्वैवं सर्व्वकर्म्माणि कारयेत्।
केवलं जिह्वया वापि शान्तिकाद्यानि सर्व्वदा ॥ ९२

गर्भाधानादिकार्य्येषु वह्नेः प्रत्येकमव्यय।
दश वाहुतयो देया योनिवीजेन पञ्चधा ॥ ९३

शिवाग्नौ कल्पयेद्दिव्यं पूर्व्ववत् परमासनम्।
आवाहनं तथा न्यासं यथा देवे तथार्च्चनम् ॥ ९४

मूलमन्त्रं समुच्चार्य्य देवदेवं नमस्य च।
प्राणायामत्रयं कृत्वा सगर्भं सर्व्वसम्मतम् ॥ ९५

परिषिञ्चनपूर्व्वञ्च तदिध्ममभिघार्य्य च।
जुहुयादग्निमध्ये तु ज्वलितेऽथ महामुने ॥ ९६

आघारावपि चाधाय चाज्येनैव तु षण्मुखि।
आज्यभागौ तु जुहुयाद्विधिनैव घृतेन च ॥ ९७

चक्षुषी चाज्यभागौ तु चाग्नये च तथोत्तरे।
आत्मनो दक्षिणे चैव सोमायेति द्विजोत्तम ॥ ९८

प्रत्यङ्मुखस्य देवस्य शिवाग्नेर्ब्रह्मणः सुत।
अक्षि वै दक्षिणञ्चैव चोत्तरञ्चोत्तरं तथा ॥ ९९

दक्षिणन्तु महाभाग भवत्येव न संशयः।
आज्येनाहुतयस्तत्र मूलेनैव दशैव तु ॥ १००

चरुणा च यथावह्नि समिद्भिश्च तथा स्मृतम्।
पूर्णाहुतिं ततो दद्यान्मूलमन्त्रेण सुव्रत ॥ १०१

सर्व्वावरणदेवानां पञ्च पञ्चैव पूर्व्ववत्।
ईशानादिक्रमेणैव शक्तिवीजक्रमेण च ॥ १०२

प्रायश्चित्तमघोरेण स्विष्टान्तं पूर्व्ववत् स्मृतम्।
त्रिप्रकारं मया प्रोक्तमग्निकार्य्यं सुशोभनम् ॥ १०३

यथावसरमेवं हि कुर्य्यान्नित्यं महामुने।
जीवितान्ते लभेत् स्वर्गं लभते अग्निदीपनम् ॥ १०४

नरकञ्चैव नाप्नोति यस्य कस्यापि कर्म्मणः।
अहिंसकं चरेद्धोमं साधको मुक्तिकाङ्क्षकः ॥ १०५

हृदिस्थं चिन्तयेदग्निं ध्यानयत्नेन होमयेत्।
देहस्थं सर्व्वभूतानां शिवं सर्व्वजगत्पतिम् ॥ १०६

तं ज्ञात्वा होमयेद्भक्त्या प्राणायामेन नित्यशः।
वाह्यहोमप्रदाता तु पाषाणे दर्द्दुरो भवेत् ॥ १०७

इति श्रीलैङ्गे महापुराणे उपरिभागे पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः।

शैलादिरुवाच।

अथवा देवमीशानं लिङ्गे सम्पूजयेच्छिवम्।
ब्राह्मणः शिवभक्तश्च शिवध्यानपरायणः ॥ १
अग्निरित्यादिना भस्म गृहीत्वा ह्यग्निहोत्रजम्।
उद्धूलयेद्धि सर्व्वाङ्गमापादतलमस्तकम् ॥ २
आचामेद्ब्रह्मतीर्थेन ब्रह्मसूत्री ह्युदङ्मुखः।
अथोन्नमः शिवायेति तनुं कृत्वात्मनः पुनः ॥ ३
देवञ्च तेन मन्त्रेण पूजयेत् प्रणवेन च।
सर्व्वस्मादधिका पूजा अघोरेशस्य शूलिनः ॥ ४
सामान्यं यजनं सर्व्वमग्निकार्य्यञ्च सुव्रत।
मन्त्रभेदः प्रभोस्तस्य अघोरध्यानमेव च ॥ ५
मन्त्रः—अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः।
सर्व्वेभ्यः सर्व्वशर्व्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ६

अघोरेभ्यः प्रशान्तहृदयाय नमः। अथ घोरेभ्यः सर्व्वात्मब्रह्मशिरसे स्वाहा। घोरघोरतरेभ्यः ज्वालामालिनीशिखायै वषट्। सर्व्वेभ्यः सर्व्वशर्व्वभ्यः पिङ्गलकवचाय हूं नमस्ते अस्तु रुद्ररूपेभ्यः नेत्रत्रयाय वौषट् सहस्राक्षाय दुर्भेदाय पाशुपतास्त्राय हूं फट् ॥

स्नात्वाचम्य तनुं कृत्वा समभ्युक्ष्यावमर्षणम्।
तर्पणं विधिना चार्घ्यं भानवे भानुपूजनम् ॥ ७
समस्ताघोरपूजायां मन्त्रमात्रेण भेदितम्।
मार्गशुद्धिस्तथा द्वारि पूजां वास्त्वधिपस्य च ॥ ८
कृत्वा करं विशोध्याग्रे स शुभासनमास्थितः।
नासाग्रकमले स्थाप्य जग्धाद्यः क्षुभिकाग्निना ॥ ९
वायुना प्रेर्य्य तद्भस्म विशोध्य च शुभाम्भसा।
शक्त्यामृतमयी ब्रह्मकलां तत्र प्रकल्पयेत् ॥ १०
अघोरं पञ्चधा कृत्वा पञ्चाङ्गसहितं पुनः।
द्रव्यं ज्ञानक्रियामेवं विन्यस्य च विधानतः ॥ ११
न्यासस्त्रिनेत्रसहितो हृदि ध्यात्वा वरासने।
नाभौ वह्निगतं स्मृत्वा भ्रूमध्ये दीपवत् प्रभुम् ॥ १२
शान्त्या बीजाङ्कुरानन्तधर्म्माद्यैरपि संयुते।
सोमसूर्य्याग्निसम्पन्ने मूर्त्तित्रयसमन्विते ॥ १३
वामादिभिश्च सहिते मनोन्मन्याद्यधिष्ठिते।
शिवासनेऽत्ममूर्त्तिस्थमक्षयाकाररूपिणम् ॥ १४
अष्टत्रिंशत्कलादेहं त्रितत्त्वसहितं शिवम्।
अष्टादशभुजं देवं गजचर्म्मोत्तरीयकम् ॥ १५
सिंहाजिनाम्बरधरमघोरं परमेश्वरम्।
द्वात्रिंशाक्षररूपेण द्वात्रिंशच्छक्तिभिर्वृतम् ॥ १६
सर्व्वाभरणसंयुक्तं सर्व्वदेवनमस्कृतम्।
कपालमालाभरणं सर्पवृश्चिकभूषणम् ॥ १७
पूर्णेन्दुवदनं सौम्यं चन्द्रकोटिसमप्रभम्।
चन्द्ररेखाधरं शक्त्या सहितं नीलरूपिणम् ॥ १८

हस्ते खड्गं खेटकं पाशमेके
रत्नैश्चित्रञ्चाङ्कुशं नागकक्षाम्।
शरासनं पाशुपतं तथास्त्रं
दण्डञ्च खट्वाङ्गमथापरे च ॥ १९
तन्त्रीञ्च घण्टां विपुलञ्च शूलं
तथापरे डामरुकञ्च दिव्यम्।
वज्रं गदां टङ्कमेकञ्च दीप्तं
समुद्गरं हस्तमथास्य शम्भोः ॥ २०

वरदाभयहस्तञ्च वरेण्यं परमेश्वरम्।
भावयेत् पूजयेच्चापि वह्नौ होमञ्च कारयेत् ॥ २१
होमश्च पूर्व्ववत् सर्व्वो मन्त्रभेदश्च कीर्त्तितः।
अष्टपुष्पादिगन्धादि-पूजास्तुतिनिवेदनम् ॥ २२
अन्तर्बलिञ्च कुण्डस्य वाह्नेयेन विधानतः।
मण्डलं विधिना कृत्वा मन्त्रैरेतैर्यथाक्रमम् ॥ २३

रुद्रेभ्यो मातृगणेभ्यो यक्षेभ्योऽसुरेभ्यो ग्रहेभ्यो राक्षसेभ्यो नागेभ्यो नक्षत्रेभ्यो विश्वगणेभ्यः क्षेत्रपालेभ्यः। अथ वायु-वरुण-दिग्भागे क्षेत्रपालबलिं क्षिपेत् ॥

अर्घ्यं गन्धञ्च पुष्पञ्च धूपदीपञ्च सुव्रताः।
नैवेद्यं मुखवासादि निवेद्यं वै यथाविधि ॥ २४
विसर्ज्यैवं विसृज्याथ अष्टपुष्पैश्च पूजनम्।
सर्व्वसामान्यमेतद्धि पूजायां मुनिपुङ्गवाः ॥ २५
एवं संक्षेपतः प्रोक्तमघोरार्चादि सुव्रताः ॥ २६
अघोरार्चाविधानञ्च लिङ्गे वा स्थण्डिलेऽपि वा।
स्थण्डिलात् कोटिगुणितं लिङ्गार्च्चनमनुत्तमम् ॥ २७
लिङ्गार्च्चनरतो विप्रो महापातकसम्भवैः।
पापैरपि न लिप्येत पद्मपत्रमिवाम्भसा ॥ २८
लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम्।
अर्च्चनादधिकं नास्ति ब्रह्मपुत्र न संशयः ॥ २९

एवं संक्षेपतः प्रोक्तमघोरार्चनमुत्तमम्।
वर्षकोटिशतेनापि विस्तरेण न शक्यते ॥ ३०

इति श्रीलैङ्गे महापुराणे उपरिभागे
षड्विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः।

ऋषय ऊचुः।

प्रभावो नन्दिनश्चैव लिङ्गपूजाफलं श्रुतम्।
श्रुतिभिः सम्मितं सर्व्वं रोमहर्षण सुव्रत ॥ १
जयाभिषेकमीशेन कथितं मनवे पुरा।
हिताय मेरुशिखरे क्षत्रियाणां त्रिशूलिना ॥ २
तत् कथं षोड़शविधं महादानञ्च शोभनम्।
वक्तुमर्हसि चास्माकं सूत बुद्धिमतां वर ॥ ३

सूत उवाच।

जीवच्छ्राद्धं पुरा कृत्वा मनुः स्वायम्भुवः प्रभुः।
मेरुमासाद्य देवेशमस्तुवन्नीललोहितम् ॥ ४
तपसा च विनीताय प्रहृष्टः प्रददौ भवः।
दिव्यं दर्शनमीशानस्तेनापश्यत् तमव्ययम् ॥ ५
नत्वा सम्पूज्य विधिना कृताञ्जलिपुटः स्थितः।
हर्षगद्गदया वाचा प्रोवाच च ननाम च ॥ ६

मनुरुवाच।

देवदेव जगन्नाथ नमस्ते भुवनेश्वर।
जीवच्छ्राद्धं महादेव-प्रसादेन विनिर्म्मितम्।
पूजितश्च ततो देवो दृष्टश्चैव मयाधुना ॥ ७
शक्राय कथितं पूर्व्वं धर्म्मकामार्थमोक्षदम्।
जयाभिषेकं देवेश वक्तुमर्हसि मे प्रभो ॥ ८

सूत उवाच।

तस्मै देवो महादेवो भगवान् नीललोहितः।
जयाभिषेकमखिलमवदत् परमेश्वरः ॥ ९

श्रीभगवानुवाच।

जयाभिषेकं वक्ष्यामि नृपाणां हितकाम्यया।
अपमृत्युजयार्थञ्च सर्व्वशत्रुजयाय च ॥ १०
युद्धकाले तु सम्प्राप्ते कृत्वैवमभिषेचनम्।
नृपतिश्चाभिषिच्यैव गच्छेद्‌युद्धं रणाजिरे ॥ ११
विधिना मण्डपं कृत्वा प्रपां वा कूटमेव वा।
नवधा स्थापयेद्वह्निं ब्राह्मणो वेदपारगः ॥ १२
ततः सर्व्वाभिषेकार्थं सूत्रपातञ्च कारयेत्।
प्रागाद्यं वर्णसूत्रञ्च दक्षिणाद्यं तथा पुनः ॥ १३
सहस्राणां द्वयं तत्र शतानाञ्च चतुष्टयम्।
शेषमेव शुभं कोष्ठं तेषु कोष्ठन्तु संहरेत् ॥ १४
बाह्ये वीथ्यां पदञ्चैकं समन्तादुपसंहरेत्।
अङ्गसूत्राणि संस्पृश्य विधिना पृथगेव तु ॥ १५
प्रागाद्यं वर्णसूत्रञ्च दक्षिणाद्यं तथा पुनः।
प्रागाद्यं दक्षिणाद्यञ्च षट्त्रिंशत् संहरेत् क्रमात् ॥१६
प्रागाद्याः पङ्क्तयः सप्त दक्षिणाद्यास्तथा पुनः।
तस्मादेकोनपञ्चाशत् पङ्क्तयः परिकीर्त्तिताः ॥ १७
नवपङ्क्तीर्हरेन्मध्ये गन्ध-गोमय-वारिणा।
कमलञ्चालिखेत् तत्र हस्तमात्रेण शोभनम् ॥ १८
अष्टपत्रं सितं वृत्तं कर्णिकाकेसरान्वितम्।
अष्टाङ्गुलप्रमाणेन कर्णिका हेमसन्निभा ॥ १९
चतुरङ्गुलमानेन केसरस्थानमुच्यते ॥ २०
धर्म्मो ज्ञानञ्च वैराग्यमैश्वर्य्यञ्च यथाक्रमम्।
आग्नेयादिषु कोणेषु स्थापयेत् प्रणवेन तु ॥ २१
अव्यक्तादीनि वै दिक्षु गात्राकारेण वै न्यसेत्।
अव्यक्तं नियतः कालः काली चेति चतुष्टयम् ॥ २२
सित-रक्त-हिरण्याभ-कृष्णा धर्म्मादयः क्रमात्।
हंसाकारेण वै गात्रं हेमाभासेन सुव्रताः ॥ २३
आधारशक्तिमध्ये तु कमलं सृष्टिकारणम्।
बिन्दुमात्रं कलामध्ये नादाकारमतः परम् ॥ २४
नादोपरि शिवं ध्यायेदोङ्काराख्यं जगद्गुरुम्।
मनोन्मनीञ्च पद्माभं महादेवञ्च भावयेत् ॥ २५
वामादयः क्रमेणैव प्रागाद्याः केसरेषु वै।
वामा ज्येष्ठा तथा रौद्री काली विकरणी तथा॥२६
बला प्रमथिनी देवी दमनी च यथाक्रमम्।
वामदेवादिभिः सार्द्धं प्रणवेनैव विन्यसेत् ॥ २७
नमोऽस्तु वामदेवाय नमो ज्येष्ठाय शूलिने ॥ २८
रुद्राय कालरूपाय कलविकरणाय च।
बलाय च तथा सर्व्वभूतस्य दमनाय च ॥ २९
मनोन्मनाय देवाय मनोन्मन्यै नमो नमः।
मन्त्रैरेतैर्यथान्यायं पूजयेत् परिमण्डलम् ॥ ३०
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
द्वितीयावरणे चैव शक्तयः षोड़शैव तु ॥ ३१
तृतीयावरणे चैव चतुर्व्विंशदनुक्रमात्।

पिशाचवीथिर्वै मध्ये नाभिवीथिः समन्ततः ॥ ३२
मन्त्रैरेतैर्यथान्यायं पिशाचानां प्रकीर्त्तिता ।
अष्टोत्तरसहस्रन्तु पद्ममष्टारसंयुतम् ॥ ३३
तेषु तेषु पृथक्त्वेन पद्मेषु कमलं क्रमात् ।
कल्पयेच्छालि-नीवार-गोधूमैश्च यवादिभिः ॥ ३४
तण्डुलैश्च तिलैर्वाथ गौरसर्षपसंयुतः ।
अथवा कल्पयेदेतैर्यथाकालं विधानतः ॥ ३५
अष्टपत्रं लिखेत् तेषु कर्णिकाकेसरान्वितम् ।
शालीनामाढ़कं प्रोक्तं कमलानां पृथक् पृथक् ॥ ३६
तण्डुलानां तदर्द्धं स्यात् तदर्द्धञ्च यवादयः ।
द्रोणं प्रधानकुम्भस्य तदर्द्धं तण्डुलाः स्मृताः ॥ ३७
तिलानामाढ़कं मध्ये यवानाञ्च तदर्द्धकम् ।
यथाशक्ति समभ्यर्च्य कमलं प्रणवेन तु ॥ ३८
तेषु सर्व्वेषु विधिना प्रणवं विन्यसेत् क्रमात् ।
एवं समाप्य चाभ्यर्च्य पद्मसाहस्रमुत्तमम् ॥ ३९
कलशानां सहस्राणि हैमानि च शुभानि च ।
उक्तलक्षणयुक्तानि कारयेद्राजतानि वा ॥ ४०
ताम्रजानि यथान्यायं प्रणवेनाम्बुवारिणा ।
द्वादशाङ्गुलविस्तारमुदरे समुदाहृतम् ॥ ४१
वर्त्तितन्तु तदर्द्धेन नाभिस्तस्य विधीयते ।
कण्ठन्तु द्व्यङ्गुलोत्सेधं विस्तारं चतुरङ्गुलम् ॥ ४२
ओष्ठञ्च द्व्यङ्गुलोत्सेधं निर्गमं द्व्यङ्गुलं स्मृतम् ।
तत्तद्वै द्विगुणं दिव्यं शिवकुम्भे प्रकीर्त्तितम् ॥ ४३
यवमात्रान्तरं सम्यक् तन्तुना वेष्टयेद्धि वै ।
अवगुण्ठ्य तथाभ्यर्च्य कुम्भोपरि यथाविधि ॥ ४४
पूर्व्ववत् प्रणवेनैव पूरयेद्गन्धवारिणा ।
स्थापयेच्छिवकुम्भाद्यं वर्द्धनीं च विधानतः ॥ ४५
मध्यपद्मस्य मध्ये तु सकूर्च्चं साक्षतं क्रमात् ।
आवेष्ट्य वस्त्रयुग्मेण प्रच्छाद्य कमलेन तु ॥ ४६
हैमेन चित्ररत्नेन सहस्रकलशं पृथक् ।
शिवकुम्भे शिवं स्थाप्य गायत्र्या प्रणवेन च ॥ ४७
विद्महे पुरुषायैव महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥ ४८
मन्त्रेणानेन रुद्रस्य सान्निध्यं सर्व्वदा स्मृतम् ।
वर्द्धन्यां देविगायत्र्या देवीं संस्थाप्य पूजयेत् ॥ ४९
गणाम्बिकायै विद्महे महातपायै धीमहि ।
तन्नो गौरी प्रचोदयात् ॥ ५०
प्रथमावरणे चैव वामाद्याः परिकीर्त्तिताः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ५१
शक्तयः षोड़शैवात्र पूर्व्वाद्यं तेषु सुव्रत ।
ऐन्द्रव्यूहस्य मध्ये तु सुभद्रां स्थाप्य पूजयेत् ॥ ५२
भद्रामाग्नेयचक्रे तु याम्ये तु कनकाण्डजाम् ।
अम्बिकां नैरृते व्यूहे मध्यकुम्भे तु पूजयेत् ॥ ५३
श्रीदेवीं वारुणे भागे वागीशां वायुगोचरे ।
गोमुखीं सौम्यभागे तु मध्यकुम्भे तु पूजयेत् ॥ ५४
रुद्रव्यूहस्य मध्ये तु भद्रकर्णीं समर्च्चयेत् ।
ऐन्द्राग्निविदिशोर्मध्ये पूजयेदणिमां शुभाम् ॥ ५५
याम्यपावकयोर्मध्ये लघिमां कमले न्यसेत् ।
राक्षसान्तकयोर्मध्ये महिमां मध्यतो यजेत् ॥ ५६
वरुणासुरयोर्मध्ये प्राप्तिं वै मध्यतो यजेत् ।
वरुणानिलयोर्मध्ये प्राकाम्यं कमले न्यसेत् ॥ ५७
वित्तेशानिलयोर्मध्ये ईशित्वं स्थाप्य पूजयेत् ।
वित्तेशेशानयोर्मध्ये वशित्वं स्थाप्य पूजयेत् ॥ ५८
ऐन्द्रेशेशानयोर्मध्ये यजेत् कामवसायकम् ।
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ॥ ५९
शक्तयस्तु चतुर्व्विंशत्प्रधानकमलेषु च ।
पूजयेद्ब्रह्ममध्ये तु पूर्व्ववद्विधिपूर्व्वकम् ॥ ६०
दीप्तां दीप्तायिकाञ्चैव चण्डां चण्डांशुनायिकाम् ।
सुमतीं सुमत्यायीञ्च गोपां गोपायिकां तथा ॥ ६१
अथ नन्दाञ्च नन्दायीं पितामहमतः परम् ।
पितामहायीं पूर्व्वाद्यं विधिना स्थाप्य पूजयेत् ॥ ६२
एवं सम्पूज्य विधिना तृतीयावरणं शुभम् ।
सौभद्रं व्यूहमासाद्य प्रथमावरणे क्रमात् ॥ ६३
प्रागाद्यं स्थाप्य विधिना शक्त्यष्टकमनुक्रमात् ।
द्वितीयावरणे चैव प्रागाद्यं शृणु शक्तयः ॥ ६४
षोड़शैव तु चाभ्यर्च्य पद्ममुद्रान्तु दर्शयेत् ।
बिन्दुका बिन्दुगर्भा च नादिनी नादगर्भजा ॥ ६५
शक्तिका शक्तिगर्भा च परा चैव परापरा ।
प्रथमावरणेऽष्टौ च शक्तयः परिकीर्त्तिताः ॥ ६६
चण्डा चण्डमुखी चैव चण्डवेगा मनोजवा ।
चण्डाक्षी चण्डनिर्घोषा भृकुटी चण्डनायिका ॥ ६७
मनोत्सेधा मनोध्यक्षा मानसी माननायिका ।
मनोहरी मनोह्लादी मनःप्रीतिर्महेश्वरी ॥ ६८
द्वितीयावरणे चैव षोड़शैव प्रकीर्त्तिताः ।

श्रीभद्रं कथितं व्यूहं भद्रं व्यूहं शृणुष्व मे ॥ ६९
ऐन्द्री हौताशनी याम्या नैर्ऋती वारुणी तथा।
वायव्या चैव कौवेरी ऐशानी चाष्ट शक्तयः ॥ ७०
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
हरिणी च सुवर्णा च काञ्चनी हाटकी तथा ॥ ७१
रुक्मिणी सत्यभामा च सुभगा जम्बुनायिका।
वाग्भवा वाक्पथा वाणी भीमा चित्ररथा सुधी॥७२
वेदमाता हिरण्याक्षी द्वितीयावरणे स्मृताः।
भद्राख्यं कथितं व्यूहं कनकाख्यं शृणुष्व मे ॥ ७३
वज्रं शक्तिश्च दण्डश्च खड्गं पाशं ध्वजं तथा।
गदां त्रिशूलं क्रमशः प्रथमावरणे स्मृताः ॥ ७४
बुद्धा प्रबुद्धा चण्डा च मुण्डा चैव कपालिनी।
मृत्युहन्त्री विरूपाक्षी कपर्द्दी कमलासना ॥ ७५
दंष्ट्रिणी रङ्गिणी चैव लम्बाक्षी कङ्कभूषणी।
सम्भावा भाविनी चैव षोड़शैव प्रकीर्त्तिताः ॥ ७६
कथितं कनकव्यूहमम्बिकाख्यं शृणुष्व मे।
खेचरी चात्मनासा च भवानी वह्निरूपिणी ॥ ७७
वह्निनी वह्निनाभा च महिमा मृतलालसा।
प्रथमावरणे चाष्टौ शक्तयः सर्व्वसम्मताः ॥ ७८
क्षमा च शिखरा देवी ऋतुरत्नाशिला तथा।
छाया भूतपनी धन्या इन्द्रमाता च वैष्णवी ॥ ७९
तृष्णा रागवती मोहा कामकोपा महोत्कटा।
इन्द्रा च बधिरा देवी षोड़शैताः प्रकीर्त्तिताः ॥८०
कथितं चाम्बिकाव्यूहं श्रीव्यूहं शृणु सुव्रत।
सर्पा सर्पवती गन्धा प्राणापाना समानका ॥ ८१
उदाना व्याननामा च प्रथमावरणे स्मृताः।
तमोहता प्रभा मोघा तेजनी दहनी तथा ॥ ८२
भीमास्या ज्वालनी चोषा शोषणी रुद्रनायिका।
वीरभद्रा गणाध्यक्षा चन्द्रहासा च गह्वरा ॥ ८३
गणमाताम्बिका चैव शक्तयः सर्व्वसम्मताः।
द्वितीयावरणे प्रोक्ताः षोड़शैव यथाक्रमात् ॥ ८४
श्रीव्यूहं कथितं भद्रं वागीशं शृणु सुव्रत।
धारा वारिधरा चैव वह्निकी नाशकी तथा ॥ ८५
मर्त्यातीता महामाया वज्रिणी कामधेनुका।
प्रथमावरणेऽप्येवं शक्तयोऽष्टौ प्रकीर्त्तिताः ॥ ८६
पयोष्णी वारुणी शान्ता जयन्ती च वरप्रदा।
प्लावनी जलमाता च पयोमात्रा महाम्बिका ॥ ८७
रक्ता कराली चण्डाक्षी महोच्छुष्मा पयस्विनी।
मायाविद्येश्वरी काली कालिका च यथाक्रमम् ॥८८
षोड़शैव समाख्याताः शक्तयः सर्व्वसम्मताः।
व्यूहं वागीश्वरं प्रोक्तं गोमुखं व्यूहमुच्यते ॥ ८९
शङ्खिनी ह्लादिनी चैव लङ्कावर्णा च कल्किनी।
यक्षिणी मालिनी चैव वमनी च रसात्मनी ॥ ९०
प्रथमावरणे चैव शक्तयोऽष्टौ प्रकीर्त्तिताः।
चण्डा घण्टा महानादा सुमुखी दुर्म्मुखी बला ॥९१
रेवती प्रथमा घोरा सैन्या लीना महाबला।
जया च विजया चैव अपरा चापराजिता ॥ ९२
द्वितीयावरणे चैव शक्तयः षोड़शव तु।
कथितं गोमुखीव्यूहं भद्रकर्णीं शृणुष्व मे ॥ ९३
महाजया विरूपाक्षी शुक्लाभा काशमातृका।
संहारी जातहारी च दंष्ट्राली शुष्करेवती ॥ ९४
प्रथमावरणे चाष्टौ शक्तयः परिकीर्त्तिताः।
पिपीलिका पुष्पहारी अशनी सर्व्वहारिणी ॥ ९५
भद्रहा विश्वहारी च हिमा योगेश्वरी तथा।
छिद्रा भानुमती छिद्रा सैंहिकी सुरभी समा ॥ ९६
सर्व्वभव्या च वेगाख्या शक्तयः षोड़शैव तु।
महाव्यूहाष्टकं प्रोक्तमुपव्यूहाष्टकं शृणु ॥ ९७
अणिमाव्यूहमावेश्य प्रथमावरणे क्रमात्।
ऐन्द्रा तु चित्रभानुश्च वारुणी दण्डिरेव च ॥ ९८
प्राणरूपी तथा हंसः स्वात्मशक्तिः पितामहः।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ९९
केशवो भगवान् रुद्रश्चन्द्रमा भास्करस्तथा।
महात्मा च तथा ह्यात्मा ह्यन्तरात्मा महेश्वरः॥१००
परमात्मा ह्यणुर्जीवः पिङ्गलः पुरुषः पशुः।
भोक्ता भूतपतिर्भीमो द्वितीयावरणे स्मृताः ॥ १०१
कथितश्चाणिमाव्यूहं लघिमाख्यं वदामि ते।
श्रीकण्ठोऽनन्तश्च सूक्ष्मश्च त्रिमूर्त्तिः शशकस्तथा ॥१०२
अमरेशः स्थितीशश्च दारतश्च तथाष्टमः।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १०३
स्थाणुर्हरश्च दण्डेशो भौतीशः सुरपुङ्गवः।
सद्योजातोऽनुग्रहेशः क्रूरसेनः सुरेश्वरः ॥ १०४
क्रोधीशश्च तथा चण्डः प्रचण्डः शिव एव च।
एकरुद्रस्तथा कूर्म्मश्चैकनेत्रश्चतुर्मुखः ॥ १०५
द्वितीयावरणे रुद्राः षोड़शैव प्रकीर्त्तिताः।

कथितं लघिमाव्यूहं महिमां शृणु सुव्रत ॥ १०६
अजेशः क्षेमरुद्रश्च सोमोऽग्नी लाङ्गली तथा।
दण्डारुश्चार्द्धनारी च एकान्तश्चान्त एव च ॥ १०७
पाली भुजङ्गनामा च पिनाकी खड्गिरेव च।
काम ईशस्तथा श्वेतो भृगुः षोड़श वै स्मृताः ॥१०८
कथितं महिमाव्यूहं प्राप्तिव्यूहं शृणुष्व मे।
संवर्त्तो लकुलीशश्च बाड़वो हस्तिरेव च ॥ १०९
चण्डयक्षो गणपतिर्महात्मा भृगुजोऽष्टमः।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ११०
त्रिविक्रमो महाजिह्व ऋक्षः श्रीभद्र एव च।
महादेवो दधीचश्च कुमारश्च परावरः ॥ १११
महादंष्ट्रः करालश्च सूचकश्च सुवर्द्धनः।
महाध्वाङ्क्षो महानन्दो दण्डो गोपालकस्तथा ॥११२
प्राप्तिव्यूहं समाख्यातं प्राकाम्यं शृणु सुव्रत।
पुष्पदन्तो महानागो विपुलानन्दकारकः ॥ ११३
शुक्लो विशालः कमलो विल्वश्चारुण एव च।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ११४
रतिप्रियः सुरेशानश्चित्राङ्गश्च सुदुर्जयः।
विनायकः क्षेत्रपालो महामोहश्च जङ्गलः ॥ ११५
वत्सपुत्रो महापुत्रो ग्रामदेशाधिपस्तथा।
सर्व्वावस्थाधिपो देवो मेघनादः प्रचण्डकः ॥ ११६
कालदूतश्च कथितो द्वितीयावरणं स्मृतम्।
प्राकाम्यं कथितं व्यूहमैश्वर्य्यं कथयामि ते ॥ ११७
मङ्गला चर्च्चिका चैव योगीशा हरदायिका।
भासुरा सुरमाता च सुन्दरी मातृकाष्टमी ॥ ११८
प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु।
गणाधिपश्च मन्त्रज्ञो वरदेवः षड़ाननः ॥ ११९
विदग्धश्च विचित्रश्च अमोघो मोघ एव च।
अश्वी रुद्रश्च सोमेशश्चोत्तमोदुम्बरस्तथा ॥ १२०
नारसिंहश्च विजयस्तथा इन्द्रगुहः प्रभुः।
अपां पतिश्च विधिना द्वितीयावरणं स्मृतम् ॥ १२१
ऐश्वर्य्यं कथितं व्यूहं वशित्वं पुनरुच्यते।
गगनो भवनश्चैव विजयो ह्यजयस्तथा ॥ १२२
महाजयस्तथाङ्गारो व्यङ्गारश्च महायशाः।
प्रथमावरणे प्रोक्तो द्वितीयावरणे शृणु ॥ १२३
सन्दरश्च प्रचण्डेशो महावर्णो महासुरः।
महारोमा महागर्भः प्रथमः कनकस्तथा ॥ १२४
खरजो गरुड़श्चैव मेघनादोऽथ गर्ज्जकः।
गजश्च च्छेदको बाहुस्त्रिशिखो मारिरेव च ॥ १२५
वशित्वं कथितं व्यूहं शृणु कामावसायिकम्।
विनादो विकटश्चैव वसन्तो भय एव च ॥ १२६
विद्युन्महाबलश्चैव कमलो दमनस्तथा।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १२७
धर्म्मश्चातिबलः सर्पो महाकायो महाहनुः।
सबलश्चैव भस्माङ्गी दुर्ज्जयो दुरतिक्रमः ॥ १२८
वेतालो रौरवश्चैव दुर्द्धरो भोग एव च।
वज्रकालाग्निरुद्रश्च सद्यो नादो महागुहः ॥ १२९
द्वितीयावरणं प्रोक्तं व्यूहञ्चैवावसायिकम्।
कथितं षोड़शव्यूहं द्वितीयावरणं शृणु ॥ १३०
द्वितीयावरणे चैव दशव्यूहे च शक्तयः।
प्रथमावरणे चाष्टौ वाह्ये षोड़श एव च ॥ १३१
मनोहरा महानादा चित्रा चित्ररथा तथा।
रोहिणी चैव चित्राङ्गी चित्ररेखा विचित्रिका ॥१३२
प्रथमावरणे प्रोक्ता द्वितीयावरणं शृणु।
चित्रा विचित्ररूपा च शुभदा कामदा शुभा ॥ १३३
क्रूरा च पिङ्गला देवी खड्गिका लम्बिका सती।
दंष्ट्राली राक्षसी ध्वंसी लोलुपा लोहितामुखी॥१३४
द्वितीयावरणे प्रोक्ताः षोड़शैव समावृताः।
दशव्यूहं समाख्यातं दाहव्यूहं शृणुष्व मे ॥ १३५
सर्व्वा सती विश्वरूपा लम्पटा चामिषप्रिया।
दीर्घदंष्ट्रा च वज्रा च लम्बोष्ठी प्राणहारिणी ॥ १३६
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
गजकर्णाश्वकर्णा च महाकाली सुभीषणा ॥ १३७
वातवेगरवा घोरा घना घनरवा तथा।
वरघोषा महावर्णा सुघण्टा घण्टिका तथा ॥ १३८
घण्टेश्वरी महाघोरा घोरा चैवातिघोरिका।
द्वितीयावरणे चैव षोड़शैव प्रकीर्त्तिताः ॥ १३९
दाहव्यूहं समाख्यातं चण्डव्यूहं शृणुष्व मे।
अतिघण्टा चातिघोरा कराला करभा तथा ॥ १४०
विभूतिर्भोगदा कान्तिः शङ्खिनी चाष्टमी स्मृता।
प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ॥ १४१
पत्रिणी चैव गान्धारी योगमाता सुपीवरा।
रक्ता मालांशुका वीरा संहारी मांसहारिणी ॥१४२
फलहारी जीवहारी स्वेच्छाहारी च तुण्डिका।

...नी रङ्गिणी सञ्ज्ञा द्वितीये षोड़शैव तु ॥ १४३
...व्यूहं समाख्यातं चण्डाव्यूहमथोच्यते।
...नी चण्डमुखी चण्डा चण्डवेगा महारवा ॥ १४४
...ुटी चण्डभूश्चैव चण्डरूपाष्टमी स्मृता।
...मावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १४५
...प्राणा बला चैव बलजिह्वा बलेश्वरी।
...वेगा महाकाया महाकोपा च विद्युता ॥१४६
...ाली कलशी चैव विद्युता चण्डघोषिका।
...घोषा महारावा चण्डभाऽनङ्गचण्डिका ॥ १४७
...डायाः कथितं व्यूहं हरव्यूहं शृणुष्व मे।
...ाची कामदा देवी शूकरा कुक्कुटानना ॥ १४८
...ारी दुन्दुभी दुर्गा सौमित्रा चाष्टमी स्मृता।
...मावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १४९
...द्भवा महालक्ष्मीर्वर्णदा जीवरक्षिणी।
...रिणी दीर्घजीवा च दण्डवक्त्रा चतुर्भुजा ॥ १५०
...ोमचारी व्योमरूपा व्योमव्यापी शुभोदया।
...हचारी सुचारी च विषाहारी विषार्त्तिदा ॥१५१
...रव्यूहं समाख्यातं हराया व्यूहमुच्यते।
...णाच्युता च कङ्कारी देविका दुर्द्धरा वहा ॥१५२
...ण्डिका चपला चेति प्रथमावरणे स्मृताः।
...ण्डिका चामरी चैव भण्डिका च शुभानना ॥ १५३
...ण्डिका मुण्डिनी मुण्डा शाकिनी शाङ्करी तथा।
...र्त्तरी भर्त्तरी चैव भागिनी यज्ञदायिनी ॥ १५४
...मदंष्ट्रा महादंष्ट्रा कराला चेति शक्तयः।
...रायाः कथितं व्यूहं शौण्डव्यूहं शृणुष्व मे ॥ १५५
...कराली कराली च कालजङ्घा यशस्विनी।
...ेगा वेगवती यज्ञा वेदाङ्गा चाष्टमी स्मृता ॥ १५६
...थमावरणं प्रोक्तं द्वितीयावरणं शृणु।
...ा शङ्कातिशङ्का वा बला चैवाबला तथा ॥१५७
...ञ्जनी मोहनी माया विकटाङ्गी नली तथा।
...ण्डकी दण्डकी घोणा शोणा सत्यवती तथा ॥१५८
...ल्लोला चेति क्रमशः षोड़शैव यथाविधि।
शौण्डव्यूहं समाख्यातं शौण्डाया व्यूहमुच्यते ॥१५९
...तुरा रौद्रभागा च अमृता सकुला शुभा।
...लजिह्वार्थनेत्रा च रूपिणी दारिका तथा ॥ १६०
...थमावरणं प्रोक्तं द्वितीयावरणं शृणु।
...दिका रूपनामा च संहारी च क्षमान्तिका ॥१६१

कण्डिनी पेषिणी चैव महात्रासा कृतान्तिका।
दण्डिनी किङ्करी विम्बा वर्णिनी चामलाङ्गिनी॥१६२
द्राविणी द्राविणी चैव शक्तयः षोड़शैव तु।
कथितं हि मनोरम्यं शौण्डाया व्यूहमुत्तमम् ॥१६३
प्रथमाख्यं प्रवक्ष्यामि व्यूहं परमशोभनम्।
प्लवनी प्लावनी शोभा मन्दा चैव मदोत्कटा ॥ १६४
मन्दाक्षिपा महादेवी प्रथमावरणे स्मृताः।
कामसन्दीपनी देवी अतिरूपा मनोहरा ॥ १६५
महावशा मदग्राह्या विह्वला मदविह्वला।
अरुणा शोषणा दिव्या रेवती भाण्डनायिका ॥१६६
स्तम्भिनी घोररक्ताक्षी स्मररूपा सुघोषणा।
व्यूहं प्रथममाख्यातं स्वायम्भुव यथा तथा ॥ १६७
कथितं प्रथमाव्यूहं प्रवक्ष्यामि शृणुष्व मे।
घोरा घोरतरा घोरा अतिघोरा घनायिका ॥१६८
धावनी क्रोष्टुका मुण्डा चाष्टमी परिकीर्त्तिता।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १६९
भीमा भीमतरा भीमा शस्ता चैव सुवर्चुला।
स्तम्भिनी रोदिनी रौद्रा रुद्रवत्यचलाचला ॥ १७०
महाबला महाशान्तिः शाला शान्ता शिवाशिवा।
बृहत्कुक्षा महानाशा षोड़शैव प्रकीर्त्तिताः ॥ १७१
प्रथमायाः समाख्यातं मन्मथव्यूहमुच्यते।
तालकर्णी च बाला च कल्याणी कपिला शिवा१७२
इष्टिस्तुष्टिः प्रतिज्ञा च प्रथमावरणे स्मृताः।
ख्यातिः पुष्टिकरी तुष्टिर्जला चैव श्रुतिर्धृतिः ॥ १७३
कामदा शुभदा सौम्या तेजनी कामतन्त्रिका।
धर्म्माधर्म्मवशा शीला पापहा धर्म्मवर्द्धिनी ॥ १७४
मन्मथं कथितं व्यूहं मन्मथायाः शृणुष्व मे।
धर्म्मरक्षा विधाना च धर्म्माधर्म्मवती तथा ॥ १७५
सुमतिर्दुर्म्मतिर्म्मेधा विमला चाष्टमी स्मृता।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १७६
शुद्धिर्बुद्धिर्द्युतिः कान्तिर्वर्चुला मोहवर्द्धनी।
बला चातिबला भीमा प्राणवृद्धिकरी तथा ॥ १७७
निर्लज्जा निर्घृणा मन्दा सर्व्वपापक्षयङ्करी।
कपिला चातिविधुरा षोड़शैताः प्रकीर्त्तिताः ॥ १७८
मन्मथायिकमुक्तं ते भीमव्यूहं वदामि ते।
रक्ता चैव विरक्ता च उद्वेगा शोकवर्द्धिनी ॥ १७९
कामा तृष्णा क्षुधा मोहा चाष्टमी परिकीर्त्तिता।

प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १८०
जया निद्रा भयालस्या जलदृष्णोदरी दरा ।
कृष्णा कृष्णाङ्गिनी वृद्धा शुद्धोच्छिष्टाशनी वृषा ॥ १८१
कामना शोभनी दग्धा दुःखदा सुखदा बली ।
भीमव्यूहं समाख्यातं भीमायीव्यूहमुच्यते ॥ १८२
आनन्दा च सुनन्दा च महानन्दा शुभङ्करी ।
वीतरागा महोत्साहा जितरागा मनोरथा ॥ १८३
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
मनोन्मनी मनःक्षोभा मदोन्मत्ता मदाकुला ॥ १८४
मन्दगर्भा महाभासा कामानन्दा सुविह्वला ।
महावेगा सुवेगा च महाभोगा क्षयावहा ॥ १८५
क्रमणी क्रामणी वक्रा द्वितीयावरणे स्मृताः ।
कथितं तव भीमायीव्यूहं परमशोभनम् ॥ १८६
शाकुनं कथयाम्यद्य स्वायम्भुव मनोत्सुकम् ।
योगावेगा सुवेगा च अतिवेगा सुवासिनी ॥ १८७
देवी मनोरया वेगा जलावर्त्ता च धीमती ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १८८
शोक्षनी क्षोभणी बाला विप्रा शेषा सुशोषणी ।
विद्युताभासिनी देवी मनोवेगा च चापला ॥ १८९
विद्युज्जिह्वा महाजिह्वा भृकुटीकुटिलानना ।
फुल्लज्वाला महाज्वाला सुज्वाला च क्षयान्तिका ॥ १९०
शाकुनं कथितं व्यूहं शाकुनायाः शृणुष्व मे ।
ज्वालिनी चैव भस्माङ्गी तथा भस्मान्तगा तता ॥ १९१
भाविनी च प्रजा विद्या ख्यातिश्चैवाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १९२
उल्लेखा च पताका च भोगा भोगवती खगा ।
भोगभोगव्रता योगा भोगाख्या योगपारगा ॥ १९३
ऋद्धिर्बुद्धिर्धृतिः कान्तिः स्मृतिः साक्षाच्छ्रुतिर्धरा ।
शाकुनाया महाव्यूहं कथितं कामदायकम् ॥ १९४
स्वायम्भुव शृणु व्यूहं सुमत्याख्यं सुशोभनम् ।
धरेष्टा च परा दृष्टा ह्यमृता फलनाशिनी ॥ १९५
हिरण्याक्षी सुवर्णाक्षी देवी साक्षात् कपिञ्जला ।
कामरेखा च कथितं प्रथमावरणं शृणु ॥ १९६
रत्नद्वीपा च सुद्वीपा रत्नदा रत्नमालिनी ।
रत्नशोभा सुशोभा च महाशोभा महाद्युतिः ॥ १९७
शाम्बरी बन्धुरा ग्रन्थिः पादकर्णा करानना ।
हयग्रीवा च जिह्वा च सर्व्वभासेति शक्तयः ॥ १९८

कथितं सुमतिव्यूहं सुमत्या व्यूहमुच्यते ।
सर्व्वाशी च महाभक्षा महादंष्ट्रातिरौरवा ॥ १९९
विस्फुलिङ्गा विलिङ्गा च कृतान्ता भास्करानना ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २००
रागा रङ्गवती श्रेष्ठा महाक्रोधा च रौरवा ।
क्रोधनी वसनी चैव कलहा च महाबला ॥ २०१
कलन्तिका चतुर्भेदा दुर्गा वै दुर्गमानिनी ।
नाली सुनाली सौम्या च इत्येवं कथितं मया ॥ २०२
गोपव्यूहं वदाम्यत्र शृणु स्वायम्भुवाखिलम् ।
पाटली पाटवी चैव पाटी विटिपिटा तथा ॥ २०३
कङ्कटा सुपटा चैव प्रघटा च घटोद्भवा ।
प्रथमावरणञ्चात्र भाषया कथितं मया ॥ २०४
नादाक्षी नादरूपा च सर्व्वकारी गमाऽगमा ।
अनुचारी सुचारी च चण्डनाडी सुवाहिनी ॥ २०५
सुयोगा च वियोगा च हंसाख्या च विलासिनी ।
सर्व्वगा सुविचारा च वञ्चनी चेति शक्तयः ॥ २०६
गोपव्यूहं समाख्यातं गोपायीव्यूहमुच्यते ।
भेदिनी च्छेदिनी चैव सर्व्वकारी क्षुधाशनी ॥ २०७
उच्छुष्मा चैव गान्धारी भस्माशी वडवानला ।
प्रथमावरणञ्चैव द्वितीयावरणं शृणु ॥ २०८
अन्धा बाह्वाशिनी बाला दीपा क्षमा तथैव च ।
अक्षा व्यक्षा च हृल्लेखा हृद्गता मायिकापरा ॥ २०९
आमया ह्लादिनी भिल्ली सल्लासल्ला सरस्वती ।
रुद्रशक्तिर्महाशक्तिर्महामोहा च गोनदी ॥ २१०
गोपायी कथितं व्यूहं नन्दव्यूहं वदामि ते ।
नन्दिनी च निवृत्तिश्च प्रतिष्ठा च यथाक्रमम् ॥ २११
विद्यानाशा खग्रसिनी चामुण्डा प्रियदर्शिनी ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २१२
गुह्या नारायणी मोहा प्रजा देवी च चक्रिणी ।
कङ्कटा च तथा काली शिवादीशा ततः परम् ॥ २१३
विरामाया च वागीशी वाहिनी भीषिणी तथा ।
सुगमा चैव निर्दिष्टा द्वितीयावरणे स्मृता ॥ २१४
नन्दव्यूहं मयाख्यातं नन्दाया व्यूहमुच्यते ।
विनायकी पूर्णिमा च रङ्कारी कुण्डली तथा ॥ २१५
इच्छा कपालिनी चैव दीपिनी च जयन्तिका ।
प्रथमावरणे चाष्टौ शक्तयः परिकीर्तिताः ॥ २१६
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।

पावनी चाम्बिका चैव सर्व्वात्मा पूतना तथा ॥ २१७
छगली मोदिनी साचाद्देवी लम्बोदरी तथा ।
संहारी कालिनी चैव कुसुमा च यथाक्रमम् ॥ २१८
शुक्रा तारा तथा ज्ञाना क्रिया गायत्रिका तथा ।
सावित्री चेति विधिना द्वितीयावरणं स्मृतम् ॥ २१९
नन्दायाः कथितं व्यूहं पैतामहमतः परम् ।
नन्दिनी चैव फेत्कारी क्रोधा हंसा षडङ्गुला ॥ २२०
आनन्दा वसुदुर्गा च संहारा ह्यमृताष्टमी ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २२१
कुलान्तिका नला चैव प्रचण्डा मर्द्दिनी तथा ।
सर्व्वभूता भया चैव दया च बड़वामुखी ॥ २२२
लम्पटा पन्नगा देवी कुसुमा विपुलान्तका ।
केदारा च तथा कूर्म्मा दुरिता मन्दरोदरी ॥ २२३
खड्गचक्रेति विधिना द्वितीयावरणं स्मृतम् ।
व्यूहं पैतामहं प्रोक्तं धर्म्मकामार्थमुक्तिदम् ॥ २२४
पितामहाया व्यूहञ्च कथयामि शृणुष्व मे ।
वशा च नन्दनाख्या वा राविका रिपुभेदिनी ॥ २२५
रूपा चतुर्था योगा च प्रथमावरणे स्मृताः ।
भूता नादा महाबाला खर्परा च तथा परा ॥ २२६
भस्मा कान्ता तथा दृष्टिद्विभुजा ब्रह्मरूपिणी ।
उच्चा वैकारिका जाता कर्म्ममोटी तथापरा ॥ २२७
महामोहा महामाया गान्धारी पुष्पमालिनी ।
शब्दापी च महाघोषा षोड़शैव तथान्तिमे ॥ २२८
सर्व्वाश्च द्विभुजा देव्यो बालभास्करसन्निभाः ।
पद्मशङ्खधराः शान्ता रक्तस्रग्वस्त्रभूषणाः ॥ २२९
सर्व्वाभरणसम्पूर्णा मुकुटाद्यैरलङ्कृताः ।
मुक्ताफलमयैर्द्दिव्यै रत्नचित्रैर्मनोरमैः ॥ २३०
विभूषिता गौरवर्णा ध्येया देव्यः पृथक् पृथक् ।
एवं सहस्रकलशं ताम्रजं मृण्मयन्तु वा ॥ २३१
पूर्व्वोक्तलक्षणैर्युक्तं रुद्रदैवे प्रतिष्ठितम् ।
भवाद्यैर्विष्णुना प्रोक्तैर्नाम्नाञ्चैव सहस्रकैः ॥ २३२
सम्पूज्य विन्यसेदग्रे सेचयेद्दाणविग्रहम् ।
अभिषिच्य च विज्ञाप्य सेचयेत् पृथिवीपतिम् ॥ २३३
एवं सहस्रकलशं सर्व्वसिद्धिफलप्रदम् ।
बलारिं मन्महाव्यूहं सर्व्वलक्षणलक्षितम् ॥ २३४
सर्व्वेषां कलशं प्रोक्तं पूर्व्ववद्धेमनिर्म्मितम् ।
सर्व्वं गन्धाम्बुसम्पूर्णं पञ्चरत्नसमन्विताः ॥ २३५

तथा कनककसंयुक्ता देवस्य घृतपूरिताः ।
क्षीरेण वाथ दध्ना वा पञ्चगव्येन वा पुनः ॥ २३६
ब्रह्मकूर्च्चेन वा सेध्यमभिषेको विधीयते ।
रुद्राध्यायेन रुद्रस्य नृपतेः शृणु सत्तम ॥ २३७
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्व्वेभ्यः सर्व्वशर्व्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥ २३८
मन्त्रेणानेन राजानं सेचयेदभिषिचितम् ।
होमञ्च मन्त्रेणानेन अघोरेणाथचारिणा ॥ २३९
प्रागाद्यं देवकुण्डे वा स्थण्डिले वा घृतादिभिः ।
समिदाज्यचरुं लाज-शालि-नीवारतण्डुलैः ।
अष्टोत्तरशतं हुत्वा राजानमधिवासयेत् ॥ २४०
पुण्याहं स्वस्ति रुद्राय कौतुकं हेमनिर्म्मितम् ।
भसितञ्च मृणालेन बन्धयेद्दक्षिणे करे ॥ २४१
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ २४२
मन्त्रेणानेन राजानं सेचयेदाथ होमयेत् ।
सर्व्वद्रव्याभिषिकञ्च होमद्रव्यैर्यथाक्रमम् ॥ २४३
प्रागाद्यं ब्रह्मभिः प्रोक्तं सर्व्वद्रव्यैर्यथाक्रमम् ॥ २४४
तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥ २४५
स्वाहान्तं पुरुषेणैवं प्राक्कुण्डे होमयेद्द्विजः ।
अघोरेण च याम्ये च होमयेत् कृष्णवाससा ॥ २४६
वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठायनमोरुद्रायनमः
इत्याद्युक्तक्रमेणैव जुहुयात् पश्चिमे नरः ॥ २४७
सद्येन पश्चिमे होमः सर्व्वद्रव्यैर्यथाक्रमम् ।
सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ॥ २४८
भवे भवेनातिभवे भवस्व मां भवोद्भवाय नमः ।
स्वाहान्तं जुहुयादग्नौ मन्त्रेणानेन बुद्धिमान् ॥ २४९
आग्नेय्याञ्च विधानेन ऋचा रौद्रेण होमयेत् ।
जातवेदसे सुनवाम सोममित्यादि ।
नैर्ऋते पूर्व्ववद्द्रव्यैः सर्व्वैर्होमो विधीयते ॥ २५०
मन्त्रेणानेन दिव्येन सर्व्वसिद्धिकरेण च ।
निमि निघि दिघ स्वाहा खड्ग रावणभेदन ॥ २५१
रुधिराज्यार्द्रनैरृत्ये स्वाहा नमः स्वधा नमः ।
यथेष्टं विधिना द्रव्यैर्मन्त्रेणानेन होमयेत् ॥ २५२
यस्यां हि विविधैर्द्रव्यैरीशानेन द्विजोत्तमाः ।
ईशान्यामथ पूर्व्वोक्तैर्द्रव्यैर्होममथाचरेत् । २५३

ईशानाय कद्रुद्राय प्रचेतसे त्र्यम्बकाय सर्व्वाय।
तन्नो रुद्रः प्रचोदयात्॥ २५४
प्रधानं पूर्व्ववद्भव्येरीशानेन द्विजोत्तमाः।
प्रतिद्रव्यं सहस्रेण जुहुयान्नृपसन्निधौ।
स्वयं वा जुहुयादग्नौ भूपतिः शिववत्सलः॥ २५५
ईशानः सर्व्वविद्यानामीश्वरः सर्व्वभूतानां
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु
सदाशिव ओं॥ २५६
प्रायश्चित्तमघोरेण शेषं सामान्यमाचरेत्।
कृताधिवासं राजानं शङ्खभेर्य्यादिनिस्वनैः॥ २५७
जयशब्दरवैर्दिव्यैर्वेदघोषैः सुशोभनैः।
सेचयेत् कूर्च्चतोयेन प्रोच्चयेद्वा नृपोत्तमम्॥ २५८
रुद्राध्यायेन विधिना रुद्रभस्माङ्गधारिणम्।
शङ्खचामरभेर्य्याद्यं छत्रं चन्द्रसमप्रभम्॥ २५९
शिविकां वैजयन्तीञ्च साधयेन्नृपतेः शुभाम्।
राज्याभिषेकयुक्ताय चत्रियायेश्वराय वा॥ २६०
नृपचिह्नानि नान्येषां चत्रियाणां विधीयते।
प्रमाणञ्चैव सर्व्वेषां द्वादशाङ्गुलमुच्यते॥ २६१
प्लक्षोदुम्बराश्वत्थवटाः पूर्व्वादितः क्रमात्।
तोरणाद्यानि वै तत्र पट्टमानेन पट्टिकाः॥ २६२
अष्टमाङ्गुलसंयुक्त-दर्भमालासमावृतम्।
दिग्ध्वजाष्टकसंयुक्तं द्वारकुम्भैः सुशोभनम्॥ २६३
हैमतोरणकुम्भैश्च भूषितं स्नापयेन्नृपम्।
सर्व्वोपरि समासीनं शिवकुम्भेन सेचयेत्॥ २६४
तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि।
तन्नः शिवः प्रचोदयात्॥ २६५
अनेनानेन विधिना वर्द्धन्या गौरिगीतया।
रुद्राध्यायेन वा सर्व्वमघोरेणाथवा पुनः॥ २६६
दिव्यैराभरणैः शुक्लैर्मुकुटाद्यैः सुकल्पितैः।
क्षौमवस्त्रैश्च राजानं तोषयेन्नियतं शनैः॥ २६७
अष्टषष्टिपलेनैनं हेम्ना कृत्वा सुदर्शनम्।
नवरत्नैरलङ्कृत्य दद्याद्दै दक्षिणां गुरोः॥ २६८
दशधेनु सवस्त्रञ्च दद्यात् चेत्रं सुशोभनम्।
शतद्रोणतिलञ्चैव शतद्रोणांश्च तण्डुलान्॥ २६९
शयनं वाहनं शय्यां सोपधानां प्रदापयेत्।
योगिनाञ्चैव सर्व्वषां त्रिंशत्पलसुदाहृतम्॥ २७०
अशेषांश्च तदर्द्धेन शिवभक्तांस्तदर्द्धतः।
महापूजां ततः कुर्य्यान्महादेवस्य वै नृपः॥ २७१
एवं समासतः प्रोक्तं जयसेचनमुत्तमम्।
एवं पुराभिषिक्तस्तु शक्रः शक्रत्वमागतः॥ २७२
ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः।
अम्बिका चाम्बिकात्वञ्च सौभाग्यमतुलं तथा॥ २७३
पवित्री च तथा लक्ष्मीर्देवी कात्यायनी तथा।
नन्दिनाथ पुरा मृत्यू रुद्राध्यायेन वै जितः॥ २७४
अभिषिक्तोऽसुरः पूर्व्वं तारकाख्यो महाबलः।
विद्युन्माली हिरण्याक्षो विष्णुना वै विनिर्ज्जितः॥ २७५
नृसिंहेन पुरा दैत्यो हिरण्यकशिपुर्हतः।
स्कन्देन तारकाद्याश्च कौशिक्या च पुराम्बया॥ २७६
सुन्दोपसुन्दतनयौ जितौ दैत्येन्द्रपूजितौ।
वसुदेव-सुदेवौ तु निहतौ कृतकृत्यया॥ २७७
स्नानयोगेन विधिना ब्रह्मणा निर्म्मितेन तु।
देवासुरे दितिसुता जिता देवैरनिन्दिताः॥ २७८
स्नाप्यैव सर्व्वभूपैश्च तथान्यैरपि भूसुरैः।
प्राप्ताश्च सिद्धयो दिव्या नात्र कार्य्या विचारणा॥ २७९
अहोऽभिषेकमाहात्म्यमहो शुद्धसुभाषितम्।
येनैवमभिषिक्तेन सिद्धैर्मृत्युर्जितस्त्विति॥ २८०
कल्पकोटिशतेनापि यत् पापं समुपार्ज्जितम्।
स्नात्वैवं मुच्यते राजा सर्व्वपापैर्न संशयः॥ २८१
व्याधितो मुच्यते राजा चयकुष्ठादिभिः पुनः।
स नित्यं विजयी भूत्वा पुत्रपौत्रादिभिर्युतः॥ २८२
जनानुरागसम्पन्नो देवराज इवापरः।
मोदते पापहीनश्च प्रियया धर्म्मनिष्ठया॥ ॥ २८३
उद्देशमात्रं कथितं फलं परमशोभनम्॥
नृपाणामुपकाराय स्वायम्भुव मनो मया॥ २८४

इति श्रीलैङ्गे महापुराणे उपरिभागे अभिषेक-
विधिर्नाम सप्तविंशोऽध्यायः॥ २७॥

---

## अष्टाविंशोऽध्यायः।

सूत उवाच।

स्नात्वा देवं नमस्कृत्य देवदेवमुमापतिम्।
दिव्येन चक्षुषा रुद्रं नीललोहितमीश्वरम्॥ १
दृष्ट्वा तुष्टाव वरदं रुद्राध्यायेन शङ्करम्।
देवोऽपि तुष्ट्या निर्व्वाणं राज्यान्ते कर्म्मणैव तु।

तत्रास्तीति सञ्चोक्ता तत्रवान्तरधीयत ॥ २
स्वायम्भुवो मनुर्द्देवं नमस्कृत्य वृषध्वजम्।
आरुरोह महासेनं महावृषमिवेश्वरः ॥ ३
तत्र दृष्ट्वा हिरण्याभं योगैश्वर्य्यसमन्वितम्।
सनत्कुमारं वरदमपश्यद्ब्रह्मणः सुतम् ॥ ४
नमश्चकार वरदं ब्रह्मण्यं ब्रह्मरूपिणम्।
कृताञ्जलिपुटो भूत्वा तुष्टाव च महाद्युतिः ॥ ५
सोऽपि दृष्ट्वा मनुं देवो हृष्टरोमाऽभवन्मुनिः।
सनत्कुमारः प्राहेदं घृणया च घृणानिधिः ॥ ६

सनत्कुमार उवाच।

दृष्टा सर्व्वेश्वराच्छान्ताच्छङ्करान्नीललोहितात्।
लब्धाभिषिक्तं सम्प्राप्तो विवक्षुर्वद यद्यपि ॥ ७

सूत उवाच।

तस्य तद्वचनं श्रुत्वा प्रणिपत्य कृताञ्जलिः।
विज्ञापयामास कथं कर्म्मणा निर्वृतिर्विभो ॥ ८
वक्तुमर्हसि चास्माकं कर्म्मणा केवलेन च।
ज्ञानेन निर्वृतिः सिद्धा विभो मिश्रेण वा क्वचित् ॥ ९

सनत्कुमार उवाच।

अथ तस्य वचः श्रुत्वा श्रुतिसारविदां निधिः।
सनत्कुमारो भगवान् कर्म्मणा निर्वृतिः क्रमात् ॥ १०
मिश्रेण च क्रमादेव चणाज्ज्ञानेन वै मुने।
पुरा मानेन चोष्ट्रत्वमगमं नन्दिनः प्रभोः ॥ ११
शापात् पुनः प्रसादाद्धि शिवमभ्यर्च्च्य शङ्करम्।
प्रसादान्नन्दिनस्तस्य कर्म्मणैव सुतो ह्यहम् ॥ १२
श्रुत्वोत्तमां गतिं दिव्यामवस्थां प्राप्तवानहम्।
शिवार्च्चनप्रकारेण शिवधर्म्मेण नान्यथा ॥ १३
राज्ञां षोडशदानानि नन्दिना कथितानि च।
धर्म्मकामार्थमुक्त्यर्थं कर्म्मणैव महात्मना ॥ १४
तुलादिरोहणाद्यानि शृणु तानि यथातथम्।
ग्रहणादिषु कालेषु शुभदेशेषु शोभनम् ॥ १५
विंशद्धस्तप्रमाणेन मण्डपं कूटमेव च।
यथाष्टादशहस्तेन कलाहस्तेन वा पुनः ॥ १६
कृत्वा वेदिं तथा मध्ये नवहस्तप्रमाणतः।
अष्टहस्तेन वा कार्य्या सप्तहस्तेन वा पुनः ॥ १७
द्विहस्ता सार्द्धहस्ता वा वेदिका चातिशोभना।
द्वादशस्तम्भसंयुक्ता साधुरम्या भ्रमन्तिका ॥ १८
परितो नवकुण्डानि चतुरस्राणि कारयेत्।
ऐन्द्र-ईशानयोर्मध्ये प्रधानं ब्रह्मणः सुत ॥ १९
अथवा चतुरस्रञ्च योन्याकारमतः परम्।
स्त्रीणां कुण्डानि विप्रेन्द्रायोन्याकाराणिकारयेत् २०
अर्द्धचन्द्रं त्रिकोणञ्च वर्त्तुलं कुण्डमेव च।
षडस्रं सर्व्वतो वापि त्रिकोणं पद्मसन्निभम् ॥ २१
अष्टास्रं सर्व्वमाने तु स्थण्डिलं केवलन्तु वा।
चतुर्द्वारसमोपेतं चतुस्तोरणभूषितम् ॥ २२
दिग्गजाष्टकसंयुक्तं दर्भमाला समावृतम्।
अष्टमङ्गलसंयुक्तं वितानोपरिशोभितम् ॥ २३
तुलास्तम्भद्रुमाश्चात्र विल्वादीनि विशेषतः।
विल्वाश्वत्थपलाशाद्याः केवलं खादिरन्तु वा ॥ २४
येन स्तम्भः कृतः पूर्व्वं तेन सर्व्वन्तु कारयेत्।
अथवा मिश्रमार्गेण वेणुना वा प्रकल्पयेत् ॥ २५
अष्टहस्तप्रमाणन्तु हस्तद्वयसमायुतम्।
तुलास्तम्भस्य विष्कम्भोऽनाहतस्त्रिगुणो मतः ॥ २६
द्व्यङ्गुलेन विहीनन्तु सुवृत्तं निर्व्रणं तथा।
उभयोरन्तरञ्चैव षड्ढस्तं नृपते स्मृतम् ॥ २७
द्वयोश्चतुर्हस्तकृतमन्तरं स्तम्भयोरपि।
षड्टस्तमन्तरं ज्ञेयं स्तम्भयोरुपरिस्थितम् ॥ २८
वितस्तिमात्रं विस्तारो विष्कम्भस्तावदुत्तरम्।
स्तम्भयोस्तु प्रमाणेन उत्तरद्वारसम्मितम् ॥ २९
षट्त्रिंशन्मात्रसंयुक्तं व्यायामन्तु तुलात्मकम्।
विष्कम्भमष्टमात्रन्तु यवपञ्चकसंयुतम् ॥ ३०
षट्त्रिंशन्मात्रनाभं स्यान्निर्माणाद्वर्त्तुलं शुभम्।
अग्रे मूले च मध्ये च हेमपट्टेन बन्धयेत् ॥ ३१
पट्टमध्ये प्रकर्त्तव्यमवलम्बनकत्रयम्।
ताम्रेण च प्रकर्त्तव्यमवलम्बनकत्रयम् ॥ ३२
आरेण वा प्रकर्त्तव्यमायसं नैव कारयेत्।
मध्ये चोर्द्ध्वमुखं कार्य्यमवलम्बं सुशोभनम् ॥ ३३
रश्मिभिस्तोरणाग्रे वा बन्धयेच्च विधानतः।
जिह्वामिकां तुलामध्ये तोरणन्तु विधीयते ॥ ३४
उत्तरस्य च मध्ये च शङ्कुं दृढमनुत्तमम्।
वितानेनोपरि च्छाद्य दृढं सम्यक् प्रयोजयेत् ॥ ३५
शङ्कोः सुषिरसम्पन्नं वलयं कारयेन्मुने।
तुलामध्ये वितानेन तुलया लम्बके तथा ॥ ३६
वलयेन प्रयोक्तव्यं कुण्डलं वावलम्बनम्।
सुदृढञ्च तुलामध्ये नवमाङ्गुलमानतः ॥ ३७

षट्कस्यैव तु विस्तारं पञ्चमात्रप्रमाणतः।
अपरौ सुदृढौ पिण्डौ शुभद्रव्येण कारयेत्॥ ३८
शिक्याधस्तात् प्रकर्त्तव्यौ पञ्चप्रादेशविस्तरौ।
सहस्रेण तु कर्त्तव्यौ पलानां धारकावुभौ॥ ३९
शताष्टकेन वा कुर्य्यात् पलैः षट्शतमेव वा।
चतुस्तालञ्च कर्त्तव्यं विस्तारं मध्यमं तथा॥ ४०
सार्द्धवितालविस्तारं कलशस्य विधीयते।
बध्नीयात् पञ्चपात्रन्तु त्रिमात्रं षट्कमुच्यते॥ ४१
चतुर्द्वारसमोपेतं द्वारमङ्गुलमात्रकम्।
कुण्डलैश्च समोपेतैः शुक्लशुद्धसमन्वितैः॥ ४२
कुण्डले कुण्डले कार्य्यं शृङ्खलापरिमण्डलम्।
शृङ्खलाधारवलयमवलम्बेन योजयेत्॥ ४३
प्रादेशं वा चतुर्मात्रं भूमिस्थक्षावलम्बयेत्।
अष्टौ पुरुषमात्रौ तु कर्त्तव्यौ शोभनावुभौ॥ ४४
तौ वालुकाभिः सम्पूर्य्य शिवं तत्र विनिक्षिपेत्।
द्विहस्तमात्रमवटे स्थापनीयौ प्रयत्नतः॥ ४५
निःशेषं पूरयेद्विद्वान् वालुकाभिः समन्ततः।
यन निश्चलतां गच्छेत् तेन मार्गेण कारयेत्॥ ४६
श्रूयतां परमं गुह्यं वेदिकोपरि मण्डलम्।
अष्टमाङ्गुलसंयुक्तं मङ्गलाङ्कुरशोभितम्॥ ४७
फलपुष्पसमाकीर्णं धूपदीपसमन्वितम्।
वेदिमध्ये प्रकर्त्तव्यं दर्पणोदरसन्निभम्॥ ४८
आलिखेन्मण्डलं पूर्व्वं चतुर्द्वारसमन्वितम्।
शोभोपशोभासम्पन्नं कर्णिकाकेसरान्वितम्॥ ४९
वर्णजातिसमोपेतं पञ्चवर्णान्तु कारयेत्।
वज्रं प्रागन्तरे भागे आग्नेय्यां शक्तिमुज्ज्वलाम्॥ ५०
आलिखेद्दक्षिणे दण्डं नैरृत्यां खड्गमालिखेत्।
पाशञ्च वारुणे लेख्यं ध्वजं वै वायुगोचरे॥ ५१
कौवेर्य्यान्तु गदा लेख्या ऐशान्यां शूलमालिखेत्।
शूलस्य वामदेशेन चक्रं पद्मन्तु दक्षिणे॥ ५२
एवं लिखित्वा पश्चाच्च होमकर्म्म समाचरेत्।
प्रधानहोमं गायत्र्या स्वाहा शक्राय वह्नये॥ ५३
यमाय राक्षसेशाय वरुणाय च वायवे।
कुवेरायेश्वरायाथ विष्णवे ब्रह्मणे पुनः॥ ५४
स्वाहान्तं प्रणवेनैव होतव्यं विधिपूर्व्वकम्।
स्वशाखाभिमुखेनैव जयादिप्रतिसंयुतम्॥ ५५
स्विष्टान्तं सर्व्वकार्य्याणि कारयेद्विधिवत् तदा।
सर्व्वहोमाग्रहोमे च समित् पालाशमुच्यते।
एकविंशतिसंख्यातं मन्त्रेणानेन होमयेत्॥ ५६
अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व
चेद्ध वर्द्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्ना-
द्येन समेधय स्वाहा। भूः स्वाहा भुवः स्वाहा
स्वः स्वाहा भूर्भुवः स्वस्तथैव च॥
समिद्धोमश्च चरुणा घृतस्य च यथाक्रमम्।
शुद्धान्नपायसञ्चैव मुद्गान्नं चरवः स्मृताः॥ ५७
सहस्रं वा तदर्द्धं वा शतमष्टोत्तरन्तु वा॥ ५८
अग्न आयूंषि पवस आसुवोर्ज्जमिषञ्च नः आरे
बाधस्व दुच्छुनां अग्निर्ऋषिः पवमानः पाञ्चजन्यः
पुरोहितः तमीमहे महागयं अग्ने पवस्व स्वपा
अस्मे वर्च्चः सुवीर्य्यं दधद्रयिं मयि पोषं प्रजापते
न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम
पतयो रयीणाम्।
गायत्र्या च प्रधानस्य समिद्धोमस्तथैव च।
चरुणा च तथाज्यस्य शक्रादीनाञ्च होमयेत्॥ ५९
वज्रादीनाञ्च होतव्यं सहस्रार्द्धं ततः क्रमात्।
ब्रह्मयज्ञेति मन्त्रेण ब्रह्मणे विष्णवे पुनः॥ ६०
नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्।
अयं विशेषः कथितो होममार्गः सुशोभनः।
दूर्व्वया क्षीरयुक्तेन पञ्चविंशत् पृथक् पृथक्॥ ६१
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्॥ ६२
दूर्व्वाहोमः प्रशस्तोऽयं वास्तुहोमश्च सर्व्वथा।
प्रायश्चित्तमघोरेण सर्पिषा च शतं शतम्॥ ६३
ब्रह्माणं दक्षिणे वामे विष्णुं विश्वगुरुं शिवम्।
मध्ये देव्या समं ज्ञेयमिन्द्रादिगणसंवृतम्॥ ६४
आदित्यं भास्करं भानुं रविं देवं दिवाकरम्।
उषां प्रभां तथा प्रज्ञां सन्ध्यां सावित्रिमेव च॥ ६५
पञ्चप्राकारविधिना खखोल्काय महात्मने।
विष्टरां सुभगाञ्चैव वर्द्धनीञ्च प्रदक्षिणाम्॥ ६६
आप्यायनीञ्च सम्पूज्य देवीं पद्मासने रविम्।
प्रभूतं वाथ कर्त्तव्यं विमलं दक्षिणे तथा॥ ६७
सारं पश्चिमभागे च माराध्यञ्चोत्तरे यजेत्॥

मध्ये सुखं विजानीयात् कोणेषु यथाक्रमम् ॥ ६८
दीप्तां सूक्ष्मां जयां भद्रां विभूतिं विमलां क्रमात्।
अमोघां विद्युताञ्चैव मध्यतः सर्व्वतोमुखीम् ॥ ६९
सोममङ्गारकञ्चैव बुधं गुरुमनुक्रमात्।
भार्गवञ्च तथा मन्दं राहुं केतुं तथैव च ॥ ७०
पूजयेद्धोमयेद्देवं दापयेच्च विशेषतः।
योगिनो भोजयेत् तत्र शिवतत्त्वैकपारगान् ॥ ७१
दिव्याध्ययनसम्पन्नान् कृत्वैवं विधिविस्तरम्।
होमे प्रवर्त्तमाने च पूर्व्वदिक्स्थानमध्यमे ॥ ७२
आरोहयेद्विधानेन रुद्राध्यायेन वै नृपम्।
धारयेत् तत्र भूपालं घटिकैकां विधानतः ॥ ७३
यजमानो जपेन्मन्त्रं रुद्रगायत्रिसंज्ञकम्।
घटिकार्द्धं तदर्द्धं वा तत्रैवासनमारभेत् ॥ ७४
आलोक्य वारुणं धीमान् कूर्चहस्तः समाहितः।
नृपश्च भूषणैर्युक्तः खड्गखेटकधारकः ॥ ७५
स्वस्तिरित्यादिभिश्चादावन्ते चैव विशेषतः।
पुण्याहं ब्राह्मणैः कार्य्यं वेदवेदाङ्गपारगैः ॥ ७६
जयमङ्गलशब्दादि-ब्रह्मघोषैः सुशोभनैः।
नृत्यवाद्यादिभिर्गीतैः सर्व्वशोभासमन्वितैः ॥ ७७
स्वमेवं चन्द्रदिग्भागे सुवर्णं तत्र विन्यसेत्।
तुलाधारौ समौ वृत्तौ तुलाभारः सदा भवेत् ॥ ७८
शतनिष्काधिकं श्रेष्ठं तदर्द्धं मध्यमं स्मृतम्।
तस्यार्द्धञ्च कनिष्ठं स्यात् त्रिविधं तत्र कल्पितम् ॥ ७९
वस्त्रयुग्ममथोष्णीषं कुण्डलं कण्ठशोभनम्।
अङ्गुलीभूषणञ्चैव मणिबन्धस्य भूषणम् ॥ ८०
एतानि चैव सर्व्वाणि प्रारब्धे धर्म्मकर्म्मणि।
पाशुपतव्रतायाथ भस्माङ्गाय प्रदापयेत् ॥ ८१
पूर्व्वोक्तभूषणं सर्व्वं सोष्णीषं वस्त्रसंयुतम्।
दद्यादेतत्रयोत्सृज्य आच्छादनपटं बुधः ॥ ८२
दक्षिणाञ्च शतं सार्द्धं तदर्द्धं वा प्रदापयेत्।
योगिनाञ्चैव सर्व्वेषां पृथङ्निष्कं प्रदापयेत् ॥ ८३
यागोपकारणं दिव्यमाचार्य्याय प्रदापयेत्।
इतरेषां यतीनान्तु पृथङ्निष्कं प्रदापयेत् ॥ ८४
तुलारोहसुवर्णञ्च शिवाय विनिवेदयेत्।
प्रासादं मण्डपञ्चैव प्राकारं भूषणं तथा ॥ ८५
सुवर्णपुष्पपट्टं खड्गं वै कोशमेव च।
कृत्वा दत्त्वा शिवायाथ किञ्चिच्छेषञ्च बुद्धिमान् ॥ ८६
आचार्य्येभ्यः प्रदातव्यं भस्माङ्गेभ्यो विशेषतः।
वन्दीकृतान् विसर्ज्याथ कारागृहनिवासिनः ॥ ८७
सहस्रकलशैस्तत्र सेचयेत् परमेश्वरम्।
घृतेन केवलेनापि देवदेवमुमापतिम् ॥ ८८
पयसा वाथ दध्ना वा सर्व्वद्रव्यैरथापि वा।
ब्रह्मकूर्च्चेन वा देवं पञ्चगव्येन वा पुनः ॥ ८९
गायत्र्या चैव गोमूत्रं गोमयं प्रणवेन वा।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि ॥ ९०
तेजोऽसीत्याज्यमीशानमन्त्रेणैवाभिषेचयेत्।
देवस्य त्वेति देवेशं कुशाम्बुकलशेन वै ॥ ९१
रुद्राध्यायेन वा सर्व्वं स्नापयेत् परमेश्वरम्।
सहस्रकलशं शम्भोर्नाम्नाञ्चैव सहस्रकैः ॥ ९२
विष्णुना कथितैर्वापि तण्डिना कथितैस्तु वा।
दक्षेण मुनिमुख्येन कीर्त्तितैरथवा पुनः ॥ ९३
महापूजा प्रकर्त्तव्या महादेवस्य भक्तितः।
शिवार्च्चकाय दातव्या दक्षिणा स्वगुरोः सदा ॥ ९४
देहार्थञ्च सर्व्वेषां दक्षिणा च यथाक्रमम् ॥ ९५
दीनान्धकृपणानाञ्च बाल-वृद्ध-कृशातुरान्।
भोजयेच्च विधानेन दक्षिणामपि दापयेत् ॥ ९६
इति श्रीलैङ्गे महापुराणे उपरिभागे तुलापुरुष-
दानविधावष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः।

### सनत्कुमार उवाच।

तुला ते कथिता ह्येषा आद्या सामान्यरूपिणी।
हिरण्यगर्भं वक्ष्यामि द्वितीयं सर्व्वसिद्धिदम् ॥ १
अधःपात्रं सहस्रेण हिरण्येन विधीयते।
ऊर्द्धपात्रं तदर्द्धेन मुखं संवेशमात्रकम् ॥ २
हैममेवं शुभं कुर्य्यात् सर्व्वालङ्कारसंयुतम्।
अधःपात्रे स्मरेद्देवीं गुणत्रयसमन्विताम् ॥ ३
चतुर्व्विंशतिकां देवीं ब्रह्मविष्णुनिरूपिणीम्।
ऊर्द्धपात्रे गुणातीतं षड्विंशकसुमापतिम् ॥ ४
आत्मानं पुरुषं ध्यायेत् पञ्चविंशकमग्रजम्।
पूर्व्वोक्तस्थानमध्येऽथ वेदिकोपरिमण्डले ॥ ५
शालिमध्ये क्षिपेन्नीला नववस्त्रैश्च वेष्टयेत्।
माषकल्केन चालिप्य पञ्चद्रव्येण पूजयेत् ॥ ६
ईशानाद्यैर्यथान्यायं पञ्चभिः परिपूजयेत्।

पूर्व्ववच्छिवपूजा च होमश्चैव यथाक्रमम् ॥ ७
देवीं गायत्रिकां जप्त्वा प्रविशेत् प्राङ्मुखः स्वयम्।
विधिनैव तु सम्पाद्य गर्भाधानादिकां क्रियाम् ॥ ८
कृत्वा षोड़शमार्गेण विधिना ब्राह्मणोत्तमः।
दूर्व्वाङ्कुरैस्तु कर्त्तव्या सेचना दक्षिणे पुटे ॥ ९
औदुम्बरफलैः सार्द्धमेकविंशत्सुशोदकम्।
ईशान्यां तावदेवात्र कुर्य्यात् सीमन्तकर्म्मणि ॥ १०
उद्वहेत् कन्यकां कृत्वा त्रिंशन्निष्केण शोभनाम्।
अलङ्कृत्य तथा हुत्वा शिवाय विनिवेदयेत् ॥ ११
अन्नप्राशनके विद्वान् भोजयेत् पायसादिभिः।
एवं विश्वजितात्मा वै गर्भाधानादिका क्रिया ॥ १२
शक्तिबीजेन कर्त्तव्या ब्राह्मणैर्वेदपारगैः।
शेषं सर्व्वं च विधिवत् तुलाहेमवदाचरेत् ॥ १३

इति श्रीलैङ्गे महापुराणे उपरिभागे एकोनत्रिंशोऽध्यायः ॥२९॥

---

## त्रिंशोऽध्यायः।

सनत्कुमार उवाच।

अधुना सम्प्रवक्ष्यामि तिलपर्व्वतमुत्तमम्।
पूर्व्वोक्तस्थानकाले तु कृत्वा सम्पूज्य यत्नतः ॥ १
सुशुभे भूतले रम्ये वेदिना च विवर्ज्जिते।
दशतालप्रमाणेन दण्डं संस्थाप्य वै मुने ॥ २
अद्भिः सम्प्रोक्ष्य पश्चाद्धि तिलांस्तस्मिन् विनिक्षिपेत्।
पञ्चगव्येन तं देशं प्रोक्षयेद्ब्राह्मणोत्तमः ॥ ३
मण्डलं कल्पयेद्विद्वान् पूर्व्ववत् सुसमन्ततः।
नववस्त्रेश्च संस्थाप्य रम्यपुष्पैर्विकीर्य्य च ॥ ४
तस्मिन् सञ्चयनं कार्य्यं तिलभारैर्विशेषतः।
दण्डप्रादेशमुत्सेधमुत्तमं परिकीर्त्तितम् ॥ ५
चतुरङ्गुलहीनन्तु मध्यमं मुनिपुङ्गवाः।
दण्डतुल्यं कनिष्ठं स्याद्दण्डहीनं न कारयेत् ॥ ६
वेष्टयित्वा नवैर्वस्त्रैः परितः पूजयेत् क्रमात्।
सद्यादीनि प्रविन्यस्य पूजयेद्विधिपूर्व्वकम् ॥ ७
अष्टदिक्षु च कर्त्तव्या पूर्व्वोक्ता मूर्त्तयः क्रमात्।
त्रिनिष्केण सुवर्णेन प्रत्येकं कारयेत् क्रमात् ॥ ८
दक्षिणा विधिना कार्य्या तुलाभारवदेव तु।
होमश्च पूर्व्ववत् प्रोक्तो यथावन्मुनिसत्तमाः ॥ ९
अर्चयेद्देवदेवेशं लोकपालसमावृतम्।
तिलपर्व्वतमध्यस्थं तिलपर्व्वतरूपिणम् ॥ १०
शिवार्च्चना च कर्त्तव्या सहस्रकलशादिभिः।
दर्शयेत् तिलमध्यस्थं देवदेवमुमापतिम् ॥ ११
पूजयित्वा विधानेन क्रमेण च विसर्ज्जयेत् ॥ १२
श्रोत्रियाय दरिद्राय दापयेत् तिलपर्व्वतम्।
एवं तिलनगः प्रोक्तः सर्व्वस्मादधिकः परः ॥ १३

इति श्रीलैङ्गे महापुराणे उपरिभागे तिलपर्व्वतदानं नाम त्रिंशोऽध्यायः ॥३०॥

---

## एकत्रिंशोऽध्यायः।

सनत्कुमार उवाच।

अथान्यं पर्व्वतं सूक्ष्ममल्पद्रव्यं महाफलम्।
द्रव्यमात्रोपसंयुक्ते काले मेध्यं विधीयते ॥ १
गोमयालिप्तभूमौ तु वस्त्राणि प्रकीर्य्य च।
तन्मध्ये निक्षिपेद्धीमान् तिलभारत्रयं शुभम् ॥ २
पद्ममष्टदलं कुर्य्यात् कर्णिकाकेसरान्वितम्।
दशनिष्केण तत् कार्य्यं तदर्द्धार्द्धेन वा पुनः ॥ ३
तिलमध्ये न्यसेत् पद्मं पद्ममध्ये महेश्वरम्।
आराध्य विधिवद्देवं वामादीनि प्रपूजयेत् ॥ ४
शक्तिरूपं सुवर्णेन त्रिनिष्केण तु कारयेत्।
न्यासन्तु परितः कुर्य्याद्विघ्नेशान् परिभागतः ॥ ५
पूर्व्वोक्तहेममानेन विघ्नेशानपि कारयेत्।
तानभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥ ६

इति श्रीलैङ्गे एकत्रिंशोऽध्यायः ॥३१॥

---

## द्वात्रिंशोऽध्यायः।

सनत्कुमार उवाच।

जपहोमार्च्चनादानाभिषिकाद्यञ्च पूर्व्ववत्।
सुवर्णमेदिनीदानं प्रवक्ष्यामि समासतः ॥ १
पूर्व्वोक्तदेशकाले तु कारयेन्मुनिभिः सह।
लक्षणेन यथापूर्व्वं कुण्डे वा मण्डलेऽथवा ॥ २
मेदिनीं कारयेद्दिव्यां सहस्रेणापि वा पुनः।
एकहस्तं प्रकर्त्तव्या चतुरस्रा सुशोभना ॥ ३
सप्तद्वीपसमुद्राद्यैः पर्व्वतैरभिसंवृता।
सर्व्वतीर्थसमोपेता मध्ये मेरुसमन्विता ॥ ४

अथवा मध्यतो द्वीपं नवखण्डं प्रकल्पयेत् ।
पूर्व्ववन्निखिलं कृत्वा मण्डले वेदिमध्यतः ॥ ५
सप्तभागैकभागेन सहस्रादिविपूर्व्वकम् ।
शिवभक्ते प्रदातव्या दक्षिणा पूर्व्वचोदिता ॥ ६
सहस्रकलशाद्यैश्च शङ्करं पूजयेच्छिवम् ।
सुवर्णमेदिनी प्रोक्ता लिङ्गेऽस्मिन् दानमुत्तमम् ॥ ७
इति श्रीलैङ्गे महापुराणे उपरिभागे सुवर्ण-
मेदिनीदानं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ।

सनत्कुमार उवाच ।

अथान्यत् सम्प्रवक्ष्यामि कल्पपादपमुत्तमम् ।
शतनिष्केण कृत्वैवं सर्व्वशाखासमन्वितम् ॥ १
शाखानां विविधं कृत्वा मुक्तादामाद्यलम्बनम् ।
दिव्यैर्मारकतैश्चैव चाङ्कुराग्रं प्रविन्यसेत् ॥ २
प्रवालं कारयेद्विद्वान् प्रवालेन द्रुमस्य तु ।
फलानि पद्मरागैश्च परितोऽस्य सुशोभयेत् ॥ ३
मूलञ्च नीलरत्नेन वज्रेण स्कन्धमुत्तमम् ।
वैदूर्य्येण द्रुमाग्रञ्च पुष्परागेण मस्तकम् ॥ ४
गोमेदकेन वै कन्दं सूर्य्यकान्तेन सुव्रत ।
चन्द्रकान्तेन वा वेदिं द्रुमस्य स्फटिकेन वा ॥ ५
वितस्तिमात्रमायामं वृक्षस्य परिकीर्त्तितम् ।
शाखाष्टकस्य मानञ्च विस्तारश्चोर्द्ध्वतस्तथा ॥ ६
तन्मूले स्थापयेल्लिङ्गं लोकपालैः समावृतम् ।
पूर्व्वोक्तवेदिमध्ये तु मण्डले स्थाप्य पादपम् ॥ ७
पूजयेद्देवमीशानं लोकपालांश्च यत्नतः ।
पूर्व्ववज्जपहोमाद्यं तुलाभारवदाचरेत् ॥ ८
निवेदयेद्द्रुमं शम्भोर्योगिनां वाथवा नृप ।
भस्माङ्गिभ्योऽथवा राजा सार्व्वभौमो भविष्यति ॥ ९
इति श्रीलैङ्गे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ।

सनत्कुमार उवाच ।

गणेशेशं प्रवक्ष्यामि दानं पूर्व्वोक्तमण्डपे ।
सम्पूज्य देवदेवेशं लोकपालसमावृतम् ॥ १
विघ्नेश्वरान् यथाशास्त्रं सर्व्वाभरणसंयुतान् ।
दशनिष्केण वै कृत्वा सम्पूज्य च विधानतः ॥ २
अष्टदिक्ष्वष्टकुण्डेषु पूर्व्ववद्धोममाचरेत् ।
पञ्चावरणमार्गेण पारम्पर्य्यक्रमेण च ॥ ३
सप्त विप्रान् समभ्यर्च्च्य कन्यामेकां तथोत्तरे ।
दापयेत् सर्व्वमन्त्राणि खेः स्वैर्मन्त्रैरनुक्रमात् ॥ ४
दत्त्वैवं सर्व्वपापेभ्यो मुच्यते नात्र संशयः ॥ ५
इति श्रीलैङ्गे महापुराणे उपरिभागे
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ।

सनत्कुमार उवाच ।

अथ ते सम्प्रवक्ष्यामि हेमधेनुविधिक्रमम् ।
सर्व्वपापप्रशमनं ग्रहदुर्भिक्षनाशनम् ॥ १
उपसर्गप्रशमनं सर्व्वव्याधिनिवारणम् ।
निष्काणाञ्च सहस्रेण सुवर्णेन तु कारयेत् ॥ २
तदर्द्धेनापि वा सम्यक् तदर्द्धार्द्धेन वा पुनः ।
शतेन वा प्रकर्त्तव्या सर्व्वरूपगुणान्विता ॥ ३
गोरूपं सुखुरं दिव्यं सर्व्वलक्षणसंयुतम् ।
खुराग्रे विन्यसेद्वज्रं शृङ्गे वै पद्मरागकम् ॥ ४
भ्रुवोर्मध्ये न्यसेद्दिव्यं मौक्तिकं मुनिसत्तमाः ।
वैदूर्य्येण स्तनाः कार्य्या लाङ्गूलं नीलतः शुभम् ॥५
दन्तस्थाने प्रकर्त्तव्यः पुष्परागः सुशोभनः ।
पशुवत् कारयित्वा तु वत्सं कुर्य्यात् सुशोभनम् ॥ ६
सुवर्णदशनिष्केण सर्व्वरत्नसुशोभितम् ।
पूर्व्वोक्तवेदिकामध्ये मण्डलं परिकल्प्य तु ॥ ७
तन्मध्ये सुरभिं स्थाप्य सवत्सां सर्व्वतत्त्ववित् ।
सवत्सां सुरभिं तत्र वस्त्रयुग्मेण वेष्टयेत् ॥ ८
सम्पूजयेत्तां गायत्र्या सवत्सां सुरभिं पुनः ।
अथैकाग्निविधानेन होमं कुर्य्याद्यथाविधि ॥ ९
समिदाज्यविधानेन पूर्व्ववच्छेषमाचरेत् ।
शिवपूजा प्रकर्त्तव्या लिङ्गं स्थाप्य घृतादिभिः ॥ १०
गामालभ्य च गायत्र्या शिवाया दापयेच्छुभाम् ।
दक्षिणा च प्रकर्त्तव्या त्रिंशन्निष्का महामते ॥ ११
इति श्रीलैङ्गे महापुराणे उपरिभागे
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ।

सनत्कुमार उवाच ।

लक्ष्मीदानं प्रवक्ष्यामि महदैश्वर्य्यवर्द्धनम् ।
पूर्व्वोक्तमण्डपे कार्य्यं वेदिकोपरि मण्डले ॥ १
श्रीदेवीमतुलां कृत्वा हिरण्येन यथाविधि ।
सहस्रेण तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ॥ २
अष्टोत्तरशतेनापि सर्व्वलक्षणसंयुताम् ।
मण्डले विन्यसेल्लक्ष्मीं सर्व्वालङ्कारसंयुताम् ॥ ३
तस्यास्तु दक्षिणे भागे स्थण्डिले विष्णुमर्च्चयेत् ।
अर्च्चयित्वा विधानेन श्रीसूक्तेन सुरेश्वरीम् ॥ ४
अर्च्चयेद्विष्णुगायत्र्या विष्णुं विश्वगुरुं हरिम् ।
आराध्य विधिना देवीं पूर्व्ववद्धोममाचरेत् ॥ ५
समिद्धुत्वा विधानेन चाज्याहुतिमथाचरेत् ।
पृथगष्टोत्तरशतं होमयेद्ब्राह्मणोत्तमैः ॥ ६
आहूय यजमानन्तु तस्याः पूर्व्वदिशि स्थले ।
तस्मै तां दर्शयेद्देवीं दण्डवत् प्रणमेत् क्षितौ ॥ ७
प्रणम्य विष्णुं तत्रस्थं शिवं पूर्व्ववदर्च्चयेत् ।
तस्या विंशतिभागन्तु दक्षिणा परिकीर्त्तिता ॥ ८
तदर्द्धांशन्तु दातव्यमितरेषां यथार्हतः ।
ततस्तु होमयेच्छम्भुं भक्तो योगी विशेषतः ॥ ९
इति श्रीलैङ्गे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशोऽध्यायः ।

सनत्कुमार उवाच ।

अथातः सम्प्रवक्ष्यामि तिलधेनुविधिक्रमम् ।
पूर्व्वोक्तमण्डपे कुर्य्याच्छिवपूजान्तु पश्चिमे ॥ १
तस्याग्रे मध्यतो भूमौ पद्ममालिख्य शोभनम् ।
वस्त्रैराच्छादितं पद्मं तन्मध्ये विन्यसेच्छुभम् ॥ २
तिलप्रस्थन्तु कृत्वाथ हेमपद्मं विनिक्षिपेत् ।
त्रिंशन्निष्केण कर्त्तव्यं तदर्द्धार्द्धेन वा पुनः ॥ ३
पञ्चनिष्केण कर्त्तव्यं तदर्द्धार्द्धेन वा पुनः ।
तमाराध्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥ ४
पद्मस्योत्तरदिग्भागे विप्रानेकादश न्यसेत् ।
तानभ्यर्च्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥ ५
आच्छादनोत्तरासङ्गं विप्रेभ्यो दापयेत् क्रमात् ।
उष्णीषञ्च प्रदातव्यं कुण्डले च विभूषिते ॥ ६
हेमाङ्गुलीयकं दत्त्वा ब्राह्मणेभ्यो विधानतः ।
एकादशानि वस्त्राणि तेषामग्रे प्रकीर्य्य च ॥ ७
तेषु वस्त्रेषु निक्षिप्य तिलाद्यानि पृथक् पृथक् ।
कांस्यपात्रं शतपलं विभिद्यैकादशांशकम् ॥ ८
इक्षुदण्डञ्च दातव्यं ब्राह्मणेभ्यो विशेषतः ।
गोशृङ्गे तु हिरण्येन द्विनिष्केण तु कारयेत् ॥ ९
रजतेन तु कर्त्तव्याः खुरा निष्कद्वयेन तु ।
एवं पृथक् पृथग्दत्त्वा तत् तिलेषु विनिक्षिपेत् ॥ १०
रुद्रैकादशमन्त्रैस्तु रुद्रेभ्यो दापयेत् तदा ।
पद्मस्य पूर्व्वदिग्भागे विप्रान् द्वादश पूजितान् ॥ ११
एतेनैव तु मार्गेण तेषु श्रद्धासमन्वितः ।
द्वादशादित्यमन्त्रैश्च दापयेद्देवमेव च ॥ १२
पूर्व्ववद्दक्षिणे भागे विप्रान् षोडश संस्थितान् ।
मूर्त्तिं विघ्नेशमन्त्रैश्च दापयेत् पूर्व्ववत् पुनः ॥ १३
यजमानेन कर्त्तव्यं सर्व्वमेतद्यथाक्रमम् ।
केवलं रुद्रदानं वा आदित्येभ्योऽथवा पुनः ॥ १४
मूर्त्त्यादीनाञ्च वा देयं यथाविभवविस्तरम् ।
पद्मं विन्यस्य राजासौ शेषं वा कारयेन्नृपः ॥ १५
दक्षिणा च प्रदातव्या पञ्चनिष्केण भूषणम् ॥ १६
इति श्रीलैङ्गे महापुराणे उपरिभागे तिलधेनु-
दानं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः ।

सनत्कुमार उवाच ।

गोसहस्रप्रदानञ्च वदामि शृणु सुव्रत ।
गवां सहस्रमादाय सवत्सं सगुणं शुभम् ॥ १
तास्त्वभ्यर्च्च्य यथाशास्त्रमष्टौ सम्यक् प्रयत्नतः ।
तासां शृङ्गाणि हेम्नाथ प्रतिनिष्केण बन्धयेत् ॥ २
खुरांश्च रजतेनैव बन्धयेत् कण्ठदेशतः ।
प्रतिनिष्केण कर्त्तव्यं कर्णे वक्त्रञ्च शोभनम् ॥ ३
शिवाय दद्याद्विप्रेभ्यो दक्षिणाञ्च पृथक् पृथक् ।
दशनिष्कं तदर्द्धं वा तस्यार्द्धार्द्धमथापि वा ॥ ४
यथाविभवविस्तारं भिक्षमात्रमथापि वा ॥ ५
वस्त्रयुग्मञ्च दातव्यं पृथग्विप्रेषु शोभनम् ।
गावश्चाराध्य यत्नेन दातव्याः सुमनोरमाः ॥ ६
एवं दत्त्वा विधानेन शिवमभ्यर्च्च्य शङ्करम् ।

जपेदग्रे यथान्यायं गवां स्तवमनुत्तमम् ॥ ७
गावो ममाग्रतो नित्यं गावो नः पृष्ठतस्तथा।
हृदयी मे सदा गावो गवां मध्ये वसाम्यहम् ॥ ८
इति कृत्वा द्विजाग्रेभ्यो दत्त्वा गत्वा प्रदक्षिणम्।
तद्रोमवर्षसंख्यानि स्वर्गलोके महीयते ॥ ९
इति श्रीलैङ्गे गोसहस्रप्रदानेऽष्टत्रिंशोऽध्यायः ॥३८॥

---

## एकोनचत्वारिंशोऽध्यायः।

सनत्कुमार उवाच।

हिरण्याश्वप्रदानञ्च वक्षामि विजयावहम्।
अश्वमेधात् पुनः श्रेष्ठं वक्षामि शृणु सुव्रत ॥ १
अष्टोत्तरसहस्रेण अष्टोत्तरशतेन वा।
कृत्वाश्वं लक्षणैर्युक्तं सर्व्वालङ्कारसंयुतम् ॥ २
पञ्चकल्याणसम्पन्नं दिव्याकारन्तु कारयेत्।
सर्व्वलक्षणसंयुक्तं सर्व्वाङ्गैश्च समन्वितम् ॥ ३
सर्व्वायुधसमोपेतमिन्द्रवाहनमुत्तमम्।
तन्मध्यदेशे संस्थाप्य तुरङ्गं स्वगुणान्वितम् ॥ ४
उच्चैःश्रवसकं मत्वा भक्त्या चैव समर्चयेत्।
तस्य पूर्व्वदिशाभागे ब्राह्मणं वेदपारगम् ॥ ५
सुरेन्द्रबुद्ध्या सम्पूज्य पञ्चनिष्कं प्रदापयेत्।
तमश्वं शिवभक्ताय दातव्यं विधिनैव तु ॥ ६
सुवर्णाश्वं प्रदत्त्वा तु आचार्य्यमपि पूजयेत्।
यथाविभवविस्तारं पञ्चनिष्कमथापि वा ॥ ७
दीनान्ध-कृपणानाथ-बाल-वृद्ध-कृशातुरान्।
तोषयेदन्नदानेन ब्राह्मणांश्च विशेषतः ॥ ८
एतद्यः कुरुते भक्त्या दानमश्वस्य मानवः।
ऐन्द्रान् भोगांश्चिरं भुक्त्वा रुचिरैश्वर्य्यवान् भवेत् ॥९
इति श्रीलैङ्गे महापुराणे उपरिभागे हिरण्याश्वदानं नामैकोनचत्वारिंशोऽध्यायः ॥३९॥

---

## चत्वारिंशोऽध्यायः।

सनत्कुमार उवाच।

कन्यादानं प्रवक्ष्यामि सर्व्वदानोत्तमोत्तमम्।
कन्यां लक्षणसम्पन्नां सर्व्वदोषविवर्ज्जिताम् ॥ १
मातापित्रोस्तु संवादं कृत्वा दत्त्वा धनं महत्।
आत्मीकृत्याथ संस्थाप्य वस्त्रं दत्त्वा शुभं नवम् ॥ २
भूषणैर्भूषयित्वाथ गन्धमाल्यैरथार्च्चयेत्।
निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकान् ॥ ३
उभयोश्चित्तमालोक्य उभौ सम्पूज्य यत्नतः।
दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥ ४
दासदासीधनाढ्यञ्च भूषणानि विशेषतः।
क्षेत्राणि च धनं धान्यं वासांसि च प्रदापयेत् ॥ ५
यावन्ति देहे रोमाणि कन्यायाः सन्ततौ पुनः।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ६
इति श्रीलैङ्गे महापुराणे उपरिभागे कन्यादानं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशोऽध्यायः।

सनत्कुमार उवाच।

हिरण्यवृषदानञ्च कथयामि समासतः।
वृषरूपं हिरण्येन सहस्रेणाथ कारयेत् ॥ १
तदर्द्धार्द्धेन वा धीमान् तदर्द्धार्द्धेन वा पुनः।
अष्टोत्तरशतेनापि वृषभं धर्म्मरूपिणम् ॥ २
ललाटे कारयेत् पुण्ड्रमर्द्धचन्द्रकलाकृतिम्।
स्फटिकेन तु कर्त्तव्यं खुरन्तु रजतेन वै ॥ ३
ग्रीवान्तु पद्मरागेण ककुद्गोमेदकेन च।
ग्रीवायां घण्टवलयं रत्नचित्रन्तु कारयेत् ॥ ४
वृषाङ्गं कारयेत् तत्र किङ्किणीवलयावृतम् ॥ ५
पूर्व्वोक्तदेशकाले तु वेदिकोपरि मण्डले।
वृषेन्द्रं स्थापयेत् तत्र पश्चिमामुखमग्रतः ॥ ६
ईश्वरं पूजयेद्भक्त्या वृषारूढं वृषध्वजम्।
वृषेन्द्रं पूज्य गायत्र्या नमस्कृत्य समाहितः ॥ ७
तीक्ष्णशृङ्गाय विद्महे धर्म्मपादाय धीमहि
तन्नो वृषः प्रचोदयात् ॥ ८
मन्त्रेणानेन सम्पूज्य वृषं धर्म्मविवृद्धये।
होमयेच्च घृतान्नाद्यैर्यथाविभवविस्तरम् ॥ ९
वृषभः पूज्य दातव्यो ब्राह्मणेभ्यः शिवाय वा।
दक्षिणा चैव दातव्या यथावित्तानुसारतः ॥ १०
एतद्यः कुरुते भक्त्या वृषदानमनुत्तमम्।
शिवस्यानुचरो भूत्वा तेनैव सह मोदते ॥ ११
इति श्रीलैङ्गे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः।

सनत्कुमार उवाच।

गजदानं प्रवक्ष्यामि यथावदनुपूर्व्वशः।
द्विजाय वा शिवायाथ दातव्यः पूज्य पूर्व्ववत्॥ १
गजं सुलक्षणोपेतं हैमं वा राजतन्तु वा।
सहस्रनिष्कमात्रेण तदर्द्धेनापि कारयेत्॥ २
तदर्द्धार्द्धेन वा कुर्य्यात् सर्व्वलक्षणभूषितम्।
पूर्व्वोक्तदेशकाले च देवाय विनिवेदयेत्॥ ३
अष्टम्यां वा प्रदातव्यं शिवाय परमेष्ठिने।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये॥ ४
शिवमुद्दिश्य दातव्यं शिवं सम्पूज्य पूर्व्ववत्॥ ५
एतद्यः कुरुते दानं शिवभक्तिसमाहितम्।
स्थित्वा स्वर्गे चिरं कालं राजा गजपतिर्भवेत्॥ ६

इति श्रीलैङ्गे द्विचत्वारिंशोऽध्यायः॥ ४२॥

---

## त्रिचत्वारिंशोऽध्यायः।

सनत्कुमार उवाच।

लोकपालाष्टकं दिव्यं साक्षात् परमदुर्लभम्।
सर्व्वसम्पत्करं गुह्यं परचक्रविनाशनम्॥ १
स्वदेशरक्षणं दिव्य-गजवाजिविवर्द्धनम्।
पुत्रवृद्धिकरं पुण्यं गोब्राह्मणहितावहम्॥ २
पूर्व्वोक्तदेशकाले तु वेदिकोपरि मण्डले।
मध्ये शिवं समभ्यर्च्च्य यथान्यायं यथाक्रमम्॥ ३
दिग्विदिक्षु प्रकर्त्तव्यं स्थण्डिलं वालुकामयम्।
अष्टौ विप्रान् समभ्यर्च्च्य वेदवेदाङ्गपारगान्॥ ४
जितेन्द्रियान् कुलोद्भूतान् सर्व्वलक्षणसंयुतान्।
शिवाभिमुखमासीनानाहतेष्वम्बरेषु च॥ ५
वस्त्रैराभरणैर्दिव्यैर्लोकपालकमन्त्रकैः।
गन्धपुष्पैः सुधूपैश्च ब्राह्मणानर्च्चयेत् क्रमात्॥ ६
पूर्व्वतो होमयेदग्नौ लोकपालकमन्त्रकैः।
समिद्घृताभ्यां होतव्यमग्निकार्य्यं क्रमेण वा॥ ७
एवं कृत्वा विधानेन आचार्य्यः शिववत्सलः।
यजमानं समाहूय सर्व्वाभरणभूषितान्॥ ८
तेन तान् पूजयित्वाथ द्विजेभ्यो दापयेद्धनम्।
पृथक् पृथक् तन्मन्त्रेण दशनिष्कञ्च भूषणम्॥ ९
दशनिष्केण कर्त्तव्यमासनं केवलं पृथक्।
स्नपनं तत्र कर्त्तव्यं शिवस्य विधिपूर्व्वकम्॥ १०
दक्षिणा च प्रदातव्या यथाविभवविस्तरम्॥ ११
एवं यः कुरुते दानं लोकेशानान्तु भक्तितः।
लोकेशानां चिरं स्थित्वा सार्व्वभौमो भवेद्बुधः॥१२

इति श्रीलैङ्गे महापुराणे उपरिभागे
त्रिचत्वारिंशोऽध्यायः॥ ४३॥

---

## चतुश्चत्वारिंशोऽध्यायः।

सनत्कुमार उवाच।

अथान्यत् सम्प्रवक्ष्यामि सर्व्वदानोत्तमोत्तमम्।
पूर्व्वोक्तदेशकाले च मण्डपे च विधानतः॥ १
प्रणयेत् कुण्डमध्ये च स्थण्डिले शिवसन्निधौ।
पूर्व्वं विष्णुं समासाद्य पद्मयोनिमतः परम्।
मन्त्राभ्यां विधिनोक्ताभ्यां प्रणवादिसमन्त्रकम्॥ २
नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात्॥ ३
ब्रह्मब्रह्मण्यदेवाय ब्रह्मणे विश्ववेधसे।
शिवाय हरये स्वाहा स्वधा वौषट् वषट् तथा॥ ४
पूजयित्वा विधानेन पश्चाद्धोमं समाचरेत्।
सर्व्वद्रव्याणि होतव्यं द्वाभ्यां कुण्डविधानतः॥ ५
ऋत्विजौ द्वौ प्रकर्त्तव्यौ गुरुणा वेदपारगौ।
तावुद्दिश्य यथान्यायं विप्रेभ्यो दापयेद्धनम्॥ ६
शतमष्टोत्तरं तेभ्यः पृथक् पृथगनुत्तमम्।
वस्त्राभरणसंयुक्तं सर्व्वालङ्कारसंयुतम्॥ ७
गुरुरेको हि वै श्रीमान् ब्रह्मा विष्णुर्महेश्वरः।
तेषां पृथक् पृथग्देयं भोजयेद्ब्राह्मणानपि॥ ८
शिवार्च्चना च कर्त्तव्या स्नपनादि यथाक्रमम्॥ ९

इति श्रीलैङ्गे महापुराणे उपरिभागे
चतुश्चत्वारिंशोऽध्यायः॥ ४४॥

---

## पञ्चचत्वारिंशोऽध्यायः।

ऋषय ऊचुः।

एवं षोड़श दानानि कथितानि शुभानि च।
जीवच्छ्राद्धक्रमोऽस्माकं वक्तुमर्हसि साम्प्रतम्॥ १

सूत उवाच।

जीवच्छ्राद्धविधिं वक्ष्ये समासात् सर्व्वसम्मतम्।
मनवे देवदेवेन कथितं ब्रह्मणा पुरा॥ २
वशिष्ठाय च शिष्टाय भृगवे भार्गवाय च।
शृखन्तु सर्व्वभावेण सर्व्वसिद्धिकरं परम्॥ ३
श्राद्धमार्गक्रमं साक्षात् श्राद्धार्हाणामपि क्रमम्।
विशेषमपि वक्ष्यामि जीवच्छ्राद्धस्य सुव्रताः॥ ४
पर्व्वते वा नदीतीरे वने वायतनेऽपि वा।
जीवच्छ्राद्धं प्रकर्त्तव्यं मृतकाले प्रयत्नतः॥ ५
जीवच्छ्राद्धे कृते जीवो जीवन्नेव विमुच्यते।
कर्म्म कुर्व्वन्नकुर्व्वन् वा ज्ञानी वा ज्ञानवानपि॥ ६
श्रोत्रियोऽश्रोत्रियो वापि ब्राह्मणः क्षत्रियोऽपि वा
वैश्यो वा नात्र सन्देहो योगमार्गगतो यथा॥ ७
परीक्ष्य भूमिं विधिवद्गन्ध-वर्ण-रसादिभिः।
शल्यमुद्धृत्य यत्नेन स्थण्डिलं सैकतं भुवि॥ ८
मध्यतो हस्तमात्रेण कुण्डञ्चैवायतं शुभम्।
स्थण्डिलं वा प्रकर्त्तव्यमिषुमात्रं पुनः पुनः॥ ९
उपलिप्य विधानेन चालिप्याग्निं विधाय च।
अन्वाधाय यथाशास्त्रं परिगृह्य च सर्व्वतः॥ १०
परिस्तीर्य्य स्वशाखोक्तं पारम्पर्य्यक्रमागतम्।
समाप्याग्निमुखं सर्व्वं मन्त्रैरेतैर्यथाक्रमम्॥ ११
सम्पूज्य स्थण्डिले वह्नौ होमयेत् समिदादिभिः।
आदौ कृत्वा समिद्धोमं चरुणा च पृथक् पृथक्॥ १२
घृतेन च पृथक् पात्रे शोधितेन पृथक् पृथक्।
जुहुयादात्मनोद्धृत्य तत्त्वभूतानि सर्व्वतः॥ १३

ओं भूः ब्रह्मणे नमः॥ १४
ओं भूः ब्रह्मणे स्वाहा॥ १५
ओं भुवः विष्णवे नमः॥ १६
ओं भुवः विष्णवे स्वाहा॥ १७
ओं स्वः रुद्राय नमः॥ १८
ओं स्वः रुद्राय स्वाहा॥ १९
ओं महः ईश्वराय नमः॥ २०
ओं महः ईश्वराय स्वाहा॥ २१
ओं जनः प्रकृतये नमः॥ २२
ओं जनः प्रकृत्यै स्वाहा॥ २३
ओं तपः मुद्गलाय नमः॥ २४
ओं तपः मुद्गलाय स्वाहा॥ २५
ओं ऋतं पुरुषाय नमः॥ २६
ओं ऋतं पुरुषाय स्वाहा॥ २७
ओं सत्यं शिवाय नमः॥ २८
ओं सत्यं शिवाय स्वाहा॥ २९
ओं शर्व्व धरां मे गोपाय घ्राणे गन्धं
शर्व्वाय देवाय भूर्नमः॥ ३०
ओं शर्व्व धरां मे गोपाय घ्राणे गन्धं
शर्व्वाय भूः स्वाहा॥ ३१
ओं शर्व्व धरां मे गोपाय घ्राणे गन्धं
शर्व्वस्य देवस्य पत्न्यै भूर्नमः॥ ३२
ओं शर्व्व धरां मे गोपाय घ्राणे गन्धं
शर्व्वपत्न्यै भूः स्वाहा॥ ३३
ओं भव जलं मे गोपाय जिह्वायां रसं
भवाय देवाय भुवो नमः॥ ३४
ओं भव जलं मे गोपाय जिह्वायां रसं
भवाय देवाय भुवः स्वाहा॥ ३५
ओं भव जलं मे गोपाय जिह्वायां रसं
भवस्य देवस्य पत्न्यै भुवो नमः॥ ३६
ओं भव जलं मे गोपाय जिह्वायां रसं
भवस्य पत्न्यै भुवः स्वाहा॥ ३७
ओं रुद्राग्निं मे गोपाय नेत्रे रूपं
रुद्राय देवाय स्वरों नमः॥ ३८
ओं रुद्राग्निं मे गोपाय नेत्रे रूपं
रुद्राय देवाय स्वः स्वाहा॥ ३९
ओं रुद्राग्निं मे गोपाय नेत्रे रूपं
रुद्रस्य पत्न्यै स्वरों नमः॥ ४०
ओं रुद्राग्निं मे गोपाय नेत्रे रूपं
रुद्रस्य देवस्य पत्न्यै स्वः स्वाहा॥ ४१
ओं उग्र वायुं मे गोपाय त्वचि स्पर्शम्
उग्राय देवाय महर्नमः॥ ४२
ओं उग्र वायुं मे गोपाय त्वचि स्पर्शम्
उग्राय देवाय महः स्वाहा॥ ४३
ओं उग्र वायुं मे गोपाय त्वचि स्पर्शम्
उग्रस्य देवस्य पत्न्यै महरों नमः॥ ४४
ओं उग्र वायुं मे गोपाय त्वचि स्पर्शम्
उग्रस्य देवस्य पत्न्यै महः स्वाहा॥ ४५
ओं भीम सुषिरं मे गोपाय श्रोत्रे शब्दं

भीमाय देवाय जनो नमः ॥ ४६
ओं भीम सुषिरं मे गोपाय श्रोत्रे शब्दं
भीमाय देवाय जनः स्वाहा ॥ ४७
ओं भीम सुषिरं मे गोपाय श्रोत्रे शब्दं
भीमस्य देवस्य पत्न्यै जनो नमः ॥ ४८
ओं भीम सुषिरं मे गोपाय श्रोत्रे शब्दं
भीमस्य देवस्य पत्न्यै जनः स्वाहा ॥ ४९
ओं ईश रजो मे गोपाय द्रव्ये तृष्णाम्
ईशाय देवाय तपो नमः ॥ ५०
ओं ईश रजो मे गोपाय द्रव्ये तृष्णाम्
ईशाय देवाय तपः स्वाहा ॥ ५१
ओं ईश रजो मे गोपाय द्रव्ये तृष्णाम्
ईशस्य पत्न्यै तपो नमः ॥ ५२
ओं ईश रजो मे गोपाय द्रव्ये तृष्णाम्
ईशस्य पत्न्यै तपः स्वाहा ॥ ५३
ओं महादेव सत्यं मे गोपाय श्रद्धां धर्म्मे
महादेवाय ऋतं नमः ॥ ५४
ओं महादेव सत्यं मे गोपाय श्रद्धां धर्म्मे
महादेवाय ऋतं स्वाहा ॥ ५५
ओं महादेव सत्यं मे गोपाय श्रद्धां धर्म्मे
महादेवस्य पत्न्यै ऋतं नमः ॥ ५६
ओं महादेव सत्यं मे गोपाय श्रद्धां धर्म्मे
महादेवस्य पत्न्यै ऋतं स्वाहा ॥ ५७
ओं पशुपते पाशं मे गोपाय भोक्तृत्वभोग्यं
पशुपतये देवाय सत्यं नमः ॥ ५८
ओं पशुपते पाशं मे गोपाय भोक्तृत्वभोग्यं
पशुपतये देवस्य सत्यं स्वाहा ॥ ५९
ओं पशुपते पाशं मे गोपाय भोक्तृत्वभोग्यं
पशुपतेर्देवस्य पत्न्यै सत्यं नमः ॥ ६०
ओं पशुपते पाशं मे गोपाय भोक्तृत्वभोग्यं
पशुपतेर्देवस्य पत्न्यै सत्यं स्वाहा ॥ ६१
ओं शिवाय नमः ॥ ६२
ओं शिवाय सत्यं स्वाहा ॥ ६३
एवं शिवाय होतव्यं विरिञ्चशाद्यञ्च पूर्व्ववत् ।
विरिञ्चशाद्यञ्च पूर्व्वोक्तैः सृष्टिमार्गेषु सुव्रताः ॥ ६४
पुनः पशुपतेः पत्नीं तथा पशुपतिं क्रमात् ।
सम्पूज्य पूर्व्ववन्मन्त्रैर्होतव्यञ्च क्रमेण वै ॥ ६५

चर्व्वन्तमाज्यपूर्व्वञ्च समिधान्तं समाहितः ॥ ५६
ओं शर्व्व धरां मे छिन्धि घ्राणे गन्धं छिन्धि
मेधां जहि भूः स्वाहा ॥ ६७
भुवः स्वाहा ॥ ६८
स्वः स्वाहा ॥ ६९
भूर्भुवः स्वः स्वाहा ॥ ७०
एवं पृथक् पृथगृबहुला केवलेन घृतेन वा ।
सहस्रं वा तदर्द्धं वा शतमष्टोत्तरन्तु वा ॥ ७१
विरजा च घृतेनैव शतमष्टोत्तरं पृथक् ।
प्राणादिभिश्च जुहुयाद्घृतेनैव तु केवलम् ॥ ७२
ओं प्राणे निविष्टोऽमृतं जुहोमि शिवो मा
विशा प्रदाहाय प्राणाय स्वाहा ॥ ७३
ओं प्राणाधिपतये रुद्राय वृषान्तकाय स्वाहा ॥ ७४
ओं भूः स्वाहा ॥ ७५
ओं भुवः स्वाहा ॥ ७६
स्वः स्वाहा ॥ ७७
भूर्भुवः स्वः स्वाहा ॥ ७८
एवं क्रमेण जुहुयाच्छ्राद्धोक्तञ्च यथाक्रमम् ।
सप्तमेऽहनि योगीन्द्रान् श्राद्धार्हानपि भोजयेत् ॥ ७९
सर्व्वादीनाञ्च विप्राणां वस्त्राभरणकम्बलान् ।
वाहनं शयनं यानं कांस्यताम्रादिभाजनम् ॥ ८०
हैमञ्च राजतं धेनुं तिलान् क्षेत्रञ्च वैभवम् ।
दासीदासगणञ्चैव दातव्यं दक्षिणामपि ॥ ८१
पिण्डञ्च पूर्व्ववद्दद्यात् पृथगष्टप्रकारतः ।
ब्राह्मणानां सहस्रञ्च भोजयेच्च सदक्षिणम् ॥ ८२
एकं वा योगनिरतं भस्मनिष्ठं जितेन्द्रियम् ।
त्र्यहञ्चैव तु रुद्रस्य महाचरुनिवेदनम् ॥ ८३
विशेष एव कथितः अशेषश्राद्धचोदितः ।
मृते कुर्य्यान्न कुर्य्याद्वा जीवन्मुक्तो यतः स्वयम् ॥ ८४
नित्यनैमित्तिकादीनि कुर्य्याद्वा सन्त्यजेत् तु वा ।
बान्धवेऽपि मृते तस्य शौचाशौचं न विद्यते ॥ ८५
सूतकञ्च न सन्देहः स्नानमात्रेण शुध्यति ।
पश्चाज्जाते कुमारे च स्वे क्षेत्रे चात्मनो यदि ॥ ८६
तस्य सर्व्वं प्रकर्त्तव्यं पुत्रोऽपि ब्रह्मविद्भवेत् ।
कन्यका यदि सञ्जाता पश्चात् तस्य महात्मनः ॥ ८७
एकपर्णा इवा चाथ अपर्णा इव सुव्रताः ।
भवत्येव न सन्देहस्तस्याश्चान्वयजा अपि ॥ ८८

मुच्यते नात्र सन्देहः पितरो नरकादपि।
मुच्यते कर्म्मणानेन मातृतः पितृतस्तथा॥ ८६
काले गते द्विजे भूमौ खनेच्चापि दहेत् तु वा।
पुत्त्रकृत्यमशेषञ्च कृत्वा दोषो न विद्यते॥ ९०
कर्म्मणा चोत्तरेणैव गतिरस्य न विद्यते।
ब्रह्मणा कथितं सर्व्वं मुनीनां भावितात्मनाम्॥ ९१
पुनः सनत्कुमाराय कथितं तेन धीमता।
कृष्णद्वैपायनायैव कथितं ब्रह्मसूनुना॥ ९२
प्रसादात् तस्य देवस्य वेदव्यासस्य धीमतः।
ज्ञातं मया कृतञ्चैव नियोगादेव तस्य तु॥ ९३
एतद्वः कथितं सर्व्वं रहस्यं ब्रह्मसिद्धिदम्।
मुनिपुत्त्राय दातव्यं न चाभक्ताय सुव्रताः॥ ९४

इति श्रीलैङ्गे महापुराणे उपरिभागे जीवच्छ्राद्धविधिर्नाम पञ्चचत्वारिंशोऽध्यायः॥४५॥

---

## षट्चत्वारिंशोऽध्यायः।

ऋषय ऊचुः।

जीवच्छ्राद्धविधिः प्रोक्तस्त्वया सूत महामते।
मूर्खाणामपि मोक्षार्थमस्माकं रोमहर्षण॥ १
रुद्रादित्यवसूनाञ्च शक्रादीनाञ्च सुव्रत।
प्रतिष्ठा कीदृशी शम्भोर्लिङ्गमूर्त्तेश्च शोभना॥ २
विष्णोः शक्रस्य देवस्य ब्रह्मणश्च महात्मनः।
अग्नेर्यमस्य निर्ऋतेर्वरुणस्य महाद्युतेः॥ ३
वायोः सोमस्य यक्षस्य कुवेरस्यामितात्मनः।
ईशानस्य धरायाश्च श्रीप्रतिष्ठाथ वा कथम्॥ ४
दुर्गा-शिवाप्रतिष्ठा च हैमवत्याश्च शोभना।
स्कन्दस्य गणराजस्य नन्दिनश्च विशेषतः॥ ५
तथान्येषाञ्च देवानां गणानामपि वा पुनः।
प्रतिष्ठालक्षणं सर्व्वं विस्तराद्वक्तुमर्हसि॥ ६
भवान् सर्व्वार्थतत्त्वज्ञो रुद्रभक्तश्च सुव्रत।
कृष्णद्वैपायनस्यासि साक्षात् त्वमपरा तनुः॥ ७
सुमन्तुर्जैमिनिश्चैव पैलश्च परमर्षयः।
गुरुभक्तिं तथा कर्त्तुं समर्थो रोमहर्षणः॥ ८
इति व्यासस्य विपुला गाथा भागीरथीतटे।
एकः समो वा भिन्नो वा शिष्यस्तस्य महाद्युतेः॥ ९
वैशम्पायनतुल्योऽसि व्यासशिष्येषु भूतले।
तस्मादस्माकमखिलं वक्तुमर्हसि साम्प्रतम्॥ १०
एवमुक्त्वा स्थितेष्वेव तेषु सर्व्वेषु तत्र च।
बभूव विस्मयोऽतीव मुनीनां तस्य चाग्रतः॥ ११
अथान्तरीक्षे विपुले साक्षाद्देवी सरस्वती।
अलं मुनीनां प्रश्नोऽयमिति वाचा बभूव ह॥ १२
सर्व्वं लिङ्गमयं लोकं सर्व्वं लिङ्गे प्रतिष्ठितम्।
तस्मात् सर्व्वं परित्यज्य स्थापयेत् पूजयेच्च तत्॥१३
लिङ्गस्थापनसन्मार्ग-निहितस्वायतासिना।
आशु ब्रह्माण्डमुद्भिद्य निर्गच्छेदविशङ्कया॥ १४
उपेन्द्राम्भोजगर्भेन्द्र-यमाम्बुधनदेश्वराः।
तथान्ये च शिवं स्थाप्य लिङ्गमूर्त्तिं महेश्वरम्॥१५
स्वेषु स्वेषु च पक्षेषु प्रधानास्ते यथा द्विजाः।
ब्रह्मा हरश्च भगवान् विष्णुर्देवी रमा धरा॥ १६
लक्ष्मीर्धृतिः स्मृतिः प्रज्ञा धरा दुर्गा शची तथा।
रुद्राश्च वसवः स्कन्दो विशाखः शाख एव च॥ १७
नैगमेयश्च भगवान् लोकपाला ग्रहास्तथा।
सर्व्वे नन्दिपुरोगाश्च गणा गणपतिः प्रभुः॥ १८
पितरो मुनयः सर्व्वे कुवेराद्याश्च सुप्रभाः।
आदित्या वसवः सांख्या अश्विनौ च भिषग्वरौ॥१९
विश्वे देवाश्च साध्याश्च पशवः पक्षिणो मृगाः।
ब्रह्मादिस्थावरान्तञ्च सर्व्वं लिङ्गे प्रतिष्ठितम्॥ २०
तस्मात् सर्व्वं परित्यज्य स्थापयेल्लिङ्गमव्ययम्।
यत्नेन स्थापितं सर्व्वं पूजितं पूजयेद्यदि॥ २१

इति श्रीलैङ्गे महापुराणे उपरिभागे षट्चत्वारिंशोऽध्यायः॥ ४६॥

---

## सप्तचत्वारिंशोऽध्यायः।

इति निशम्य कृताञ्जलयस्तदा
दिवि महामुनयः कृतनिश्चयाः।
शिवतरं शिवमीश्वरमव्ययं
मनसि लिङ्गमयं प्रणिपत्य ते॥ १
सकलदेवपतिर्भगवानजो
हरिरशेषपतिर्गुरुणा स्वयम्।
मुनिवराश्च गणाश्च सुरासुरा
नरवराः शिवलिङ्गमयाः पुनः॥ २
श्रुत्वैवं मुनयः सर्व्वे षट्कुलीयाः समाहिताः।
सन्त्यज्य सर्व्वं देवस्य प्रतिष्ठां कर्त्तुमुद्यताः॥ ३

अपृच्छन् सूतमनघं हर्षगद्गदया गिरा।
लिङ्गप्रतिष्ठां विपुलां सर्व्वे ते शंसितव्रताः॥ ४

सूत उवाच।

प्रतिष्ठा लिङ्गमूर्त्तेर्वो यथावदनुपूर्व्वशः।
प्रवक्ष्यामि समासेन धर्म्मकामार्थमुक्तये॥ ५
कृत्वैव लिङ्गं विधिना भुवि लिङ्गेषु यत्नतः।
लिङ्गमेकतमं शैलं ब्रह्म-विष्णु-शिवात्मकम्॥ ६
हैमरत्नमयं वापि राजतं ताम्रजन्तु वा।
सवेदिकं ससूत्रञ्च सम्यग्विस्तृतमस्तकम्॥ ७
विशोध्य स्थापयेद्भक्त्या सवेदिकमनुत्तमम्॥ ८
लिङ्गवेदी उमादेवी लिङ्गं साक्षान्महेश्वरः।
तयोः सम्पूजनादेव देवी देवश्च पूजितौ॥ ९
प्रतिष्ठया च देवेशो देव्या साङ्गं प्रतिष्ठितः।
तस्मात् सवेदिकं लिङ्गं स्थापयेत् स्थापकोत्तमः॥१०
मूले ब्रह्मा वसति भगवान् मध्यभागे च विष्णुः
सर्व्वेशानः पशुपतिरजो रुद्रमूर्त्तिर्वरेण्यः।
तस्माल्लिङ्गं गुरुतरतरं पूजयेत् स्थापयेद्वा
यस्मात् पूज्यो गणपतिरसौ देवमुख्यैः समस्तैः॥११

गन्धैः स्रग्धूपदीपैः स्नपन-हुत-बलि-
स्तोत्रमन्त्रोपहारै-
र्नित्यं येऽभ्यर्च्चयन्ति त्रिदशवरतनुं
लिङ्गमूर्त्तिं महेशम्।
गर्भाधानादिनाशक्षयभयरहिता
देवगन्धर्व्वमुख्यैः
सिद्धैर्वन्द्याश्च पूज्या गणवरनमिता-
स्ते भवन्त्यप्रमेयाः॥ १२

तस्माद्भक्त्योपचारेण स्थापयेत् परमेश्वरम्।
पूजयेच्च विशेषेण लिङ्गं सर्व्वार्थसिद्धये॥ १३
समर्च्य स्थापयेल्लिङ्गं तीर्थमध्ये शिवासने।
कूर्च्चवस्त्रादिभिर्लिङ्गमाच्छाद्य कलशैः पुनः॥ १४
लोकपालादिदैवत्यैः सकूर्च्चैः साक्षतैः शुभैः।
उत्कूर्च्चैः स्वस्तिकाद्यैश्च चित्रतन्तुकवेष्टितैः॥ १५
वज्रादिकायुधोपेतैः सवस्त्रैः सपिधानकैः।
लक्षयेत् परितो लिङ्गमीशानेन प्रतिष्ठितम्॥ १६
धूप-दीपसमोपेतं वितानं विततास्वरम्।
लोकपालध्वजैश्चैव गजादिमहिषादिभिः॥ १७
चित्रितैः पूजितैश्चैव दर्भमाला च शोभना।
सर्व्वलक्षणसम्पूर्णा तया वाद्यैश्च वेष्टयेत्॥ १८
ततोऽधिवासयेत् तोये धूप-दीपसमन्विते।
पञ्चाहं वा त्र्यहं वाथ एकरात्रमथापि वा॥ १९
वेदाध्ययनसम्पन्नो नृत्यगीतादिमङ्गलैः।
किङ्किणीरवकोपेतं तालवीणारवैरपि॥ २०
ईक्षयेत् कालमव्यग्रो यजमानः समाहितः।
उत्थाप्य स्वस्तिकं ध्यायेन्मण्डपे लक्षणान्विते॥ २१
संस्कृते वेदिसंयुक्ते नवकुण्डेन संवृते।
पूर्व्वोक्तविधिना युक्ते सर्व्वलक्षणसंयुते॥ २२
अष्टमण्डलसंयुक्ते दिग्ध्वजाष्टकसंयुते।
पूर्व्वोक्तलक्षणोपेतैः कुण्डैः प्रागादितः क्रमात्॥ २३
प्रधानं कुण्डमैशान्यां चतुरस्रं विधीयते।
अथवा पञ्चकुण्डैकं स्थण्डिलञ्चैकमेव च॥ २४
यज्ञोपकरणैः सर्व्वैः शिवार्च्चायां हि भूषणैः।
वेदिमध्ये महाशय्यां पञ्चतूलीप्रकल्पिताम्॥ २५
कल्पयेत् काञ्चनोपेतां सितवस्त्रावगुण्ठिताम्।
प्रकल्प्यैवं शिवञ्चैव स्थापयेत् परमेश्वरम्॥ २६
प्राक्शिरस्कं न्यसेल्लिङ्गमीशानेन यथाविधि।
रत्नन्यासे कृते पूर्व्वं केवलं कलशं न्यसेत्॥ २७
लिङ्गमाच्छाद्य वस्त्राभ्यां कूर्च्चेन च समन्ततः।
रत्नन्यासे प्रसक्तोऽथ वामाद्या नव शक्तयः॥ २८
नवरत्नं हिरण्याद्यैः पञ्चगव्येन संयुतैः।
सर्व्वधान्यसमोपेतं शिलायामपि विन्यसेत्॥ २९
स्थापयेद्ब्रह्मलिङ्गं हि शिवगायत्रिसंयुतम्।
केवलं प्रणवेनापि स्थापयेच्छिवमव्ययम्॥ ३०
ब्रह्मजज्ञानमन्त्रेण ब्रह्मभागं प्रभोस्तथा।
विष्णुगायत्रिया भागं वैष्णवन्त्वथ विन्यसेत्॥ ३१
सूत्रे तत्त्वत्रयोपेते प्रणवेन प्रविन्यसेत्।
सर्व्वं नमः शिवायेति नमो हंसः शिवाय च॥ ३२
रुद्राध्यायेन वा सर्व्वं परिसृज्य च विन्यसेत्।
स्थापयेद्ब्रह्मभिश्चैव कलशान् वै समन्ततः॥ ३३
वेदिमध्ये न्यसेत् सर्व्वान् पूर्व्वोक्तविधिसंयुतान्।
मध्यकुम्भे शिवं देवीं दक्षिणे परमेश्वरीम्॥ ३४
स्कन्दं तयोश्च मध्ये तु स्कन्दकुम्भे सुचित्रिते।
ब्रह्माणं स्कन्दकुम्भे वा ईशकुम्भे हरिं तथा॥ ३५
अथवा शिवकुम्भे च ब्रह्माङ्गाणि च विन्यसेत्।
शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः॥ ३६

ब्रह्माद्येवं समासेन ह्वदयादीनि चाम्बिका।
वेदिमध्ये न्यसेत् सर्व्वान् पूर्व्वोक्तविधिसंयुतान् ॥ ३७
वर्द्धन्यां स्थापयेद्देवीं गन्धतोयेन पूर्य्य च।
हिरण्यं रजतं रत्नं शिवकुम्भे प्रविन्यसेत् ॥ ३८
वर्द्धन्यामपि यत्नेन गायत्र्यङ्गैश्च सुव्रताः।
विद्येश्वरान् द्विशां कुम्भे ब्रह्मकूर्च्चेन पूरिते ॥ ३९
अनन्तेशादिदेवांश्च प्रणवादिनमोऽन्तकम्।
नववस्त्रं प्रतिघटमष्टकुम्भेषु दापयेत् ॥ ४०
विश्वेश्वराणां कुम्भेषु हेमरत्नादि विन्यसेत्।
वक्त्रक्रमेण होतव्यं गायत्र्यङ्गक्रमेण च ॥ ४१
जयादि-स्विष्टपर्य्यन्तं सर्व्वं पूर्व्ववदाचरेत्।
सेचयेच्छिवकुम्भेन वर्द्धन्या वैष्णवेन च ॥ ४२
पैतामहेन कुम्भेन ब्रह्मभागं विशेषतः।
विद्येश्वराणां कुम्भैश्च सेचयेत् परमेश्वरम् ॥ ४३
विन्यसेत् सर्व्वमन्त्राणि पूर्व्ववत् सुसमाहितः।
पूजयेत् स्नपनं कृत्वा सहस्रादिषु सम्भवैः ॥ ४४
दक्षिणा च प्रदातव्या सहस्रपणमुत्तमम्।
इतरेषां तदर्द्धं स्यात् तदर्द्धं वा विधीयते ॥ ४५
वस्त्राणि च प्रधानस्य देवभूषणगोधनम्।
उत्सवञ्च प्रकर्त्तव्यं होम-याग-बलिं क्रमात् ॥ ४६
नवाहं वापि सप्ताहमेकाहञ्च त्र्यहं तथा।
होमश्च पूर्व्ववत् प्रोक्तो नित्यमभ्यर्च्य शङ्करम् ॥ ४७
देवानां भास्करादीनां होमं पूर्व्ववदेव तु।
अभ्यन्तरे तथा वाह्ये वह्नौ नित्यं समर्च्चयेत् ॥ ४८
य एवं स्थापयेल्लिङ्गं स एव परमेश्वरः ॥ ४९
तेन देवगणा रुद्रा ऋषयोऽप्सरसस्तथा।
स्थापिताः पूजिताश्चैव त्रैलोक्यं सचराचरम् ॥ ५०

इति श्रीलैङ्गे महापुराणे उपरिभागे लिङ्ग-स्थापनं नाम सप्तचत्वारिंशोऽध्यायः ॥४७॥

---

## अष्टचत्वारिंशोऽध्यायः।

सूत उवाच।

सर्व्वेषामपि देवानां प्रतिष्ठामपि विस्तरात्।
सैर्मन्त्रैर्यागकुण्डानि विन्यस्यैकैकमेव च ॥ १
स्थापयेदुत्सवं कृत्वा पूजयेच्च विधानतः।
भानोः पद्माग्निना कार्य्यं द्वादशाग्निक्रमेण वा ॥ २
सर्व्वकुण्डानि वृत्तानि पद्माकाराणि सुव्रताः।
अम्बाया योनिकुण्डं स्याद्वर्द्धन्येका विधीयते।
शक्तीनां सर्व्वकार्य्येषु योनिकुण्डं विधीयते ॥ ३
गायत्रीं कल्पयेच्छम्भोः सर्व्वेषामपि यत्नतः।
सर्व्वं रुद्रांशजा यस्मात् संक्षेपेण वदामि वः ॥ ४

गायत्रीभेदाः—

तत्पुरुषाय विद्महे वाग्विशुद्धाय धीमहि।
तन्नः शिवः प्रचोदयात् ॥ ५
गणाम्बिकायै विद्महे कर्म्मसिद्ध्यै च धीमहि।
तन्नो गौरी प्रचोदयात् ॥ ६
तत्पुरुषाय विद्महे महादेवाय धीमहि।
तन्नो रुद्रः प्रचोदयात् ॥ ७
तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि।
तन्नो दन्तिः प्रचोदयात् ॥ ८
महासेनाय विद्महे वाग्विशुद्धाय धीमहि।
तन्नः स्कन्दः प्रचोदयात् ॥ ९
तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि।
तन्नो वृषः प्रचोदयात् ॥ १०
हरिवक्त्राय विद्महे रुद्रवक्त्राय धीमहि।
तन्नो नन्दी प्रचोदयात् ॥ ११
नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुः प्रचोदयात् ॥ १२
महाम्बिकायै विद्महे कर्म्मसिद्ध्यै च धीमहि।
तन्नो लक्ष्मीः प्रचोदयात् ॥ १३
समुद्धृतायै विद्महे विष्णुनैकेन धीमहि।
तन्नो राधा प्रचोदयात् ॥ १४
वैनतेयाय विद्महे सुवर्णपक्षाय धीमहि।
तन्नो गरुडः प्रचोदयात् ॥ १५
पद्मोद्भवाय विद्महे वेदवक्त्राय धीमहि।
तन्नः स्रष्टा प्रचोदयात् ॥ १६
शिवास्यजायै विद्महे देवरूपायै धीमहि।
तन्नो वाचा प्रचोदयात् ॥ १७
देवराजाय विद्महे वज्रहस्ताय धीमहि।
तन्नः शक्रः प्रचोदयात् ॥ १८
रुद्रनेत्राय विद्महे शक्तिहस्ताय धीमहि।
तन्नो वह्निः प्रचोदयात् ॥ १९
वैवस्वताय विद्महे दण्डहस्ताय धीमहि।
तन्नो यमः प्रचोदयात् ॥ २०

निशाचराय विद्महे खड्गहस्ताय धीमहि।
तन्नो निर्ऋतिः प्रचोदयात् ॥ २१
शुद्धहस्ताय विद्महे पाशहस्ताय धीमहि।
तन्नो वरुणः प्रचोदयात् ॥ २२
सर्व्वप्राणाय विद्महे यष्टिहस्ताय धीमहि।
तन्नो वायुः प्रचोदयात् ॥ २३
यक्षेश्वराय विद्महे गदाहस्ताय धीमहि।
तन्नो यक्षः प्रचोदयात्। ॥ २४
सर्व्वेश्वराय विद्महे शूलहस्ताय धीमहि।
तन्नो रुद्रः प्रचोदयात् ॥ २५
कात्यायन्यै विद्महे कन्यकुमार्य्यै धीमहि।
तन्नो दुर्गा प्रचोदयात् ॥ २६
एवं प्रभिद्य गायत्त्रीं तत्तद्देवानुरूपतः।
पूजयेत् स्थापयेत् तेषामासनं प्रणवं स्मृतम् ॥ २७
अथवा विष्णुमतुलं सूक्तेन पुरुषेण वा।
विष्णुञ्चैव महाविष्णुं सदाविष्णुमनुक्रमात् ॥ २८
स्थापयेद्देवगायत्त्र्या परिकल्प्य विधानतः।
वासुदेवः प्रधानस्तु ततः सङ्कर्षणः स्वयम् ॥ २९
प्रद्युम्नो ह्यनिरुद्धश्च मूर्त्तिभेदास्तु वै प्रभोः।
बहूनि विविधानीह तस्य शापोद्भवानि च ॥ ३०
सर्व्वावर्त्तेषु रूपाणि जगताञ्च हिताय वै।
मत्स्यः कूर्म्मोऽथ वाराहो नारसिंहोऽथ वामनः ॥३१
रामो रामश्च कृष्णश्च बौद्धः कल्की तथैव च।
तथान्यानि च देवस्य हरेः शापोद्भवानि च ॥ ३२
तेषामपि च गायत्त्रीं कृत्वा स्थाप्य च पूजयेत्।
गुह्यानि देवदेवस्य हरेर्नारायणस्य च ॥ ३३
विज्ञानानि च यन्त्राणि मन्त्रोपनिषदानि च।
पञ्चब्रह्माङ्गजानीह पञ्चभूतमयानि च ॥ ३४
नमो नारायणायेति मन्त्रः परमशोभनः।
हरेरष्टाक्षराणीह प्रणवेन समासतः ॥ ३५
ओं नमो वासुदेवाय नमः सङ्कर्षणाय च।
प्रद्युम्नाय प्रधानाय अनिरुद्धाय वै नमः ॥ ३६
एवमेकेन मन्त्रेण स्थापयेत् परमेश्वरम्।
विम्बानि यानि देवस्य शिवस्य परमेष्ठिनः ॥ ३७
प्रतिष्ठा चैव पूजा च लिङ्गवन्मुनिसत्तमाः।
रत्नविन्याससहितं कौतुकानि हरेरपि ॥ ३८
अचले कारयेत् सर्व्वं चलेऽप्येवं विधानतः।
तन्नेत्रोन्मीलनं कुर्य्यान्नेत्रमन्त्रेण सुव्रताः ॥ ३९
क्षेत्रप्रदक्षिणञ्चैव आरामस्य पुरस्य च।
जलाधिवासनञ्चैव पूर्व्ववत् परिकीर्त्तितम् ॥ ४०
कुण्डमण्डपनिर्म्माणं शयनञ्च विधीयते।
हुत्वा नवाग्निभागेन नवकुण्डे यथाविधि ॥ ४१
अथवा पञ्चकुण्डेषु प्रधाने केवलेऽथवा।
प्रतिष्ठा कथिता दिव्या पारम्पर्य्यक्रमागता ॥ ४२
शिलोद्भवानां विम्बानां चित्राभासस्य वा पुनः।
जलाधिवासनं प्रोक्तं वृषेन्द्रस्य प्रकीर्त्तितम् ॥ ४३
प्रासादस्य प्रतिष्ठायां प्रतिष्ठा परिकीर्त्तिता।
प्रासादाङ्गस्य सर्व्वस्य यथाङ्गानां तनोरिव ॥ ४४
वृषाग्नि-मातृ-विघ्नेश-कुमारानपि यत्नतः।
ज्येष्ठां दुर्गां तथा चण्डीं गायत्त्र्या वै यथाविधि ॥४५
प्रागाद्यं स्थापयेच्छम्भोरष्टावरणमुत्तमम्।
लोकपालगणैश्चाद्यानपि शम्भोः प्रविन्यसेत् ॥ ४६
उमा चण्डी च नन्दी च महाकालो महामुनिः।
विघ्नेश्वरो महाभृङ्गी स्कन्दः सौम्यादितः क्रमात्४७
इन्द्रादीन् स्वेषु स्थानेषु ब्रह्माणञ्च जनार्द्दनम्।
स्थापयेच्चैव यत्नेन क्षेत्रेशं वेशगोचरे ॥ ४८
सिंहासने ह्यनन्तादीन् विद्येशानपि च क्रमात्।
स्थापयेत् प्रणवेनैव गुह्याङ्गादीनि पङ्कजे ॥ ४९
एवं संक्षेपतः प्रोक्तं चलस्थापनमुत्तमम्।
सर्व्वेषामपि देवानां देवीनाञ्च विशेषतः ॥ ५०
इति श्रीलैङ्गे महापुराणे उपरिभागे अष्ट-
चत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः।

ऋषय ऊचुः।

अघोरेशस्य माहात्म्यं भवता कथितं पुरा।
पूजां प्रतिष्ठां देवस्य भगवन् वक्तुमर्हसि ॥ १

सूत उवाच।

अघोरेणाङ्गयुक्तेन विधिवच्च विशेषतः।
प्रतिष्ठा लिङ्गविम्बाना नान्यथा मुनिपुङ्गवाः ॥ २
तथाग्निपूजां वै कुर्य्याद्यथा पूजा तथैव च।
सहस्रं वा तदर्द्धं वा शतमष्टोत्तरन्तु वा ॥ ३
तिलैर्होमः प्रकर्त्तव्यो दधिमध्वाज्यसंयुतैः।
घृतशक्तुमधूनाञ्च सर्व्वदुःखप्रमार्ज्जनम् ॥ ४

शान्तीनां नाशनञ्चैव तिलहोमस्तु भूतिदः।
सहस्रेण महाभूतिः शतेन व्याधिनाशनम्॥ ५
सर्व्वदुःखविनिर्म्मुक्तो जपेन च न संशयः।
अष्टोत्तरशतेनैव त्रिकाले च यथाविधि॥ ६
अष्टोत्तरसहस्रेण षण्मासाज्जायते ध्रुवम्।
विजयो नैव सन्देहो राज्यमण्डलिनामपि॥ ७
सहस्रेण ज्वरो याति क्षीरेण च जुहोति यम्।
त्रिकालं मासमेकन्तु सहस्रं जुहुयात् पयः॥ ८
मासेन सिध्यते तस्य महासौभाग्यमुत्तमम्।
सिध्यते चाब्दहोमेन क्षौद्राज्यदधिसंयुतम्॥ ९
यवक्षीराज्यहोमेन जातितण्डुलकेन वा।
प्रीयेत भगवानीशो ह्यघोरः परमेश्वरः॥ १०
दध्ना पुष्टिर्नृपाणाञ्च क्षीरहोमेण शान्तिकम्।
षण्मासन्तु घृतं हुत्वा सर्व्वव्याधिविनाशनम्॥ ११
राजयक्ष्मा तिलैर्होमान्नश्यते वत्सरेण तु।
यवहोमेन चायुष्यं घृतेन च जयस्तदा॥ १२
सर्व्वकुष्ठक्षयार्थञ्च मधुनाक्तैश्च तण्डुलैः।
जुहुयादयुतं नित्यं षण्मासान्नियतः सदा॥ १३
आज्यं क्षीरं मधुश्चैव मधुरत्रयमुच्यते।
समस्तं तुष्यते तस्य नाशयेद्भगन्दरम्॥ १४
केवलं घृतहोमेन सर्व्वरोगक्षयः स्मृतः।
सर्व्वव्याधिहरं ध्यानं स्थापनं विधिनार्च्चनम्॥ १५
एवं संक्षेपतः प्रोक्तमघोरस्य महात्मनः।
प्रतिष्ठायोजनं सर्व्वं नन्दिना कथितं पुरा॥ १६
ब्रह्मपुत्राय शिष्याय तेन व्यासाय सुव्रताः॥ १७

इति श्रीलैङ्गे महापुराणे उपरिभागे
एकोनपञ्चाशोऽध्यायः॥४९॥

---

## पञ्चाशोऽध्यायः।

ऋषय ऊचुः।
निग्रहः कथितस्तेन शिववक्त्रेण शूलिना।
कृतापराधिनां तन्तु वक्तुमर्हसि सुव्रत॥ १
त्वया नविदितं नास्ति लौकिकं वैदिकं तथा।
श्रौतं स्मार्त्तं महाभाग रोमहर्षण सुव्रत॥ २

सूत उवाच।
पुरा भृगुसुतेनोक्तो हिरण्याक्षाय सुव्रताः।
निग्रहोऽघोरशिष्येण शुक्रेणाच्युततेजसा॥ ३
तस्य प्रसादाद्दैत्येन्द्रो हिरण्याक्षः प्रतापवान्।
त्रैलोक्यमखिलं जित्वा सदेवासुरमानुषम्॥ ४
उत्पाद्य पुत्रं गणपञ्चान्धकं चारुविक्रमम्।
रराज लोके दैवेन वराहेण निसूदितः॥ ५
स्त्रीबाधां बालबाधाञ्च गवामपि विशेषतः।
कुर्व्वतो नास्ति विजयो मार्गणानेन भूतले॥ ६
तेन दैत्येन सा देवी धरा नीता रसातलम्।
तेनाघोरेण दैवेन निष्फलो निग्रहः कृतः॥ ७
संवत्सरसहस्रान्ते वराहेण च सूदितः।
तस्मादघोरसिद्ध्यर्थं ब्राह्मणान् नैव बाधयेत्॥ ८
स्त्रीणामपि विशेषेण गवामपि न कारयेत्।
गुह्याद्गुह्यतमं गोप्यमतिगुह्यं वदामि वः॥ ९
आततायिनमुद्दिश्य कर्त्तव्यं नृपरुत्तमैः।
ब्राह्मणेभ्यो न कर्त्तव्यं स्वराष्ट्रेशस्य वा पुनः॥ १०
अतीव दुर्ज्जये प्राप्ते बले सर्व्वं निसूदिते।
अधर्म्मयुद्धे सम्प्राप्ते कुर्य्याद्विधिमनुत्तमम्॥ ११
अघृणेनैव कर्त्तव्यो ह्यघृणेनैव कारयेत्।
कृतमात्रे न सन्देहो निग्रहः सम्प्रजायते॥ १२
लक्षमात्रं पुमान् जप्त्वा अघोरं घोररूपिणम्।
दशांशं विधिना हुत्वा तिलैन द्विजसत्तमाः॥ १३
सम्पूज्य लक्षपुष्पेण सितेन विधिपूर्व्वकम्।
बाणलिङ्गेऽथवा वह्नौ दक्षिणामूर्त्तिमाश्रितः॥ १४
सिद्धमन्त्रोऽन्यथा नास्ति द्रष्टा सिद्धादयः पुनः।
सिद्धमन्त्रः स्वयं कुर्य्यात् प्रेतस्थाने विशेषतः॥ १५
मातृस्थानेऽपि वा विद्वान् वेदवेदाङ्गपारगः।
केवलं मन्त्रसिद्धो वा ब्राह्मणः शिवभावितः॥ १६
कुर्य्याद्विधिमिमं धीमानात्मनोऽर्थं नृपस्य वा।
शूलाष्टकं न्यसेद्विद्वान् पूर्व्वादीशानकान्तकम्॥ १७
त्रिशिखञ्च त्रिशूलञ्च चतुर्व्विंशच्छिखाग्रतः।
अघोरविग्रहं कृत्वा सङ्कलीकृतविग्रहः॥ १८
सर्व्वनाशकरं ध्यात्वा सर्व्वकर्म्माणि कारयेत्।
कालाग्निकोटिसङ्काशं स्वदेहमपि भावयेत्॥ १९
शूलं कपालं पाशञ्च दण्डञ्चैव शरासनम्।
बाणं डमरुकं खड्गमष्टायुधमनुक्रमात्॥ २०
अष्टहस्तश्च वरदो नीलकण्ठो दिगम्बरः।
पञ्चतत्त्वसमारूढो अर्द्धचन्द्रधरः प्रभुः॥ २१
दंष्ट्राकरालवदनो रौद्रदृष्टिर्भयङ्करः।

हुंफट्कारमहाशब्द-शब्दिताखिलदिङ्मुखः ॥ २२
त्रिनेत्रं नागपाशेन सुबद्धमुकुटं स्वयम्।
सर्व्वाभरणसम्पन्नं प्रेतभस्मावगुण्ठितम् ॥ २३
भूतैः प्रेतैः पिशाचैश्च डाकिनीभिश्च राक्षसैः।
संवृतं गजचर्म्मेण सर्पभूषणभूषितम् ॥ २४
वृश्चिकाभरणं देवं नीरनीरदनिस्वनम्।
नीलाञ्जनाद्रिसङ्काशं सिंहचर्म्मोत्तरीयकम् ॥ २५
ध्यायेद्देवमघोरेशं घोरघोरतरं शिवम्।
षट्त्रिंशदुक्तमात्राभिः प्राणायामेन सुव्रताः ॥ २६
महामुद्रासमायुक्तः सर्व्वकर्म्माणि कारयेत्।
सिद्धमन्त्रश्चिताग्नौ वा प्रेतस्थाने यथाविधि ॥ २७
स्थापयेन्मध्यदेशे तु ऐन्द्रे याम्ये च वारुणे।
कौवेर्य्यां विधिवत् कृत्वा होमकुण्डानि शास्त्रतः ॥२८
आचार्य्यो मध्यकुण्डे तु साधकाश्च दिशासु वै।
परिस्तीर्य्य विलोमेन पूर्व्ववच्छूलसम्मतः ॥ २९
कालाग्निपीठमध्यस्थः स्वयं शिष्यैश्च तादृशैः।
ध्यात्वा घोरमघोरेशं द्वात्रिंशाक्षरसंयुतम् ॥ ३०
विभीतकेन वै कृत्वा द्वादशाङ्गुलमानतः।
पीठे न्यस्य नृपेन्द्रस्य शत्रुमङ्गारकेण तु ॥ ३१
कुण्डस्याधः खनेच्छत्रुं ब्राह्मणः क्रोधमूर्च्छितः।
अधोमुखोर्द्ध्वपादन्तु सर्व्वकुण्डेषु यत्नतः ॥ ३२
श्मशानाङ्गारमानीय तुषेण सह दाहयेत्।
तत्राग्निं स्थापयेत् तूष्णीं ब्रह्मचर्य्यपरायणः ॥ ३३
मायूरास्त्रेण नाभ्यान्तु ज्वलनं दीपयेत् ततः।
कञ्चुकं तुषसंयुक्तैः कार्पासास्थिसमन्वितैः ॥ ३४
रक्ताक्तं समं मिश्र होमद्रव्यैर्विशेषतः।
हस्तयन्त्रोद्भवैस्तैलैः सह होमन्तु कारयेत् ॥ ३५
अष्टोत्तरसहस्रन्तु होमयेदनुपूर्व्वशः।
कृष्णपक्षे चतुर्द्दश्यां समारभ्य यथाक्रमम् ॥ ३६
अष्टम्यन्तं तथाङ्गार-मण्डलस्थानवर्ज्जितः।
एवं कृते नृपेन्द्रस्य शत्रवः कुलजैः सह ॥ ३७
सर्व्वदुःखसमोपेताः प्रयान्ति यमसादनम्।
मन्त्रेणानेन चादाय नृकपाले नखं तथा ॥ ३८
केशं नृणां तथाङ्गारं तुषं कञ्चुकमेव च।
चोरच्छटां राजधूलीं गृहसम्मार्ज्जनस्य वा॥ ३९
विषसर्पस्य दन्तानि वृषदन्तानि यानि तु।
गवाश्वैव क्रमेणैव व्याघ्रदन्तनखानि च ॥ ४०
तथा कृष्णमृगाणाञ्च विड़ालस्य च पूर्व्ववत्।
नकुलस्य च दन्तानि वराहस्य विशेषतः ॥ ४१
दंष्ट्राणि साधयित्वा तु मन्त्रेणानेन सुव्रताः।
जपेदष्टोत्तरशतं मन्त्रञ्चाघोरमुत्तमम् ॥ ४२
तत् कपालं नखं क्षेत्रे गृहे वा नगरेऽपि वा।
प्रेतस्थानेऽपि वा राष्ट्रे मृतवस्त्रेण वेष्टयेत् ॥ ४३
शत्रोरष्टमराशौ वा परिविष्टे दिवाकरे।
सोमे वा परिविष्टे तु मन्त्रेणानेन सुव्रताः ॥ ४४
स्थाननाशो भवेत् तस्य शत्रोर्नाशश्च जायते।
शत्रुं राज्ञः समालिख्य गमने समवस्थिते ॥ ४५
भूतले दर्पणप्रख्ये वितानोपरि शोभिते।
चतुस्तोरणसंयुक्ते दर्भमालासमावृते ॥ ४६
वेदाध्ययनसम्पन्ने राष्ट्रे वृद्धिप्रकाशके।
दक्षिणेन तु पादेन मूर्द्ध्नि सन्ताड़येत् स्वयम् ॥ ४७
एवं कृते नृपेन्द्रस्य शत्रुनाशो भविष्यति।
स्वराष्ट्रपतिमुद्दिश्य यः कुर्य्यादभिचारिकम् ॥ ४८
स आत्मानं निहत्यैव स्वकुलं नाशयेत् कुधीः।
तस्मात् स्वराष्ट्रगोप्तारं नृपतिं पालयेत् सदा ॥ ४९
मन्त्रौषधिक्रियाद्यैश्च सर्व्वयत्नेन सर्व्वदा।
एतद्रहस्यं कथितं न देयं यस्य कस्यचित् ॥ ५०

इति श्रीलैङ्गे महापुराणे उपरिभागे
पञ्चाशोऽध्यायः ॥ ५० ॥

---

## एकपञ्चाशोऽध्यायः।

ऋषय ऊचुः।

निग्रहो घोररूपोऽयं कथितोऽस्माकमुत्तमम्।
वज्रवाहनिकां विद्यां वक्तुमर्हसि सत्तम ॥ १

सूत उवाच।

वज्रवाहनिका नाम सर्व्वशत्रुभयङ्करी।
अनया सेचयेदश्वं नृपाणां साधयेत् तथा ॥ २
वज्रं कृत्वा विधानेन तदश्वमभिषिच्य च।
अनया विद्यया तस्मिन् विन्यसेत् काञ्चनेन च ॥ ३
ततश्चाक्षरलक्षञ्च जपेद्विद्वान् समाहितः।
वज्री दशांशं जुहुयादश्वकुण्डे घृतादिभिः ॥ ४
तदश्वं गोपयेन्नित्यं दापयेन्नृपतेस्ततः।
तेन वज्रेण वै गच्छन् शत्रून् जीयाद्रणाजिरे ॥ ५

पुरा पितामहेनैव लब्ध्वा विद्या प्रयत्नतः।
देवी शक्रोपकारार्थं साक्षाद्वज्ञेश्वरी तथा ॥ ६
पुरा त्वष्टा प्रजानाथो हतपुत्त्रः सुरेश्वरात्।
विद्यया हरतः सोममिन्द्रवैरेण सुव्रताः ॥ ७
तस्मिन् यज्ञे यथाप्राप्तं विधिनोपकृतं हविः।
तदैक्षत महाबाहुर्विश्वरूपविमर्द्दनः ॥ ८
मत्पुत्त्रमवधीः शक्र न दास्ये तव शोभनम्।
भागं भागार्हता नैव विश्वरूपो हतस्त्वया ॥ ९
इत्युक्त्वा चाश्रमं सर्व्वं मोहयामास मायया।
ततो मायां विनिर्भिद्य विश्वरूपविमर्द्दनः ॥ १०
प्रसह्य सोममपिबत् स गणेश्च शचीपतिः।
ततस्तच्छेषमादाय क्रोधाविष्टः प्रजापतिः ॥ ११
इन्द्रस्य शत्रो वर्द्धस्व स्वाहेत्यग्नौ जुहाव ह।
ततः कालाग्निसङ्काशो वर्त्तनाद्वृत्रसंज्ञितः ॥ १२
प्रादुरासीत् सुरेशारिर्दुद्राव च वृषान्तकः।
ततः किरीटी भगवान् परित्यज्य दिवं क्षणात् ॥ १३
सहस्रनेत्रः सगणो दुद्राव भयविह्वलः।
तदा तमाह स विभुर्द्दृष्टो ब्रह्मा च विश्वसृट् ॥ १४
त्वष्ट्रा वज्रं तमेतेन जहीत्यरिमरिन्दमः।
सोऽपि सन्नह्य देवेन्द्रो देवैः सार्द्धं महाभुजः ॥ १५
निहत्य चाप्रयत्नेन गतवान् विगतज्वरः।
तस्माद्वज्रेश्वरी विद्या सर्व्वशत्रुभयङ्करी ॥ १६
मन्देहा राक्षसा नित्यं विजिता विद्ययैव तु।
तां विद्यां सम्प्रवक्ष्यामि सर्व्वपापप्रमोचनीम् ॥ १७
ओं भूर्भुवः स्वः तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओं फट् जहि हूं फट् छिन्धि भिन्धि जहि हन हन स्वाहा।
विद्या वज्रेश्वरीत्येषा सर्व्वशत्रुभयङ्करी।
अनया संहृतिः शम्भोर्विद्यया मुनिपुङ्गवाः ॥ १८

इति श्रीलैङ्गे महापुराणे उपरिभागे
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

## द्विपञ्चाशोऽध्यायः।

ऋषय ऊचुः।

श्रुता वज्रेश्वरी विद्या ब्राह्मी शक्रोपकारिणी।
अनया सर्व्वकार्य्याणि नृपाणामिति नः श्रुतम्।
विनियोगं वदस्वास्या विद्याया रोमहर्षण ॥ १

सूत उवाच।

वक्ष्यमाकर्षणञ्चैव विद्वेषणमतः परम्।
उच्चाटनं स्तम्भनञ्च मोचनं ताड़नं तथा ॥ २
उत्सादनं तथा च्छेदं मारणं प्रतिवन्धनम्।
सेनास्तम्भनकादीनि सावित्र्या सर्व्वमाचरेत् ॥ ३
आयातु वरदा देवी भूम्यां पर्व्वतमूर्द्धनि।
ब्राह्मणेभ्यो ह्यनुज्ञाता गच्छ देवि यथासुखम् ॥ ४
उद्वास्यानेन मन्त्रेण गन्तव्यं नान्यथा द्विजाः।
प्रतिकार्य्यं तथावाह्य कृत्वा वश्यादिकां क्रियाम् ॥ ५
उद्वास्य वह्निमाधाय पुनरन्यं यथाविधि।
देवीमावाह्य च पुनर्जपेत् सम्पूजयेत् पुनः ॥ ६
होमञ्च विधिना वह्नौ पुनरेव समाचरेत्।
सर्व्वकार्य्याणि विधिना साधयेद्विद्यया पुनः ॥ ७
जातीपुष्पैश्च वश्यार्थी जुहुयादयुतत्रयम्।
घृतेन करवीरेण कुर्य्यादाकर्षणं द्विजाः ॥ ८
विद्वेषणं विशेषेण कुर्य्याल्लाङ्गलकस्य च।
तैलेनोच्चाटनं प्रोक्तं स्तम्भनं मधुना स्मृतम् ॥ ९
तिलेन मोचनं प्रोक्तं ताड़नं रुधिरेण च।
खरस्य च गजस्याथ उष्ट्रस्य च यथाक्रमम् ॥ १०
स्तम्भनं सर्षपेणापि पाटनञ्च कुशेन च।
मारणोच्चाटने चैव रोहीवीजेन सुव्रताः ॥ ११
वन्धनं अहिपत्रेण सेनास्तम्भमतः परम्।
कृत्वा नियतं विद्यात् पूजयेत् परमेश्वरीम् ॥ १२
घृतेन सर्व्वसिद्धिः स्यात् पयसाव्याधिशुध्यते।
तिलेन रोगनाशश्च कमलेन धनं भवेत् ॥ १३
कान्तिर्मधुकपुष्पेण सावित्र्या ह्ययुतत्रयम्।
जयादिप्रभृतीन् सर्व्वान् स्विष्टान्तं पूर्व्ववत् स्मृतम् ॥ १४
एवं संक्षेपतः प्रोक्तो विनियोगोऽतिविस्तरः।
जपेद्वा केवलां विद्यां सम्पूज्य च विधानतः ॥ १५
सर्व्वसिद्धिमवाप्नोति नात्र कार्य्या विचारणा ॥ १६

इति श्रीलैङ्गे महापुराणे उपरिभागे
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

## त्रिपञ्चाशोऽध्यायः।

ऋषय ऊचुः।

मृत्युञ्जयविधिं सूत ब्रह्म-चत्र-विशामपि।
वक्तुमर्हसि चास्माकं सर्व्वज्ञोऽसि महामते ॥ १

सूत उवाच।

मृत्युञ्जयविधिं वच्ये बहुना किं हिजोत्तमाः।
रुद्राध्यायेन विधिना हुतेन नियुतं क्रमात् ॥ २
सहुतेन तिलेनैव कमलेन प्रयत्नतः।
दूर्व्वया घृतगोचीर-मिश्रया मधुना तथा ॥ ३
चरुणा सहुतेनैव केवलं पयसापि वा।
जुहुयात् कालमृत्यर्वा प्रतीकारः प्रकीर्त्तितः ॥ ४

इति श्रीलैङ्गे महापुराणे उपरिभागे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः।

सूत उवाच।

त्रियम्बकेण मन्त्रेण देवदेवं त्रियम्बकम्।
पूजयेद्वाणलिङ्गे वा स्वयम्भूतेऽपि वा पुनः ॥ १
आयुर्व्वेदविदेर्वापि यथावदनुपूर्व्वशः।
अष्टोत्तरसहस्रेण पुण्डरीकेण शङ्करम् ॥ २
कमलेन सहस्रेण तथा नीलोत्पलेन वा।
सम्पूज्य पायसं दत्त्वा सघृतञ्चौदनं पुनः ॥ ३
मुद्गान्नं मधुना युक्तं भक्ष्याणि सुरभीणि च।
अग्नौ होमश्च विपुलो यथावदनुपूर्व्वशः ॥ ४
पूर्व्वोक्तैरपि पुष्पैश्च चरुणा च विशेषतः।
जपेद्दै नियुतं सम्यक् समाप्य च यथाक्रमम् ॥ ५
ब्राह्मणानां सहस्रञ्च भोजयेद्वै सदक्षिणम्।
गवां सहस्रं दत्त्वा तु हिरण्यमपि दापयेत् ॥ ६
एतद्वः कथितं सर्व्वं सरहस्यं समासतः।
शिवेन देवदेवेन शर्व्वेणात्युग्रशूलिना ॥ ७
कथितं मेरुशिखरे स्कन्दायामिततेजसे।
स्कन्देन देवदेवेन ब्रह्मपुत्राय धीमते ॥ ८
साक्षात् सनत्कुमारेण सर्व्वलोकहितैषिणा।
पाराशर्य्याय कथितं पारम्पर्य्यक्रमागतम् ॥ ९
शुके गते परं धाम दृष्ट्वा रुद्रं त्रियम्बकम्।
गतशोको महाभागो व्यासः परऋषिः प्रभुः ॥ १०
स्कन्दस्य सम्भवं श्रुत्वा स्थिताय च महात्मने।
त्रियम्बकस्य माहात्म्यं मन्त्रस्य च विशेषतः ॥ ११
कथितं बहुधा तस्मै कृष्णद्वैपायनाय वै।
तत् सर्व्वं कथयिष्यामि प्रसादादेव तस्य वै ॥ १२
देवं सम्पूज्य विधिना जपेन्मन्त्रं त्रियम्बकम्।
मुच्यते सर्व्वपापैश्च सप्तजन्मकृतैरपि ॥ १३
संग्रामे विजयं लब्ध्वा सौभाग्यमतुलं भवेत्।
लक्षहोमेण राज्यार्थी राज्यं लब्ध्वा सुखी भवेत् ॥ १४
पुत्त्रार्थी पुत्त्रमाप्नोति नियुतेन न संशयः।
धनार्थी प्रयुतेनैव जपेदेव न संशयः ॥ १५
धनधान्यादिभिः सर्व्वैः सम्पूर्णः सर्व्वमङ्गलैः।
क्रीड़ति पुत्त्रपौत्त्रैश्च मृतः स्वर्गं प्रजायते ॥ १६
नादेन सदृशो मन्त्रो लोके वेदे च सुव्रताः।
तस्मात् त्रियम्बकं देवं तेन नित्यं प्रपूजयेत् ॥ १७
अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं भवेत्।
त्रयाणामपि लोकानां गुणानामपि यः प्रभुः ॥ १८
वेदानामपि देवानां ब्रह्म-क्षत्त्र-विशामपि।
अकारोकारमकाराणां मात्राणामपि वाचकः ॥ १९
तथा सोमस्य सूर्य्यस्य वह्नेरग्नित्रयस्य च।
अम्बा उमा महादेवी ह्यम्बकस्तु त्रियम्बकः ॥ २०
सुपुष्पितस्य वृक्षस्य यथा गन्धः सुशोभनः।
वाति दूरात् तथा तस्य गन्धः शम्भोर्महात्मनः ॥ २१
तस्मात् सुगन्धो भगवान् गन्धारयति शङ्करः।
गान्धारश्च महादेवी देवानामपि लीलया ॥ २२
सुगन्धस्तस्य लोकेऽस्मिन् वायुर्वाति नभस्तले।
तस्मात् सुगन्धिस्तं देवं सुगन्धिं पुष्टिवर्द्धनम् ॥ २३
यस्य रेतः पुरा शम्भोर्हरेर्योनौ प्रतिष्ठितम्।
तस्य वीर्य्यादभूदण्डं हिरण्मयमजोद्भवम् ॥ २४
चन्द्रादित्यौ सनक्षत्रौ भूर्भुवः स्वर्महस्तपः।
सत्यलोकमतिक्रम्य पुष्टिर्वीर्य्यस्य तस्य वै ॥ २५
पञ्चभूतान्यहङ्कारो बुद्धिः प्रकृतिरेव च।
पुष्टिर्वीजस्य तस्यैव तस्माद्दै पुष्टिवर्द्धनः ॥ २६
तं पुष्टिवर्द्धनं देवं घृतेन पयसा तथा।
मधुना यव-गोधूम-माष-विल्वफलेन च ॥ २७
कुमुदार्क-शमीपत्र-गौरसर्षप-शालिभिः।
हुत्वा लिङ्गे यथान्यायं भक्त्या देवं यजामहे ॥ २८
कृतेनानेन मां पाशाद्बन्धनात् कर्म्मयोगतः।
मृत्योश्च बन्धनाच्चैव मुचीय भव तेजसा ॥ २९
उर्व्वारुकाणां पक्वानां यथा कालादभूत् पुनः।
तथैव कालः सम्प्राप्तो मनुना तेन यत्नतः ॥ ३०
एवं मन्त्रविधिं ज्ञात्वा शिवलिङ्गं समर्च्चयेत्।

तस्य पाशद्वयोऽतीव योगिनो मृत्युनिग्रहः ॥ ३१
त्रियम्बकसमो नास्ति देवो वा घृणयान्वितः।
प्रसादशीलः प्रीतश्च तथा मन्त्रोऽपि सुव्रताः ॥ ३२
तस्मात् सर्व्वं परित्यज्य त्रियम्बकमुमापतिम्।
त्रियम्बकेण मन्त्रेण पूजयेत् सुसमाहितः ॥ ३३
सर्व्वावस्थां गतो वापि मुक्तोऽयं सर्व्वपातकैः।
शिवध्यानान्न सन्देहो यथा रुद्रस्तथा स्वयम् ॥ ३४
हत्वा भित्त्वा च भूतानि भुक्त्वा चान्यायतोऽपि वा।
शिवमेकं सकृत् स्मृत्वा सर्व्वपापैः प्रमुच्यते ॥ ३५

इति श्रीलैङ्गे महापुराणे उपरिभागे
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

## पञ्चपञ्चाशोऽध्यायः।

ऋषय ऊचुः।

कथं त्रियम्बको देवो देवदेवो वृषध्वजः।
ध्येयः सर्व्वार्थसिद्ध्यर्थं योगमार्गेण सुव्रत ॥ १
पूर्व्वमेवापि निखिलं श्रुतं श्रुतिसमं पुनः।
विस्तरेण च तत् सर्व्वं संक्षेपाद्वक्तुमर्हसि ॥ २

सूत उवाच।

एवं पैतामहेनैव नन्दी दिनकरप्रभः।
मेरुपृष्ठे पुरा पृष्टो मुनिसङ्घैः समावृतः ॥ ३
सोऽपि तस्मै कुमाराय ब्रह्मपुत्राय सुव्रताः।
मिथः प्रोवाच भगवान् प्रणताय समाहितः ॥ ४

नन्दिकेश्वर उवाच।

एवं पुरा महादेवो भगवान् नीललोहितः।
गिरिपुत्र्याखया देव्या भगवत्यैकमव्ययया।
पृष्टः कैलासशिखरे हृष्टपुष्टतनूरुहः ॥ ५

श्रीदेव्युवाच।

योगः कतिविधः प्रोक्तस्तत् कथञ्चैव कीदृशम्।
ज्ञानञ्च मोक्षदं दिव्यं मुच्यन्ते येन जन्तवः ॥ ६

श्रीभगवानुवाच।

प्रथमो मन्त्रयोगश्च स्पर्शयोगो द्वितीयकः।
भावयोगस्तृतीयः स्यादभावश्च चतुर्थकः ॥ ७
सर्व्वोत्तमो महायोगः पञ्चमः परिकीर्त्तितः।
ध्यानयुक्तो जपाभ्यासो मन्त्रयोगः प्रकीर्त्तितः ॥ ८
नाड़ीशुद्ध्यधिको यस्तु रेचकादिक्रमान्वितः।
समस्तव्यस्तयोगेन जयो वायोः प्रकीर्त्तितः ॥ ९
बलस्थिरक्रियायुक्तो धारणाद्यैश्च शोभनैः।
धारणात्रयसन्दीप्तो भेदत्रयविशोधकः ॥ १०
कुम्भकावस्थितोऽभ्यासः स्पर्शयोगः प्रकीर्त्तितः।
मन्त्रस्पर्शविनिर्म्मुक्तो महादेवं समाश्रितः ॥ ११
बहिरन्तर्विभागस्थः स्फुरत्संहरणात्मकः।
भावयोगः समाख्यातश्चित्तशुद्धिप्रदायकः ॥ १२
विलीनावयवं सर्व्वं जगत् स्थावरजङ्गमम्।
शून्यं सर्व्वं निराभासं स्वरूपं यत्र चिन्त्यते ॥ १३
अभावयोगः सम्प्रोक्तश्चित्तनिर्व्वाणकारकः।
नीरूपः केवलः शुद्धः स्वच्छन्दश्च सुशोभनः ॥ १४
अनिर्द्देश्यः सदा लोकः स्वयंवेद्यः समन्ततः।
स्वभावो भासते यत्र महायोगः प्रकीर्त्तितः ॥ १५
नित्योदितः स्वयंज्योतिः सर्व्वचित्तसमुत्थितः।
निर्म्मलः केवलो ह्यात्मा महायोग इति स्मृतः ॥ १६
अणिमादिप्रदाः सर्व्वे सर्व्वे ज्ञानस्य दायकाः।
उत्तरोत्तरवैशिष्ट्यमेषु योगिष्वनुक्रमात् ॥ १७
अहंसङ्गविनिर्म्मुक्तो महाकाशोपमः परः।
सर्व्वावरणनिर्म्मुक्तो अचिन्त्यः स्वरसेन तु ॥ १८
ज्ञेयमेतत् समाख्यातमग्राह्यमपि दैवतः ॥ १९
प्रविलीनो महान् सम्यक् स्वयंवेद्यः स्वसाक्षिकः।
चकास्त्यानन्दवपुषा तेन ज्ञेयमिदं मतम् ॥ २०
परीक्षिताय शिष्याय ब्राह्मणायाहिताग्नये।
धार्म्मिकायाकृतघ्नाय दातव्यं क्रमपूर्व्वकम् ॥ २१
गुरु-दैवतभक्ताय अन्यथा नैव दापयेत्।
निन्दितो व्याधितोऽल्पायुस्तथा चैव प्रजायते ॥ २२
दातुरप्येवमनघे तस्माज्ज्ञात्वैव दापयेत्।
सर्व्वसङ्गविनिर्म्मुक्तो मद्भक्तो मत्परायणः ॥ २३
साधकी ज्ञानसंयुक्तः श्रौतस्मार्त्तविशारदः।
गुरुभक्तश्च पुण्यात्मा योग्यो योगरतः सदा ॥ २४
एवं देवि समाख्यातो योगमार्गः सनातनः।
सर्व्ववेदागमाम्भोज-मकरन्दः सुमध्यमे ॥ २५
पीत्वा योगामृतं योगी मुच्यते ब्रह्मवित्तमः।
एवं पाशुपतं योगं योगैश्वर्य्यमनुत्तमम् ॥ २६
अत्याश्रममिदं ज्ञेयं मुक्तये केन लभ्यते।
तस्मादिष्टैः समाचारैः शिवार्च्चनरतैः प्रिये ॥ २७

शैलादिरुवाच ।

इत्युक्त्वा भगवान् देवीमनुज्ञाप्य वृषध्वजः ।
शङ्कुकर्णं समासाद्य युयोजात्मानमात्मनि ॥ २८
तस्मात् त्वमपि योगीन्द्र योगाभ्यासरतो भव ।
स्वयम्भुवः परा मूर्त्तिर्नूनं ब्रह्ममयी वरा ॥ २९
तस्मात् सर्व्वप्रयत्नेन मोक्षार्थी पुरुषोत्तमः ।
भस्मस्नायी भवेन्नित्यं योगी पाशुपते रतः ॥ ३०
ध्येया यथाक्रमेणैव वैष्णवी च ततः परा ।
माहेश्वरी परा पश्चात् सैव ध्येया यथाक्रमम् ॥ ३१
योगीश्वरस्य या निष्ठा सैषा संहृत्य वर्णिता ॥ ३२

सूत उवाच ।

एवं शिलादपुत्त्रेण नन्दिना कुलनन्दिना ।
योगः पाशुपतः प्रोक्तो भस्मनिष्ठेन धीमता ॥ ३३
सनत्कुमारो भगवान् व्यासायामिततेजसे ।
तस्मादहमपि श्रुत्वा नियोगात् सत्रिणामपि ॥ ३४
कृतकृत्योऽस्मि विप्रेभ्यो नमो यज्ञेभ्य एव च ।
नमः शिवाय शान्ताय व्यासाय मुनये नमः ॥ ३५
ग्रन्थैकादशसाहस्रं पुराणं लैङ्गमुत्तमम् ।
अष्टोत्तरशताध्यायमादिमांशमतः परम् ॥ ३६
षट्चत्वारिंशदध्यायं धर्म्मकामार्थमोक्षदम् ।
अथ ते मुनयः सर्व्वे नैमिषेयाः समाहिताः ॥ ३७
प्रणेमुर्देवमीशानं प्रीतिकण्टकितत्वचः ।
शाखां पौराणिकीमेवं कृत्वैकादशिकां प्रभुः ॥ ३८
ब्रह्मा स्वयम्भूर्भगवानिदं वचनमब्रवीत् ।
लैङ्गमाद्यन्तमखिलं यः पठेच्छृणुयादपि ॥ ३९
द्विजेभ्यः श्रावयेद्वापि स याति परमां गतिम् ।
तपसा चैव यज्ञेन दानेनाध्ययनेन च ॥ ४०
या गतिस्तस्य विपुला शास्त्रविद्या च वैदिकी ।
कर्म्मणा चापि मिश्रेण केवलं विद्ययापि वा ॥ ४१
निवृत्तिश्चास्य विप्रस्य भवेद्भक्तिश्च शाश्वती ।
मयि नारायणे देवे श्रद्धा चास्तु महात्मनः ॥ ४२
वंशस्य चाक्षया विद्या चाप्रमादश्च सर्व्वतः ।
इत्याज्ञा ब्रह्मणस्तस्मात् तस्य सर्व्वं महात्मनः ॥ ४३

ऋषयः प्रोचुः ।

ऋषिः सूतस्य चास्माकमेतेषामपि चास्य च ।
नारदस्य च या सिद्धिस्तीर्थयात्रारतस्य च ॥ ४४
प्रीतिश्च विपुला यस्मादस्माकं रोमहर्षण ।
सा सदास्तु विरूपाक्ष प्रसादात् तु समन्ततः ॥ ४५
एवमुक्तेषु विप्रेषु नारदो भगवानपि ।
कराभ्यां सुशुभाग्राभ्यां सूतं पस्पर्श वान् त्वचि ॥४६
स्वस्त्यस्तु सूत भद्रं ते महादेवे वृषध्वजे ।
श्रद्धा तवास्तु चास्माकं नमस्तस्मै शिवाय च ॥ ४७

इति श्रीलैङ्गे महापुराणे उपरिभागे
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

समाप्तोऽयमुपरिभागः ।




---

समाप्तञ्चेदं लिङ्गपुराणम् ।

॥ श्रीः ॥

